# શ્રીશોભન-સ્તુતિ

( સચિત્ર )

શ્રીજયવિજયગણિ, શ્રીસિદ્ધિચન્દ્રગણિ, શ્રીસૌભાગ્યસાગર-
સૂરિ તેમજ શ્રીદેવચન્દ્ર મુનિવરકૃત ટીકા

તેમજ

ન્યાયવિશારદ ન્યાયાચાર્ય મહામહોપાધ્યાય શ્રીયશોવિજયકૃત ઐન્દ્ર-સ્તુતિ,
શ્રીરવિસાગર મુનિરાજકૃત શ્રીવીરસ્તુતિ તથા પૂર્વાચાર્યપ્રણીત
પંચજિનસ્તુતિ ( અવચૂરિઓ સહિત ).


સંસ્કૃત ભૂમિકા સહિત સંપાદન કરનાર-

પ્રો. હીરાલાલ રસિકદાસ કાપડિયા, એમ. એ.,

ચતુર્વિંશતિકા, શ્રીચતુર્વિંશતિજિનાનન્દસ્તુતિ વગેરેના અનુવાદક.



પ્રસિદ્ધકર્તા:-જીવણચંદ સાકરચંદ જવેરી,

સેક્રેટરી, શ્રીમતી આગમોદય સમિતિ, મુંબઈ.

પ્રથમ આવૃત્તિ-પ્રત ૧૦૦૦.

[ વિક્રમ સંવત ૧૯૮૬. ] વીર સંવત્ ૨૪૫૬ [ ઈ. સ. ૧૯૩૦.

મૂલ્ય રૂ. ૮-૦-૦.

श्रीआगमोदयसमितिग्रन्थोद्धारे ग्रन्थाङ्कः ५१

श्रीशोभनसूरिवर्यविरचिता

# ॥ स्तुतिचतुर्विंशतिका ॥

( सचित्रा )

श्रीजयविजयगणि-श्रीसिद्धिचन्द्रगणि-श्रीसौभाग्यसागरसूरि-श्रीदेवचन्द्र-
मुनिराजप्रणीतटीकाचतुष्टयेन न्यायविशारद-न्यायाचार्य-महा-
महोपाध्यायश्रीयशोविजयसन्दृब्धैन्द्रस्तुति-श्रीरविसागर-
मुनीशकृतश्रीवीरस्तुति-पूर्वाचार्यप्रणीतपञ्चजिन-
स्तुतिरूपपरिशिष्टत्रितयेन च समलङ्कृता ।

संशोधकः—
गूर्जरदेशान्तर्गतसूर्यपुरवास्तव्यश्रीयुत-
रसिकदासतनुजो हीरालालः
एम्. ए. इत्युपाधिविभूषितः सभाष्यसटीकतत्त्वार्थाधिगमसूत्रादिग्रन्थानां संशोधको
न्यायकुसुमाञ्जल्यादिग्रन्थानां विवेचनात्मकभाषान्तरकर्ता च ।

प्रकाशयित्री—
जीवनचंद्र साकरचंद्र जह्वेरीद्वारा श्रीआगमोदयसमितिः ।



मोहमय्यां 'चिन्तामण सखाराम देवळे' इत्यनेन मुंबईवैभवनाम्नि मुद्रणालये प्रकाशकस्य कृते मुद्रापितम् ।

प्रथमसंस्करणे प्रतयः १००० ।

संवत् १९८३ ] वीरसंवत् २४५३ [ ई. स. १९२७

पण्यं रूप्यकाष्टकम् ।

# STUTI-CHATURVIMS'ATIKĀ

OF

# S'RĪ S'OBHANA SŪRI.



COMMENTED UPON

BY

**S'rī Jayavijayagaṇi, S'rī Siddhichandragaṇi,**
**S'rī Saubhāgyasāgarasūri and S'rī Devachandramuni.**
**Along with three appendices.**



EDITED WITH

INTRODUCTION IN SANSKRIT

BY

**HIRALAL RASIKDAS KAPADIA,** M. A.,
*Formerly, Assistant Professor of Mathematics,*
*Wilson College, Bombay.*



PUBLISHED BY
JIVANCHAND SAKERCHAND JAVERI,
**A Secretary of S'rī Āgamodaya Samiti.**



First Edition ]  [ 1000 Copies
A. D. 1927.

Price Rs. 3-0-0.

## THE PUBLISHER'S NOTE.

---

We hoped to publish this valuable work by the end of 1927 A. D. but as there was unusual [1]delay in preparing the blocks for the pictures of the gods and goddesses, we are obliged to write this note and add the title-page in Gujarati, since, unfortunately, during the interval, there occured the death of the Printer. Moreover, it is with great regret that we record here the deaths of our two energetic Secretaries: (1) Mr. *Chunilal Chhaganchand Shroff* and (2) *Manilal Surajmal Javeri*. Furthermore, we may mention that by this time, the location of our office also has been changed as noted at the end of this page.

1st September 1930.
Badekhan Chakla,
Surat.

JIVANCHAND SAKERCHAND JAVERI,
one of the Honorary Secretaries
of
S'ri Agamodaya Samiti.

---

1 It may be added that in spite of this delay we have not as yet succeeded in securing five more blocks; all the same we may assure the readers that we shall try our best not to miss this opportunity of presenting them to our readers. If, however we fail by chance, we hope to be excused for this delay.

# विषयसूचिपत्रम्





His Holiness JAINACHARYA ANANDSAGARSURI.

आगमोद्धारक व्याख्यानज्ञ सिद्धान्तशिरोमणि
जैनाचार्य श्रीमद् आनन्दसागरसूरीश्वर.



जन्म सं. १९३१ कपडवंज
दीक्षा सं. १९४७ लींबडी.

पंन्यासपद सं. १९६० अमदावाद
आचार्यपद सं. १९७४ सूरत.

Lakshmi Art, Bombay, 8.

# સમર્પણ.



તપાગચ્છરૂપ ગગનને વિષે સૂર્યસમાન આગમોદ્ધારક વ્યાખ્યાપ્રજ્ઞ સિદ્ધાંતશિરોમણિ

## શ્રી ૧૦૦૮ આનન્દસાગરસૂરીશ્વર,

ઉદયપુર.

આધુનિક મુદ્રણકળા વડે પ્રગતિશીલ બનેલા જગત્માં શ્રીઆગમોદય સમિતિની સ્થાપના કરીને શ્રીજિન-સિદ્ધાન્તરૂપ અમૃતથી પરિપર્ણુ તેમજ અજ્ઞાનરૂપ અંધકારનો નાશ કરનારા એવા જે અનેક સર્વોત્તમ ગ્રન્થો આપની કૃપાથી પ્રસિદ્ધિમાં આવ્યા છે તેની અભિજ્ઞ જનો સમુચિત પ્રશંસા કરે છે.

આપના અત્યંત ઋણી એવા અમારા જેવા જનો અતિશય મન્દ મતિવાળા હોઈ સમિતિના જનકરૂપ આપના અર્ચનાર્થે શું નૈવેદ્ય અર્પે ? આ સમર્પણથી અમે કંઈ આપના કર-કમલમાં આ ગ્રન્થ-રત્ન અર્પણ કરતા નથી, પરંતુ પ્રકાશનાદિક જ્ઞાન-સેવાથી આશાતનાદિક પાપથી અસ્પૃષ્ટ એવું જે કિંચિત્ પુણ્ય અમે ઉપાર્જન કર્યું હોય, તે આપને સમર્પીને અંશતઃ અમે અનૃણિત્વની અભિલાષા રાખીએ છિયે.

મુંબાઈ, તા. ૨૭-૯-૨૭.<br>આશ્વિન શુકલ પ્રતિપદા<br>સોમ, વિક્રમ સં. ૧૯૮૩.

આપના ચરણ-ભ્રમર<br>જીવનચંદ સાકરચંદ જવેરી<br>તથા<br>શ્રીઆગમોદયસમિતિના અન્ય માનદ મન્ત્રીઓ.

# समर्पणम् ।



तपागच्छनभोनभोमणि-आगमोद्धारक-व्याख्याप्रज्ञ-सिद्धान्तशिरोमणि-

## जैनाचार्यश्री १००८ श्रीआनन्दसागरसूरिपादाः !

प्रतिदिनं प्रगतिं सिषाधिषाने आधुनिके मुद्रणकलाविधाने जगति संस्थाप्य
यथार्थाभिधानां श्रीआगमोदयसमितिं भवत्पादैः प्रकटीकृतान्
श्रीजिनागमामृतदीधितेः भव्यकुमुदोल्लासिनः तमोध्वंसिनः
अनेकान् अनुत्तरान् किरणान् समुचितं श्लाघतेतराम्
अभिज्ञजनवृन्दः मुक्तकण्ठः सानन्दम् ।

भवदुपकृतिभारभङ्गुरा अपि अस्मादृशो मन्दातिमन्दशक्त्यनुवादकसङ्कल्पानुसारेण
अस्याः समित्या भवादृशजनकपूजायां किं विदधतेतमाम् ? भवत्कर-
कमले न वयमस्य ग्रन्थरत्नस्यापर्णं कुर्महे, किन्तु केवलं
प्रकाशनादिरूपज्ञानसेवया आशातनादिपापविश्लिष्टं
यदल्पं सुकृतमर्जयामहे तदेवोपढौक्य
किञ्चिदनृणित्वं कामयामः ।

आश्विनशुक्लप्रतिपदि
१९८३ तमे वैक्रमाब्दे.
मोहमयीनगर्याम् ।

भवदीयचरणचञ्चरीकाः
साकरचन्द्रात्मजजीवनचन्द्रादयः
श्रीआगमोदयसमितिकार्यवाहकाः ।

आगमोद्धारक—व्याख्याप्रज्ञ—जैनाचार्य—

# श्रीआनन्दसागरसूरिवराणां

## ॥ जीवनादिग्दर्शनम् ॥



सार्वसिद्धान्तसमृद्धान्, नत्वा संयमिशेखरान् ।
आनन्दजीवनस्याहं, कुर्वे मन्दोऽवलोकनम् ॥ १ ॥

येषां मुनिमण्डलीमूर्धमुकुटमणीनां प्रवचनपीयूषपानपीवराणां व्याख्याप्रज्ञानामागमोद्धारकाणां श्रीआनन्दसागरसूरीश्वराणाममूल्येन साहाय्येन भारतमेदिनीमार्तण्ड—वाचकवर्य—विद्यावारिधि-वन्दारुमन्दारश्रीउमास्वातिकृतस्य स्वोपज्ञभाष्येण श्रीसैद्धसेनीयबृहद्वृत्त्या च विभूषितस्य तत्त्वार्थाधिगमसूत्रस्य संशोधनकर्मणि चतुर्विंशतिकादिकाव्यानां चानुवादादिकरणे समर्थोऽहं सञ्जातस्तेषां समर्पितागमोदयसमितिप्रकाशितपुस्तकपुण्यानां महानुभावानां जीवन-दिग्दर्शने श्रेष्ठिजीवनचन्द्रप्रेरणया उपक्रम्यते मयाऽधुना ।

सौजन्य-सौन्दर्य-संस्कृतिशालिनि भारतवर्षेऽस्मिन् पोस्फुरीति गुणगणगौरवेन गूर्जरदेशः । तत्र च विराजति कर्पटवाणिज्याभिधानं नगरं यत्र निवसति स्म मगनलाल भाइचंद गांधी-त्याह्वः सद्गृहस्थो धर्मज्ञो मतिमान् । तस्य यमुनानाम्नी धर्मपत्नी आसीत् । सांसारिकसुखमनु-भुञ्जाना सा सुषुवे मणीलालाख्यं पुत्ररत्नमादिमम् । तदनन्तरं १९३१तमे वैक्रमीयाब्दे आषाढ-मासेऽमावास्यां द्वितीयं तनयतरणिमजीजनत् यच्चरित्रप्रणयने प्रयासोऽयम् । अस्य हेमचन्द्रेति नाम निष्पन्नम् । जन्मनोऽष्टसु वर्षेषु व्यतिक्रान्तेषु लेखशालामलङ्कृतवान् चरित्रनायकः ।

शैशवादेव जनकोपदेशेन स्वाग्रिमबन्धुमणीलालदीक्षाप्रसङ्गेन च वैराग्यरङ्गरङ्गित-स्वान्तोऽप्ययं हठात् परिणायितः १९४२तमे वर्षे शान्तिदासतनुजरणछोडदासस्य माणेक-नाम्नीं सुतनयां पुत्रवात्सल्यपीडितया निजजनन्या । कृच्छ्रेण शरच्चतुष्टयमतीत्य गृहत्यागतत्परेणा-नेन स्वीकृता दीक्षा लींबडीग्रामे श्रीझवेरसागरसकाशे, किन्तु कौटुम्बिकैः कदर्थितो राजसत्तासन्तापितो भवान् पुनः गृहस्थाश्रमं प्रपेदे । कतिपयमासान् कष्टेन निर्वाह्य गृहस्थवेषादिना स्वजनान् सन्तोष्य पूज्यतातचरणानुज्ञापूर्वकं १९४७तमे वर्षे ज्येष्ठशुक्लैकादश्यां कक्षीकृतं प्राव्राज्यसाम्राज्यं लींबडी-ग्रामे श्रीझवेरसागरमुनिरत्नसान्निध्ये । तदा आनन्दसागरेति विश्रुतिरजनि । एतं वृत्तान्तं

१ एतदर्थं साधनीभूतो 'हिंदी जैनबन्धुग्रन्थमाला (इन्दौर)' संस्थया २४५३तमे वीराब्दे प्राकाश्यं नीतस्य श्रीहिन्दीपञ्चप्रतिक्रमणेतिनाम्नो ग्रन्थस्य 'आनन्दपरिचयः', यतो मम साक्षात् परिचितिः सूरिवरै-स्त्रिदिनात्मिका पत्रप्रेषणादिरूपा तु वर्षप्रायिका ।

विदित्वा संसारासक्ताः श्वशुराद्याः पुनः नानोपसर्गैर्भवन्तं चिक्लिशुः, परन्तु पूर्वीणपुण्यप्रतापेन पूज्यपितृप्रयत्नेन च शान्तिं गतास्ते । चातुर्मासे पूर्णे परलोकं जग्मुर्गुरवः श्रीझवेरसागरा येभ्यो विशिष्टविद्याग्रहणे उन्मनसो भवन्त आसन् ।

लघुवयसि गुरुविरहवेदनाव्याकुलाः श्रीमन्तः १९४८ तमे वर्षे पावनीचक्रुः स्वागमनेन राजनगरम्, ततः प्रायः प्रतिवर्षं विजह्रुः ग्रामानुग्रामम् । भवन्तः पवित्रयामासुः १९४९तमे उदयपुरं, १९५०तमे पालीनगरं, १९५१तमे सोजतपुरं, १९५२तमे पेटलादं, १९५३तमे छाणीं, १९५४तमे स्तम्भनतीर्थं, १९५५तमे साणंदं च । व्याकरणतर्कन्यायशास्त्राध्ययनानुकूल्यार्थमाजग्मुः १९५६तमे वर्षे राजनगरे यत्र वर्षत्रितयं व्यतीतवन्तस्तत्रभवन्तः श्रीआनन्दसागराः । ततो भावनगरे चातुर्मासं कृत्वा पुनरागतवन्तो राजनगरे भवन्तो यत्र भगवतीयोगवहनपूर्विकां पंन्यासपदवीं लेभिरे १९६०तमे वर्षे आषाढशुक्लदशम्यां पंन्यासश्रीनेमिविजयसकाशात् । वर्षान्ते स्वजन्मभूमिं भूषयामासुः । ततः १९६२तमेऽब्दे भावनगरं, १९६३तमे सूर्यपुरं, १९६४तमे मुम्बापुरीं च महन्महःपूर्वं पवित्रयामासुः । अस्यां मोहमयीनगर्यां भवत्सदुपदेशेन स्वर्गस्थगुलाबचन्द्र देवचन्द्रेत्यभिधस्य महाशयस्य सम्मत्या संस्थापिता श्रेष्ठिदेवचन्द्र-लालभाइ–जैनपुस्तकोद्धार-संस्था एतत्कार्यवाहकचतुष्टयेन यया लक्षरूप्यकात्मकस्य मूलधनस्य वृद्धिव्ययेन प्रसिद्धिमानीता अनेके ग्रन्था मनीषिमनोमयूरं नर्तयन्ति । चातुर्मासे पूर्णतां गते 'अन्तरिक्ष'तीर्थवन्दनाय जग्मुर्भवन्तः स्वशिष्यसमुदायसमेतास्तत्तीर्थगन्तृसङ्घसार्धम् । ततः १९६५तमेऽब्दे प्रयाणं चक्रुः येवलां प्रति । ततः १९६६तमे वर्षे पुनर्मण्डयामासुर्निजागमनेन सूर्यपुरं पंन्यासा इमे यत्रोपधानादिक्रिया कारिता । १९६८तमाब्दीयं चातुर्मासं जातं स्तम्भनतीर्थे, ततश्चलिता इमे उपस्थितबुद्धयः छाणीग्रामं यत्र निजसंसारिकबन्धुः श्रीमणिविजयमुनिः पंन्यासपदवीं प्रापितः पं.श्रीसिद्धिविजय( श्रीविजयसिद्धिसूरि )द्वारा । १९७०तमेऽब्दे पत्तननगरं प्रापुर्भवन्तो यत्र न केवलं प्राचीनागमप्रकाशने कटिबद्धा अभूवन् वेणीचंदसूरचंदेत्यभिधस्य श्रेष्ठिनो विज्ञप्त्यात्मकया प्रेरणया, किन्तु संस्थापयामासुः श्रीआगमोदयसमितिं 'भोयणी'ग्रामे यद्वृत्तान्तलेशोऽवगम्यते आमुख( Foreword )तः । अपरञ्च एभिरागमकामधेनुदोग्धृभिः अनेकाः साधुसाध्व्य उपकृता आगमवाचनया यत्प्रभावेण भवद्भ्य आगमोद्धारकेति पदवीं मुदा ददुः सर्वेऽपि सार्वा जनाः । द्वितीया आगमवाचना कर्पटवाणिज्येऽजनि, तृतीया तु राजनगरे १९७२तमाब्दीये चातुर्मासे चतुर्थी पञ्चमी च सूर्यपुरे । अस्मिन् मदीये जन्मनगरे गुलाबभाइ बालुभाइ नाम्ना नगरश्रेष्ठिनाऽलङ्कृतायां सभायां श्रीमन्मुक्तिविजयगणिवराविनेयरत्नबालब्रह्मचारिश्रीमद्विजयकमलसूरीशैः १९७४तमेऽब्दे वैशाखशुक्लदशम्यां विभूषिता भवन्त आचार्यपदवीप्रदानेन विविधनगरनगरीप्रतिष्ठितगृहस्थच्छात्रानुमोदनपूर्वकम् ।

---

१ १९६४ तमेऽब्दे विभूषिता इमे सूरिपदप्रदानेन । २ एतेषां नामधेयानि यथा—( अ ) नगीनभाइ घेलाभाइ, ( आ ) केसरीचंद रूपचंद, ( इ ) बीजकोर( देवचन्द्रस्य सुपुत्री ), ( ई ) जीवनचंद साकरचंद ।

आगममुद्रापणस्य प्रगतिं सिषाधिषव इमे गुणभूरयः सूरयः प्रयाता मोहमयीनगरीं मासद्वयान्ते । अनन्तरीयेऽब्दे तु पुनरागताः सूर्यपुरे यत्र जैनानन्दपुस्तकालयं संस्थापयामासुः[1] ततो झवेरी जीवनचंद नवलचंदेत्यभिधानकेन सङ्घपतिना सार्धं चेलुर्भवन्तः पादलिप्तपुरीं श्रीसिद्धाचलाह्वयस्य तीर्थाधिराजस्य यात्रानिमित्तम् । तत्रापि प्रारब्धा आगमवाचना १९७६तमस्य हायनस्य चातुर्मासे । भवदनवद्यवैशारद्यचकितचित्ता आगमवाचनालाभकामुका देशान्तरवर्तिनोऽपि विज्ञापयामासुर्भव्यजनाः श्रीमतो भवतः सौवसौवपुरपावनार्थं क्षेत्रस्पर्शनया । अङ्गीकृत्य तेषां विज्ञप्तिं विहारक्रमेण प्रथमं 'रतलाम'नगरं पावयामासुः १९७७तमेऽब्दे चैत्रकृष्णद्वितीयायाम् । अत्र विवाहप्रज्ञप्ति-समवायाङ्गागमवाचना षष्ठी प्रारब्धा 'श्रीऋषभदेवजी केशरीमलजी श्वेताम्बरसंस्था' च संस्थापिता ययाऽपि कतिपये ग्रन्थाः प्रकाशिताः । एतद्वर्षचातुर्मासं चक्रुः सैलानाराज्ये तन्नगराधिपतिश्रीदिलीपसिंहविज्ञप्तिपुरस्सरम् । सूरीश्वरसदुपदेशसुधारसास्वादनानन्दितचेतसा धर्मजिज्ञासुना नरपतिनाऽमुना जीवहिंसानिषेधात्मकोऽमारिपटहो ध्वनितः स्वदेशे मुद्रालेखश्च समादत्तः सूरिभ्यः ।

वर्षान्ते समलञ्चक्रे रतलामनगरम्, ततः भोपावरतीर्थं प्रति चेलुर्यात्राकाम्यया । ततः १९७८-तमेऽब्दे पुनरागताः रतलामम् । वर्षाधिकं यत्र स्थित्वा मेदपाट( मेवाड )जीर्णचैत्योद्धारकर्मणि नगरवासिनः प्रोद्युक्तमनसः कृत्वा सम्मेतशिखरयात्रार्थं प्रस्थानं चक्रुः । १९८०तमेऽब्दे तत आगताः कलिकातापुरम् । अत्रापि ज्ञानप्रदीपप्रकाशनपटवोऽमी संस्थापयामासुः संस्थां जैनसाहित्यस्य हिन्दीभाषान्तरप्रचारार्थं यत्कृते एकत्रीकृतानि रूप्यकाणां दश सहस्राणि । १९८१-तमेऽब्दे अजीमगंजमलञ्चक्रुः । ततः सम्मेतशिखरतीर्थस्य यात्रां विधाय १९८२तमेऽब्दे मारवाडदेशे सादडीनगरं निजविहारेण विभूषयामासुः । तत उदयपुरं प्रति उदयं गता इमे सूराः१९८४तमेऽब्दे ।

तत्त्वार्थपरिशिष्टम्, ऐन्द्रस्तुत्यवचूरिम्, अन्ययोगव्यवच्छेदद्वात्रिंशिकावृत्तिं, हैमव्याकरणानुसारीणि द्वित्रीणि व्याकरणानि नवीनानि, अन्यानि चाविज्ञातनामानि विरचय्य अखण्डपाण्डित्यमण्डितानि ग्रन्थरत्नानि विशेषतया वर्द्धितवन्तः सूरिपुङ्गवा इमे जैनसाहित्यमिति संश्रुतिः ।

एवं सामग्रीन्यूनतया किमप्यालिखितेऽस्मिन् आनन्दजीवने याः काश्चन त्रुटयः समभूवन् तत्परत्वे आर्हतसिद्धान्तप्रचारदत्तचित्तेभ्यः साक्षराशिरोमणिभ्यः क्षमां याचमानो विरमामि हीरालालः ।

---

१ 'शेठ नगीनभाइ मंछुभाइ जैन साहित्योद्धार' नामकसंस्थायाः त्रिशत्सहस्ररूप्यकात्मिकायाः स्थापनाऽपि भवदुपदेशफलम् ।

जैनाचार्य–न्यायाम्भोनिधि–श्रीविजयानन्दसूरीश्वरशिष्यरत्न–

दक्षिणविहारि–श्रीमदमरविजयमुनिवर्यान्तिषच्चतुरविजयमुनीनां

# अभिप्रायः ।



सानन्दं निवेदयामि विविधानवद्यविद्याविशारदान् विद्वज्जनान् यदुताऽन्यत्र बहुषु स्थलेषु प्राङ् मुद्रिताऽपि न तथा सहृदयहृदयङ्गमा यथा झवेरी जीवनचन्द साकरचन्दप्रयासेन श्री'आगमोदयसमिति'द्वारा प्रकाशिता श्रीजयविजयगणि-श्रीसिद्धिचन्द्रगणि-श्रीसौभाग्यसागरसूरि–श्रीदेवचन्द्रमुनिवर्यविरचितटीकाचतुष्कसमलङ्कृता शोभनस्तुतिरियम् ।

टीकाचतुष्टयेऽत्र समासाः, छन्दोनाम, व्याकरणसूत्राणि, कोशादिसाक्षयश्च यथास्थानं निर्दिश्य विविधविषयज्ञानामृतरसपिपासूनां प्राथमिकाभ्यासवतां छात्राणां पठने पाठनेऽतीव सौकर्यमकारि तत्तत्कर्तृभिः परोपकारनिष्ठैर्विद्वद्वरिष्ठैर्मुनिश्रेष्ठैः । तत्रापि श्रेष्ठिरसिकदासतनुजनुषा M. A. इत्युपाधिधारिणा न्यायकुसुमाञ्जलि-स्तुतिचतुर्विंशतिका–वीरभक्तामराद्यनुवादकेनाऽस्याः संशोधकेन विदुषा हीरालालेन ( ) एतच्चिह्नेन व्याकरणकोशादिस्थाननिर्देशः कृतः, सा चाऽनुसरणीया सरणिरतो विविधग्रन्थमुद्रापणदत्तचित्तैरुदात्तहृदयैरन्यैरपि महाशयैर्येन कथमपि कारणमासाद्य तत्तत्स्थानदिदृक्षूणां न स्यात् प्रचुरतरः प्रयासः । वृद्धिश्च ग्रन्थमहिम्नः ।

परिशिष्टत्रयेऽस्याः शोभनस्तुतेः प्रतिरूपां तत्तच्छन्दोयमककलितां न्यायविशारद–न्यायाचार्य–महोपाध्यायश्रीयशोविजयविरचितां सावचूरिकामैन्द्रस्तुतिं, श्रीसुमतिजिनस्तुतिसमानां श्रीराजसागरशिष्यरविसागरसन्दृब्धां सावचूरिकां वीरस्तुतिं, श्रीपार्श्वजिनस्तुत्यनुकारिणीमष्टपद्यप्रमाणां पदभञ्जिकासहितां पञ्चजिनस्तुतिं च मुद्राप्य विहितेयं समनस्कमनःस्पृहणीयाऽधिकतराम् ।

शोच्या किल दशा जैनानां यतः सर्वेष्वपि प्राचीनजैनपुस्तकभाण्डागारेषु पूर्वर्षिप्रणीता नानाविषयविभूषिता यमकश्लेषालङ्कारचित्रचित्रिता अप्रतिमपाण्डित्यमण्डिता यत्रतत्राऽव्यवस्थितरूपेण पतिता ईदृशोऽनेकशः स्तुतिस्तोत्रादयो ग्रन्था दृग्गोचरीभवन्ति, परंतु न जाने कथं करतलगतानपि प्रतिबृहद्ग्रन्थदत्तदृष्टयः उपेक्षन्तेतरामनेके विद्वांसोऽपि जनास्तान् ।

अणीयानपि चिन्तामणिर्यथा समूलमुन्मूलयति दारिद्र्यं, तनीयानपि दीपः प्रकाशयति गृहाङ्गणं विनाशयति च लीलयैव विस्तृतमपि तमोजालं तथा लघीयांसोऽप्यमी स्तुतिस्तोत्रकुलकप्रभृतयो ग्रन्थाः प्रकटयन्ति पूर्वाचार्यप्रतिभाप्रकर्षं, प्रमोदयन्ति सुमनसां मनांसि, उपकुर्वन्ति संक्षिप्तरु-

चिभाजोऽल्पमेधसश्च जनानतः कुर्वाणाः प्राचीनसाहित्यसंशोधनानि, वितन्वाना भूरितरप्रयासेन मुद्रापणं, दधाना मनसि सद्युन्निनीषां जगति जैनवाङ्मयस्य विद्वांसः संसदश्च संगृह्य विशीर्णरूपान् प्रयत्नेन प्रकटय्य यथाऽवकाशमेतान् संरक्षन्तु कृमिकुलमुखाभ्युपेतानासन्नविनाशान् सुदुर्लभान् ग्रन्थान् विस्तारयन्तु जगति जैनसाहित्यमहिमानमिति निवेदनं मे ।

आगमोदयसमित्याष्टीकाचूर्णिभाष्यनिर्युक्तिविवरणाद्यागमाङ्गसमुद्धृतिरेव मुख्यं कर्म तथापि कयाचिदपि संस्थयाऽनङ्गीकृते सोपयोगिनि कर्मणीह प्रयासोऽयं सर्वथा नाऽनुचित एव ।

कतिपयस्थानप्राप्तप्रत्याधारेण भूयसा परिश्रमेण सावधानतया संशोधितेऽस्मिन् ग्रन्थे, क्वापि क्वापि स्तोका अपि संस्थिता अशुद्धयः सुवर्णस्थाल्यामयःकीलिका इव खाट्कुर्वन्ति मे हृदि, परं न तावत् प्रचुरोपलब्धिः प्रतीनाम् । पुनः केचित् पुस्तकलोभवन्तः, केऽप्याशातना-भ्रंशादिभीरवः, केचन सङ्कुचितवृत्तयः प्राच्यकालीनदृष्टयः चित्कोषरक्षयितारः कीटककोटिमुखविवरगतान्यपि पुस्तकानि समर्प्य मुद्रणाय दर्शयन्ति नौदार्यवृत्तिं स्वकीयां तत्र को दोषः प्रकाशकानाम् ?

बृहत्प्रमाणमालोक्य मदीयं शुद्धिवृद्धिपत्रकं ‘ अशुद्धिबाहुल्य’मिति न व्यामोहितव्यं तत्रभवद्भिर्भवद्भिर्यतस्तत्र न केवलं मुद्रणयन्त्रसमुद्भूता अशुद्धयः समुद्धृताः किन्तु टीकाकर्तॄणां प्रामादिकाः पाठाः संशोधकानुपयोगजाः स्खलना अपि यथामति विशदीकृता मया ।

शङ्ख इव पयःपूर्त्या सुवर्णमुद्रिकेव रत्नसंयोजनया प्रज्ञावत्प्रतिभानर्तकीनर्त्तनयोग्यया विस्तृतभूमिकया विशेषतया शोभास्पदीचक्रे संशोधकेन, निराचक्रे च ‘ नास्त्येव जैनानां संस्कृतसाहित्यमस्ति चेदितरसाहित्यापेक्षयाऽतीवस्वल्पतरमनुच्चकोटिक’मिति वदतां पण्डितंमन्यान कूपमण्डूकानामान्तरभ्रमः ।

एवमन्यानपि पूर्वर्षिप्रणीतान् विविधरसपेशलाननेकविषयान् वाचकजनचेतश्चमत्कारकारिणो ग्रन्थान् यथाऽवसरं प्रकटय्य संसदसौ विधत्तां जैनसाहित्यसौलभ्यम्, रचयतामनुपमेयां शासनसेवाम्, नयतां रजनिकरकरावदातमवदातमत्र जगतीत्याशासेऽहम्---

भरुच ( श्रीमालीपोळ-जैन उपाश्रय )
ज्येष्ठ कृष्ण ८ सं. १९८३

विदुषामनुचरः
चतुरविजयो मुनिः ।



# Preface

It is with great pleasure that we place before the public this edition of *Stuti-chaturviṁsatikā* with four different commentaries and three appendices ably composed by the *Munivaryas* or the *Jaina* saints. So far as we know, the original work along with a Sanskrit *Avachūri* or gloss was first published in the *Kāvyamālā* (part VII) by the Proprietor of *Nirṇaya-sāgara Press.* Even, as early as 1878 A. D. *outside India* this work along with a German translation and introduction by Dr. *Jacobi* was published in Zeitschrift der Deutschen Morgenländischen Gesellschaft (vol. 32). It is in the same year that Mr. *Bhimsi Manek* published this work along with Gujarāti translation in *Prakaraṇa-ratnākara.*

We may add that side by side with this edition we publish for our Gujarati readers a separate book with the lucid commentary of *Dhanapāla*, the learned poet and the elder brother of *S'rī S'obhanasūri* who composed this beautiful work and the *Avachūri* formerly published in the *Kāvyamālā* above referred to, along with the prose-order, glossary, Gujarati translation, notes and introduction carefully prepared by Prof. *Hīrālal Rasikdās Kāpadia*, M. A., the eldest son of the late Mr. *Rasikdās Varajdās Kāpadia*, a staunch follower of Jainism.

We are very much indebted to him for having complied with our request of editing this work, even when we could not supply him with a second and a better copy of any of the four manuscripts pertaining to the four different commentaries, and furthermore, when the manuscript of the third commentary was extremely incorrect.

It was only after more than half the work was printed that we could procure for him two more manuscripts. Out of them, the first belonged to *Munirāja S'rī Lābhavijaya*, while the second to the Bhandarkar Oriental Research Institute. But this did not alter the situation very much, since these were the manuscripts of the first two commentaries only.

In this connection we may mention that we have been highly obliged by *Munirāja S'rī Chaturavijaya*, a learned disciple of *Dakshiṇa-vihārī Muni-ratna S'rī Amaravijaya*, and a grand-disciple of the late *Jaināchārya Nyāyāmbhonidhi S'rī Vijayānandasūri* (also known as *Atmārāmjī*) of world-wide reputation, for great pains he took in preparing errata and the list of different readings. We may add that the errata has been prepared by comparing the work with the two manuscripts subsequently procured and the manuscripts pertaining to the third and the fourth commentaries.

It will not be out of place to state here the reasons why we have published four commentaries, when the same matter is many a time repeated as it is bound to happen in a case like this.

The first and the foremost reason is that we could hereby gratify our earnest desire of preserving and publishing the old literature. The second reason is that these are the only available commentaries (the other two being published in our Gujarāti edition ) composed by different scholars and we could here collect them together. (Of course there are two more Sanskrit commentaries—one by *Upādhyāya S'rī Bhānuchandra* and the other by *S'rī Kanakakus'alagaṇi* as could be seen from the Sanskrit introduction. But we have failed to procure them. Besides these, there are two commentaries in Gujarati known as Tabbā).

The third reason as pointed out by Prof. Kāpadia in his introduction is that in spite of the over-lapping of matter, the four commentaries have a distinct message to suggest. For instance, the first commentary composed by *S'ri Jayavijayagaṇi* seems to be an exposition of *Dhanapāla's* commentary on this very wrok. In the second commentary, *S'rī Siddhichandragaṇi*, the well-known commentator of *Kādambarī* proves the validity of certain grammatical forms and quotes lines or verses from different works on lexicography, over and above the ordinary explanation he furnishes the reader with. The third commentary composed by *S'rī Saubhāgyasāgarasūrī* is unique by itself in the sense that it establishes the connection between the preceding and the succeeding hymns composed in honour of the 24 *Tīrthaṅkaras.* Furthermore, an attempt has been made by this commentator to suggest where possible a new meaning not to be found in any other commentary; but in so doing he has made some mistakes at times which he could have avoided in case he had kept a close eye over the lines he was commenting upon. The fourth commentary, a work of *S'rī Devachandra* seems to be an epitome of the second commentary inasmuch as it gives only alsolutely necessary explanation.

Hence it can be seen that these different commentaries serve different purposes and supply the reader with the complete materials throwing ample light on this *Stūti-chaturviṁs'atikā* which abounds in *Yamakas.*

We need not take up the subject pertaining to the life and the work of our author as well as of the commentators ; for, we have nothing to add to what has been stated by Prof. *Kāpadia* in his introduction. But, certainly we shall be failing in our duty, if we did not record our thanks to those who have assisted us in one way or another. Our special thanks are due to *Anuyogāchārya* (Pannyāsa) *S'rī Kshāntivijaya*, the learned disciple of the late *S'rī Umedavijayagaṇi,* who helped

the editor by going through the revised proof-sheets of the text. The proofs pertaining to Introduction, appendices, etc. were, however, sent to *Munirāja S'rī Chaturavijaya*, who willingly helped the editor as usual and to whom we are indebted in more than one way. We have to thank *Munirāja S'rī Kalyāṇavijaya,* a learned pupil of *S'rī Vijayasiddhisûri* for the *Pada-bhañjikā* he composed for us. We also offer our thanks to the managers of the Dehla's Bhandar of Ahmedabad, the superintendent of the Bhāndarkar Oriental Institute and to *Munirāja S'rī Lābhavijaya* for having lent to us the manuscripts above referred to.

We think it here necessary to mention the fact, that it is with great trouble that we could prepare the sketches of different goddesses as described in *Nirvāṇa-kalikā* by *S'rī Pādaliptāchārya.* These goddesses are objects of highest respect to the *Jainas,* so it is our request to the public that they may not treat these sketches given in this book in a way to offend the feelings of their coreligionists.

Before concluding we think it necessary to furnish the reader with the general outlook of *S'rī Agamodaya Samiti* the institution which stands unrivalled in publishing the *Āgamas or* the sacred works of the *Jainas.*

1. Start :—

[1]This institution was started at *Bhoyaṇi* in Viramgām Tālukā of the Ahmedabad district on Monday the 10th of the bright half of *Māgha,* the forth month of the *Vikram Samvat* 1971 ( the 25th January 1915 A. D ). This village Bhoyani is well-known in *Jaina* annals as it contains the celebrated *Jaina Tīrtha* (a holy place) in honour of *Mallīnātha,* the 19th *Tirthaṅkara.*

It was at the suggestion of *Pannyāsa S'rī Ānandasāgara* ( at present *Āgamoddhāraka Jaināchārya S'rī Ānandasāgarasūri* ) that this institution was started by Sheth *Venichand Sūrchand* and others with the consent of *Pannyāsa Ānandasāgarji,* ( the late ) *Pannyāsa Maṇivijayajī, Pannyāsa Meghavijayajī* ( at present *Jainācharya S'rī Vijayameghasūri*) and several other ascetics of different *Gachchhas* and a number of *Jaina* householders. This being the anniversary day on which the image of *S'rī Mallinātha* was installed, a good many *Jainas*-both laymen and ascetics had assembled here.

---

1. This is a reprint with few alterations of the General Outlook written by Mr. K. P. Modi in the second edition of the Jaina Philosophy.

2. Objects :—

(i) To enable the *Jaina* ascetics to aquire knowledge of the *Jaina* scriptures by studying them in the prescribed way at the feet of learned ascetics well-versed in them.

(ii) To edit and publish the *Jaina Āgamas* in necessary copies with a view to fascilitiate the study of these works in different quarters.

3. Fulfilment of objects :—

(i) To further the first object the knowledge of some *Āgamas* was imparted at Pātan ( the northern Gujarāt ), Kapadvanj in the Kaira district, Ahmedabad, Surat, Pālitānā ( in Kāthiāwār ) and Rutlām in Mālava.

(ii) To further the second object this institution has published the following sacred books along with other works :—

| | | | |
|---|---|---|---|
| Āchārāṅga, | the | 1st | Aṅga |
| Sutrakṛitāṅga, | „ | 2nd | „ |
| Sthānāṅga, | „ | 3rd | „ |
| Samavāyāṅga, | „ | 4th | |
| Bhagavatī, | „ | 5th | |
| Jñātā-dharma-kathā, | „ | 6th | |
| Upāsakadas'āṅga, | „ | 7th | |
| Antakṛiddasāṅga, | „ | 8th | |
| Anuttaropapātika, | „ | 9th | |
| Pras'ṇavyākaraṇa, | „ | 10th | |
| Vipākasūtra, | „ | 11th | |
| Aupapātikasūtra, | „ | 1st | Upāṅga |
| Rājapras'ṇīya, | „ | 2nd | „ |
| Prajñāpanāsūtra, | „ | 4th | |
| Sūrya-prajñapti, | „ | 7th | |
| Nirayāvali, | „ | 8th | |
| Āvas'yakasūtra, | „ | 1st | Mula |
| Oghaniryukti, | „ | 4th | „ |
| Nandīsūtra, | „ | 5th | „ |
| Anuyogadvāra, | „ | 6th | „ |
| Gachchhāchāra, | „ | Prakīrṇaka, | |

4. Managing Body :—

In the General and Managing Committees, there are many members; but, at present the following members constitute the Managing Committee :—

| | | |
|---|---|---|
| (1) | Venichand Surchand, Esqr., | Mesānā |
| (2) | Manilāl Surajmal, | Pālanpur |
| (3) | [1]Keshavlāl Premachand Modi, B.A., LL.B. | Ahmedabad |
| (4) | Bhogilāl Halābhai | Pātan |
| (5) | Kumvarji Anandji | Bhāvnagar |
| (6) | Chunilāl Chhaganlāl Shroff, B.A. | Surat |
| (7) | Kamalshibhai Gulābchand | Rādhanpur, |
| (8) | Jivanchand Sākerchand Javeri | Bombay |

5. Offices :—

Till some time past the office of this institution was kept at the places where the knowledge of the *Āgamas* was being imparted and other suitable places, thus changing the same from time to time. Now the Head Office of this institution is at No. 114/116, Zaveri Bazar, Bombay No. 2, while the Branch Office for selling the printed books of this institution, at Sheth Devchand Lalbhai's Dharmas'āla, Gopipura, Surat.

6. Pecuniary position :—

This institution has at present about Rs. 45,000 partly subscribed, partly got from the interest and partly realized from the sale of the books published by this institution. Besides, the sum of about Rs. 13,000 partly subscribed and partly got from the interest is to the credit of Āgama-vāchana-kathā. From these the expenses are met in this connection.

In conclusion we may mention that we shall consider ourselves amply repaid, if this work is assigned its due place and the learned readers favour us with valuable suggestions and rational criticisms which may enlighten our path in future.

BOMBAY.
*23rd April 1927.*

JIVANCHAND SAKERCHAND JAVERI.



1 He has been recently elected in place of the late Mr. Hiralal Bakordas of Radhanpur.

# प्रतिकृतिसूची





# भूमिका



" भवबीजाङ्कुरजनना, रागाद्याः क्षयमुपागता यस्य ।
ब्रह्मा वा विष्णुर्वा, हरो जिनो वा नमस्तस्मै ॥ १ ॥"

उपादीयतां धीधनाः ! इयं स्तुतिचतुर्विंशतिका श्रीशोभनमुनिनायकनिर्मिता अष्टा-दशविधच्छन्दःसङ्कलिता षण्णवतिपद्यमपञ्चिता उपमोत्प्रेक्षाऽनुप्रासश्लेषयमकाद्यलङ्कारमण्डिता विविधविबुधवरविरचितविवरणविभूषिता मुख्यतश्च श्रीनाभेयादिमहावीरपर्यन्तचतुर्विंशति-जिनपतिस्तुतिगर्भिता ।

एतस्याः तथाविधजैनसंस्कृतसाहित्ये किं स्थानमिति जिज्ञासा स्वाभाविकी । तत्तृप्त्यर्थ-मालोक्यतामालोकवद्भिः सम्पूर्णतः श्रीबप्पभट्टिसूरिसूत्रिता चतुर्विंशतिका, श्रीमेरुविजय-

---

१ अनुष्टुब् , २ अर्णवदण्डकः, ३ आर्यागीतिः स्कन्धकेत्यपरनाम्नी, ४ इन्द्रवज्रा, ५ उपजातिः, ६ द्रुत-विलम्बितम्, ७ द्विपदी, ८ नर्कुटकम्, ९ पुष्पिताग्रा, १० पृथ्वी, ११ मन्दाक्रान्ता, १२ मालिनी, १३ रुचिरा, १४ वसन्ततिलका, १५ शार्दूलविक्रीडितम्, १६ शिखरिणी, १७ स्रग्धरा,१८ हरिणी इति अष्टादश च्छन्दांसि । किं पद्यं कस्मिन् छन्दसि रचितमिति निवेदितं मदीयगूर्जरगिरानुवादादिसङ्कलितायाः स्तुतिचतुर्विंशति-काया गूर्जरोपोद्धाते षोडशे सप्तदशे च पृष्ठे ।

२ एतेषां पद्यानां मातृकावर्णानुक्रमेणानुक्रमणी प्रथमटिप्पणे निर्दिष्टस्य ग्रन्थस्य ३२७ तमे ३२८ तमे पृष्ठे च समस्ति ।

३ एतेषां नामधेयानि निवेदितान्यग्रे ।

४ इयं चतुर्विंशतिकाऽपि मदीयगूर्जरभाषान्तरादिसमेता मुद्रापिता श्रीआगमोदयसमितिद्वारा । तस्याश्चादिमः श्लोकोऽयम्—

" नम्रेन्द्रमौलिगलितोत्तमपारिजात—
मालार्चितक्रम ! भवन्तमपारिजात ! ।
' नाभेय ! ' नौमि भुवनत्रिकपापवर्ग—
दायिन् ! जिनास्तमदनादिकपापवर्ग ! ॥ १ ॥ "

गणिगुम्फिताः चतुर्विंशतिजिनानन्दस्तुतयः[1] 'वसन्ततिलका'च्छन्दसि निबद्धाः, श्रीहेमविजयगणिविरचिताः चतुर्विंशतिजिनविजयस्तुतयः[2] 'मालिनी'च्छन्दसि ग्रथिताः, न्यायविशारद–न्यायाचार्य–महामहोपाध्यायश्रीयशोविजयविहिता ऐन्द्रस्तुतयः श्रीशोभनमुनीशसन्दब्धस्तुतिचतुर्विंशतिकायाः छन्दःसु प्रणीताः चतुर्थाष्टमद्वादशादिपद्येषु तत्तद्देवतास्तुतिसमन्विताश्च।[3]

अपराण्यपि वर्तन्ते कतिपयानि काव्यानि यानि चरणद्वयसमानतारूपयमकविभूषितानि। तथाहि—(१) श्रीसोमसुन्दरसूरिशिष्यश्रीजिनसुन्दरसूरिकृताः श्रीचतुर्विंशतिजिनस्तुतयः[4] सावचूरयः शार्दूलविक्रीडितच्छन्दसि रचिताः २८पद्यात्मिकाश्च। तत्रादिमं पद्यं यथा—

"श्रीमानाद्यजिन ! श्रियं सृज सतामभ्यर्थितामानत—
श्रीदानन्दित ! देवपाद ! परमालोकत्रयीपावन !
यस्याज्ञां तव तन्वती विजयते पुंसामसीमोदयं
श्रीदानं दितदेवपादपरमा लोकत्रयीपावन ! ॥ १ ॥"

(२) एभिर्वाचंयमैरेतावत्पद्यात्मिकाः श्रीचतुर्विंशतिजिनस्तुतयो रथोद्धताच्छन्दस्यपि गुम्फिताः। तासामाद्यं पद्यमिदम्—

---

१ अयं ग्रन्थो मदीयगुर्जरभाषान्तरादिसमन्वितः श्रीआगमोदयसमितिद्वारा मुद्राप्यमाणो वर्तते। समग्रपद्येषु द्वितीयतुरीयचरणसमानतेति विशिष्टता। तत्रायं प्रथमः श्लोकः—

"आनन्दमन्दिरमुपैमि तमृद्धिविश्व-
नाभेय ! देवमहितं सकलाभवन्तम्।
लब्ध्वा जयन्ति यतयो भवयोधमादौ
'नाभेय'देवमहितं सकला भवन्तम् ॥ १ ॥"

२ अयं ग्रन्थोऽद्यापि अप्रसिद्धः। अत्रापि द्वितीयचतुर्थचरणसमानता दरीदृश्यते। एतस्य यन्त्रालयप्रेषणोचितं पुस्तकं मयाऽकारि। यथासाधनं मुद्राप्यते सान्वयाङ्कम्। तस्यायमिमः श्लोकोऽयम्—

"दिश सुखमखिलं नः सीरसाधारणत्वं
वृषभ ! रतरसायामीश ! मानं दधानः।
सुरनरनिकरेण स्तूयसे यः सदोयद्-
वृषभरतरसा यामीशमानन्दधानः ॥ १ ॥"

३ एते पञ्चापि ग्रन्थाः षण्णवतिपद्यप्रमिता मे दृष्टिपथमागताः। अन्येऽपि चतुर्विंशतिजिनस्तुतिस्वरूपाः चरणसदृशतारूपयमकालङ्कृता एतावत्पद्यप्रमाणका भवेयुः। परन्तु न च तन्नामश्रवणेनापि कृतार्थोऽहं जातः।

४ एतत्मुद्रणालयपुस्तिका मया क्रियमाणा वर्तते।

*" श्रीजिनर्षभ ! भवन्तमाश्रितो
देव ! भव्यनयनाभिनन्दन ! ।
भूरिवैभवभरो भवी भवे-
देव भव्यनय ! नाभिनन्दन ! ॥ १ ॥ "

( ३ ) एतत्प्रभुप्रणीता विशेषतयोपजातिच्छन्दसाऽपि चित्रिताः स्तुतयोऽष्टाविंशतिवृत्तमिताः । तासामिदमाद्यं पद्यम्—

*" विभो ! न नाभेय ! जितास्त्वयाऽत्त-
श्रीपुण्डरीकाचल ! के बलेन ।
भावद्विषो ध्यानमयेन विश्व-
श्रीपुण्डरीकाऽचल ! केवलेन ! ॥ १ ॥ "

( ४ ) पूर्वाचार्यप्रणीताऽनुष्टुप्छन्दसि २८पद्यप्रमाणा प्रकरणरत्नाकरे ( भा० २, पृ० २५८ ) मुद्रिता चतुर्विंशतिजिनस्तुतिः । तस्याः प्रथमं पद्यमिदम्—

" प्रणम्यादिजिनं प्राणी, मरुदेवाङ्गजाऽयते ! ।
हरणे पापरेणूनां, मरुदेवाऽङ्गजायते ॥ १ ॥ "

( ५ ) श्रीसोमप्रभसूरिभिः २७वृत्तात्मकाः चतुर्विंशतिजिनस्तुतयः प्रणीताः । तासामादिमं पद्यमिदम्—

*" यत्राखिलश्रीः श्रितपादपद्म-
युगा दिदेव स्मरता नवेन ।
सिद्धिर्मयाऽप्यो जिन ! तं भवन्तं
युगादिदेव ! स्मरतानवेन ॥ १ ॥ "

( ६ ) द्रुतविलम्बितच्छन्दसि श्रीराजसागरशिष्यश्रीरविसागररचितं २६पद्यप्रमितं श्रीनेमिजिनस्तवनं समस्ति यस्याद्यं पद्यमिदम्—

*" प्रियमदाद् भुवि योऽनतिगोचरी-
कृतमलङ्करणं विभवासनम् ।
तमभिनौमि शिवातनयं यशः-
कृतमलङ्करणं विभवासनम् ॥ १ ॥ "

---

* एतच्चिह्नाङ्कितोल्लेखाः सूचिता दाक्षिणविहारिमुनिरत्नश्री**अमरविजय**विनेयैः साहित्यरसिकमुनिराजश्री-**चतुरविजयैः**, अतस्तेषामुपकार्योऽस्मि ।

( ७ ) श्रीसोमप्रभसूरिकृताः २५पद्यप्रमाणा उपजातिच्छन्दोनिबद्धाश्चतुर्विंशतिजिनस्तुतयः। तासां प्रथमं पद्यमिदम्—

×" जनेन येन क्रियते गभीर-
नाभे! ऽयशोभाहर! ते नतेन।
जिनेन्द्र! भक्तिस्त्वयि नैव भव्यं
नाभेय! शोभाहर तेन! तेन ॥ १ ॥"

( ८ ) श्रीधर्मशेखरगणिकृतः स्रग्धराच्छन्दसि रचितः पञ्चविंशतिवृत्तात्मको जिनस्तवः। तस्य चेदं प्रथमं पद्यम्—

*" श्रीनाभेयोपमानोन! रहित! तमसा नन्द! दारामनोऽर्ज!
श्रीनाऽभे योऽपमानो नरहिततम! सानन्ददाऽऽरोऽमनोज्ञं!।
न त्वां नो तार! धीरासम! वृषभजिन! ब्रह्म चारित्रसारं
नत्वा नो तारधीरा समवृषभ! जिनब्रह्मचारित्रसारम् ॥ १ ॥"

अत्र प्रथमद्वितीययोस्तृतीयतुरीययोश्चरणयोः समानतारूपयमकः।

( ९ ) प्रतिदिनं नवस्तवनिर्माणपुरस्सरं निरवद्याहारग्रहणाभिग्रहवतां यमकश्लेषचित्रच्छन्दोविशेषादिनवनवभङ्गीसुभगानां सप्तशतीमितानां निजनामाङ्कितस्तवानां श्रीसोमतिलकसूरिभ्य उपदीकर्तॄणां श्रीजिनप्रभसूरीणां शारदास्तोत्रं त्रयोदशपद्यप्रमितं विषमपादसमानतारूपयमकान्वितसमपद्यात्मकं समपादसमानतारूपयमकसमेतविषमपद्यान्वितं च। तस्येदमग्रिमं पद्यम्—

" वाग्देवते! भक्तिमतां स्वशक्ति-
कलापवित्रासितविग्रहामे!।
बोधं विशुद्धं भवती विधत्तां
कला पवित्रा सितविग्रहा मे ॥ १ ॥

( १० ) एभिर्महोदयैरेतादृग्यमकस्तबकितं एतावत्पद्यात्मकं निजगुरुश्रीजिनसिंहसूरिस्तवनं व्यधायि उपजातिच्छन्दसा। तस्येदं प्रथमं पद्यम्—

" प्रभुः प्रदद्यान्मुनिपक्षिपङ्क्ते-
र्नागारिरागोऽपचितिं सदा नः।
समुद्वहन् श्रीजिनसिंहसूरि-
र्नागारिरागोपचितिं सदानः ॥ १ ॥

× एतच्चिह्नलक्षितोल्लेखा जैनाचार्यश्रीविजयवल्लभसूरिशिष्यरत्नमुनिराजश्रीविचक्षणविजयसकाशं समुपविश्य मया तत्प्रतिभ्योऽवतारिताः। तस्मात् तेषामहमृणी वर्ते।

( ११ ) एभिरेव महात्माभिः प्रणीतोऽनुष्टुब्वृत्तात्मकः प्रकरणरत्नाकरस्य द्वितीये भागे (पृ०२५७) प्रसिद्धः १३पद्यप्रमित एतादृग्यमकालङ्कृतः श्रीवीरजिनस्तवः। तस्य द्वितीयं पद्यमिदम्—

" श्रितास्त्वां कमलाहर्म्य–कल्पपादपयोज ! ये ।
करौ तान् प्रति विश्वैक–कल्पपादप ! योजये ॥ १ ॥ "

( १२ ) एतत्सूरिसत्तमैः श्रीपार्श्वनाथप्रातिहार्यस्तवनं दशवृत्तात्मकं रथोद्धताच्छन्दसि व्यरचि। तत्र चायं श्लोकोऽग्रिमः—–

" त्वां विनुत्य महिमश्रिया महं
पन्नगाङ्क ! मठदर्पकोषिणम् ।
स्वां पुनामि किमपीनं ! रक्षिता–
पन्न ! गां कमठदर्पकोषिणम् ॥ १ ॥ "

( १३ ) एतत्प्रभुप्रणीतो नववृत्तात्मकः श्रीपार्श्वनाथस्तवः। तस्य चायमादिमः श्लोकः—

" श्रीपार्श्व भावतः स्तौमि, महोदधिमगर्हितम् ( ? ) ।
उद्धरन्तं जगद् दुःखे–महोदधिमगर्हितम् ॥ १ ॥ "

( १४ ) एभिः मुनिप्रष्ठैर्निर्मिता श्रीचन्द्रप्रभस्वामिस्तुतिः प्रकरणरत्नाकरे द्वितीयभागे ( पृ० २६२ ) प्रसिद्धा चतुःश्लोकात्मका। तस्या आदिमं पद्यमिदम्—

" देवैर्यस्तुष्टुवे तुष्टैः, सोमलाञ्छितविग्रहः ।
दद्याच्चन्द्रप्रभः प्रीतिं, सोऽमलां छितविग्रहः ॥ १ ॥ "

एतस्यां स्तुतिचतुर्विंशतिकायां न केवलं चरणसदृशतारूपं यमकम्, किन्तु प्रत्येक पादे कतिपयाक्षरपुनरावृत्तिरूपमपि यथा काव्यमालायाः सप्तमगुच्छके प्रसिद्धेऽनुप्रासयमकाद्यलङ्कारालङ्कृते श्रीजम्बुमुनीश्वरप्रणीते जिनशतके ( प० १, श्लो० १५; प० ३, श्लो० १३, प० ४, श्लो० ९ ) चतुर्विंशतिकाया अन्तिमपद्यचतुष्टये च। एतादृग्यमकमया पञ्चजिनस्तुतिरपि वर्तते। तद्दिदृक्षुभिर्दृश्यतां ग-परिशिष्टम्। अपरश्चास्यां श्रीशोभनस्तुतौ लाटानुप्रासमण्डित

१ इदं काव्यं मदीयगुर्जरभाषानुवादसमेतं दृश्यते श्रीभक्तामरस्तोत्रपादपूर्तिरूपकाव्यसङ्ग्रहस्य द्वितीये विभागे।

२ येषु पद्येषु समचरणसमानता समस्ति तेषां पद्याङ्का यथा—१–१६, २१–४८, ५७–८८, ९३–९६ एतेषु पद्येषु नवादिद्वादशपर्यन्तानि पद्यानि तु लाटानुप्रासेनापि समलङ्कृतानि। आद्यान्तिमचरणसदृशता विशिष्टानि पद्यानि चत्वारि ( ५३–५६ )। समविषमोभयचरणसमानतारूपमहायमकविभूषितानि पद्यानि अपि चत्वारि ( ४९–५२ )। एतानि द्विचरणात्मकानीव प्रतिभाति। यमकापेक्षया अधिकप्रभावशालिनी द्वे स्तोत्रे श्रीचतुर्विंशतिजिनानन्दस्तुतिपरिशिष्टयोर्वर्तेते। तद्दर्शनेन नयनसाफल्यं भाविष्यति यमकप्रेक्षणप्रफुल्लितहृदयानाम्

श्रीसुमतिजिनस्तुतिः समस्ति। तथाविधलाटानुप्रासविभूषिता वीरस्तुतिः श्रीराजसागरशिष्यरविसागरमुनीश्वरै रचिता या ख-परिशिष्टे विद्यते।

एतावदेव यमकमयं जैनसंस्कृतसाहित्यं समस्तीति न वाच्यम्, अन्यान्यग्रन्थेषु अपि विविधयमकावलोकनात्। तथाहि—

( १ ) श्रीचारित्ररत्नगणिकृताः प्रतिपदं चतुःपञ्चषडक्षरपुनरावृत्तिरूपयमकमया वसन्ततिलकाच्छन्दसि विरचिताः २८पद्यप्रमाणाश्चतुर्विंशतिजिनस्तुतयः। निदर्शनार्थं श्रीसुपार्श्वजिनस्तुतिर्यथा—

* “ स्वामिन्! सुपार्श्व! भगवन्! जितकोप! मानै-
प्रज्ञाब्धिमानसजले कतकोपमान!।
स्तोता प्रयाति तव देव! न कोऽपमान-
मायः शिवं जगति यस्य हि कोपमा न?॥ १॥ ”[1]

( २ ) प्रत्येकचरणे द्व्यक्षरपुनरावृत्तियमकयामितं श्रीपार्श्वजिनस्तवनं श्रीसोमसुन्दरसूरिकृतं सावचूरिकं ९पद्यात्मकम्। तस्य चाद्यं पद्यम्—

* “ विभाति यद्भास्तरुणाऽरुणाऽरुणा
किमङ्गमेघे रुचिरा चिराऽचिरा।
तवात्र ते पार्श्व! महेम हे महे—
श्वराऽयितुं निर्विपदे पदे पदे॥ १॥ ”

( ३ ) एवंविधयमकात्मकं श्रीफलवर्धिपार्श्वस्तोत्रं श्रीसूरचन्द्रर्षिभिः प्रणीतं श्रीस्तोत्ररत्नाकरद्वितीयभागे समस्ति यस्याद्यं पद्यमेवम्—

श्रेयोमयं ह्री बलमालमाल-
ह्लादावलीदं सकरंकरं करम्॥
श्रेयोऽग्रलक्ष्म्याः प्रवरं वरं वरं
पार्श्वं भजेऽहं सकलं कलङ्कलम्॥ १॥

---

१ पादान्तयमकमयानि प्रचुराणि पद्यानि वर्तन्ते **चतुर्विंशतिकायाम्**। एवंविधयमकविशिष्टं **श्रीदेवनन्दि**प्रणीतं **सिद्धिप्रिय**स्तोत्रं च विद्यते यत् **काव्यमालायाः** सप्तमगुच्छके मुद्रितम्। एतादृक् २७पद्यप्रमित उपजातिच्छन्दोरचितो **विहरमाणविंशतिजिन**स्तवोऽपि समस्ति यः श्री**स्तोत्ररत्नाकर**द्वितीयभागान्ते दृश्यते। **श्रीजिनप्रभ**सूरिप्रणीतं त्रिचतुरक्षरपुनरावृत्तियुतमुपजातिच्छन्दोबद्धं मदीयगूर्जरानुवादसहितं **श्रीपार्श्व**जिनस्तोत्राष्टकं तु विलोक्यते **चतुर्विंशतिकायां** पञ्चदशे षोडशे च पृष्ठे।

( ४ ) श्रीजिनप्रभसूरिप्रणीता चतुर्विंशतिजिनस्तुतिः प्रत्येकपद्यचतुर्थचरणत्र्यक्षरपुनरावृत्तियमकबद्धा । एतादृग्यमकालङ्कृतो वर्तते द्वादशः सर्गः श्रीमुनिभद्रसूरिविरचिते श्रीशान्तिनाथमहाकाव्ये, नवमसर्गस्य ३३ श्लोकाश्च श्रीअरसिंहकृते सुकृतसङ्कीर्तने ।

( ५ ) पूर्वमुनिवर्यप्रणीता प्रत्येकपादे तथाविधयमकालङ्कृता चतुर्विंशतिजिनस्तुतिर्यस्या आदिमः श्लोको यथा—

× " 'ऋषभ'नाथ ! भनाथनिभानन !
प्रसृतमोहतमोहननक्षम ! ।
"दिश सुवर्ण ! सुवर्णसुवर्णरुक् !
परमकाममकाम ! विदीर्णरुक् ! १ ॥ "

( ६ ) श्रीजिनप्रभसूरिभिरपि एवंविधयमकबद्धा स्तुतिः निरमायि । तस्या आद्यं पद्यमिदम्—

× " निर्माय निर्मायगुणर्द्धितीर्थं
योऽगेन योगेन हठेन सिद्धः ।
कल्याणकल्याणसुमेरुरस्तु
देवो मुदे वो मुनिसुव्रतः सः ॥ १ ॥ "

( ७ ) विलोक्यतामखण्डखण्डयमकमण्डिता इन्द्रवज्राच्छन्दसि २८पद्यप्रमाणा एभिरेव विद्वद्भिः प्रणीता चतुर्विंशतिजिनस्तुतिर्या प्रकरणरत्नाकरस्य चतुर्थे विभागे ( पृ० ३०३ ) मुद्रिता यस्याश्च निम्नलिखितं पद्यमाद्यम्—

तत्त्वानि तत्त्वानिभृतेषु सिद्धं
भावारिभावारिविशोषघर्मम् ।
दुर्बोधदुर्बोधमहं हरन्त-
मारम्भमारं भजताऽऽदिदेवम् ॥

×( ८ ) त्रिदशतरङ्गिणी समचरणे एतादृग्यमकान्विता । तस्यास्तु प्रथमं पद्यमिदम्—

" नमति यो समितिस्त्रिदिवौकसां
सवसुधा वसुधाम सरस्वतीम् ।

---

१ इदं काव्यं श्रीस्तुतिसङ्ग्रहे मुद्रितम् । तत्र निम्नलिखितश्लोकः प्रारम्भिकः—

" ऋषभ ! नम्रसुरासुरशेखर-
प्रपतयालुपरागपिशङ्गितम् ।
क्रमसरोजमहं तव मौलिना
जिन ! वहे नवहेमतनुद्युते ! ॥ १ ॥ "

मनसि तां वहत प्रणयिप्रियं-
क्रमधरामधराहतविद्रुमाम् ॥ १ ॥"

प्रथमतरङ्गप्रान्तस्थ उल्लेखश्चायम्—

"यः स्मौति हीरविजयव्रतिवज्रपाणि-
पट्टैकपिङ्गदगलीकललामलीलाम् ।
श्रीमत्तपागणनभोङ्गणभासुरश्री-
र्जीयाच्चिरं विजयसेनमुनीन्द्रचन्द्रः ॥ १०८ ॥"

इति श्रीमदैदंयुगीनयुगप्रधानविजयमानभट्टारकश्रीहीरविजयसूरीश्वरपट्टकोटीरहीरविजयमानश्रीविजयमानसूरीश्वरस्तुतित्रिदशतरङ्गिण्यां प्रथमस्तरङ्गः ॥ १ ॥

( ९ ) प्रेक्ष्यतां प्रेक्षावद्भिर्निम्नलिखितपद्यप्रारम्भिका पद्यचतुष्कमिता जिनस्तुतिर्या श्रीस्तोत्ररत्नाकरद्वितीयभागे मुद्रिता—

"सहसा महसा सहसा महसा
महता परमं महताऽपरमम् ।
शमितस्वमृतं शमितस्वमृतं
गवि तीर्थकरं गवि तीर्थकरम् ॥ १ ॥"

( १० ) तत्र तोटकच्छन्दसि श्रीशिवसुन्दरनिर्मितः पार्श्वनाथस्तवोऽपि दर्शनीयो यस्याद्यं पद्यमेवम्—

"वैरसंवरसंवरसं वैरसं-
भवदं भवदं भवदम्भवदम् ।
समभासमभासमभासमभा-
गमभंगमभंगमभं गमभम् ॥"

( ११ ) श्रीजिनप्रभसूरीणां चतुर्विंशतिजिनस्तुतयः प्रत्येकपद्यस्य चतुर्थचरणे त्र्यक्षरावृत्तित्रयविशिष्टाः ।

---

१ एतत् काव्यं काव्यमालायाः सप्तमगुच्छके मुद्रितम् । तस्य चायमादिमः श्लोकः—

"कनककान्तिधनुःशतपञ्चको-
च्छ्रितवृषाङ्कितदेहमुपास्महे ।
रतिपतेर्जयिनं प्रथमं जिनं
वृषभं वृषभं वृषभाञ्जिनः ॥ १ ॥"

( १२ ) एवंविधयमकमयमपूर्णकाव्यं समासादितमधुनैव । तस्यादिमं पद्यं यथा—

* ऋषभदेवमनन्तमहोदयं, नमत तं तपनीयतनूरुचम् ।
अजनि यस्य सुतो धुरि चक्रिणां, शुभरतो भरतो भरतोदरे ॥ १ ॥"

( १३ ) एतादृग्यमककलितं श्रीदेवरत्नसूरिशिष्यरचितं २८पद्यप्रमितं स्तोत्रमपि वर्तते यस्य प्रथमं पद्यं यथा—

*" सकलमङ्गलभूरुहजीवनं, जिनपतिं जगतीजनजीवनम् ।
नमत नाभिसुतं वरचिन्मयं, गजगतिं जगति प्रभुतालयम् ॥ १ ॥"

( १४ ) पूर्वमुनिराजरचितं सर्वजिनसाधारणस्तवनं समपादे एवंविधयमकमण्डितं चतुर्दशपद्यात्मकं द्रुतविलम्बितच्छन्दसि निबद्धम् । तस्य चायं प्रथमः श्लोकः—

" [७]त्वयि [४]लसद्गुणचन्दनशाखिनां, [६]शमलये मलयेऽ[३]मल ! [८]ये [५]नताः ।
[२]जिन ! [१३]नदन्ति [१०]तदौकसि [११]दुर्धराः, [९]करणवारणवारण ! [१२]वाजिनः ॥ १ ॥"

( १५ ) श्रीशीलरत्नसूरिकृतं श्रीसीमन्धरस्वामिनोऽष्टकं एवंविधयमकविभूषितं विद्यते यस्य प्रथमं पद्यं तु यथा—

* " कल्याणलतासु वसन्तर्तुं, सुरभासु रभासुरभावन ! तम् ।
सीमन्धरजिनपतिमधुरगिरं, नम काममकाममकामहरम् ॥ १ ॥"

( १६ ) पूर्वाचार्यप्रणीता महावीरस्तुतिर्नवपद्यप्रमिता सावचूरिः प्रत्येकपादे एवंविधयमकान्विता । तस्या अष्टमं पद्यं यथा—

× " [१]परमया [१०]रमयारमया [५]त्वां-[८]हिकमलं [११]कऽ[१३]मलं [१२]कऽमलम्भ[१५]यत् ।
[१४]न [३]नतमानतमाऽनतमान[२]मन् ! [४]वरविभा ! [७]रविभा ! [६]रविभासुरम् ॥ १ ॥"

( १७ ) एवंप्रकारयमकमण्डितमन्यत् २८ पद्यप्रमाणं श्रीजिनप्रभसूरिप्रणीतं प्रकरणरत्नाकरे ( भा० ४, पृ० ३०३ ) मुद्रितं स्तोत्रं यस्याग्रिमं पद्यमित्थम्—

" तत्त्वानि तत्त्वानि भृतेषुसिद्धं भावारिभावारिविशोषधर्मम् ।
दुर्बोधदुर्बोधमतं हरन्तमारम्भमारं भजतादिदेवम् ॥ १ ॥"

( १८ ) श्रीरविसागरमुनीश्वरकृतमेकादशपद्यात्मकं श्रीवीरजिनस्तवनमप्येवंविधयमककलितं यस्यादिमं पद्यमित्थम्—

* श्रीवर्धमानभगवान् भगवान् प्रचक्रे, नम्रान् समग्रभविकान् भविकान्वितांश्च ।
पादद्वयं सकमलं कमलं विधातृ-देवेन्द्रचन्द्रमहितं महितं शिवाय ॥ १ ॥"

सहर्षं समीक्ष्यतां यमकावलोकनाभिलाषिभिः ( १ ) प्रतिपादान्त'सारङ्ग'शब्दयमकमयः श्रीगुणविजयगणिगुम्फितः श्रीमहावीरजिनस्तवः श्रीजैनस्तोत्रसङ्ग्रहस्य द्वितीये विभागे (पृ० १३१–१३३), ( २ ) 'पराग'शब्दाष्टोत्तरशतार्थनिबद्धं श्रीलक्ष्मीकल्लोलगणिकृतं २८-

पद्यप्रमाणं साधारणजिनस्तवनं प्रकरणरत्नाकरस्य चतुर्थे विभागे ( पृ० २७ ) च प्रसिद्धम् । अत्र तु साक्षादवलोकयतां कामक्रीडाच्छन्दासि वृत्तचतुष्टयमितायाः ( ३ ) श्रीऋषभजिनस्तुतेराद्यं पद्यम्—

*"श्रीनाभेयं योगिध्येयं देहज्योतिःसारङ्गं, सर्वश्रेयःश्रेयःपद्या गत्या माद्यत्सारङ्गम् ।
कर्मक्षोणीजन्मश्रोणीश्रेणिध्वंसे सारङ्गं, नौम्युत्कण्ठाव्याप्तस्वान्तः सौवस्थाम्ना सारङ्गम् ॥१॥"

अपरञ्च विलोकयता ( ४ ) [1]प्रतिपद'सरस्वती'शब्दयमकान्वितस्य श्रीयुगादिजिनस्तवनस्य एकोनविंशतिपद्यात्मकस्य महोपाध्यायश्रीचारित्ररत्नगणिशिष्यपं० जिनमाणिक्यगणिविरचितस्य निम्नलिखितं द्वितीयं पद्यम्—

* " सरस्वतीलब्धवरावगाहो, सरस्वतीवेश ! तव स्तवे स्वाम् ।
सरस्वतीमेषं परस्तवैक—सरःस्वतीर्णामपि तारयामि ॥ १ ॥ "

( ५ ) श्रीरत्नशेखरसूरिभिः प्रतिपदान्तर्गत'नवखण्ड'शब्दयमकमयं घोघामण्डननवखण्डपार्श्वजिनस्तवनं ८पद्यात्मकं निरमायि । तस्येदमाद्यं पद्यम्—

* " जय प्रभो ! त्वं नवखण्डपृथ्वी-प्रख्यातकीर्ते ! नवखण्डमूर्ते ! ।
भव्याब्जभानो ! नवखण्डसंविद्—विश्वेश्वर ! श्रीनवखण्डपार्श्व ! ॥ १ ॥ "

( ६ ) श्रीसकलचन्द्रकृते 'सिद्धं हृदये'तिप्रारम्भिके ३० पद्यात्मके सावचूरिके श्रीपार्श्वनाथस्तवे 'हरिहरि'शब्दसङ्कलितं निम्नलिखितं पद्यद्वयम्—

* " हरिहरिचलचित्तगुप्तिगुप्तं, हरिहरिदङ्गमयूषराजमानम् ।
कमठहरिहरिहरिप्रियादं, हरिहरिणातपवारणत्रयाप्तम् ॥ २७ ॥
हरिहरिपरिचर्योपयुक्तं, नखहरिहारि सुदीप्रलोकलेखम् ।
हरिहरिभयभीतिदं च पार्श्वं, हरिहरिचन्दनसोदरं नमामि ॥ २८ ॥ "

( ७ ) 'देवेन्द्रैरनिश'मितिश्लेषस्तोत्र-'यूयं युवा त्व'मितिश्लेषस्तुत्यादिरचयितृश्रीधर्मघोषसूरिप्रणीता श्रीस्तोत्ररत्नाकरस्य प्रथमे भागे ( पृ० १–७ ) मुद्रिता [2]अष्टमहायमकसमन्विता चतुर्विंशतिजिनस्तुतिः, यस्या आदिमं पद्यमिदम्—

" जय वृषभ ! जिनाभिष्टूयसे निम्ननाभि—जडिमरविसनाभिर्यः सुपत्राङ्गनाभिः ।
तम इह किल नाभिक्षोणिभृत्सूनुनाऽभि—द्रुतभुवनमनाभिं क्षान्तिसम्पत्कुनाभिः ॥१॥ "

( ८ ) अक्षरद्वितयत्रितयपुनरावृत्तिमयं सप्तश्लोकमितं श्रीस्तोत्ररत्नाकरद्वितीयभागे ( पृ० ८६ ) मुद्रितं श्रीक्षमाकल्याणसन्दब्धं श्रीपार्श्वजिनस्तवनम् । तस्यायमादिमः श्लोकः—

---

१ प्रथमनवपद्यानां प्रतिपादस्य प्रारम्भे, द्वितीयनवपद्यानां तु अन्ते, तृतीयनवपद्यानां पुनः प्रारम्भे सरस्वतीपदं विद्यते ।

२ उक्तं च **गुर्वावल्यां** ( श्लो० २१६ )—

" श्रीशारदालब्धवरो निशैकया—ऽष्टभिः स कृत्वा यमकैरलङ्कृताः ।
स्तुतीर्जिनानां ज्ञमदज्वरौषधी—रबूबुधद् गूर्जरराजमन्त्रिणम् ॥ "

" लक्ष्मीनिदानं गुरुकर्मदानं, सद्धर्मदानं जगते ददानम् ।
यक्षेशपार्श्वाङ्कितपादपार्श्वं, नुवामि पार्श्वं भवभेदपार्श्वम् ॥ १ ॥ "

( ९ ) श्रीसोमतिलकसूरिसूत्रिते सर्वज्ञस्तोत्रे 'सदानवसुराजितम्' इति नानार्थात्मकं तुरीयं चरणं समग्रेषु पद्येषु वरीवर्ति ।

विशेषतो यमकाकाङ्क्षिभिर्द्रष्टव्यतां सानन्दं समग्रं श्रीजम्बूकविकृतं चन्द्रदूतकाव्यम् ।

जैनसाहित्ये लाटानुप्रासपरिष्कृतान्यपि काव्यानि भूयांसि सन्ति । तथाहि—

( १ ) श्रीनयविमलमुनीशविरचितं षट्पद्यात्मकं श्रीशान्तिनाथस्तवनम् । तस्यादिमं पद्यमित्थम्—

*" वन्देऽहं श्रीशान्तिजिनेन्द्रं, नन्दितजनताहृदयं रे ।
हृदयङ्गमगुणराशिमुदारं, दारितमोहं सदयं रे ॥ वन्दे० ॥ १ ॥ "

( २ ) एभिर्महाशयैरेतादृशं श्रीपार्श्वनाथस्तवनमपि प्रणीतम् । तत्प्रारम्भिकं पद्यमिदम्—

* " वन्दे वामातनयमुदारं, दारितमारविकारं रे ।
कारणमीहितदानविधाने, ध्याननदीनेतारं रे ॥ वन्दे० ॥ १ ॥ "

( ३ ) श्रीलक्ष्मीकल्लोलमुनिराजकृतं २३पद्यप्रमितं मुक्ताक्षरबद्धविवृतं सटीकं श्रीऋषभजिनस्तवनम् । तस्याग्रिमं पद्यमिदम्—

× " जिनराजमहं मरुदेविभवं, विभवं ऋभुसन्ततिसेव्यपदम् ।
व्यपदं भवदं हतशोकरिपुं, करिपुङ्गवयानमये सकलम् ॥ १ ॥ "

( ४ ) वर्णत्रयपुनरावृत्तिमयं श्रीजिनप्रभसूरिवर्यविरचितं १५वृत्तात्मकं श्रीजीरापल्लिपार्श्वजिनस्तवनं यस्यादिमं पद्यमिदम्—

" जीरिकापुरपतिं सदैव तं, दैवतं परमहं स्तुवे जिनम् ॥
यस्य नाम जगतो वशङ्करं, शङ्करं जपति मन्त्रवज्जनः ॥ १ ॥ "

(५) श्रीजयशेखरसूरिकृतो लाटानुप्रासालङ्कृतः श्रीमुनिसुव्रतस्तवो यस्यादिमं पद्यमिदम्—

" महे महं सुव्रतदैवतं सतां, स्तवं सतां यं दधतं महाशयाः ।
महाशयाः संस्तुवतेऽदरं घनी-दरं घनाभाविजितग्रहाधिपम् ॥ १ ॥ "

( ६ ) पूर्वमुनिवर्यप्रणीतं श्रीपार्श्वनाथस्तोत्रम् । अस्येदं प्रथमं पद्यम्—

" प्रणमामि सदा जिनपार्श्वजिनं, जिननायक ! दायक ! सुख( सौख्य ? )घनम् ।
घनचारुमनोहरदेहधरं, धरणीपतिनित्यसुसेवकरम् ॥ १ ॥ "

---

१ इदं स्तोत्रं सावचूरिकं मुद्रितं श्रीजैनस्तोत्रसन्दोहस्य द्वितीये भागे (पृ० ३३-३५)। अस्य गुर्जरानुवादो मयाऽकारि यः स्तुतिचतुर्विंशतिकायां ( पृ० १६८-१७० ) मुद्रितः ।

२ सिरिसिरिवालकहासंज्ञके ग्रन्थे एवंविधशब्दालङ्कारमण्डितं श्रीआदिजिनस्तवनम् ।

( ७ ) उपाध्यायश्रीविनयविजयविरचितं श्रीवृषभजिनस्तवनम्, ( ८ ) श्रीयशोविजयोपाध्यायकृतं श्रीआदिजिनस्तवनं च ।

एवमनेकानि काव्यानि जैनसाहित्ये सन्ति । अत्र तु समग्रतः साक्षात् समीक्ष्यतां श्रीरविसागरविरचिता यमकादिसमलङ्कृता निम्नलिखितेयमिन्द्रभूतिस्तुतिः--

*" श्रीइन्द्रभूतिगणभृद् गणभृच्छुभानां, भानां भजन्नविजनो विजनोऽपकण्ठः ।
कण्ठप्रियाभरणकै रणकैर्न शस्त-शस्ताश्रितैः सविबुधैर्विबुधैर्मुदे वः ॥ १ ॥
देवप्रभोर्विनमतो नमतोषदानदान-स्फुरद्द्विपवतो पवतोऽघकृत्यात् ।
कृत्याद्धविष्टहृदयो हृदयोदयस्तं, यस्तन्त्रमास निकरो निकरो जिनानाम् ॥ २ ॥
नानाङ्गवर्णरुचिरा रुचिराजमाना, मानान्विता सुरपतेरपतेजसो न ।
सो नत्विकाद्यवृजिना वृजिनावलीनां, लीनाङ्ग चेतसि तवासितवाग् विभाति ॥ ३ ॥
भातिश्रियाऽमरवशारवशावरावै-रावैरभासततमां ततमांसलोरुः ।
लोरूर्जिता जिनपदेऽनपदेवसेवे, सेवेहिका सकलया कलयाऽऽशु देवी ॥ ४ ॥"

यथा यमकमयादिकाव्येषु जैनानां सिद्धहस्तता तथा चित्रादिकाव्येष्वपि । नानाबन्धबन्धुराणि एकाक्षरद्व्यक्षरविचित्राण्यप्यनेकानि काव्यानि वर्तन्ते । कतिपयानि श्रीस्तोत्ररत्नाकरद्वितीयभागे मुद्रितानि दृश्यन्ते । अत्र तु मुद्रितामुद्रितानां कतिचित्काव्यानामुल्लेखः क्रियते, यथा—

( १ ) श्रीजिनप्रभसूरिप्रणीतं प्रकरणरत्नाकरे मुद्रितं महावीरस्तवनं यत्रानेकानि चित्राणि नयनपथमवतरन्ति । अतः तस्याद्यं निम्नलिखितं पद्यं चरितार्थं भवति--

" चित्रैः स्तोष्ये जिनं वीरं, चित्रकृच्चरितं मुदा ।
प्रतिलोमानुलोमाद्यैः, खड्गाद्यैश्चातिचारुभिः ॥ १ ॥"

( २ ) श्रीकुलमण्डनसूरिरचितोऽष्टादशारचक्रबन्धमयः श्रीमहावीरस्तवो यस्यान्तिमं पद्यं यथा-

" चक्रायोमुखशूलशङ्खसहिते सुश्रीकरीचामरे
सीरं भल्लशरासने आसिलता शक्त्यातपत्रे रथः ।
कुम्भार्धभ्रमपङ्कजानि च शरस्तस्मात् त्रिशूलाशनी
चित्रैरेभिरभिष्टुतः शुभधियां वीर ! त्वमेधि श्रिये ॥ २१ ॥"

---

१-२ एते द्वे काव्ये मदीयगूर्जरभाषान्तरसमेते मुद्रापिते चतुर्विंशतिकायां ( पृ० ८२-८४ ) ।
३ टीकाप्रेक्षणं विना पदच्छेदस्य यथार्थत्वं दुःशकम् ।
४ " अष्टादशारचक्रं, तेषां हारश्च सपदि भापयते ।
विबुधानामपि हृदयं, चञ्चद्वर्णस्फुरद्भाभृत् ॥ " —गुर्वावल्यां श्लो० ३७१

( ३ ) एतद्विबुधसत्तमैर्हारबन्धेन पञ्चजिनस्तवोऽपि रचितः ।

( ४ ) उपाध्यायश्रीउदयधर्मकृतं द्वात्रिंशद्दलकमलबन्धबन्धुरं १८पद्यात्मकं श्रीमहावीरस्वामिस्तवनम् । तस्यान्तिमं पद्यमिदम्—

*" श्रीसिद्धार्थनरेशनन्दन ! जिन ! श्रीवीर ! नीरुकृतनो !
स्तुत्वा त्वां नयनाग्नि( ३२ )सम्मितदलाम्भोजन्मबन्धस्तवात् ।
नेहे चक्रिपदं न वासवपदं नास्तापदं सम्पदं
किन्तु त्वत्पदपङ्कयोनियमले भृङ्गायतां मे मनः ॥ १ ॥ "

(५) *पञ्चपञ्चपद्यात्मकसर्वसार्वीयस्तवालङ्कृता षोडशदलकमलबन्धबन्धुरा शिरसि नानाचार्यनामोल्लेखमण्डिता श्रीहेमविजयगणिगुम्फिता स्तवनचतुर्विंशतिका। तस्या आदिमं पद्यमिदम्—

" पयोजपाणिं वृषभं वृषाङ्कं,
रमातनूजन्मभिदावृषाङ्कम् ।
महोदयश्रीरजनीमृगाङ्कं,
गुरुं स्तुवे कीर्तिनिरस्तशङ्कम् ॥ १ ॥ "

( ६ ) †समास्ति श्रीसहजकीर्तीनां शतदलकमलकमनीयं काव्यम् । एतज्जिज्ञासुभिर्दृश्यतां 'जेसलमीरभाण्डागारीयग्रन्थानां सूची'तिनामकग्रन्थस्य परिशिष्टम् ।

( ७ ) ×श्रीसमयराजकृतशृङ्गाटकबन्धबन्धुरा जिनस्तुतिः १०वृत्तात्मका । तस्या इदं प्रथमं पद्यम्—

× " त्रिभुवनजनिताकामितकामितकामितकरी
धीरमधीकृतमन्दिर मन्दिर हितसुसारीर ।
लोकालोकविलोकनलोकनयनहितकार !
वामादेवीयनन्दन ! वन्दनतामर ! वीर ! ॥ १ ॥ "

( ८ ) † वरीवर्ति श्रीविजयसिंहाचार्यकृतं खड्गकाव्यं यद्दर्शनेन श्रीनागार्जुनराजैस्तेषां खड्गाचार्येत्यभिधानमदायि । एतदर्थेऽवलोक्यतां कविश्रीसोड्ढलकृताया उदयसुन्दरीकथायाः १५५ तमं पृष्ठम् ।

( ९ ) श्रीजिनवल्लभसूरिप्रणीतं १६१पद्यप्रमाणं चित्राकाङ्क्षिणां चित्तानन्दजनकं प्रश्नशतकं यत्र १०,१२,३२,६१,६९,७४,१३२,१३३,१३८,१३९,१४३,१५२,१५४सङ्ख्याकाः श्लोका मन्थानजातीयाः, १४,३६सङ्ख्याकौ अष्टदलकमलम्, २०,४७,११८सङ्ख्याकाः विपरीत-

* १ श्रीचन्द्रशेखरसूरीणां 'श्रीमत्स्तम्भ०' इत्यादिरूपं हारबन्धस्तवनं मनोहरं विद्यते ।

* २ श्रीसोमतिलकसूरिसन्दृब्धः 'श्रीमद्वीर !' इतिरूपः कमलबन्धबन्धुर स्तवोऽपि दर्शनीयः ।

३ अस्या मुद्रणालयपुस्तिका मया क्रियमाणा विद्यते।

† एतच्चिह्नाङ्कितोल्लेखसूचनेन गान्धीत्युपाह्वश्रीयुतभगवानदासतनुजैः पण्डितवर्यलालचन्द्रैरनुगृहीतोऽस्मि ।

मष्टदलकमलम्, द्विचत्वारिंशो द्वादशदलकमलम्, ५८,५९,७७,७८सङ्ख्याका विपरीतं षोडशदलकमलम्, ६३,७१सङ्ख्याकौ शृङ्खलाजातिः, २६,१४५,१४७ सङ्ख्याकाः पद्मजातिचित्रमया दरीदृश्यन्ते श्रीस्तोत्ररत्नाकरद्वितीयभागे ( पृ० १–३३ )।

( १० ) श्रीजयतिलकसूरिसन्दृब्धं विहरमाणशाश्वतजिनचतुर्विंशतिकानाम हारावलीचतुष्कं, तत्र प्रथमायां हारावल्यां त्रयोदशः श्लोकः पद्मजातिः, द्वितीयायां त्रयोदशः स्वस्तिकजातिः, तृतीयायां वज्रबन्धजातिः, चतुर्थ्यां वन्धुकस्वस्तिकजातिः।

( ११ ) अयि विद्वद्वरेण्याः! विलोक्यतामनेकद्वादशाक्षरिकामयोत्तररूपा श्रीमुनिचन्द्रसूरिप्रणीता १५ पद्यप्रमाणा प्रेक्षावालिः यस्याः प्रथमं पद्यमिदम्—

" मद्भुस्त्री परिपृच्छतीदमुदिता ब्रह्माङ्गजा कीदृशी ?
प्रश्नं व्याहरतो भुवावपशदे रम्येह का केकिनाम् ?।
कामश्चक्रयुगं च पृच्छति बकं कः प्साति पक्षी हठाद्
बालानां वद मातृकोपरि कथं पापठ्यते संहतिः ? ॥ १ ॥"

उत्तरम्—ककाकि! की कुकू केकै कोकौ! कंकः।

( १२ ) तत्रैव दर्शनीयोऽज्ञातकर्तृनामकः त्रयोदशपद्यप्रमितः समस्यामयः श्रीपार्श्वजिनस्तवो यस्येदमाद्यं पद्यम्—

" श्रीपार्श्वनाथं तमहं स्तवीमि, त्रैलोक्यलोकंपृणधामधाम।
सामोदमुद्भासियदीयकीर्त्ति–रामामुखं चुम्बति कार्त्तिकेयः॥ १ ॥"

चिरन्तनमुनीश्वरैर्निर्वर्ग्या अपि स्तवा रचिता इति सुस्पष्टमवगम्यते ( १ ) श्रीसूरचन्द्रमुनिपुङ्गवप्रणीताष्टपद्यात्मकश्रीमहावीरजिनस्तवस्य निम्नलिखितपद्यावलोकनेन—

" श्रेयःशालः सहःशाली, श्रीवीरः श्रेयसां हि वः।
वीरंवारं घरं वारं, वासवावासवासरः॥ १ ॥

( २ ) श्रीजयशेखरसूरिभिरपि पञ्चवर्गपरिहारपूर्वक उपजातिवृत्तबद्ध एकादशपद्यात्मकः श्रीनेमिनाथस्तवः सन्दृब्धः। तस्य चेदं प्रथमं पद्यम्—

" सेवारसोल्लासिसुरासुरेशहंसाश्रयं विश्वविसारिवासम्।
शैवेयसार्वाङ्घ्रिसरोरुहं हि विशालहर्षोऽलिरिवाऽऽश्रयेऽहम्॥ १ ॥"

( ३ ) विज्ञप्तित्रिवेण्या द्वितीयायां वेण्यां (पृ० ९३–९४) श्रीपार्श्वनाथस्तवनान्तर्गतं वर्तते पञ्चवर्गपरिहारपूर्वकं पद्यपञ्चकं यस्यान्तिमं चतुर्थं पद्यं तु यथा—

१–४ एतत्काव्यदिदृक्षुभिर्विलोकयतां श्रीस्तोत्ररत्नाकरस्य द्वितीयो भागः।
५ पद्मानन्दमहाकाव्ये पञ्चवर्गपरिहार पूर्वकंस्तोत्रं वर्तते।

" यः स्वैरिवैरिविलयाय सहः सहस्त्री, स्वीयस्ववंशबहुलाम्बरशर्वरीशः ।
शश्वल्ललौ वशविहाररसीह शलिं, श्रेयोरहस्यसरसीरुहसूर एषः ॥ "

तृतीयायां वेण्यां ( पृ० ६२ ) तु वरीवर्ति छत्रबन्धबन्धुरं पञ्चवर्गपरिहारहारि पद्यमेकम् ।

( ४ ) श्रीजिनप्रभसूरिविरचितं प्रकरणरत्नाकरे द्वितीये विभागे ( पृ० २४२ ) मुद्रितं पञ्चपद्यात्मकं श्रीवीरस्तवनमप्येवंविधशब्दालङ्कार कलितम् । तस्याग्रिमं पद्यमिदम्—

" स्वःश्रेयससरसीरुहसूरं श्रीवीरं ऋषिवरं सेवे ।
सविशेषहर्षरसवशसुरासुरवरसेव्यांह्रिम् ॥ १ ॥ "

( ५ ) विलोक्यतां विपश्चिद्भिः श्रीजिनभद्रसूरिकृताऽपवर्गनाममाला श्रीरत्नप्रभाचार्यकृतरत्नाकरावतारिकाया द्वितीये परिच्छेदे 'तदिष्टस्य०' इत्याद्युपान्त्यसूत्रवृत्तौ नन्वियमित्यादिस्वरूपं वादस्थलं च यत्रायं स्पष्टोल्लेखः—

" त्यादिर्वचनद्वयेन स्यादिकवचनत्रयेण वर्णैस्तु ।
त्रिभिरधिकैर्दशभिरयं व्यधायि शिवसिद्धिविध्वंसः॥ १ ॥ " •

त्रिवर्गपरिहारपूर्विका कोऽपि कृतिर्विरचिता श्रीयशोभद्रसूरिभिरपीत्यनुमीयते प्रो. पिटर्सनरिपॉर्टसंज्ञकतृतीयपुस्तकान्तर्गतनिम्नालिखितोल्लेखावलोकनात्—

" त्रिवर्गपरिहारेण, गद्यगोदावरीसृजः ।
बभूवुर्भूरिसौभाग्याः, श्रीयशोभद्रसूरयः ॥ "

प्रवचनसारोद्धारविषमपदव्याख्यायां श्रीउदयप्रभसूरय एनं परिचाययन्ति निजगुरुवर्यम् । इदं समर्थ्यते श्रीपृथ्वीचन्द्रसूरिभिः पर्युषणाकल्पटिप्पने ' त्रिवर्गपरिहारजनितबुधहर्षः ' इत्युल्लेखेन ।

श्रीजिनप्रभसूरिवरैः क्रियागुप्तकाऽपि स्तुती रचिता । तस्या इदं पद्यं प्रथमम्—

" अभिनवानि सुखानि वितन्वती-मसुमतां जिनराजपरम्पराम् ।
शतमिषप्रमुखाऽनिमिषस्तुता-मपटुधीरपि भक्तिवशादहम् ॥ १ ॥ "

लक्षणज्ञा लक्षयन्तां लक्षणप्रयोगोपलक्षितं १७वृत्तात्मकं श्रीजिनप्रभसूरिसूत्रितं प्रकरणरत्नाकरस्य द्वितीयभागे ( पृ० २६० ) मुद्रितं श्रीवीरजिनस्तवनं यस्यादिमामिदं पद्यम्—

" निस्तीर्णविस्तीर्णभवार्णवं त्वं-रुत्कर्णमाकर्णितवर्णवादम् ।
सुपर्णमंहोऽहिदमे सुवर्ण-श्रीपर्णवर्णं विनुवामि वीरम् ॥ १ ॥ "

---

१ ति, ते, सि, टा, ङस् । त, थ, द, ध, न, प, ब, भ, म, य, र, ल, व ।

२ कवर्ग—चवर्ग—टवर्गेतिवर्गत्रयीगतव्यञ्जनानि परिहृत्य व्यञ्जनैरन्यै रचितं प्रत्यक्षानुमानाधिकप्रमाणनिराकरणनामकं प्रकरणं सम्भाव्यते ।

सन्ति किलानेकानि प्रथमस्वरमयान्यपि काव्यानि जैनसाहित्ये। तथाहि—

( १ ) श्रीगुणविजयगणिविरचितं केवलप्रथमस्वरमयं द्वीपबन्दिरमण्डनसुविधिजिनस्तवनं श्रीजैनस्तोत्रसङ्ग्रहस्य द्वितीये भागे ( पृ० १३३-१३४ ) मुद्रितं निम्नलिखितप्रथमपद्यात्मकम्—

[1]" नवमश्रमणपवरममरव्रजपरमशमक्षम ! सकलवदनकज ! ।
गतमलममदमसमजनगतमन ! भज नर ! भवभयहरणमचलधन ! ॥ १ ॥"

( २ ) तथा संयुक्तव्यञ्जनराहित्यवैशिष्ट्यविशिष्टं मणिगुणनिकरच्छन्दोबद्धं प्रकरणरत्नाकरे मुद्रितं निम्नलिखितपद्यप्रारम्भिकम्—

" गणधर गणमतचरणप कमल शम गणकमलज गगनगवरद ! ।
अघमदकलगजघनवनरमण ! अभयद ! जय कद ! कद ! गतमदन ! ॥ १ ॥"

( ३ ) एवंविधं १४पद्यप्रमाणं श्रीअरजिनस्तवनं प्राणायि श्रीजयसुन्दरगणिभिर्यत् प्रकरणरत्नाकरद्वितीयविभागे ( पृ० २७२ ) मुद्रितम्। तस्याग्रिमं पद्यमेवम्—

• " जय शरदशकलदशहयवदन ! जय जगदसहनमदमदन !
जय नतशमगतशमनजकदन ! जय भगवदर ! परमपदसदन ! ॥ १ ॥"

एकाक्षरसङ्कलितानि काव्यानि तु इमानि—

( १ ) श्रीअरजिन-ब्रह्म-विष्णु-शिवेति चतुरर्थं रव्यञ्जनकान्तं काव्यम्। तथा—

" रोरारेरा ररीरीर रैरीरा रैरुरीररम्।
रुरोररुरुरेरोर रुरोऽरारिरुरारिरे ॥ १ ॥"

×( २ ) पूर्वमुनिवर्यविरचिता एकाक्षरमयी स्तुतिः। तस्या आद्यं पद्यमिदम्—

" कककककाककककाकककाकका,
ककककेकककेककककेकके[3] ।
कककककोकककोकककोकको,
कककक्कौकककौकककौकक्कौ ॥ १ ॥"

द्व्यक्षरमयकाव्येषु निदर्शनार्थं निरीक्ष्यताम्—( १ ) मकारनकारव्यञ्जनयुगलयुतं नवपद्यप्रमितं श्रीस्तोत्ररत्नाकरे ( भा० २ ) मुद्रितं श्रीनेमिजिनस्तवनम्। तस्य प्रथमं पद्यमिदम्—

---

१ * एतादृशं षड्गाथात्मकं सुयशोजिनस्तवनं प्राकृतभाषायां निबद्धं उपदेशपदस्य द्वितीये भागे ( ४३१ तमे पृष्ठे ) दृश्यते। तस्याद्या गाथा त्वेवम्—

" जय जय जयजणवच्छल ! नवजलहरपवणवणयसमणयण ! ।
नयणमणपमयवद्धण ! घणकणयल करवणय समण ! ॥ १ ॥"

२ प्रेक्ष्यतां श्रीस्तोत्ररत्नाकरस्य द्वितीयो विभागः। ३ टीकाऽऽधारं विना पदच्छेदो दुःशकः।

" मा[२]नेनानूनमानेन, नो[३]र्न[४]मुन्नाँमिमाननम् ।
[७]नेमिनामानम[६]र्ममं, [८]मुनीनामि[९]नमा[१०]नुमः ॥ १ ॥ "

( २ ) श्रीरुद्रपल्लीयगच्छीयश्रीसत्यसागरसूरिकृता प्रत्येकजिननामान्तर्गताक्षरद्वयरूपा चतुर्विंशतिजिनस्तुतिः २५पद्यात्मिका । तस्या आदिमं पद्यं यथा—

×" [१]दिवा दिवा देवविदेवदेवं
विवाद वादा दव वेद दावम् ।
वन्दे वदे वेदविदादिदेवं
दिवा दिदेवेन्दुवदेवदेवम् ॥ १ ॥ " ( चतुर्दलपद्मम )

समीक्षन्तां सानन्दं चित्रचित्रितचित्ता विपश्चित उपाध्यायश्रीहर्षकल्लोलशिष्यरत्नश्रीलक्ष्मीकल्लोलमुनिराजकृतं निम्नलिखितं सटीकं स्तोत्रम्—

×( १ ) " कखगघङचछजझञटठडढणतथदधनपफबभमयरलवशषसह "

तथा च *( २ ) श्रीमनरूपविजय(?)मुनीश्वरकृतां श्रीजिनस्तुतिमेकपद्यात्मिकाम्, यथा—

" कुखगोऽघङचच्छोऽजा–झोऽञट ! ठो डढाऽणते ।
थ्युदधिर्निपफो बाभू--र्मा यारलोऽव शंषसः ॥ १ ॥"

एतत्प्रामाण्यप्रतीत्यर्थं दीयतेऽवचूरिः पूर्वमुनिराजरचिता—

हे अज ! त्वं मामव–रक्ष इत्यर्थः । अज इति किम् ? जायते इति जः, न जः अजः, न विद्यते जः[३]–जन्म यस्य सः अजः–वीतरागः तस्य सम्बोधनं हे अज ! । त्वं कथम्भूतः ? कौ-पृथिव्यां खगः[४]–सूर्यः इति कुखगः । पुनः कथम्भूतस्त्वम् ? अघं–पापं तस्य ङः[५]–विषयस्तस्य चः[६]–समूहस्तस्य छः[७]–छेदक इत्यर्थः, इत्यघङचच्छः । पुनः कथम्भूतस्त्वम् ? न विद्यते झः–बन्धनं अस्यासौ अझः; बन्धनं केषाम् ? कर्मणाम् । पुनः अ[८] इति निषेधे, ञ –विषये एव टः[९]–वातो यस्यासौ अञटः तस्य सम्बोधनं अञट ! । पुनः कथम्भूतस्त्वम् ? अणं[१०]–अज्ञानं ताः–क्रोधः तैः ठः[११]–शून्यः, रहित इत्यर्थः । पुनः कथम्भूतस्त्वम् ? डः[१२]–चन्द्रमण्डलं तद्वत् ढः[१३]–विख्यातः । पुनः कथम्भूतस्त्वम् ? थयः–लक्षणानि सामुद्रिकोक्तानि शङ्खचक्रादयस्तेषामुदधिरिति

१–२ टीकाऽवलोकनं विना समीचीनः पदच्छेदो दुःशकः । ३ 'जश्च जेतरि जनने वि[illegible]' इति **सुधाकलशैकाक्षरनाममालिकायां** ( श्लो० १८ )। ४ 'शरार्कविहगाः खगाः' **इत्यमरः** ( श्लो० २३७३ ) । ५ 'ङो विषये भैरवे च' इति **सुधा०** ( श्लो० १४ ) । ६ 'चकारः पुनरव्ययः । अन्योऽन्यार्थे विकल्पार्थे समासे पादपूरणे ॥ पक्षान्तरे समूहार्थे हेतावववधृतावपि' इति **सुधा०** ( श्लो० १५–१६ ) । ७ 'छः सूर्ये छेदके ख्यातः' इति **सुधा०** ( श्लो० १७ )। ८ 'अमानोनाः प्रतिषेधे' । ९ 'टः पृथिव्यां ध्वनौ वायौ करङ्कटं पुनर्भुवि' इति **सुधा०** ( श्लो० २० ) । १० 'णः प्रकटे निष्कले च प्रस्तुते ज्ञानबन्धयोः' **सुधा०** ( श्लो० २२ ) । ११ 'ठो महेशः समाख्यातो ठश्च शून्ये प्रकीर्तितः' इति **एकाक्षरीकोशे** ( श्लो० १७ )। १२ 'डः स्याद्यामिनीपतिमण्डले' इति **सुधा०** ( श्लो० २१ ) । १३ 'ढो ढक्कायां समाख्यातः' इति **सुधा०** ( श्लो० २२ )।

ऽयुदधिः । पुनः कथम्भूतस्त्वम् ? निः[1]–भद्रं–मोक्षं तदेव पं[2]–प्रौढं फं[3]–फलं यस्यासौ निपफः । पुनः किंविशिष्टस्त्वम् ? बः[4]–क्लेशः तस्य न विद्यते भूः[5]–उत्पत्तिर्यस्यासौ बाभूः । पुनः कथम्भूतस्त्वम् ? या–पृथ्वी तस्या रान्[6]–भयानि लः[7]–लुनाति इति यारलः। हेऽब्लट ! पुनस्त्वं कथम्भूतः ? [8]शं–सुखं तदेव पा[9]–श्रेष्ठा सा[10]–लक्ष्मीर्यस्यासौ शंपसः, ईदृशस्त्वमिति शब्दार्थः ।

* संवत् १४८४ वर्षे श्रीजयसागरादिमुनिवर्यग्रथिताऽनेकसुवर्णाचित्रालङ्कारकलिता विज्ञप्तित्रिवेणी वेणीव वर्णिनीनां प्रीणयति सचेतसां चेतांसि ।

* श्रीसोमसुन्दरसूरिपुरन्दरपट्टाम्बरदिवामणिश्रीमुनिसुन्दरसूरिभिः अनेकप्रासाद–पद्म–चक्र–षट्कोण–षट्कारक–क्रियागुप्त[11]–कारकगुप्त–अर्धभ्रम–सर्वतोभद्र–मुरज–सिंहासन–अशोक–भेरी–समवसरण–सरोवर–अष्टमहाप्रातिहार्यादिनव्यत्रिशतीबन्धतर्कप्रयोगाद्यनेकचित्राक्षर–द्व्यक्षर–पञ्चवर्गपरिहाराद्यनेकस्तवनमयामष्टोत्तरशत(१०८)हस्तमितां त्रिदशतरङ्गिणीं विधाय स्वगुरोरुपदीकृता । तत्कमनीयतायाः का कथा ? ।

अनेनानेकाचिरन्तनाचार्यैर्यमकचित्रादिमयानि विविधानि काव्यानि ग्रथितानीति सुस्पष्टं भवति । परन्तु इदमपि हर्षजनकं यदुत वैक्रमीयाष्टादशशताब्द्यामपि एतादृक्काव्यरचयितारोऽभूवन् । तथाहि—

*न्यायाचार्य–न्यायविशारद–महोपाध्यायश्रीयशोविजयसाहाध्यायिनः श्रीकीर्त्तिविजयगणिशिष्यवर्याः श्रीविनयविजयोपाध्यायपादाः 'आनन्दलेख'नामानं प्रबन्धं परमगुरूणामुपजह्रुः । तस्य प्रथमाधिकारे पूर्णकलशा–ऽर्धभ्रम–च्छत्र–शरो–धनु–र्वज्र–शक्ति–भल्ल–खड्ग–रथ–पद–मुसल–शूल–हल–चामर–श्रीकरी–शङ्ख–श्रीवत्सप्रभृतिचित्रप्रक्रमम् । चतुर्थेऽधिकारे च भाषाचित्र–क्रियागुप्त–कर्तृगुप्त–गुप्तक्रियाकर्म–गुप्ताऽव्ययक्रियाक–गुप्तान्वय–गुप्तामन्त्रण–गुप्तकरण–गुप्तसम्प्रदान–गुप्तापादान–गुप्तसम्बन्ध–गुप्ताधार–एकव्यञ्जन–द्विव्यञ्जन–बिन्दुच्युत–एकस्वर–दन्त्यस्थान–अतालव्यव्यञ्जन–अवर्ग्य–अनवर्ग्य–तुरगपदादिचित्रप्रक्रमं च विरचयाञ्चक्रुः ।
प्रथमाधिकारप्रान्ते त्वेवमुल्लेखः—

---

१ 'निः स्यात् क्षये च नित्यार्थे भृशार्थाश्रमराशिषु । कौशले बन्धने मोक्षे संशये दानकर्मणि ' इति **सुधा०** (श्लो० २९)। २ 'प्रौढे च वर्णके पश्च ' इति **सुधा०** ( श्लो० ३१ ) । ३ ' फकारो निष्फले जल्पे, पुष्करे भयरक्षणे । झञ्झावाते फले फेने ' इति **सुधा०** (श्लो० २२)। ४ ' बकारो वरुणे पद्मे कलहे विगतौ तथा ' इति **सुधा०** (श्लो० ३३)। ५ 'भूर्भुवि स्थाने' इति **सुधा०** (श्लो० ३४)। ६ ' भये शब्दे च री (?)' इति **सुधा०** ( श्लो० ३७ ) । ७ 'लः श्लेषे चाशये चैव प्रलये साधनेऽपि लः' इति **एका०** (श्लो० ३१)। ८ 'शं श्रेयसि सुखे' इति **सुधा०** (श्लो० ४२)। ९ 'पः सद्वारः स्यात् तथेष्टे ' इति **सुधा०** (श्लो० ४३)। १० 'लक्ष्म्यां च सोच्यते' इति **सुधा०** ( श्लो० ४४ )।

११ क्रियागुप्तं श्रीनेमिजिनस्तवनं श्री**जिनप्रभसूरि**सन्दृब्धं विंशतिवृत्तात्मकं श्रीहरिकुलेत्यादिप्रतीकं विविधच्छन्दोबद्धं च मुद्रितं **प्रकरणरत्नाकरस्य** द्वितीये भागे ( पृ० २५४ )।

"इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिना श्रीपरमगुरूणां प्राभृतीकृते आनन्दलेखनाम्नि लेखप्रबन्धे स्वस्तिश्रीअमुकजिनं प्रणम्य इति प्रथमावयवव्यावर्णनरूपश्चित्रचमत्कारनामा प्रथमोऽधिकारः ।"

गद्यचित्रालोकनकुतूहलैस्तु विलोक्यतां जल्पकल्पलतायास्तृतीयस्तरङ्गः ।

* अज्ञातकर्तृनामानः श्रीसिद्धहेमव्याकरणकतिपयोदाहरणमयाः श्रीऋषभजिन-शान्तिजिन-नेमिजिनस्तवाः । तेषामनुक्रमेण प्रथमपद्यानि त्वेवम्—

" परमात्मानमाद्यं त'मर्ह' ( १-१-१ ) कारं स्थितं स्तुवे ।
' सिद्धिः स्याद्वादतो ' ( १-१-२ ) येनासाधि लोकान्तसंस्थिता ॥ १ ॥"

" शान्तिं शिवाय सर्वज्ञं सुयत्नाभ्यां जनाः ! स्तुत ।
अमीभिरिमकैर्देवैः ( १-४-३ ) सदातिजरसैर्नतम् (१-४-२ ) ॥ १ ॥"

" यं सुता गुप्तयस्तिस्रः श्रीनेमिं नौमि तं गतीः ।
चतस्रोऽपासितुं ज्ञानादिश्रियां तिसृणां गृहम् ॥ १ ॥"

कलापव्याकरणसन्धिसूत्रगर्भितं त्रयोविंशतिपद्यप्रमाणं श्रीऋषभजिनस्तवनं यस्यादिमं पद्यमिदम्—

* " सिद्धो वर्णसमाम्नाय-स्तेव जिह्वे चिरन्तनः ।
शत्रुञ्जयेऽत्रं यल्लेभे-ऽनन्तसिद्धे यदार्षपदम् ॥ १ ॥"

श्रीस्तोत्ररत्नाकरद्वितीयभागे ( ६१ तमे पत्राङ्के ) मुद्रितं सारस्वतव्याकरणसन्धिसूत्रगर्भितमेकादशवृत्तात्मकं श्रीपार्श्वचन्द्रसूरिरचितं श्रीभावप्रभसूरिकृतटीकालङ्कृतं श्रीमहावीरजिनस्तवनं यस्यायं द्वितीयः श्लोकः—

" अइउऋऌसमानाः ( सू० १ ) सन्ति लोका इदानी-
मघनसरलभूता वक्रभावप्रभूताः ।
कथमिह हि लभन्ते प्राभवं शुद्धमार्गं
प्रचुरतरविशस्ते तेन तुच्छा नु चित्रम् ॥ २ ॥"

तत्रैव ८८ तमे तु पत्राङ्के विद्यतेऽमरकोशप्रथमपद्यपादपूर्तिरूपं पञ्चपद्यप्रमाणं श्रीशङ्खेश्वरपार्श्वस्तवनम् । तस्यायमादिमः श्लोकः—

" यस्य ज्ञानदयासिन्धो-र्दर्शनं श्रेयसे ध्रुवम् ।
स श्रीमान् पार्श्वतीर्थेशो, निषेव्यः सततं सताम् ॥ १ ॥"

चतुर्विंशतिजिनस्तुतयः यङन्तयङ्लुबन्तप्रक्रियासिद्धक्रियापदैः मण्डिताः श्रीजिनमण्डनमुनीशकृताः सावचूरिकाः २८ पद्यात्मिकाश्च । तासामाद्यं पद्यमिदम्—

*" जयश्रीनेतारं प्रथमजिनपं नौनवति ये
मुदा मामन्यन्ते त्रिदशवृषभैस्तेऽपि हरिवत् ।
प्रपेपीयन्ते ये वृषभजिननेत्रामृतरसैः
प्रपेपीयन्ते ते युवतिभिरहो विष्णुपितृवत् ॥ १ ॥"

विविधविषयगर्भितान्यपि भूयांसि काव्यानि सन्ति जैनसाहित्ये, तथाहि—

( १ ) श्रीमानतुङ्गसूरिप्रणीतं भोज्यादिनामगर्भितं १८वृत्तात्मकं वीरस्तवनम् । तस्य चायं प्रथमः श्लोकः—

* " कल्याणधामकरणं घनकेवलश्री-
राजीव ! रोचितमनुत्तरतीर्थराज ! ।
सत्त्वालय ! प्रगुणराजिनयप्रमाण-
स्त्वच्छासनं पटन वा नतमामनन्तम् ॥ १ ॥"

( २ ) महामहोपाध्यायश्रीसाधुराजगणिकृता भोज्यादिनामगर्भिता द्वादशपद्यप्रमिता जिनस्तुतिः स्वोपज्ञटीकाऽलङ्कृता ।[१]

* ( ३ ) विद्वन्मनोविनोदाय दिग्दर्शनार्थं चाज्ञातकर्तृकैकपद्यप्रमाणा भोज्यनाममण्डिता सावचूरिका जिनस्तुतिरुद्ध्रियतेऽत्र, तथाहि—

घात्याघे वरलापसीम ! रमते श्रीस्त्वद्गुणौघे सदा
सद्दानैरधिकूरुदालिरुदलंघीयुः सुखं त्वज्जुषः ।
चेतःसूर(सूर्वित ?)ररायितुं सदवडांदोडा रुचिं त्वद्रुचा
क्ष्माहिंसाकरदूधुरीण ! भवतः श्लोके रसोऽयि प्रभो ! ॥ १ ॥"

अयीति कोमलामन्त्रणे । हे प्रभो ! । ' वरलापसीम ! ' वरे-मनोज्ञे लापे--भाषणे सीमा-रेषा यस्य स तस्य सम्बोधनम् । ' हे क्ष्माहिंसाकरदूधुरीण ! ' क्ष्मा-पृथ्वी तस्यां ये हिंसाकरा-आत्मगुणघातिनः कामक्रोधादयः तेषां दुः-पीडनं तत्र धुरीण !-निर्दयदमन ! । त्वद्गुणौघे सदा श्रीः-लक्ष्मीः रमते । किंविशिष्टे ? ' घात्याघे ' घात्यानि-वधानि अघानि-पापानि दुःखानि वा येन तस्मिन् । तथा हे प्रभो ! सद्दानैः-उत्तर(म)दानैः वार्षिकदानदायित्वात् अधिकु-पृथ्वीतले उरु-विशालं महत् कनकादिकं ददतीति उरुदाः-महादानिनः तेषां आलिः-श्रेणिः उदलङ्घि-उल्लङ्घिता । तथा त्वज्जुषः-तव सेवकाः सुखं स्वर्गापवर्गसम्बन्धि ईयुः-प्रापुः । तथा हे प्रभो ! चेतःसूः-कामः त्वद्रुचा-तव कान्त्या अनुवर्तते इति शेषः । किंविशिष्टः चेतःसूः ? ' अयितुं

१ इयं स्तुतिः श्रीजैनस्तोत्रसङ्ग्रहस्य द्वितीये विभागे दृश्यते ।

२ विद्याधरवंशभूषणमणिश्रीपादलिप्तसूरिवर्यैः प्राकृतभाषायां रचिता श्रीवीरस्तुतिः सुवर्णसिद्धिस्वरूप-प्रतिपादिका । दशवैकालिकस्यादिमा गाथा अपि तया इति श्रूयते ।

सदवडादोडा' अयितुं–गन्तुं अभिगन्तुम्–भोक्तुम् । सदबलादोला–उत्तमनारीणां चञ्चलत्वकारकः, कामो हि सुन्दरस्त्रीप्रियश्च अतस्तासां उपभोगाय तासां मनांसि सम्मोहनास्त्रेण स्खलयति ततश्च तास्तं इच्छन्ति, सोऽपि ताः परिभुनक्ति, एवंविधो यः कामः सोऽपि तव कान्त्यपेक्षया तृणलवप्रायः सन् भवतः श्लोके–श्लाघायां रसः–प्रीतिर्यस्य स एवंविधोऽभूत् ( एतादृशस्त्वं रुचिं अर(वित ?)र ) इत्यर्थः ॥

( ४ ) पूर्वमुनीशसन्दब्धा वैयकप्रकाशनपटवी ' रचितकरपुट'प्रारम्भिकपदा जिनपति-स्तुतिः । तस्या अनुक्रमेण द्वितीयतुरीयपद्ये यथा—

× " प्रच्छन्नमदनबाण ! वृषभध्वज ! सुदीव्यतेजःश्वी( श्रीः ? ) ।
साभयसुव्रतसहितो नवा स्मरी मूत्रकृच्छ्राद्या ॥ २ ॥
दू( दु ? )रालभं विश्वहितं वृषासु( यु ? )तं
बिभर्ति पापाग्निकणाम्बुमद्घनम् ।
सा ( स ) सेव्यपादः सगरेण चक्रिणा
ज्वराग्निशेषं तव ( शांस्तव ? ) हन्तु योऽजितः ॥ ४ ॥ "[२]

( ५ ) श्रीजिनप्रभसूरिकृतं विविधच्छन्दोनामाङ्कितपद्यमयं श्रीवीरनिर्वाणकल्याणकस्तवनम् ।[३]

---

१ अशुद्धप्रायपद्यस्य पदच्छेदयथार्थत्वं टीकासमीक्षणेन विना दुर्घटम् ।

२ * श्रीशुभसुन्दरशिष्याविहितं मन्त्रादिगर्भितं 'देउलवाडा' मण्डनश्रीआदिजिनस्तवनम् । तस्याग्रिमं पद्यमेवम्—

" जय सुरअसुरनरिंदविंदवंदियपयपंकय !
जय देउलवाडापुरवयंस ! सेवयकयसंपय ! ।
किं पुण भूय सुमंततंति तुह जगआणंदण !
थुत्त करिसु बहुभत्तिजुत्त मरुदेवियनंदण ! ॥ १ ॥ "

अन्त्यं पद्यं तु यथा—

" इत्थं भेषजयन्त्रतन्त्रकलितैः सन्मन्त्ररत्नैश्चितां
कृत्वा श्रीमुनिसुन्दरस्तुत ! नुतिं देउलनेतस्तव ।
लक्ष्मीसागरनामधेय ! करुणाम्भोधे ! युगादिप्रभो !
दुःस्थोऽहं शुभसुन्दरांघ्रियुगलीसेवासुखं प्रार्थये ॥ २५ ॥ "

अपरञ्च—श्रीअभयदेवसूरिकृतं श्रीपूर्णकलशगणिप्रणीतटिप्पनालङ्कृतं यन्त्रमन्त्रौषधादिबन्धुरं श्रीपार्श्वजिनस्तवनम् । तस्यादिमं पद्यं यथा—

" जसु सासणदेवित्रएसियाभयदेवगुरूहि पइहितया ।
अत्थिंभणए अत्थिंभणए पुरि पासमिमं थुणि पुण्णकं ॥ १ ॥ "

३ इदं स्तवनं काव्यमालायाः सप्तमगुच्छके प्रसिद्धम् ।

श्लेषमयानि पद्यानि पृथक् पृथक् वर्तन्ते बहुधा किन्तु समग्रकाव्यरूपेण स्तोकानि। दृष्टान्तार्थं प्रेक्ष्यतां प्रज्ञावतंसैः निम्नलिखिताद्यपद्यात्मिका श्रीदशदिक्पालस्तुतिश्लेषमण्डिता श्रीऋषभजिनस्तुतिरेकादशश्लोकपरिमिता—

* " अस्तु श्रीनाभिभूर्देवो–विपन्नाशनकर्मठः ।
पवित्रः पोषयन्नाकं, सुधर्माधिपतिः श्रिये ॥ १ ॥ "

अपरश्चावलोक्यतां श्रीरत्नशेखरगणिप्रणीतं सावचूरिकं नवग्रहश्लेषालङ्कृतं श्रीपार्श्वजिनस्तवनं यस्याद्यं पद्यमेवम्—

* " पार्श्वः श्रियेऽस्तु भास्वा–नजस्थितेरुन्नतां परां बिभ्रत् ।
विश्वप्रकाशकुशलः, कुतुकं त्वतुलाश्रयः सततम् ॥ १ ॥ "

श्रीसोमप्रभसूरिप्रणीता शृङ्गारवैराग्यतरङ्गिणी ४६पद्यप्रमिता ( मदीयगूर्जरभाषानुवादप्रस्तावनासङ्कलिता जैनस्वयंसेवकमण्डलेन प्रकाशिता )। अत्र प्रत्येकपद्ये शृङ्गारवैराग्यरसौ वर्तेते, परन्तु तत्रेयं विशिष्टता यत् शृङ्गाररसो वैराग्यरसेण दूष्यते तत्तद्गतशब्दविधानेनैव ।

श्रीधर्मघोषसूरिवर्यैः कर्तृषु विशेषणेषु क्रियासु च एकद्विबहुवचनतुल्या मन्दाक्रान्ताच्छन्दसि पद्यचतुष्टयप्रमाणा स्तुतिर्वितेने यस्या आदिमं पद्यमिदम्—

* " स्रस्ताशर्मा वृतसुमहिमा वीरितस्वान्तजन्मा
बाधासिन्धुप्रतरणसहा वासनावस्थितानाम् ।
अप्येको द्वौ किमुत बहवो वाऽनिशं ध्येयभावं
गाते येषां जिनवरवृषा वृद्धये किं न तेषाम् ? ॥ १ ॥ "

विविधशब्दविभक्तिसप्तकप्रयोगपुरस्सराण्यपि पद्यानि जैनसाहित्ये । तथाहि—

( १ ) श्रीमन्मेरुतुङ्गसूरिविरचिते जैनमेघदूते प्रथमे सर्गे (श्लो० १२–१३) युष्मच्छब्दस्य एकवचनात्मिकाः प्रयोगाः, यथा—

" त्वं जीमूत ! प्रथितमहिमाऽनन्यसाध्योपकारैः
कस्त्वां वीक्ष्य प्रसृतिसदृशौ स्वे दृशौ नो विधत्ते ? ।
दानात् कल्पद्रुमसुरमणी तौ त्वयाऽधोऽक्रियेतां
कस्तुभ्यं न स्पृहयति जगज्जन्तुजीवातुलक्ष्म्यै ? ॥
कामं मध्येभुवनमनलङ्कारकान्ता अनु त्वन्–
मन्त्रस्येव स्मरति च तवागोपगोपं जनोऽयम् ।
न्यासीचक्रे भवति निखिला भूतसृष्टिर्विधात्रा
तत् त्वां भाषे किमपि करुणाकेलिपात्रावधेहि ॥ "

( २ ) श्रीक्षमाकल्याणगणिगुम्फितायास्त्रैलोक्यप्रकाशाख्यायाश्चैत्यवन्दनचतुर्विंशतिकायास्तृतीये पद्ये यच्छब्दस्यैकवचनरूपाणि । तथाहि—

“यो विज्ञानमयो जगत्त्रयगुरुर्यं सर्वलोकाः श्रिताः
सिद्धिर्येन वृता समस्तजनता यस्मै नतिं तन्वते ।
यस्मान्मोहमतिर्गता मतिभृतां यस्यैव सेव्यं वचो
यस्मिन् विश्वगुणास्तमेव सुतरां वन्दे युगादीश्वरम् ॥ ३ ॥”

( २ ) श्रीसोमचारित्रगणिविरचिते गुरुगुणरत्नाकरकाव्ये द्वितीये सर्गे (श्लो० ३–९) यच्छब्दबहुवचनसप्तविभक्तिकं शालिनीच्छन्दसा काव्याष्टकम् ।

*( ३ ) श्रीजेशलमेरुमण्डनश्रीशम्भवजिनप्रासादस्थ( सं० १४९७ )शिलालेखे गुरुवर्णनाष्टकप्रथमकाव्यं यच्छब्दसर्वविभक्तिबहुवचनाश्चितम्, तच्चैवम्—

“ये सिद्धान्तविचारसारचतुरा यानाश्रयन् पण्डिताः
सत्यं शीलगुणेन यैरनुकृतः श्री‘स्थूलिभद्रो’ मुनिः ।
येभ्यः शं वितनोति शासनसुरी श्रीसङ्घदीप्तिर्यतो
येषां सार्वजनीनमाप्तवचनं येष्वद्भुतं सौभगम् ॥ १ ॥”

( ४ ) कलिकालसर्वज्ञश्रीहेमचन्द्रसूरीश्वरसूत्रिते श्रीवीतरागस्तोत्रे यत्तदोरेकवचनरूपाणि प्रथमपद्यषट्के ।

( ५ ) एभिः सूरिसत्तमैः प्रणीते सकलार्हतस्तवे वीरशब्दस्य समग्रविभक्त्येकवचनमयं पद्यं षड्विंशम् ।

( ६ ) श्रीजिनसूरमुनीश्वरविरचितायां [1]प्रियङ्करनृपकथायां (पृ० ८४) ‘पार्श्व’शब्दस्य सकलविभक्त्येकवचनमयं यत् पद्यं वर्तते तद् यथा—

“श्रीपार्श्वो ‘धरणे’न्द्रसेवितपदः पार्श्वं स्तुवे भावतः
पार्श्वेण प्रतिबोधितश्च ‘कमठः’ पार्श्वाय कुर्वे नतिम् ।
पार्श्वाच्चिन्तितकार्यसिद्धिरखिला पार्श्वस्य तेजो महत्
श्रीपार्श्वे प्रकटः प्रभावगहनः श्रीपार्श्व ! सौख्यं कुरु ॥ १ ॥”

( ७ ) श्रीसोमप्रभसूरिभिर्युष्मदस्मच्छब्दसर्वविभक्तिस्वरूपप्ररूपकः ८पद्यात्मकः ‘श्रीमन् ! धर्म’ इत्यादिरूपः स्तवः प्राणायि । तस्य द्वितीयं पद्यमेवम्—

*“त्वं नाथस्त्वां स्तुवे नाथं, सनाथोऽहं त्वया नमः ।
तुभ्यं त्वन्मे शुभं ज्ञानं, तवानन्तगुणास्त्वयि ॥ २ ॥”

( ८ ) श्रीसोमसुन्दरसूरिविरचिता अस्मच्छब्दनवस्तवी युष्मच्छब्दनवस्तवी तु मुद्रिता जैनस्तोत्रसङ्ग्रहस्य प्रथमे विभागे ।

साहित्यशास्त्रपारपारीणैरनेकैर्विद्वद्वरैः समसंस्कृतप्राकृतकाव्यान्यपि रचितानि । तथाहि—

१ मया संशोधितो ग्रन्थोऽयं मुद्रापितोऽधुना श्रेष्ठिदेवचन्द्रलालभाइजैनपुस्तकोद्धारसंस्थया ।

( १ ) श्रीहरिभद्रसूरिवर्यविरचिता [1]संसारदावानलस्तुतिः ( संयुक्तव्यञ्जनराहिता ), ( २ ) श्रीजयशेखरसूरिप्रणीतं [2]वीरस्तवनम्, ( ३ ) श्रीजिनवल्लभसूरिसूत्रितं [3]श्रीमहावीरस्वामिस्तोत्रं, ( ४ ) श्रीजिनप्रभसूरिशार्दूलसन्दब्धषड्भाषामयश्रीचन्द्रप्रभजिनस्तवनान्तर्गतं समसंस्कृतस्तवनम्, तथा ( ५ ) एतत्सूरिराजप्रणीता[4]ष्टभाषात्मकश्रीऋषभस्तवनान्तर्गतं [5]समसंस्कृतप्राकृतं स्तवनम् ।

( ६ ) श्रीहीरविजयसूरीश्वरशिष्यरत्नश्रीसहजसागरकृतं २८पद्यप्रमितं जिनस्तवनम् । तस्य प्रथमं पद्यं यथा—

× " सोल्लाससिद्धिकमलावर ! वीर ! देव !
सेवे भवन्तमघवारणबद्धरङ्गम् ।
कामं सुरासुरसमूहसभाविभावि-
वाणीरसं परमसंवरवासभूमिः ॥ १ ॥ "

अनेकभाषात्मकान्यपि स्तवनानि विरचितानि जैनमहर्षिभिः । तथाहि—

( १ ) महोपाध्यायश्रीरत्नशेखरगणिगुम्फितं संस्कृत–प्राकृत–शौरसेनीभाषात्रयात्मकं मालिनीच्छन्दोबद्धं २५पद्यप्रमितं चतुर्विंशतिजिनस्तवनम् । तस्येदमादिमं पद्यम्—

---

१ अस्या आदिमं पद्यमिदम्—

" संसारदावानलदाहनीरं
संमोहधूलीहरणे समीरम् ।
मायारसादारणसारसीरं
नमामि वीरं गिरिसारधीरम् ॥ १ ॥ "

२ अस्यादिमं पद्यं यथा—

" अकम्पसम्पल्लवलीवसन्तं
निरीहचित्ते विमले वसन्तम् ।
कामं निकामं विरसं हसन्तं
नमामि वीरं सहसोल्लसन्तम् ॥ १ ॥ "

३ इदं स्तोत्रं मुद्रितं **काव्यमालायाः** सप्तमगुच्छके ९७तमे पृष्ठे । तस्य चायं श्लोकोऽग्रिमः—

" भावारिवारणनिवारणदारुणोरु-
कण्ठीरवं मलयमन्दरसारधीरम् ।
वीरं नमामि कलिकालकलङ्कपङ्क-
सम्भारसंहरणतुङ्गतरङ्गतोयम् ॥ १ ॥ "

४ संस्कृत–प्राकृत–मागधी–शौरसेनी–पिशाची–चूलिकापैशाचिकी–समसंस्कृता–ऽपभ्रंशा इति अष्ट भाषाः ।

५ अस्याद्यं पद्यमिदम्—

" हेमसरोरुहभासं कलिमलकमलालिमथनहिमभासम् ।
भवभयधूलिमहाबल ! नाभेय ! भवन्तमाभिवन्दे ॥ १ ॥ "

* " अमरगिरिगरीयोमारुदेवीयदेहे
कुवलयदलमालाकोमला कुन्तलाली ।
सजलजलदपाली किं नु सन्नीलकण्ठी-
घननिवहममन्दं नन्दयन्ती जयाय ॥ १ ॥ "

(२) श्रीजिनकीर्तिमुनिवरैर्विरचितं पञ्चभाषात्मकं जिनस्तवनमित्युल्लेखो जैनग्रन्थावल्याम्।

(३) श्रीधर्मवर्धनमुनीशकृतं षड्भाषात्मकं सटीकं श्रीपार्श्वनाथस्तवनम् । तस्यान्तिमं पद्यं यथा—

× " स्वर्भाषा संस्कृतीया तदनुप्रकृतिया मागधी सौरसेनी
पैशाची द्व्यङ्गरूपाऽनुसृतविधिरपभ्रंसिका सूत्रवाक्यैः ।
षड्भिर्वाग्भी रसैर्वा स्तुतिसुरसवती निर्मिता पार्श्वभर्तुः
श्रीधर्माद् वर्धनेनामितसुकृतवतां ह्लादसुस्वाददा स्यात् ॥ "

(४) श्रीजिनप्रभसूरिसूत्रितं षड्भाषामयं श्रीचन्द्रप्रभस्तवनं यस्याद्यं पद्यमिदम्—

" हारिहारहरहासकुन्दसुन्दरदेहाभय !
केवलकमलाकेलिनिलय ! मञ्जुलगुणगणमय । !
कमलारुणकरचरण ! चरणभरधरणधवल !
बलसिद्धिरमणिसङ्गमविलासलालसमलमवदल ॥ १ ॥ "

(५) पण्डितशिरोमणिपण्डितश्रीमहीकलशगणिशिष्यश्रीचारित्रसुन्दरगणिसन्दृब्धसंस्कृत-(१) प्राकृत (२) मागधी (३) शौरसेनी (४) पैशाची (५) चूलिकापैशाची (६) अपभ्रंश (७) इति भाषासप्तकनिबद्धानि ऋषभ(१)शान्ति (२) नेमि (३) पार्श्व (४) वीर-(५) जिनानां सप्तसप्तवृत्तप्रमाणानि स्तोत्राणि । तेषामाद्यः श्लोको यथा—

* " श्रीर्णां प्रीणातु दानैः प्रथमजिनपतिर्नाभिभूर्भूर्भुवःस्वः—
सेवाहेवाकिनाकिप्रभुमुकुटतटस्पृष्टपादारविन्दः ।
भूतो भावी भवन् वाऽनणुरणुरपि वा भावराशिः समस्तो
यज्ज्ञाने तुल्यकालं प्रतिफलति यथास्वस्वरूपव्यवस्थाम् ॥ १ ॥ "

* संस्कृतप्राकृतभाषाविभक्तपूर्वार्धोत्तरार्धरूपा २५२ पद्यप्रमाणा श्रीमेघकुमारकथा श्रीदेवेन्द्रसूरिविरचितायां श्रीधर्मरत्नप्रकरणटीकायाम्, श्राद्धप्रतिक्रमणवृत्त्यपराभिधायां अर्थदीपिकायां ३८७श्लोकसङ्ख्याका शीलवतीकथा च । महोपाध्यायश्रीविनयविजयगणिगुम्फितेऽद्यावध्यप्रसिद्धे विज्ञप्तिपत्रेऽपि एवंविधानि भूयांसि सन्ति काव्यानि । तत्राद्यं पद्यं त्विदम्—

" सत्थिसिरिकमलिणीगहणदिणणायगं
नेमिजिणणायगं सिद्धिसुहदायगं ।
यमतिभक्तिस्फुरत्पुलकदन्तुरतनु-
र्नाकिनिकरो नमत्यमलमतिवैभवः ॥ १ ॥ "

न च पर्याप्तमनेन जैनमुनिवराणां शब्दभावविज्ञानपाण्डित्यं यस्य दिग्दर्शनमपि सम्पूर्णतया न कारितं मया ग्रन्थगौरवभयात् । अनेकार्थकाव्यकर्मकर्मठत्वं जैनानां जिज्ञासुभिर्विलोक्यतां विपश्चिद्भिः श्रीवीरजिनस्तवनं १२पद्यप्रमितं शार्दूलविक्रीडितच्छन्दसि रचितं श्रीसोमतिलकसूरिभिः । एतस्य प्रत्येकपद्यस्य २५ अर्थाः । आद्यं पद्यं तु यथा—

* " श्रीसिद्धार्थनरेन्द्रवंशकमलाशृङ्गारहार ! प्रभो !
श्रीमद्वीर ! भवन्तमन्तरुदितप्रीत्या विमुक्त्यै स्तुवे ।
निःशेषानपि नाभिनन्दनमुखांस्तीर्थङ्करान् श्रीगुरून्
प्रत्येकं युगपत् क्रमाच्च दशभिः श्लोकैरिहान्तर्गतैः ॥ १ ॥ "

कर्तृनामगर्भितं चरमं चित्रकाव्यं त्वस्य षडरचक्रबन्धबन्धुरमष्टदलकमलकलितं वा, तच्चैवम्—

* " यस्त्वां श्रीजिन ! सूदितोन्मदमनश्चौरः प्रणौति श्रमं
जित्वा सोढगरिष्ठकष्टदहनं रोचिष्णुभालद्युतम् ।
दत्ताऽमर्त्यपवित्रसंमद ! पठन् कान्तं त्रिशङ्कुः स्तवं
वन्द्यान्हाय भवान जिनः प्रददतामन्येऽपि तस्मै शिवम् ॥ १२ ॥ "

एतदन्तश्च कविनामसम्बद्धाः ' श्रीसोमतिलकसूरिविरचितं ' इत्येते १२ वर्णाः अरषट्कं च ३-६-१४-१७ अक्षरेष्वन्तर्भाविताः सन्ति ते च स्थापनाविशेषादवसेयाः ।

अनेकार्थकाव्येषु वरीवर्ति श्रीसोमप्रभसूरिप्रमुखमुनिराजप्रणीता शतार्थी । अष्टादशव्याकरणविद्भिः पण्डितश्रीलाभविजयगणिभिः श्रीयोगशास्त्रस्य निम्नलिखितप्रारम्भिकपद्यस्य—

---

१ प्रमुखशब्देन सूच्यन्ते योगशास्त्रस्य ' परिग्रहारम्भमग्नाः ( प्र० २, श्लो० १० ) ' ' प्राप्तुं पारमपारस्य ( प्र० २, श्लो० ८५ ) ' इति पद्यस्य च शतार्थीकर्मकर्मठश्रीमानसागरोपाध्याय–जयसुन्दरमुनीशादयः ।

२ श्रीधर्मदासगणिकृतोपदेशमालाया निम्नलिखितगाथायाः—

" दोससयमूलजालं पुव्वरिसिविवज्जिअं जइवंतं ।
अत्थं वहसि अणत्थं कीस अणत्थं तवं चरसि ? ॥ ५१ ॥ "

शतमर्थाः कृता श्रीउदयवल्लभगणिभिः । रत्नाकरावतारिकायाः प्रथमपद्यस्याप्यर्थशतं वर्तते इति जैनग्रन्थावल्यां ( पृ० ७८ ) ।

श्रीविजयविमलगणिकृतबन्धहेतूदयत्रिभङ्गीप्रकरणटीकादौ—

" तेषां राज्ये प्राज्ये विबुधा निर्मलशतार्थिबिरुदभृतः ।
श्रीहर्षकुलगणीन्द्रा विबुधवतंसा बभूवुर्ये ॥ ४ ॥

इति पद्यावलोकनेनापराऽपि शतार्थी ज्ञायते परं नाद्यावधि मे दृष्टिगोचरीबभूव ।

" नमो दुर्वाररागादि-वैरिवारनिवारिणे ।
अर्हते योगिनाथाय, महावीराय तायिने ॥ "

पञ्चशतार्थी विहितेति पट्टावल्याम् । तथा वाचकश्रीसमयसुन्दरकृता अर्थरत्नावलीत्यपरनाम्नी अष्टलक्षार्थी च विराजते ।

जैनानामस्यामेव दिशि वैदग्ध्यं वर्तते इति चेत् तन्न, विविधविषयविभूषितत्वात् तत्प्रणीतसाहित्यस्य । न कोऽपि वर्तते विषयो विश्वविश्वे यत्परत्वे जैनैर्न संस्कृतगिरि गुम्फिता ग्रन्था अन्यदर्शनीयप्रणीतग्रन्थतुलनायामप्युच्चस्थानीयाः । इयमतिशयोक्तिरिति मन्यमानैर्मनीषिभिः दृष्टिपातः क्रियतां निम्नसूचितग्रन्थेषु—

अलङ्कारविषये श्रीविनयचन्द्राणां कविशिक्षा, वायडगच्छीयश्रीजिनदत्तसूरिशिष्य-सिद्धसारस्वतवेणीकृपाणापरनामश्रीअमरचन्द्रसूरीणा काव्यकल्पलतामकरन्द-परिमलादिवृत्तिविभूषिता काव्यशिक्षाऽपरनामधेया काव्यकल्पलता, सार्धकोटित्रयप्रमितश्लोकसाहित्यरचयितृश्रीहेमचन्द्रसूरीणां काव्यानुशासनम्, कविश्रीवाग्भटानां वाग्भटालङ्कारः, श्रीमन्त्रिमण्डनानां अलङ्कारमण्डनं, श्रीनरेन्द्रप्रभाणां अलङ्कारमहोदधिः इत्यादयो ग्रन्था अलङ्कारविदां परिचितिं प्राप्तुमर्हन्ति ।

कथासाहित्ये श्रीसिद्धर्षिविरचिता उपमितिभवप्रपञ्चा कथा, कविराजधनपालप्रणीता तिलकमञ्जरी, श्रीकुमारपालपृथ्वीपतिप्रतिबोधकश्रीहेमचन्द्रसूरिसूत्रितं त्रिषष्टिशलाकापुरुषचरित्रम्, श्रीरत्नप्रभाचार्याणां कुवलयमाला इत्यादिग्रन्था भूमण्डलं मण्डयन्ति ।

---

१ मया संशोधितोऽयं ग्रन्थो मुद्राप्यमाणो वर्ततेऽधुना श्रेष्ठिदेवचन्द्रलालभाईजैनपुस्तकोद्धारसंस्थया ।

२ एभिर्महात्मभिः पण्डितश्रीअरसिंहविरचितसुकृतसङ्कीर्तनं समलमकारि प्रतिसर्गं श्लोकचतुष्टयं विरचय्य । * महाभारतवाचनखिन्नविद्वद्द्विजप्रार्थनया प्रणीतमेभिर्बालभारतनामकं महाकाव्यम् । यदुक्तं श्रीमद्भिरेव तत्प्रशस्तौ—

" श्री'वागभट'स्थाननिवासिनस्ते सम्भूय भूयस्तरहर्षभाजः ।
कदाचिदागत्य निवेशवेश्म अगुर्द्विजास्तं मुनिचक्रशक्रम् ॥ ४२ ॥
मरुद्धाताऽस्माकं भुवनजयिनौ यस्य तनयौ, तयोः सङ्गो यस्यामजनि हनुमद्भीमभटयोः ।
तथा सङ्क्षेप्यासौ पृथुरपि 'महाभारत'कथा, यथा स्वल्पाभिः स्यात् तिथिभिरतिथिः कर्णपथयोः ॥ ४३ ॥
आज्ञापितस्तदिह कर्मणि सूरिभिस्तैः, ख्यातः क्षितावमरचन्द्र इति स्वशिष्यः ।
'श्रीबालभारत' इति प्रततान काव्यं, वीराङ्कमेतदविनश्वरमात्मनोऽङ्गम् ॥ ४४ ॥ "

३ काव्यकल्पलतावृत्तेः प्रारम्भिकं पद्यं यथा—

" सारस्वतामृतमहार्णवपूर्णिमेन्दोर्मत्वाऽरिसिंहसुकवेः कवितारहस्यम् ।
किञ्चिच्च तद्रचितमात्मकृतं च किञ्चिद् व्याख्यास्यते त्वरितकाव्यकृतेऽत्र सूत्रम् ॥ "

४ प्राकृतभाषायां श्रीदाक्षिण्यचिह्नसूरिकृता कुवलयमाला, श्रीपादलिप्तसूरिकृता तरङ्गवती कथा च तत्साहित्यस्य निदर्शनम् ।

काव्येषु श्रीदेवविमलगणीना हीरसौभाग्यम्, मलधारीयश्रीहेमचन्द्रसूरिप्रणीतं नाभेयनेमिमहाकाव्यम्, श्रीनयचन्द्रसूरीणां हम्मीरमहाकाव्यम्, श्रीअमरचन्द्रसूरीणां पद्मानन्दमहाकाव्यम्, कविकुञ्जरश्रीहेमविजयगणीनां विजयप्रशस्तिः, उपाध्यायश्रीमेघविजयानां सप्तसन्धानमहाकाव्यं चास्वादयन्तु काव्यरसिकाः ।

पादपूर्त्तिरूपकाव्येषु श्रीहर्षप्रणीतनैषधीयचरिततुरीयचरणपूर्त्तिरूपं श्रीशान्तिनाथचरित्रं, श्रीमाघकविकृतशिशुपालवधसमस्यारूपं श्रीदेवानन्दाभिधानकं महाकाव्यं च श्रीमेघविजयोपाध्यायपादानां कस्य कं न कम्पयति ? ।

वैयाकरणाः अवलोकयन्तां कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिप्रणीतं [1]सिद्धहेमव्याकरणं प्राकृतसंस्कृतद्व्याश्रयकाव्ये [2]धातुपारायणं, [3]श्रीबुद्धिसागरसूरिकृतं बुद्धिसागरव्याकरणं, [4]श्रीविद्यानन्दसूरिसूत्रितं विद्यानन्दव्याकरणम्, [5]श्रीमलयगिरिसूरिसन्दब्धं मलयगिरिशब्दानुशासनं, श्रीजिनप्रभसूरिसूत्रितं श्रेणिकचरिताख्यं *द्व्याश्रयकाव्यं च ।

कोशविदस्तु श्रीहेमचन्द्रसूरिवर्यविरचितां अभिधानचिन्तामणिं अनेकार्थसङ्ग्रहं, श्रीहर्षकीर्तिसूरिकृतां शारदीयनाममालां, श्रीजिनभद्रगणीनां पञ्चवर्गपरिहारनाममालां च मीमांसाभूमिमवतारयन्ताम् ।

---

१ * उक्तं च केनचिद् विपश्चिता स्वमित्रं प्रति—

" भ्रातः ! संवृणु ' पाणिनि 'प्रलपितं ' कातन्त्र 'कन्था वृथा
मा कार्षीः कटु ' शाकटायन 'वचः क्षुद्रेण ' चान्द्रे 'ण किम् ? ।
कः ' कण्ठाभरणा 'दिभिर्बठरयत्यात्मानमन्यैरपि ?
श्रूयन्ते यदि तावदर्थमधुराः श्रीहेमचन्द्रोक्तयः ॥ "

२ * श्रीमेरुतुङ्गसूरिभिरपि धातुपारायणं निरमायीति—

"काव्यं श्रीमेघदूताख्यं, षड्दर्शनसमुच्चयः ।
प्रवृत्तिर्बालाव(ल ?)बोधाख्या, धातुपारायणं तथा ॥ ४ ॥
एवमादिमहाग्रन्थनिर्मापणपरायणाः ।
चतुराणां चिरं चेतश्चमत्काराय येऽन्वहम् ॥ ५ ॥"

इति अभयदेवसूरिसन्दब्धश्रीसप्ततिकाभाष्यटीकाप्रशस्तिकाव्यतोऽनुमीयते ।

३ * यदाहुः प्रमालक्ष्मकर्तारस्तत्प्रशस्तौ—

" श्रीबुद्धिसागराचार्यैः—र्वृत्तैर्व्याकरणं कृतम् ।
अस्माभिस्तु प्रमालक्ष्म, वृद्धिमायातु साम्प्रतम् ॥ "

४ * उक्तं च श्रीमुनिसुन्दरसूरिभिः गुर्वावल्यां ( श्लो० १७१ )—

" विद्यानन्दाभिधं येन, कृतं व्याकरणं नवम् ।
भाति सर्वोत्तमं स्वल्प—सूत्रं बह्वर्थसङ्ग्रहम् ॥ "

५ * सवृत्तिके शब्दानुशासनेऽत्र नामाख्यातकृदाख्यं प्रकरणत्रयं नवदशषट्पादप्रमाणमस्ति ।

छन्दोविदो विदन्तां श्रीहेमचन्द्रसूरीश्वरप्रणीतं छन्दोऽनुशासनं श्रीअमरचन्द्रसूरिवर्यविरचितां छन्दोरत्नावलीं मुक्तावलीं च।

तत्त्वज्ञानविषये वाचकवर्यपञ्चशतीप्रकरणप्रणेतृश्रीउमास्वातिकृतं स्वोपज्ञभाष्यसमलङ्कृतं श्रीसिद्धसेनसूरिप्रमुखमुनिवर्यविरचितटीकासमलङ्कृतं तत्त्वार्थाधिगमसूत्रं, चिरन्तनाचार्यकृतः सर्वसिद्धान्तवेप्रशः, श्रीहरिभद्रसूरिकृतः षड्दर्शनसमुच्चयः श्रीगुणरत्नमुनीशकृतवृत्तिविभूषितः, श्रीहारिभद्रीयः शास्त्रवार्तासमुच्चयः स्वोपज्ञवृत्तिसमन्वितः न्यायाचार्यन्यायविशारदमहामहोपाध्यायश्रीयशोविजयगणिकृतव्याख्याविस्तृतः मध्यस्थभावप्रदीपकश्च समालोच्यन्तां समालोचकैः।

तर्कशास्त्रविदस्तु तर्कयन्तु तार्किकमण्डलमूर्धमणिश्रीसिद्धसेनदिवाकरकृतं न्यायावतारं सम्मतितर्कं च श्रीअभयदेवसूरिकृतवृत्तिविभूषितं, श्रीहरिभद्रसूरिकृतामनेकान्तजयपताकां, श्रीवादिदेवसूरीणां स्याद्वादरत्नाकरं, श्रीमल्लवादिकृतं नयचक्रवालं ( द्वादशारं ) श्रीसिद्धर्षिमहोपाध्यायश्रीयशोविजयकृतव्याख्यासमेतं, श्रीयशोविजयवाचकसत्तमसूत्रितां नव्यन्यायशैलीपूर्विका जैनतर्कभाषाप्रमुखां ग्रन्थशतीं वा।

गणितज्ञा निरीक्षन्तां श्रीमहावीराचार्यकृतं गणितसारसङ्ग्रहं, श्रीपतिकृतगणितस्योपरितनां श्रीसिंहतिलकसूरिकृता गणिततिलकवृत्तिं, *श्रीमहेन्द्रसूरिरचितं श्रीमलयेन्दुकृतटीकासमेतं पञ्चाध्यायप्रमितं यन्त्रराजं च।

विकटनाटककोटीपटीयांसः प्रेक्षन्तां प्रेक्षावन्तः प्रबन्धशतप्रणेतॄणां श्रीरामचन्द्रसूरीणां नाट्यदर्पणम्।

गूर्जरदेशस्य इतिहासान्वेषणतत्पराः दृष्टिसाफल्यं कुर्वन्तु प्रभावकचरित्र–प्रबन्धचिन्तामणि–प्रबन्धकोशप्रमुखग्रन्थावलोकनेन।

वैद्यमनोविनोदाय श्रीहर्षकीर्त्तीया योगचिन्तामणिः, वैद्यवल्लभः श्रीहस्तरुचीनां, योगमाला श्रीसिद्धर्षीणां, श्रीकण्ठसूरीणां हितोपदेशश्चाऽलम्।

ज्योतिष्कमस्तकं विधूनयति श्रीमेघविजयगणीनां वर्षप्रबोधो मेघमहोदयेत्यपराभिधानः, पद्मप्रभीयो भुवनदीपकः, नारचन्द्रीयो जन्मसमुद्रः, मानसागरीया पद्धतिः, श्रीहेमहंसकृतविस्तुतवार्त्तिकालङ्कृता श्रीउदयप्रभीयाऽऽरम्भसिद्धिः, सुप्रसिद्धो नारचन्द्रश्च।

प्राश्निकजिज्ञासां पिपर्ति श्रीनरचन्द्रसूरिकृतं प्रश्नशतकं, श्रीहेमप्रभसूरिरचितत्रैलोक्यप्रकाशः, श्रीपद्मप्रभसूरिप्रणीतो भुवनदीपकश्च।

* चूडामणिविषये चूडामणिभावं बिभर्ति जयपाहुडेत्यपराभिधानं सवृत्तिकं प्रश्नव्याकरणम्, चन्द्रोन्मीलनम्, प्रश्नचूडामणिः, अक्षरचूडामणिश्च।

६ एतन्मुद्रणालयपुस्तिका मया क्रियमाणा वर्तते।

रमलज्ञानामृतरसपिपासामपनयति श्रीविजयदेवसूरिराज्ये श्रीभोजमुनिरचितं रमलशास्त्रं श्रीमेघविजयगणिगुम्फितं च ।

निःशेषस्वप्नशास्त्राण्यतिशेते दुर्लभराजात्मजजगद्देवसन्दृब्धः स्वप्नचिन्तामणिः।

सामुद्रिकसीमानमासादयति दुर्लभराजतनुजजगद्देवविरचितं बृहत्सामुद्रिकम् ।

शाकुनज्ञानविधानाय पर्याप्ता श्रीभानुचन्द्रीया वसन्तराजशकुनटीका ।

एवं जैनैर्[1] विद्वद्भिर्न केवलं स्वकीयसाहित्यस्यैव वृद्धिर्व्यधायि, किन्तु प्रचुरतरमितरसाहित्यमपि प्रखरपाण्डित्यपरिचायिकाभिर्वृत्त्यादिभिर्विभूषयाञ्चक्रे, तथाहि—

१ सारस्वतव्याकरणम्—श्रीचन्द्रकीर्त्तिसूरिभिः[2] । ( मु. )
२ सरस्वतीकण्ठाभरणम्—श्रीपार्श्वचन्द्रात्मजेन आजडेन ।
+३ हाल( शालिवाहन )कृता गाथासप्तशती— "
४ तर्कसङ्ग्रहः—श्रीक्षमाकल्याणैः तर्कफक्किकया । ( मु. )
५ तर्कभाषावार्तिकम्—श्रीशुभविजयमुनिवरैः ।
•६ तर्करहस्यदीपिका—श्रीगुणरत्नसूरिभिः ।
७ सप्तपदार्थी—श्रीजिनवर्द्धनगणिभिः ।
८ महाविद्याविडम्बनम्—श्रीमुनिसुन्दरसूरिशिष्यश्रीभुवनसुन्दरसूरिभिः ।
९ न्यायालङ्कारः—श्रीअभयतिलकोपाध्यायैः ।
१० न्यायसारः—श्रीजयसिंहसूरिभिः
११ न्यायकन्दली—श्रीनरचन्द्र–श्रीराजशेखरसूरिप्रभृतिभिः ।
१२ दिङ्नागकृतन्यायप्रवेशः—श्रीहरिभद्रसूरि–श्रीपार्श्वदेवगणि( श्रीचन्द्रसूरि )भिः । (मु.)
१३ धर्मोत्तररचितन्यायबिन्दुटीका—श्रीमल्लवादिभिः ।
१४ लक्षणसमुद्रः–श्रीरत्नशेखरसूरिभिः ।
१५ काव्यप्रकाशः—श्रीमाणिक्यसूरिभिः सङ्केतवृत्त्या । ( मु. ) न्यायविशारद–न्यायाचार्यमहोपाध्यायश्रीयशोविजयैरप्यस्य टीका क्लृप्तेति तैरेव स्वोपज्ञग्रन्थदत्तसाक्षिभिर्ज्ञायते।
१६ रुद्रटकाव्यालङ्कारः—श्रीनमिसाधुभिः । ( मु. )
१७ अनर्घ्यराघवम्—श्रीनरचन्द्रसूरिभिः ।
१८ कादम्बरीकाव्यम्[3]—श्रीभानुचन्द्रसिद्धिचन्द्राभ्याम् । ( मु. )
१९ माघकाव्यम्—श्रीचारित्रवर्धनैः ।

---

१ अत्र जैनैः श्वेताम्बराः सूच्यन्ते यैर्दिक्पटीयसाहित्यस्यापि सेवा व्यधायि, यथाहि—**अष्टसहस्री**-व्याख्याविधातारः श्री**यशोविजय**गणयः, श्री**पद्मनन्दि**कृतश्रीपार्श्वजिनाष्टकस्य लक्ष्मीर्महस्तुल्येति प्रारम्भिकस्य टीकाकाराः श्री**मुनिशेखर**सूरयः । २ यथा कातन्त्रव्याकरणवृत्तिव्याख्यातारोऽनेके जैनमुनीश्वरा इति **जैनग्रन्थावली**( पृ० २०५ )प्रेक्षणेनावगम्यते तथा **सारस्वत**व्याकरणस्यापि नाना मुनिवरा इति ततोऽवसीयते।
३ कादम्बरीदर्पणः श्रीमण्डनमन्त्रिभिः ।

२० नैषधकाव्यम्—श्रीजिनराजसूरि–श्रीचारित्रवर्धनादिभिः ।
२१ [1]किरातार्जुनीयकाव्यम्––श्रीविनयसुन्दरैः ।
२२ कुमारसम्भवकाव्यम्—श्रीविजयगणिभिः श्रीचारित्रवर्धनैश्च ।
२३ रघुवंशकाव्यम्—श्रीसमयसुन्दर–चारित्रवर्धनप्रमुखमुनीश्वरैः ।
२४ दमयन्तीचम्पूः—श्रीगुणविज( न )यगणिभिः ।
२५ खण्डप्रशस्तिः––श्रीगुणविज(न)य–प्रबोधमाणिक्यादिमुनीश्वरैः ।
२६ [2]नलोदयः—श्रीआदित्यसूरिभिः ।
२७ मेघदूतम्––श्रीमहीमेरुप्रमुखमुनिराजैः कविसमाशृङ्गारासडेन ।
२८ राक्षसकाव्यम् —श्रीशान्तिसूरिभिः ।
२९ वृन्दावनकाव्यम्— ,,
३० घटखर्परः— ,,
३१ शिवभद्रकाव्यम्— ,,
३२ मेघाभ्युदयः— ,,
३३ [3]श्रीहलायुधकृतकविगुह्यकाव्यम्—श्रीरविधर्मैः ।
३४ गङ्गाष्टकम्—पूर्वाचार्यैः ।
३५ राघवपाण्डवीयकाव्यम्–श्रीचारित्रवर्धनैः ।
३६ भर्तृहरिशतकत्रयम्—श्रीधनसार–जिनसमुद्रमुनिभ्याम् ।
३७ वासवदत्ता—श्रीसिद्ध( द्धि )चन्द्रैः ।
३८ विषमकाव्यवृत्तिः—श्रीजिनप्रभसूरिभिः ।
३९ शिवमहिम्नःस्तोत्रम्—श्रीहर्षकीर्तिसूरिभिः ।
४० वृत्तरत्नाकरः—श्रीरा( सो ? )मचन्द्रैः श्रीसमयसुन्दरगणिभिश्च ।
४१ श्रुतबोधः—श्रीनयविमल + श्रीमेघचन्द्रशिष्यहर्षकीर्तिभिः ।
४२ पातञ्जलयोगसूत्रम्—न्या०न्या०महोपाध्यायश्रीयशोविजयैः । ( मु. )
४३ श्रीनागार्जुनकृतयोगरत्नावलिः—श्रीगुणाकरसूरिभिः ।
४४ वसन्तराजशकुनम्––श्रीभानुचन्द्रोपाध्यायैः । ( मु. )
४५ गायत्रिका—षड्दर्शनमान्यतानुसारिण्या वृत्त्या श्रीशुभतिलकोपाध्यायैः श्रीयशश्चन्द्रैश्च ।
४६ ज्योतिर्विदाभरणम्—श्रीभावरत्नैः ।
४७ * ताजिकसारः—श्रीसुमतिहर्षगणिभिः ।

---

१ किरातार्जुनीयदीपिका श्रीधर्मविजयमुनिभिः । २–३अयमुल्लेखो जैनग्रन्थावल्यां वर्तते परन्तु स विचारणीय इव प्रतिभाति ।

इत्येतैर्जैनानां संस्कृतसाहित्यप्रियत्वं स्वमताग्रहराहित्यं गुणग्राहित्वं परोपकारित्वं च प्रकटीभविष्यति करतलगतामलकवद् सहृदयहृदयानां विद्वद्वर्याणाम् ।

अनेन स्फुटीभविष्यति मतिमतां जैनसंस्कृतसाहित्यसौन्दर्यं, तिग्मकिरणोदयात् च तिमिरसंहतिरिव तिरोभविष्यति पण्डितंमन्यानां मान्यता यदुत जैनानां साहित्यं प्रायः प्राकृतभाषानिबद्धं वर्तते, गीर्वाणगिरि गुम्फितं तु स्वल्पतमं तदप्यजैनकविकृतितुलनायामगौरवास्पदम् ।

इदमपि अवस्थाप्यं हृदये सहृदयैर्यदुत संस्कृतसाहित्यपादपपोषकैः जैनैः विविधभाषासाहित्यसेवाऽप्यकारि । तथाहि—प्राचीनगुर्जरवाङ्मयस्य पोषका जैनाः, प्राकृतभाषाबन्धुरं साहित्यं प्रायः तत्सेवाफलमेव, कर्नाटकीयादिगिरासु बहुधा सुरचितानि चान्यान्यपुस्तकानि सार्वसाधुभिः । पारसीयसाहित्यस्यापि सेवा व्यधायि जैनमुनीशैः । निदर्शनार्थं विलोक्यतां श्रीजिनभद्रसूरिकृतं पारसीयभाषायां निबद्धं श्रीजिननमस्कारकाव्यम्[1]—

" दोस्ती ष्वांद ! तुरा न वासइ कुया हामाचुनी द्रोगू हिसि
चीजे आमद वेसिदो दिलुसराबूदी चुनी कीवरः ।
तंबाला रहमाण ! वासइ चिरा दोस्तीनिसस्ती इरा
अल्लाल्लाह ! तुरा सलामु बुचिरुक् रोजी मरामे दहि ॥ १ ॥ "

काव्यार्थस्तु यथा—

दोस्ती ष्वांद!०, दोस्ती—अनुरागः ष्वांद !–स्वामिन् ! तुरा—तव, न वासइ—नास्ति, कुया—कस्मिन्नपि हामाचुनी—सर्वं, द्रोगू—असत्यम् हिसि—तिष्ठति, आद्यपदार्थः। यतः चीजे या (यः?) कोऽपि आमद—आजगाम, वेसिदो—युष्मत्पार्श्वे, दिलुसराबूदी—सज्ज्ञानभव्यमानसः, चुनी—ईदृशः कीवरः—कर्मकरमात्रोऽपि, द्वितीयपदम् । तथा तंबाला—तस्योपरि रहमाण !—वीतराग ! वासइ इति विद्यते, चिरा—कृतः दोस्तीनिसस्ती—रागानुबन्धः इरा—अतः कारणात् (तृतीय पदम्)।'अल्लाल्लाह' पूज्यवाचकौ शब्दौ, तुरा—तुभ्यम्, सलामु—नमस्कारः,बुचिरुक्—महती, रोजी—विभूतिं, मरामे—मह्यं दहि इति देहि ॥

इति श्रीजिनभद्रसूरिकृतपारसीबद्धश्रीजिननमस्कारकाव्यार्थः ॥

अपरञ्च समीक्ष्यतां श्रीजिनप्रभसूरिभी रचितस्य ११पद्यात्मकस्य सवृत्तिकस्य ऋषभदेवस्तोत्रस्य निम्नलिखितं प्रथमं पद्यम्—

×" अल्लाल्लाहि ! तुराहं कीम्वरु साहिया नु तूं मरा ष्वांद ! ।
दुनी पकसामे दानं बुस्मारइ बुध ! चिरा नह्मम् ॥ १ ॥ "

अवचूरिस्तु यथा—

---

१ सटीकस्यास्य काव्यस्य श्रीविजयधर्मलक्ष्मीज्ञानमन्दिरसत्का प्रतिरलाभि मया इतिहासतत्त्वमहोदधि-श्रीविजयेन्द्रसूरिद्वारा । अतस्तेषामुपकार्योऽस्मि ।

हे पूज्य ! तवाहं कर्मकरः, त्वं पृथिवीपतिर्मम स्वामी वसुधालोकान् जानासि। हे देव ! 'चिरा' कस्मादस्मान् न सम्भालयसि ? यतस्त्वं मे 'दानीं' (मेदिनीं) सर्व(र्वा)मपि वेत्सि ततो मां दुःखितं(नं) कथं न वेत्सि ? इत्यर्थः ॥ १ ॥

एवं विविधभाषात्मके [1]जैनसाहित्ये सति तस्य दिग्दर्शनमपि दुष्करम्, किमु तदा तत्सुविशेषः परिचयः ? तत्रापि उपलब्धानुपलब्धसमस्तसाहित्यस्य तु का कथा ? यतः किं तस्य सर्वाङ्गा परिचितिः सम्भवति शिरसा क्षोणीधरं बिभित्सोः, वसुन्धरां कराभ्यामुच्चिक्षिप्सोः, शेषशिरःस्थितं मणिं जिघृक्षोः, पयोनिधिं पाणिभ्यां प्रतितीर्षोः, कुशाग्रेण तं मित्सोः, चन्द्रं चिक्रमिषोः, सुराचलं चरणेन चिकम्पयिषोः, गत्या गन्धवाहं जिगीषोः, चरमार्णवपयः पिपासोः, खद्योतपोततेजोभिर्मार्तण्डमण्डलमभिबुभूषोरपि ? ।

अन्ते आर्यसाहित्यं सभ्यताया आदर्शः, कामदा कल्पलतिका, सञ्जीविनी औषधी, चारुश्चिन्तामणिः, समुन्नतेर्महामन्त्रम्, सफलतायाः साधनम्, सिद्धेः सूत्रमित्युद्घोषणापुरस्सरं विरमामि विवेचनादस्मात् ॥

अधुना प्रस्तूयते प्रस्तुतस्तुतिकारसम्बन्धी विषयः। इमे तावत् सुगृहीतनामधेयाः स्तुतिचतुर्विंशतिकाप्रणेतृत्वेन महाकविकोटिं प्राप्ताः श्रीशोभनमुनीश्वराः कदा कं मेदिनीमण्डलं मण्डयामासुरिति प्रश्नो विचार्यते। तत्र साधनानि तु इमानि—

१ श्रीधनपालकवीश्वरप्रणीतायाः स्तुतिचतुर्विंशतिटीकाया आदिमे श्लोका येषु द्वित्रास्तिलकमञ्जरीप्रस्तावेऽपि वर्तन्ते ।

२ श्रीधनपालगुम्फितायाः पाइअलच्छीनाममालायाः प्रान्तभागः ।

३ श्रीप्रभाचन्द्रसूरिप्रणीतप्रभावकचरितान्तर्गतः श्रीमहेन्द्रसूरिप्रबन्धः ।

४ श्रीमेरुतुङ्गसूरिसन्दब्धप्रबन्धचिन्तामणेः भोजभीमप्रबन्धः ।

५ श्रीहरिभद्रसूरिसूत्रितसम्यक्त्वसप्ततेः श्रीसङ्घतिलकसूरिकृता २६तमगाथावृत्तिः

६ श्रीरत्नशेखरसूरिरचिता श्राद्धप्रतिक्रमणवृत्तिः ।

७ श्रीरत्नमन्दिरगणिकृता उपदेशतरंगिणी +भोजप्रबन्धश्च ।

८ + वाचकेन्द्रश्रीइन्द्रहंसगणिकृता उपदेशकल्पवल्ली (शा० ३, प० २९)।

९ * श्रीहेमविजयगणिप्रणीते कथारत्नाकरे पञ्चमतरङ्गे ३८तमा कथा ।

१० श्रीविजयलक्ष्मीसूरिरचिते उपदेशप्रासादे त्रयोविंशं व्याख्यानम् ।

११ श्रीजिनलाभसूरिविरचितस्य आत्मप्रबोधस्य प्रथमः प्रकाशः ।

एतेषूपलब्धेषु साधनेषु क्वचित् विसंवादताऽपि दरीदृश्यते। तस्मात् स्तुतिचतुर्विंशतिकाया धनपालीयवृत्तेरवतरणं प्रमाणरूपेण स्वीक्रियते । तद्गतनिम्नलिखितपद्यप्रेक्षणेन स्पष्टीभवति यदुत

---

१ अत्र केवलं श्वेताम्बरसाहित्यस्य स्थूलाऽऽलेखिता रूपरेखा। दिगम्बरसाहित्यमपि गौरवास्पदं, परन्तु ग्रन्थगौरवभयात् तस्य दिग्दर्शनमपि न कारितं मया।

श्रीदेवर्षिनामधेया मध्यदेशान्तर्गतसङ्काश्यसन्निवेशनिवासिनः विप्रवराः श्रीमतां शोभनमुनीश्वराणां पितामहाः, सर्वदेवाह्वयाः तातचरणाः, धनपालाख्याः श्राद्धवर्याः कवीश्वरा अग्रजबन्धवश्च । इमे शोभननामधेयाः कविवर्याः कातन्त्रचन्द्रव्याकरणवेत्तारः बौद्धार्हततत्त्वज्ञातारः साहित्यसमुद्रपारपारीणाः बालब्रह्मचारिणः जैनदीक्षाधारणधुरीणाः अग्रजबान्धवतः पूर्वं च स्वर्गगामिनः ।

" आसीद् द्विजन्माऽखिलमध्यदेशे--प्रकाशसङ्काश्यनिवेशजन्मा ।
अलब्ध देवर्षिरिति प्रसिद्धिं, यो दानवर्षित्वविभूषितोऽपि ॥ १ ॥
शास्त्रेष्वधीती कुशलः कलासु, बन्धे च बोधे च गिरां प्रकृष्टः ।
तस्यात्मजन्मा समभून्महात्मा, देवः स्वयम्भूरिव सर्वदेवः ॥ २ ॥
अब्जायताक्षः समजायतास्य, श्लाघ्यस्तनूजो गुणलब्धपूजः ।
यः शोभनत्वं शुभवर्णभाजा, न नाम नाम्ना वपुषाऽप्यधत्त ॥ ३ ॥
कातन्त्रचन्द्रोदिततन्त्रवेदी, यो बुद्धबौद्धार्हततत्त्वतत्त्वः ।
साहित्यविद्यार्णवपारदर्शी, निदर्शनं काव्यकृतां बभूव ॥ ४ ॥
कौमार एव क्षतमारवीर्य-श्रेष्ठां चिकीर्षन्निव रिष्टनेमेः ।
यः सर्वसावद्यनिवृत्तिगुर्वीं, सत्यप्रतिज्ञो विदधे प्रतिज्ञाम् ॥ ५ ॥
अभ्यस्यता धर्ममकारि येन, जीवाभिघातः कलयाऽपि नैव ।
चित्रं चतुःसागरचक्रकाञ्चि-स्तथापि भूर्व्यापि गुणस्तनेन ॥ ६ ॥
एतां यथामति विमृश्य निजानुजस्य
तस्योज्ज्वलां कृतिमलङ्कृतवान् स्ववृत्त्या ।
अभ्यर्थितो विदधता त्रिदिवप्रयाणं
तेनैव साम्प्रतकविर्धनपालनामा ॥ ७ ॥ "

श्रीशोभनमुनीश्वराणां काश्यपगोत्रमित्यवगम्यते प्रबन्धचिन्तामणि(८८तमपृष्ठ)गतनिम्नलिखितोल्लेखेन—

---

१-२ उक्तं च प्रभावकचरिते—

" इतश्च मध्यदेशीय-सङ्काश्यस्थानसंश्रयः ।
देवर्षिरस्ति देवर्षि-प्रभावो भूमिनिर्जरः ॥
तस्य श्रीसर्वदेवाख्यः, सूनुरन्यूनविक्रमः ।
ब्राह्मण्यनिष्ठया यस्य, तुष्टाः शिष्टा विशिष्टया ॥
तस्य पुत्रद्वयं जज्ञे, विज्ञैरर्चितक्रमम् ।
आद्यः श्रीधनपालाख्यो, द्वितीयः शोभनः पुनः ॥"
—श्रीमहेन्द्रसूरिप्रबन्धे ( श्लो० ९-११ )

" पुरा समृद्धिविशालायां विशालायां पुरि मध्यदेशजन्मा 'काश्यप' गोत्रः सर्वदेवनामा द्विजो निवसन्............... "

सम्यक्त्वसप्ततिवृत्तौ उज्जयिनी, प्रभावकचरिते उपदेशकल्पवल्ल्यां उपदेशप्रासादे च धारा, प्रबन्धचिन्तामणौ विशाला, आत्मप्रबोधे अवन्ती इति नानानामदर्शनात् श्रीशोभनमुनिराजनिवासभूमिपरत्वेऽपि शङ्का समुपतिष्ठति, परन्तु "उज्जयनी स्याद् विशालाऽवन्ती पुष्पकरण्डिनी"(अभिधानचिन्तामणौ का० ४, श्लो० ४२) इति पङ्क्त्यवलोकनेनावगम्यते यदुत विशाला अवन्ती उज्जयिनी इति नामान्तराणि ।

एतेषां कवीश्वराणां सोमश्रीनाम्नी जननी इति ज्ञायते सम्यक्त्वसप्ततिवृत्तेः चतुःसप्ततितमपञ्चसप्ततितमपृष्ठपरिचयात् । उक्तं च तत्र—

" तेस्सासि वेयवेई छक्कम्मपरो परोवयारकई ।
विउससहपत्तलीहो दीहगुणो सोमचंददिओ ॥ ५ ॥
सोमसिरी से भज्जा निरवज्जा वज्जिभज्जसमरूवा ।
जुण्हुव्व जीइ वयणं आणंदइ तिहुअणं सयलं ॥ ६ ॥
तक्कुच्छिसरसि हंसा वंसवयंसा गुणाण आवासा ।
दो तणया बुहपणया संजाया जायरूवपहा ॥ ७ ॥
पढमो सिरिधणवालो बालुव्व विभाइ जस्स मइपुरओ ।
विंदारयवरसचिवुत्तमोवि स बुहप्पई नूणं ॥ ८ ॥
वीओ सोहणनामा जस्स कवित्तं विचित्तयं सुणिउं ।
केहि न विम्हियहियएहि पंडिएहिं सिरं धुणियं ? ॥ ९ ॥ "

अनेन इदमपि समवलोक्यते यत् श्रीशोभनमुनीशपितृनाम्नि विसंवादनम् । यतोऽत्र सोमचन्द्रेति नाम प्रदर्शितम् । प्रसङ्गत उच्यते यत् एतत्स्थाने आत्मप्रबोधस्य प्रथमप्रकाशे सर्वधरेति नाम, नागरगोत्रीयो वैकुण्ठो नाम सूत्रकण्ठ इति कथारत्नाकरे पञ्चमतरङ्गे ३८ तमायां कथायां ( पृ० ३६७ ), लक्ष्मीधरेति तु उपदेशप्रासादस्य प्रथमे विभागे त्रयोविंशे व्याख्याने, परन्तु कवीश्वरधनपालेन स्वयं सर्वदेवेति यदसूचि तदेव सत्यं नाम ।

एतेषां सुन्दरीनाम्नी कनिष्ठभगिनी इति परामृश्यते पाइअलच्छीनाममालायाः प्रान्ते निम्नलिखित(तम)गाथाऽवलोकनेन—

" धारानयरीए परिट्ठिएण मग्गे ठिआए अणवज्जे ।
कज्जे कणिट्ठबहिणीए सुन्दरीनामधिज्जाए ॥ "

---

१ सम्यक्त्वसप्ततिवृत्तिकारा अपि ७९ तमे पत्राङ्के धाराशब्दोल्लेखेन धारोज्जयिन्योरैक्यतां सूचयन्ति । तत्रोभयोर्यदन्तरमाधुनिकं तदुपेक्षाऽकारि तैर्न वेति प्रश्नः ।

२–३ छायार्थं दृश्यतां स्तुतिचतुर्विंशतिकाया गूर्जरोपोद्घातस्य सप्तमाष्टमे पृष्ठे षष्ठं चानुक्रमेण ।

दीक्षाप्रसङ्गः–

श्रीशोभनमुनिसत्तमैः कस्माद् दीक्षा कक्षीकृता इति प्रश्नः सविस्तरं प्रपञ्चितः श्रीमहेन्द्रसूरिप्रबन्धे सम्यक्त्वसप्ततिटीकायां च । परन्तु ग्रन्थगौरवभयात् तस्य स्थूला रूपरेखा या प्रबन्धचिन्तामणौ ( पृ० ८८ ) दृश्यते सैवात्रोपस्थाप्यते—

" सर्वदेवनामा द्विजो......श्रीवर्धमानसूरीन् गुणानुरागान्निजोपाश्रये निवास्य निर्द्वन्द्वभक्त्या परितोषितान् सर्वज्ञपुत्रानिति धिया तिरोहितं निजपूर्वजनिधिं पृच्छंस्तैर्वचनच्छलेनार्द्धविभागं याचितः सङ्केतनिवेदनाल्लब्धनिधिस्तदर्द्धं यच्छंस्तैः पुत्रद्वयादर्द्धं याचितो ज्यायसा धनपालेन मिथ्यात्वान्धमतिना जैनमार्गनिन्दापरेण निषिद्धः कनीयसि शोभने कृपापरः स्वप्रतिज्ञाभङ्गपातकं तीर्थेषु क्षालयितुमिच्छुः प्रतितीर्थं प्रतस्थे । अथ पितृभक्तेन[1] शोभननाम्ना लघुपुत्रेण तं तदाग्रहान्निषिध्य पितुः प्रतिज्ञां प्रतिपालयितुमुपात्तव्रतः स्वयं तान् गुरूननुससार । "

दीक्षागुरवः—

श्रीशोभनमुनीनां गुरुनामपरत्वेऽपि विविधता दृश्यते, यतः प्रभावकचरित्रे श्रीमहेन्द्रसूरयः, प्रबन्धचिन्तामणौ श्रीवर्धमानसूरयः, कथारत्नाकरे श्रीयशोदेवसूरयः, सम्यक्त्वसप्ततिटीकायां उपदेशप्रासादे च श्रीवर्धमानसूरिशिष्यवर्याः श्रीजिनेश्वरसूरयो गुणभूरयो गुरुरूपेण व्याख्याताः ।

श्रीशोभनमुनिपुङ्गवानां सूरिपदप्राप्तिः—

श्रीसौभाग्यसागरसूरिकृतटीकाप्रत्यां " तत्समाप्तौ च समाप्ता श्रीशोभनदेवाचार्यकृता शोभनस्तुतिः " इत्युल्लेखस्थाचार्यशब्देन सूच्यते कवीश्वराणां सूरिपदवी ।

एतत् समर्थ्यते ' मन्ह जिणाणं आणं ' इत्यादिरूपस्य स्वाध्यायस्य श्राद्धकृत्यदृष्टान्तषट्त्रिंशिकाऽपराभिधानायाः पञ्चेषुतिथि( १५५५ )मितेऽब्दे रचिताया उपदेशकल्पवल्ल्यास्तृतीयशाखाया एकोनविंशतितमपल्लवगतनिम्नलिखितपद्यैः—

" शोभनर्षिरधीते स्म, गुरुपादान्तिके वसन् ।
लक्षणादीनि शास्त्राणि, धिषणाधिषणोपमः ॥ ६१ ॥
गुरुरस्थापयत् सूरि[2]–पदे गुरुगुणान्वितम् ।
विनेयं शोभनाख्यं यत्, प्रतिष्ठां लभते मणिः ॥ ६२ ॥

---

१ ' भक्तः शोभननामा लघुपुत्रस्तं ' इति प्रतिभाति ।

२ सूरिपदप्रयोगः ८३ तमे पद्येऽपि । तथाहि—

" आजूहवन्मुनीन् सूरि—रकरोद् देशसंस्थितान् ।
पण्डितोऽप्यल्पकालेना—पठज्जैनेश्वरागमान् ॥ "

मुनीन्द्र ! तव का विद्या, किञ्च वाक्पाटवं तव ? ।
मालवे निमुनौ यत्र, प्रबोधयसि बान्धवम् ॥ ६३ ॥
इति साधुवचः श्रुत्वा, प्रबोधनिहिताशयः ।
शोभनस्तुतिकृत्सूरि–मनुज्ञाप्य मुनीश्वरः ॥ ६४ ॥ ”

अनेनेदमवगम्यते यदुत प्रज्ञातर्जितनाकिसूरिभिः श्रीशोभनसूरिभिः सूरिपदप्राप्त्यनन्तरमेव चतुर्दशमहाविद्यानद्याश्लेषपयोनिधेर्निजबन्धोः श्रीमद्धनपालस्य प्रतिबोधनार्थं विजह्रे ।

**श्रीधनपालस्य प्रतिबोधनम्**––

शोभनसूरिवर्यैः निजबान्धवो धनपालः कथं प्रतिबोधित इति प्रश्ने एतद्विषये निर्दिष्टं सम्यक्त्वसप्ततिटीकायां, प्रभावकचरित्रे प्रबन्धचिन्तामणौ उपदेशकल्पवल्ल्यां च । परन्तु तत्रापि काचित् काचित् वर्णनभिन्नता दृष्टिपथमवतरति । तावत् प्रबन्धचिन्तामणेर्निम्नलिखितो वृत्तान्त उल्लिख्यते–

“ अभ्यस्तसमस्तविद्यास्थानेन धनपालेन श्रीभोजप्रसादसम्प्राप्तसमस्तपण्डितप्रकृष्टप्रतिष्ठेन निजसहोदरामर्षभावाद् द्वादशाब्दीं यावत् स्वदेशनिषिद्धजैनदर्शनप्रवेशेन तद्देशोपासकैरत्यर्थमभ्यर्थनया गुरुपुरुषेष्वाहूयमानेषु सकलसिद्धान्तपारावारपारदृश्वा स शोभननामा तपोधनो गुरूनापृच्छ्य तत्र प्रयातः । धारायां प्रविशन् पण्डितधनपालेन राजपाटिकायां व्रजता तं सहोदरमित्यनुपलक्ष्य सोपहासं ‘ गर्दभदन्त ! भदन्त ! नमस्ते ’ इति प्रोक्ते ‘ कपिवृषणास्य ! वयस्य ! सुखं ते ’ इति शोभनमुनेर्वचसाऽन्तश्चमत्कृतो मया नर्मणाऽपि नमस्ते इत्युक्तेऽनेन तु वयस्य ! सुखं ते इत्युच्चरता वचनचातुर्यान्निर्जितोऽस्मीति ‘ तत् कस्यातिथयो यूयम् ’ इति धनपालस्यालापैः ‘ भवत एवातिथयो वयम् ’ इति शोभनमुनेर्वाचमाकर्ण्य बटुना सह निजसौधे प्रस्थाप्य तत्रैव स्थापितः । स्वयं सौधे समागत्य धनपालः प्रियालापैः सपरिकरमपि तं भोजनाय निमन्त्रयंस्तैः प्रासुकाहारसेवापरैर्निषिद्धः । बलाद् दोषहेतुं पृच्छन्

“ भजेन्माधुकरीं वृत्तिं, मुनिर्म्लेच्छकुलादपि ।
एकान्नं नैव भुञ्जीत, बृहस्पतिसमादपि ॥ १ ॥ ”

तथाच जैनसमये दशवैकालिके ( अ० १, सू० ५ )—

“ [1]महु[2]क( का )रसमा बुद्धा जे भवंति अणिस्सिया ।
नाणापिण्डरया दंता तेण वुच्चंति साहुणो ॥ ५ ॥ ”

—इति स्वसमयपरसमयाभ्यां निषिद्धं कल्पितमाहारं परिहरन्तः शुद्धाशनभोजिनो वयमिति तच्चरित्रचित्रितमनाः स तूष्णीकमुत्थाय सौधमाप ।

---

१ छाया—

मधुकरसमा बुद्धा ये भवन्ति अनिश्रिताः ।
नानापिण्डरता दान्ताः तेन उच्यन्ते साधवः ॥

२ ‘ ०गारसमा ’ इति श्रेष्ठिदेवचन्द्रलालभाईजैनपुस्तकोद्धारे ४७ तमे ग्रन्थाङ्के ( ७२ तमे पत्राङ्के ) ।

मज्जनारम्भे गोचरचर्यया समागतं तन्मुनिद्वन्द्वमवलोक्य सिद्धेऽन्नपाके तद्ब्राह्मण्योपढौकिते दध्नि मुनिभ्यां 'व्यतीताकियद्दिनमेतद् ?' इति पृच्छयमाने धनपालः 'किमत्र पूतराः सन्ति ?' इति सोपहासमभिदधानो 'व्यतीतदिनद्वयमेतद्' इति ब्राह्मण्या निर्णीय प्रोक्ते ताभ्यां 'पूतराः सन्तीत्यत्र' इत्यभिहिते स्नानासनात् तद्दर्शनार्थमुत्थाय तत्रागतः सन् स्थालेऽधिरोपितदधिसन्निधौ यावद् यौवकपुम्भेऽधिरूढैस्तद्वर्णजन्तुभिर्दधिपिण्ड इव पाण्डुरतामालोक्य जिनधर्मे जीवदयाप्राधान्यं तत्रापि जीवोत्पत्तिज्ञानवैदग्ध्यं, यतः ( संसक्तनिर्युक्तौ )—

"मुग्गमासाइपमुहं विदलं कच्चम्मि गोरसे पडइ ।
ता तसजीवुप्पत्तीं, भणंति दहिए तिदिणुवरिए ॥ १ ॥"

तज्जिनशासने एवेति निश्चित्य शोभनमुनेः शोभनबोधात् सम्यक्त्वप्रतिपत्तिपुरस्सरं सम्यक्त्वं भेजे ।"

कथारत्नाकरे ( त० ५, क० ३७ ) विशेषस्त्वेवम्—

"अथ तदोकसि स्थिते मुनौ धनपालोऽपि रन्त्वा गृहमागत्य विहितदेवार्चनश्च यावद् भोक्तुमुपविशति तावत् स मुनिः स्मृतः अशनार्थमाकारितश्च । तस्मिन्नेवाहनि केनापि वैरिणा धनपालस्य भोजनान्तर्विषं दत्तम् । तस्मिन्नेव मोदके दीयमाने सविषोऽयमिति मुनिनाऽपि निषिद्धे किमन्तर्विषमस्ति इति भापयसि ? धनपालेनोक्ते विषमस्तीति मुनिराह । कथं ज्ञायते इति तदाज्ञया तापोष्णोदके मोदकखण्डे निक्षिप्ते शुकपिच्छोपमं तन्नीरम् ( बभूव ) । तदीक्ष्य विस्मितो धनपालः अहो अद्य अनेन महात्मना अहं जीवित इति विशेषतस्तस्मिन् तुष्टः । कथमिह विषं भवता ज्ञातमिति (पृष्टः) तं शोभनो मुनिराह—

"दृष्ट्वाऽन्नं सविषं चकोरविहगो धत्ते विरागं दृशो-
हंसः कूजति सारिका च वमति क्रोशत्यजस्रं शुकः ।
विष्टां मुञ्चति मर्कटः परभृतः प्राप्नोति मृत्युं क्षणात्
क्रौञ्चो माद्यति हर्षवांश्च नकुलः प्रीतिं च धत्ते द्विकः ॥"

तेनेमं मोदकं विलोक्य पञ्जरस्थोऽयं चकोरो नयने न्यमीलयत्, निकटस्थोऽयं मर्कटोऽपि विष्टां चकार इति लक्षणैर्मया विषमज्ञायीति निशम्य विस्मितः स तस्मिन्नेवाहनि मुनिगृहीतमेवान्नं भुक्त्वा गोष्ठीं विधातुं मुनिपार्श्वे गत्वा च शोभनो मद्भ्राता क्वापि दृष्टः ? इति तमप्राक्षीत्, स समीपे

---

१ सालक्तककार्पासतूलवर्तिकायामित्यर्थः ।

२ छाया—

मुद्गमाषादिप्रमुखं द्विदलं अपक्के गोरसे पतति ।
तदा त्रसजीवोत्पत्तिं भणन्ति दध्नि त्रिदिनोपरितने ॥

एवास्तीति मुनिनोक्ते सम्यक् तं स्वं सहोदरं उपलक्ष्य बाहुभ्यां परिरभ्य च पुरः स्थितः मुनिनोपदिष्टं मार्गमशृणोत् । स महात्मा मुनिरपि तां चतुर्मासीं तत्रैव स्थित्वा तं च कनकाचलमिव निश्चलं श्रावकं कृत्वा अन्यत्र विजहार ॥"

एष कथारत्नाकरगतो मोदकवृत्तान्तो वरीवर्ति उपदेशकल्पवल्ल्यामपि, परन्तु तत्र ( १७०तमे पृष्ठे ) दधिप्रसङ्गोऽपि वर्णितो विद्यते, यथाहि—

"ततो गेहागतः स्नातः, सुरार्चनकृतोद्यमः ।
भोजनावसरे सद्यो, यो( सो ? )ऽतिथिं मुनिमस्मरत् ॥ ७० ॥
आकार्यैनं ततस्तूर्णं, मोदकान् दातुमुद्यतः ।
धनपालः परं साधु-र्न जग्राह सदोषकान् ॥ ७१ ॥
पण्डितः कुपितोऽवादीत्, किं विषक्षेप एष्वहो ? ।
तेनाप्यहिगरलाक्ताः, प्रोक्ताः प्रत्यायिताश्च ते ॥ ७२ ॥
मङ्गलार्थमथानीतं दध्यतीतदिनत्रयम् ।
मुनिर्न लात्यसा वक्ति, किमस्मिन्नपि पूतराः ? ॥ ७३ ॥
भद्र ! सम्बोभवीत्येवं, मुने ! दर्शय तर्हि माम् ।
अलक्तपोतिकां शीत-जलार्द्रां श्रमणस्ततः ॥ ७४ ॥
आतपस्थापिते तत्रा-मोचयद् दधिभाजने ।
एषा तापार्दितैर्निर्यज्-जन्तुभिर्व्याकुलाऽभवत् ॥ ७५ ॥
इमां तथाविधां दृष्ट्वा, स विस्मितमना अवक् ।
अहो सूक्ष्मासुमज्जन्म-ज्ञातृत्वं भवतो मुने ! ॥ ७६ ॥"

श्रीशोभनसूरीशानां समयः—

श्रीमन्तो धनपालकवीश्वरस्य अनुजबन्धवः, तत्पूर्वं च स्वर्गमगुः । अनेन श्रीमतां समयस्य धनपालसत्तासमयेऽन्तर्भावः । तत्सत्तासमय एकादशवैक्रमीयशताब्दिक इति स्फुटमवगम्यते तत्कृतौ पाइअलच्छीनाममालायां तद्रचनासमयस्य १०२९ इति निम्नलिखितगाथागतोल्लेखात्, 'व्युत्पत्तिर्धनपालतः' इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचिताभिधानचिन्तामणिस्वोपज्ञवृत्तिप्रारम्भिकतृतीयपद्यपदावलोकनेन एतत्सूरीश्वरकृतकाव्यानुशासने ( पृ० २३१ ) च वचनश्लेषाधिकारे तिलकमञ्जरीगतद्वितीयपद्यप्रेक्षणेन तत्पूर्वगामीति निश्चयाच्च ।

---

१ उक्तं च तत्र—

"कइणो अंध जण किवा कुसलत्ति पयाणमंतिमा वण्णा ।
नामम्मि जस्स कमसो तेणेसा विरइया देसी ॥"

[ कवेः अन्ध जन कृपा कुशल इति पदानामन्तिमा वर्णाः ।
नाम्नि यस्य क्रमशः तेन एषा विरचिता देशी ॥ ]

२ एतत्प्रेक्षणेन वैक्रमीयत्रयोदशशताब्दी रचनासमय इति केषाञ्चित् कथनमसङ्गतिमङ्गति ।

" विक्कमकालस्स गए अउणत्तीसुत्तरे सहस्सम्मि ( १०२९ ) ।
मालवनरिंद्धाडीए लूडिए मन्नखेडम्मि ॥ "

श्रीशोभनमुनीश्वराणां शिष्यादिविचारः—

श्रीशोभनमुनीश्वराणां के शिष्याः सन्तानीया वा आसन् इति उल्लेखकरणमशक्यं साधनाभावात् ।

श्रीशोभनमुनीश्वराणां कृतिः तत्प्रशंसा च—

वाचनाचार्यैः श्रीशोभनमुनिवरैः स्तुतिचतुर्विंशतिका व्यरचि इति सुस्पष्टम् । परन्तु अन्यः कोऽपि ग्रन्थस्तैर्गुम्फित इति न दृश्यते श्रूयते वा । तथाप्येकयाऽपि कृत्या महाकविपदमर्हन्ति श्रीमन्तः । यतः—

" स्तुतिस्वरूपा विविधार्थचित्राऽलङ्कारसारा सरसाऽप्रमेया "
इति श्रीसौभाग्यसागरसूरयः ( पृ० ५ ) ।

" बीओ सोहण नामा, जस्स कवित्तं विचित्तयं सुणिउं ।
केहि न विम्हियहियएहिं पंडिएहिं सिरं धुणियं ? ॥ ९ ॥ "
बहुपरियणपरियरिया अखंडपंडिच्चदप्पदुप्पिच्छा ।
सिरिभोयरायरायंगणस्स मुहमंडणं जाया ॥१०॥ "

इति श्रीसङ्घतिलकसूरयः सम्यक्त्वसप्ततिटीकायां ७५ तमे पत्राङ्के ।

" इतश्च शोभनो विद्वान्, सर्वग्रन्थमहोदधिः ।
यमकान्विततीर्थेश–स्तुतिं चक्रेऽतिभक्तितः ॥
तदेकध्यानतः श्राद्ध–गृहे त्रिर्भिक्षया ययौ ।
पृष्टः श्राविकया किन्तु, विरागे हेतुरत्र कः ? ॥
स प्राह चित्तव्याक्षेपा–न्न जाने स्वगतागते ।
श्राविकः( काऽऽ )स्यात् परिज्ञाते, गुरुभिः पृष्ट एष तत् ॥

---

१ छाया—

विक्रमकालस्य गते एकोनत्रिंशदुत्तरे सहस्रे ।
मालवनरेन्द्रधाट्या लुण्टिते मन्नखेडे ॥

२ छाया—

द्वितीयः शोभननामा यस्य कवित्वं विचित्रकं श्रुत्वा
कैर्न विस्मितहृदयैः पण्डितैः शिरो धूतम् ? ॥
बहुपरिजनपरिचरितौ अखण्डपाण्डित्यदर्पदुष्प्रेक्ष्यौ ।
श्रीभोजराजराजाङ्गणस्य मुखमण्डनं जातौ ॥

स प्राह न स्तुतिद्व्याना-ज्ञानेऽपश्यद(द्र ?)हो गुरुः ।
तत्काव्यान्यथ हर्षेण, प्राशंसत् तं चमत्कृतः ॥ ”

इति प्रभावकचरित्रे श्रीमहेन्द्रसूरिप्रबन्धे ३१९तमे पद्ये । अपरञ्च महामहोपाध्याय-श्रीयशोविजयगणिपादैः शोभनस्तुतेः प्रतिकृतिरूपा ऐन्द्रस्तुतिर्निरमायि । अनेनापि सूच्यते श्रीशोभनमुनिपुङ्गवानां पाण्डित्यम् ।

किञ्च एतां लक्ष्यीकृत्य प्रोक्तं Zeit der Deutschen Morgenländischen Gesellschaft ( Zwei und dreissigster Band )नाम्नि जर्मनग्रन्थे डॉक्टर् हर्मण् यकोबी (Dr. Hermann Jacobi )महोदयैः—

[1]Ausser den Cobh. st. ist mir kein anderes Werk desselben Autors bekannt; aber dieselben genügen, um ihm für immer den Ruf eines grossen Verskünstlers zu sichern............

Der Stoff ist also wenig poëtisch, daher hat der Dichter, wenn er diesen Namen verdient, seine ganze Kunst auf die Form gerichtet. ......Ueberall hört man des Klappen des anuprâsa durch; jedoch das Hauptkunststück, welches dem Dichter wirklich gut gelungen ist, sind die pâdayamaka des zweiten und vierten pâda, die akshara für akshara identisch sind. Einmal 53-56 ruht das yamaka auf dem ersten und vierten pâda, und ein andermal 49-52, also gerade den Beginn der zweiten Hälfte markirend ist pâda 1 = 3 und 2 = 4. Endlich bestehen 13-16 (17-20) and 89-92 ganz aus pâdayamaka. Diese Kunststücke welche bei längern Versen geradezu staunenswerth sind, hat der Dichter ausgeführt, ohne einerseits zu häufig sich desselben Kunst-

---

१ आङ्ग्लभाषायामनुवादो यथा—

Besides these S'obhana-stutis I do not know of any other work of the same author, but these hymns are sufficient to secure for him for ever the name of a great versifier............

The subject-matter is hardly poetical, therefore the poet, if he deserves this name, has devoted his sole attention to the form......In every place the rattling of alliteration is heard, but the chief trick in which the poet has really succeeded is the Pâda-yamakas where the second foot is identical with the fourth, letter by letter. In one place (stanzas 53–56) Pâda-yamaka is localized in the 1st and the 3rd feet; in another place (stanzas 49–52) the beginning of the second half just being marked, pâda 1=3 and 2=4 whereas stanzas 13–16 (17–20) and 89–92 completely consist of Pâda-yamakas.

All these tricks which are really astonishing in the longer verses have been executed by the poet without making too frequent use of the same artifice in the

griffes bei denselben Worten zu bedienen, was allerdings nicht ganz zu vermeiden war, und ohne andererseits dem Sprachmaterial zu grosse Gewalt anzuthun. Zwar ist manches seltene und seltsame Wort aus entlegenen Winkeln des Wörterbuchs ans Licht gezogen, aber zu ekâksharas hat der Dichter selten seine Zuflucht nehmen müssen. Auch von Seiten der Grammatik sind keine Vorwürfe zu machen, obgleich seltene Formen genug sich finden; dagegen ist der Dichter hinsichtlich der Construktion mit grosser Willkür verfahren. Sehr störend ist, dass in demselben Satze dasselbe Object der Anrufung Epitheta im Vocativ und Nominativ erhält. Noch störender ist es, wenn die Grenzen von Haupt und Nebensätzen zuweilen ganz verwischt werden, so dass Worte, die zum Hauptsatz gehören, zwischen solchen des Nebensatzes stehen und umgekehrt. Endlich sind die Gesetze der Composition häufig nicht beachtet. Aber trotz alledem bleiben die Cobhana-stutayas merkwürdig als Kunststück und interessant als ein vorzügliches Beispiel für die Richtung, welche die Dichtkunst der an Poesie so armen Jainas einschlug, und für die Leistungen, deren sie darin im besten Falle fähig war.

Der Dichter allerdings beabsichtigte gerade das Gegentheil: seine Zeitgenossen in Verlegenheit zu setzen......Es ist wohl für den Kenner dieser Art von Dichtwerken nicht nothwendig zu bemerken, dass der Dichter nicht nur eine Auflösung gewollt; er war sich wohl

---

same words, which it is true he could not completely avoid, and on the other hand without overstraining the linguistic material. Many a rare and obsolete word, it is true, has been dragged out into light from the remote corners of the dictionary, but Ekaksharas the poet has only rarely resorted to.

Also, from the stand-point of grammar, no complaints are to be lodged, though there are good many rare forms to be found. But, as regards the construction, the poet has been very arbitrary. It is very annoying that in one and the same clause, the same object of invocation receives epithets in the vocative and the nominative as well. Still more troublesome is the fact that the limits of principal and subordinate sentences are at times completely indistinct so that words belonging to the principal sentence occupy a position in the subordinate sentence and vice versa. Finally, laws of syntax are often not paid attention to. In spite of all this, these hymns are remarkable as a piece of art and interesting as an excellent illustration of the direction taken by the literature of the Jainas who are so poor in real poetry, and of the accomplishments of which it was capable at its best.

The poet, it is true, intended just the contrary viz., to puzzle his contemporaries......For the connoisseur of this kind of poetical works it is not necessary I think to remark that the poet did not want only one solution, in most cases; he was

in den meisten Fällen der verschiedenen Möglichkeiten bewusst und freute sich seiner Vieldeutigkeit.

तात्पर्यं तु यथा—

एताः शोभनस्तुतीर्विहाय ग्रन्थकारस्यास्य न जाने कामप्यन्यां कृतिम्, किन्तु एताः स्तुतयोऽस्य कवे रचनानिपुणविरुदस्य सदाकाङ्क्षप्राप्त्यर्थं समर्थाः।........

काव्यवस्तुनि कवित्वं विशेषतो नास्ति, तस्मात् कविना शब्दरचनैव सर्वथा लक्ष्यीकृता। ........अस्मिन् काव्ये सर्वत्रैवानुप्रासरणत्कारः श्रूयते, परन्तु अस्य कौशलमधिकतो दृश्यते पादयमकेषु यत्र द्वितीयतुरीयपादयोः समस्तान्यक्षराणि समानान्येव। एकस्मिन् स्थाने ५३–५६ श्लोकाङ्केषु प्रथमचतुर्थयोः पादयोः यमकमवलोकयते, अन्यत्र ४९–५२ श्लोकाङ्केषु तु प्रथमतृतीययोः द्वितीयतुरीययोश्चेक्ष्यते। अन्यत्र १३–१६( १७–२० )श्लोकाङ्कानि ८९–९२तमानि च पद्यानि पादयमकमयान्येव सन्ति। विशेषतो बृहत्तरपद्येषु आश्चर्यकराण्येतानि समस्तानि हस्तलाघवानि कविना अनेकत्र प्रयुक्तेऽप्येकस्मिन् शब्दे समानयुक्तिमनुपयुज्यैव प्रायशः प्रयुक्तानि। न चैवं सत्यपि भाषात्मकस्य साधनस्य सीमाऽतिक्रान्ता कविना।

प्रभूता अप्रचलिताः शब्दाः खलु कोशस्य दूरस्थकोणादुद्धृत्य प्राकाश्यं नीताः, एकाक्षरास्तु कर्हिचिदेवाश्रिताः। व्याकरणमुद्दिश्य न कोऽपि नियमभङ्गोऽवलोक्यते यद्यप्यप्रचलितरूपाणां बाहुल्यं समस्ति। वाक्यरचना तु अतीव कृत्रिमा। कष्टकारीदं यदुतैकस्मिन्नेव वाक्ये आवाहितायाः देवतायाः प्रथमान्तानि सम्बोधनान्तानि च विशेषणानि उपयुज्यन्ते। कष्टकारितरं तु एतत् यद् मुख्यगौणवाक्ययोर्मर्यादा क्वचित् सर्वथाऽदृष्टा येन मुख्यवाक्यस्य शब्दा गौणवाक्ये तिष्ठन्ति, गौणवाक्यस्य च मुख्यवाक्ये। अन्ततस्तु वाक्यरचनानियमा बहुशोऽनादृता एव। तथापीमाः स्तुतयो रचनाकौशल्यदृष्ट्या प्रशंसनीया एव। दर्शयन्ति चैताः सम्यक्तया, बहुशः कवित्वहीनानां जैनानां कवीनां प्रतिभया गृहीतां दिशं तया उत्कृष्टतः सम्पद्यमानानि च कार्याणि।

कवेस्तु समसमयिवाचकानां मतिभ्रमोत्पादनमेवोद्देश आसीत्....एतादृशकाव्यैः परिचितेभ्यश्च नैतत् प्रतिपादयितुमावश्यकं यदीदृशस्थले एकैव केवला अर्थनिष्पत्तिः न कविना इष्यते अपि तु बहुशः, अनेके सम्भवन्तोऽर्थभेदाः कवेरभिमताः। भिन्नार्थवत्त्वेनैव च तस्य प्रमोदः।

श्रीशोभनस्तुतिमुद्दिश्य उक्तं च डॉ० विन्तर्नित्स्महाशयैः Geschichte der Indischen Litteratur ( Zweiter Band ) नाम्नि ग्रन्थे—

---

fully aware of the different possibilities and he enjoyed his own ambiguity.

१ Śobhana selbst ist der Verfasser eines Hymnus auf die 24 Ginas, Caturviṁśatijinastuti oder Śobhanastuti genannt, in überaus gekünstelter Sprache mit reicher Abwechslung in Versmassen und halsbrecherischen Kunsstücken in bezug auf Redefiguren. Ein solches Kunststück besteht z B. darin, dass die zweite und vierte Zeile eines jeden Verses Silbe für Silbe identisch lauten und doch einen verschiedenen Sinn geben. Diese Śobhanastutis sind, wie Jacobi sagt, merkwürdig......fähig war.

एतत्सारांशो यथा—

चतुर्विंशतिजिनानां संस्तवनरूपायाः चतुर्विंशतिजिनस्तुत्यपरनामशोभनस्तुतेः श्रीशोभनमुनीश्वरः कर्ता वर्तते। विविधच्छन्दोग्रथिताया अस्याः स्तुतेर्भाषा अतीवाटोपमया। तस्यां चेतस्ततः शब्दार्थालङ्कारविषयाणि ऐन्द्रजालिकानि हस्तलाघवानि। उदाहरणार्थं निगद्यते यदुत प्रत्येकस्य पद्यस्य द्वितीयतुरीयचरणयोः अक्षरशः समानता। एवं सत्यपि अर्थभिन्नता वरीवर्ति। यकोबीमहोदयेनाप्युक्तं यदुत एताः शोभनस्तुतयः " रचनाकौशल....सम्पद्यमानानि च कार्याणि "

विविधा व्याख्या अपि विरचिता विविधविबुधवरैः अस्याः स्तुतेः। जैनसम्प्रदाये चैतावतीं लोकप्रियतां गतेयं स्तुतिः यद् ललनाभिरपि जिनदर्शनप्रसङ्गे सप्रेम गीयतेऽसौ।

विद्वद्वरेभ्यो विज्ञापनम्—

एवं विश्रुतायामस्यां स्तुतिचतुर्विंशतिकायां श्रुतदेवतायाः रोहिणीप्रमुखषोडशविद्यादेवीनां अम्बिकादेव्याः शान्तिदेव्याः ब्रह्मशान्ति-कपर्दियक्षेश्वरयोश्च स्तुतिः चतुर्थाष्टमद्वादशादिपद्येषु दृश्यते। परन्तु तत्र विद्यादेवीनां शासनाधिष्ठायकतया यस्य कस्यापि जिनस्य स्तुतिषु चतुर्थी तस्या अपि संभवतीति हेतुनाऽन्येन वा षोडशविद्यादेवीनां क्रमानुसारेण स्तुतिः नाकारि ?। अपरश्च अम्बा काली-रोहिणी-देवीनां तु द्विः स्तुतिः कृता, तत्र किमपि कारणं वर्तते न वेति, निवेदनेन कृपां कुर्वन्तु शेमुषीशेखराः।

---

१ आङ्ग्लभाषान्तरं यथा—

*S'obhana* himself is the author of a hymn composed in honour of the 24 Tirthankaras known as Chaturviṁsatijinastuti or S'obhana-stuti, written in a very affected language and in a rich variety of metres and risky jugglery tricks concerning rhetorical figures. Such a jugglery trick is e.g, the following one: the second and the fourth lines of each stanza are identical syllable by syllable and still give a different meaning. These S'obhana-stuties are, as Jacobi says, " Remarkable for......in the best manner."

काव्योत्पत्तिः—

कवीश्वराणां काव्यचातुर्यस्य प्रदर्शनार्थं असाधारणोपयोगताया वा प्रकटनार्थं विविधा किंवदन्ती सूच्यते अन्यान्यग्रन्थकारैः, सत्येयं वार्ता न वा इति मननीयं मनीषिभिः। प्रभावकचरित्रान्तर्गता काव्योत्पत्तिस्तु यथा निर्दिष्टा उपरितने स्थले।

स्तुतिचतुर्विंशतिकायाः टीकाः—

( १ ) श्रीधनपालकवीश्वरकृता। इयमधुना मुद्रापिता मदीयगूर्जरभाषान्तरादिसमेते स्तुतिचतुर्विंशतिकेतिनाम्नि ग्रन्थे श्रीआगमोदयसमित्या।

( २ ) पूर्वमुनिवर्यविरचिता अवचूरिः। इयमपि मुद्रापिता उपरितने ग्रन्थे।

( ३ ) श्रीधर्मचन्द्रशिष्यराजमुनिरचिताऽवचूरिः ४१५श्लोकमिता ११५१(?)-तमसांवत्सरीया।

( ४ ) श्रीजयविजयगणिविरचिता विवृत्तिः।

( ५ ) श्रीसिद्धिचन्द्रगणिगुम्फिता वृत्तिः।

( ६ ) श्रीसौभाग्यसागरसूरिसूत्रिता टीका।

( ७ ) श्रीदेवचन्द्रमुनीशसन्दब्धा शिशुबोधिन्याख्या व्याख्या।

( ८ ) श्रीकनककुशलगणिकृता व्याख्या।

( ९ ) डॉक्टरेत्युपाधिविभूषितयकोबीमहाशयकृतो जर्मनभाषानुवादः।

( १० ) श्रावकभीमसीमाणेककृतो गूर्जरभाषानुवादः। अयं प्रकरणरत्नाकरस्य तृतीये विभागे मुद्रापितः।

---

१ अस्याः एका हस्तलिखिता प्रतिः अमदावादस्थविद्याशालाभाण्डागारे विद्यते। सा १५१७तमे संवत्सरे लिपीकृता वर्तते।

'रॉयल एशियाटिक सोसायटी' इतिनामकसंस्थाया हस्तलिखितसूचीपत्रे श्रीहेमचन्द्रेण श्रीशोभनस्तुतिटीका व्यरचीत्युल्लेखः, परन्तु अयं प्रामादिक इति स्पष्टमवगम्यते तत्प्रतेर्दर्शनेन। इयं तु काव्यमालायां सप्तमगुच्छके मुद्रापिताऽवचूरिः कर्तृनामरहिता याऽधुना मुद्रापिता आगमोदयसमित्या, यद्यपि एतत्सप्तपत्रात्मिकायां प्रतौ क्वचित् पाठान्तराणि दृश्यन्ते।

२ इयमवचूरिर्मुद्रापिताऽवचूरितो भिन्ना इति प्रतिभाति जैनग्रन्थावलीनिर्दिष्टतद्रचनासमयावलोकनेन। निर्णयस्तु तत्प्रतिदर्शनेनैव भविष्यति।

३ अयमुल्लेखः क्रियते 'जैन गूर्जर कविओ' ( पृ० ५८३ )संज्ञकपुस्तकाधारेण। एतट्टीकाप्रतिप्राप्तिस्थानस्य तत्रानिर्देशात् विज्ञप्तास्तत्प्रयोजकश्रीयुतमोहनलालास्तत्सूचनार्थम्। परन्तु स्मरणपथं नावतरतीत्युत्तरमदायि तैः, अतो गवेषणीयं विशेषज्ञैः सत्यासत्यमस्योल्लेखस्य।

४ अधुनैव मे दृष्टिपथमागता पण्डितहीरालालहंसराजकृतगूर्जरभाषान्तरोपेता श्रीशोभन( मुनीश्वर ) कृताजिनस्तुतिः।

( ११ ) मत्कृतो गूर्जरभाषानुवादः प्रथमग्रन्थे निवेदितः ।
( १२ ) श्रीशोभनस्तुतिस्तबुकार्थः श्रीअजबसागरमुनिवरविरचितः ।

## अत्रत्यटीकाविचारः

अथात्रमुद्रितं चतुर्थादिटीकाचतुष्कमाश्रित्य किञ्चिदुच्यते । तत्र प्रथमा श्रीजयविजयगणिकृता टीका । इयं तु श्रीधनपालकृतटीकाया विवरणरूपा इव प्रतिभाति । परन्तु प्रत्येकपद्यान्तर्गतसमासानां विग्रहः तन्नामनिर्देशपूर्वकः पृथक् प्रादर्शि टीकाकारैः इति विशेषता । अन्यटीकाऽपेक्षया इयं सामान्यच्छात्राणां विशेषत उपयोगिनी इति मे नम्राभिप्रायः । अत एव सर्वासु टीकासु अस्याः प्रथमं स्थानं मुद्रापणे निश्चितं मया । मुद्रापणसमये २३५०श्लोकप्रमिता ६०पत्रात्मिका अमदावादस्थ डहेलेतिसंज्ञकोपाश्रयभाण्डागारसत्का प्रतिः साहाय्यकारिणी जाता । एतत्प्रतिप्रान्तस्थ उल्लेखोऽयम्—

"संवत् १७६५ वर्षे कार्तिकमासे कृष्णपक्षे भूतेष्टातिथौ रवौ वारे पं. भीमविजयांहिपद्ममधुपेन मुनिपुन्याविजयेन लिखितं ॥"

द्वितीया टीका श्रीसिद्धिचन्द्रगणिगुम्फिता । तत्र क्रियापदरूपसिद्धिप्रस्तावे पाणिनीयाष्टाध्यायी-सिद्धहैमशब्दानुशासन-श्रीअनुभूतिस्वरूपाचार्यकृतसारस्वतव्याकरणाद्यन्तर्गतसूत्रपाठाः साक्षिरूपेण उल्लेखिताः टीकाकारैः । तथा तैः शब्दार्थप्रसङ्गे विविधकोशानां वाक्यानि अनेकस्थलेषु समुद्धृतानि । अनेन सिद्धयति एतट्टीकाया विशिष्टता । अपरञ्च अत्र च्छन्दोनाम-

---

१ अस्य प्रतिः सूर्यपुरे 'मोहनलालजीजैनज्ञान'भाण्डागारे वर्तते । तत्र प्रारम्भस्तु यथा—

॥ पं । श्री १०८ श्रीमनरूपविजयग(गि)चरणेभ्यो नमः ॥
प्रणम्य विद्गुरुं मेघ-वाचकं वाचकाग्रिमम् ।
लिखाम्यर्थं सुबोधाय, श्रीशोभनस्तुतेरहम् ॥ ९ ॥

प्रान्ते प्रशस्तिरियम्—

" संवत् युगमुनिभोजन(१७७४)संज्ञे वैशाष(ख)शुक्लदशमीके ।
भौमगघाभ्यां सहिते दिवसे च सथाणके नगरे ॥ १ ॥
राज्ये तपगणयतिगणकमलानां बोधने दिनपतीनाम् ।
श्री(म)द्विजयक्षमाख्यसूरीणां दुर्भगारीणाम् ॥ २ ॥
प्राज्ञा महिमोदधयः शिष्यास्तेषां विनेयहितचित्ताः ।
सुधयोऽद्यानोपसागरनामनः प्राप्तबहुमानाः ॥ ३ ॥
तेषामहं शिष्यलेशो-ऽकरवं शिष्यबोधये ।
अजबसागरो नाम, टबार्थं शोभनस्तुतेः ॥ ४ ॥

× श्रीमाणविजयकृतस्तबुकस्य तु हस्तलिखितप्रतिरास्ति पाटणस्थभाण्डागारे ।

निर्देशोऽपि दरीदृश्यते। परन्तु श्रीअरनाथस्तुतिरूपपद्येषु च्छन्दोनाम नासूचि तैः, याकोबिम हाशयैरपि तथैव कृतम्[1]। मया तद्बोधार्थं प्रयासः कृतः, किन्तु स निष्फलो जातः। अत पत्रद्वारा मया विज्ञप्ता आगमोद्धारकजैनाचार्यश्रीआनन्दसागरसूरयः तच्छन्दोनामसूचनार्थम् तैः 'द्विपदी' इति नाम लक्षणपुरस्सरं निर्दिष्टम् । अतस्तेषामुपकार्योऽस्मि।

अस्यां टीकायां क्वचित् समासविग्रहोऽपि दृश्यतेऽर्थविवरणप्रासङ्गिकः। अस्याः टीकाया प्रथमटीकया सह समानपाठरूपेण सादृश्यमीक्ष्यते केषुचन स्थलेषु, उत्तरभागे तु सविशेषम् तत्र को हेतुरिति प्रश्नः।

एवंविधटीकादर्शनेन च ज्ञायते श्रीसिद्धिचन्द्रगणीनां व्याकरणवैदग्ध्यं कोशकोविदत च। अत इयं टीका विशिष्टमतिच्छात्राणां लाभकारिणीति विचार्य एतस्या द्वितीयं स्था मुद्रापणे निश्चितं मया।

तृतीया टीका श्रीसौभाग्यसागरसूरिसन्दृब्धा। अस्यां टीकायामपि समासविग्रहस पृथक् प्रकरणं समस्ति यथा प्रथमटीकायां, परन्तु अत्र समासनामनिर्देशो नास्ति। अपरञ्च द्वितीय टीकायामिवात्र च्छन्दोनामनिर्देशो वर्तते, परन्तु तत्राशुद्धिः[2]। श्रीअरनाथस्तुतिपद्येष्वपि च्छन्दो नाम निरदेशि सूरिभिः, किन्तु तन्न शुद्धम्। प्रत्येकस्तुतेः पूर्वस्तुतिना सह कः सम्बन्धः इत्यत्रा सूचि टीकाकारैः। अनेन एकमात्रजिनस्तुतिरूपं समग्रं काव्यं भाति। एतद्विशेषविशिष्टायामस्य टीकायां केषुचित् स्थलेषु अन्योऽपि अर्थः प्रदर्शितः सूरिवर्यैः। तत्र क्वचित् स्खलना अजनि परन्तु न चायं लेखकप्रमादः।

अर्थप्रकरणे च्छन्दोऽभिधानसूचने च स्खलनावलोकनेन दूयते मे हृदयम्, यतोऽ ग्रन्थः श्रीज्ञानविमलसूरिवर्यैः वसुमुनिमुनिविधु( १७७८ )वर्षे संशोधित इति सुस्पष्टमवगम्य प्रान्तस्थप्रशस्तिपठनेन। तथापि कैश्चित् छन्दोव्याख्यादिदोषैः राहुणाऽनुष्णरश्मिरिव ग्रस्ते वृत्तिर्गुणबाहुल्यादाक्षिप्स्यति चतुरचित्तमित्याशंसे।

एतट्टीकाया या ६८पत्रात्मिका[3] हस्तलिखितप्रतिः मह्यं दत्ता श्रीयुतजीवनचन्द्रेण साऽत्य शुद्धा। तथापि सर्वथा अशुद्धिप्रमार्जनपूर्वकं संशोधनं नाङ्गीकृतं मया। तत्रायं हेतुः—चरणसमानतासम न्वितकाव्यस्य विवरणे पूर्णसावधानताभावात् का का क्षतिर्जायते तस्या दर्शनं संजायतेऽत्र। किञ्च

---

१ पं० हीरालालप्रकाशिते पुस्तकेऽपि न विद्यते एतच्छन्दोनाम।

२ पण्डितहीरालालैरपि अशुद्धोल्लेखाः कृताः, यथा—श्रीसम्भवजिनस्तुतिच्छन्दोनाम उपजातीति निरदेशि तद् भ्रान्तिमूलकम्।

३ त्रिचत्वारिंशद्वर्णात्मिकपञ्चदशपङ्क्तयः प्रत्येकपत्रस्योभयपार्श्वयोः।

अन्यान्यटीकानां मुद्रापणेन सङ्कलितायां टीकायां अशुद्धिगवेषणं न दुष्करं विद्वज्जनानामिति मत्वा केषुचित् स्थलेषु मयोपेक्षा कृता। ग्रन्थगौरवभयात् क्वचित् प्रश्नार्थकाचिह्नेन कुत्रचित् अयं पाठः प्रामादिक इत्युल्लेखेन, कुहचन इदं प्रतिभाति इति टिप्पणेन, क्वचन पाठान्तर-सूचनेन कतिपया अशुद्धस्थला निर्दिष्टा मया। परन्तु न चेयं सरणिः समाश्रिता सर्वत्र।

अत्र सहर्षं निवेदयामि यदुतानया पद्धत्या याः काश्चन त्रुटयोऽस्यां टीकायां तस्थुः तासां निवारणं कर्तुमभिलषन्ति मुनिवर्यश्रीचतुरविजया दक्षिणविहारिमुनिरत्नश्रीअमरविजयानामन्ते-वासिनस्तत्क्रियमाणशुद्धिपत्रे।

तुरीया टीका शिशुबोधिनीति सान्वर्थनामिका श्रीदेवचन्द्रमुनिवरैर्व्याख्याता। इयं तु लघुतमा पूर्वटीकाऽपेक्षया इत्यत्र विशिष्टता। अत एव अस्या अन्तिमं स्थानं मुद्रापणे, अस्मात् कारणात् तृतीयटीकायाः स्थानोपन्यासहेतुरनुमीयते आलोकवद्भिः।

यत्र यद् विवरणं आवश्यकं तत्र प्रायः तादृगेव व्यरचि एभिः टीकाकारैः। क्वचित् अभिधानचिन्तामणिकोशवाक्यानि दृष्टिपथमवतरन्ति, क्वचिदेव तु पाणिनीयसूत्राणि। किमियं द्वितीयटीकायाः सङ्क्षेपः उत द्वितीयटीका अस्या विवरणमिति निर्धारणे नास्म्यलं, टीकारचना-समयाद्युल्लेखाभावात् टीकाकारयमलसत्तासमयसमानत्वात्।

एवं टीकाचतुष्कस्य विशिष्टता मां प्रतिभाति। अपरश्च तद्गतसाक्षीभूतपाठाना सूचीपत्रादपि पृथक् काचिदवगम्यते। शेषा अप्यशेषा विशिष्टताः तद्गौरवं चावबोधन्ति बुद्धिबलाः। न च तत्र मादृशानां मन्दमेधसां प्रवेशः।



१ एतट्टीकाप्रतिः ५४ पत्रात्मिका, तत्र प्रत्येकपत्रपार्श्वे ३२ वर्णात्मिकत्रयोदशपङ्क्तिसङ्कलितम्।

# टीकाकारपरिचितिः ।

श्रीशोभनस्तुतिटीकारचयितारोऽनेके मनीषिमुखमण्डना मुनीश्वरा अभूवन् । परन्तु तेषामशेषाणां विषये विचारकरणं न प्रासङ्गिकम् । तस्मादस्मिन् ग्रन्थे या या टीका सण्टङ्किता तत्तद्विधातृप्रसङ्गे यथासाधनं विचार्यते । तत्र प्रथमतः श्रीजयविजयगणीनां प्रस्तावः । तत्रभवतां भवतां के दीक्षागुरवः के विद्यागुरवः कदा भवद्भिर्वृत्तिरियं कियत्प्रमाणिका च व्यधायीति कथंकथिकताया उत्थाने नावकाशः, यतः श्रीमन्तो भवन्तः स्वयमेव स्वं परिचाययन्ति । तथाहि—

"श्रीविजयसेनसूरी–श्वरस्य राज्ये सुयौवराज्ये तु ।
श्रीविजयदेवसूरे–रिन्दुरसाब्धीन्दु(१६७१)मितवर्षे ॥ १ ॥—आर्या

१ एतत्प्रस्तावलेखनसामग्री सम्पादिता मया ऐतिहासिकरासससङ्ग्रह–जैनग्रन्थावली–आनन्दकाव्यमहोदधिसप्तममौक्तिकादिग्रन्थेभ्यः, मुद्रणालयपुस्तिकायां टिप्पनादिकरणेऽन्तिमो ग्रन्थो मे विशेषतः साधनीभूतः, परन्तु तद्गताः कतिपया उल्लेखा भ्रान्तिमूलका इति मां भाति ।

२ तपागच्छगगनाङ्गणगभस्तिमालिजगद्गुरुश्रीहीरविजयसूरीशशिष्यवर्याणां षाण्मासिकमारिपटहदुर्जयशत्रुजयदानदक्षशत्रुञ्जयादितीर्थकरमोचकाद्यनल्पगुणरत्नरत्नाकराणामेतेषां श्रीविजयसेनसूरीणां चरितचर्चाजिज्ञासुभिर्विवेकिभिर्विलोकनीया हीरसौभाग्य–विजयप्रशस्ति–कीर्तिकल्लोलिनीप्रभृतयो ग्रन्थाः । सङ्क्षेपतः श्रीमतामितिवृत्तमिदम्–भवतां सत्तासमयः १६०४तमाद् वैक्रमीयाब्दात् १६७२तमवर्षपर्यन्तः । अधुना मरुदेशस्वाधीनायामपि तदानीं मेदपाटाधीशोदयसिंहायत्तायां नारद( नाडुलाई )नगर्यां कमाशाहपत्नी कोडादेवी १६०४तमेऽब्दे फाल्गुनशुक्लपूर्णिमायां सुषुवे भवन्तम् । जयसिंहनाम्ना प्रसिद्धैर्भवद्भिर्नववर्षीयैः १६१३ तमे वर्षे ज्येष्ठशुक्लैकादश्यां सूर्यपुरे श्रीविजयदानसूरीश्वरसमीपे दीक्षा कक्षीकृता, तदा जयविमलेति भवतां नामनिष्पत्तिः। स्तम्भनतीर्थे १६२६तमे वर्षे फाल्गुनशुक्लदशम्यां श्राविकापुनीकृतोत्सवपूर्वकं पण्डितपदं, १६२८मितेऽब्दे उपाध्यायपदं, तस्मिन् वर्षे फाल्गुनशुक्लसप्तम्यां अहमदाबादनगरे राजनगर( अहमदाबाद )वास्तव्यमूलाख्यश्रेष्ठिकृतमहोत्सवपुरस्सरं आचार्यपदं च प्रापुर्भवन्तः । आचार्यपदे प्राप्ते विजयसेनसूरीति भवतां नाम स्थापितम् । पत्तनपुरे पट्टधरस्थापना जाता भवतां १६३०मिते संवत्सरे । १६५२तमे वर्षे भट्टारकपदमप्रापि श्रीमद्भिः । सम्राट्श्रीअकब्बरप्रदत्त'सवाइ'बिरुदधारिणो भवन्तः पञ्चाशद्बिम्बप्रतिष्ठाकारिणः अष्टमुनिभ्यो वाचकपदं १५० मुनीश्वरेभ्यः पण्डितपदं च ददुः, स्तम्भनतीर्थे १६७२तमेऽब्दे ज्येष्ठकृष्णैकादश्यां त्रिदशसदनं समासादितवन्तः ।

३ श्रीविजयसेनसूरीश्वराणां पट्टधराः श्रीविजयदेवसूरयोऽजायन्त १६३४तमेऽब्दे 'ईडर'नगरनिवासिस्थिरा( स्थिर )श्रेष्ठिभार्यारूपाकुक्षितः । तैर्जगृहे दीक्षा १६४३तमे वर्षे श्रीविजयसेनसूरिसमीपे तदा तस्य विद्याविजय इत्याख्यामकुर्वन् सूरयः । द्वादशवर्षान्तरं ( १६५५तमे वर्षे ) तैः प्रापे पंन्यासपदम् । १६५६प्रमिते संवत्सरे तूपाध्यायपदपूर्वकं सूरिपदमपि लेभे स्तम्भनतीर्थे । तैः १६७१ तमेऽब्दे भट्टारकपदं प्रापे, १६७४तमे च सलीमजहांगीरपातिशाहद्वारा महातपाबिरुदम् । रचिता श्रीविजयप्रशस्तिटीका १६८८तमेऽब्दे तेषां सान्निध्ये श्रीगुणविजयैः । १७०५तमे वर्षे श्रीस्तम्भनतीर्थवासिसङ्घस्तान् व्याजिज्ञपत् चातुर्मासीस्थिरताकरणार्थम् ( ऐतिहासिकसज्झायमालायां पृ० ७८–८० ) । १७१३तमे हायने तैः

समधीत्य वाचकेन्द्र–श्रीमत्कल्याणविजयगणिशिष्यात् ।
श्रीधर्मविजयवाचक–शिरोमणेः श्रुतनिधेः किञ्चित् ॥ २ ॥—आर्या
श्रीदेवविजयविदुषां, शिष्योऽकृत शोभनस्तुतेर्वृत्तिम् ।
जयविजयः सुखबोधा–मल्पमतीनुपचिकीर्षुरिमाम् ॥ ३ ॥—आर्या
श्रीशोभनस्तुतेर्वृत्ते–र्ग्रन्थाग्रं प्रतिपाद्यते ।
पञ्चाशत्रिशतीयुक्तं, सहस्रद्वितयं मया ॥ ४ ॥ ”—अनुष्टुप्

श्रीशोभनस्तुतिवृत्तिरचनासमयः—

श्रीजयविजयमुनिवरैः प्रशस्तिप्रान्ते निवेदितं यदिमा श्रीशोभनस्तुतिवृत्तिर्व्यधायि “ इन्दुरसाब्धीन्दुमितवर्षे ”। सामान्यतः “अङ्कानां वामतो गति”रिति न्यायः स्वीक्रियते गणनासमये, परन्त्वेवं

---

स्वर्लोकः समलञ्चक्रे । पातिशाहिश्रीजहांगीरप्रदत्त‘महातपा’बिरुदधारिणामेतेषां महाशयानां विशिष्टवृत्तान्तजिज्ञासुभिरवलोकयतां बृहत्खरतरगच्छीयश्रीजिनराजसूरिसन्तानीयपाठकश्रीज्ञानविमलशिष्यश्रीवल्लभोपाध्यायविरचितं विजयदेवसूरिमाहात्म्यनामकं ( मुद्राप्यमाणं ) पुस्तकम् ।

१ श्रीविक्रमात् १६०१प्रमिते वर्षे आश्विनकृष्णपञ्चम्यां सोमवासरे ‘लालपुर’सङ्घपतिहरखाशापत्नी पूंजी ठाकरशीनामकं पुत्ररत्नमजीजनत् । ‘महेसाणा’नगरे १६१६तमेऽब्दे वैशाखकृष्णद्वितीयायां श्रीतपागच्छोदयाद्रिसूरश्रीहीरविजयसूरिसकाशे तेन दीक्षा जगृहे, ततः कल्याणविजयेति नाम्ना तत्प्रसिद्धिः। स्तम्भनतीर्थे १६२४प्रमिते वर्षे फाल्गुनकृष्णसप्तमीदिने प्रापे उपाध्यायपदम् । इत्यादि वृत्तान्तं वरीवर्ति तच्छिष्यश्रीजयविजयकृते कल्याणविजयरासके ।

श्रीदेवविमलगणिकृतस्य हीरसौभाग्यस्य प्रशस्तौ निम्नलिखिते—

“ कल्याणविजयवाचकवासवशिष्येण काव्यमिदमखिलम् ।
समशोध्यत धनविजयाभिधवाचकसुमति ? पतिना ॥ २१ ॥ ”

—उपान्त्ये पद्ये श्रीकल्याणविजयेति नाम दृश्यते। इमे प्रस्तुता यदि भवेयुस्तर्हि तेषां धनविजयनामानोऽपि विनेया इति ज्ञायते ।

२ वाचकश्रीकल्याणविजयानां विनेयैः ‘धर्मरत्नमञ्जूषा’संशोधकैः श्रीधर्मविजयैः तपागच्छाधिनायकश्रीहीरविजयसूरीश्वरशिष्यपण्डितश्रीशुभविजयगणिभिः रस-रस-रस-शशलक्ष्म(१६६६)प्रमिते वैक्रमाब्दे विरचितस्य काव्यकल्पलतावृत्तिमकरन्दनामा ग्रन्थः समशोधि इत्यवसीयते एतद्ग्रन्थप्रशस्तिगतनिम्नलिखितपद्यप्रेक्षणेन—

“ श्रीमन्तो वाचकश्रेष्ठाः, कल्याणविजयाभिधाः ।
जयन्ति जगतां पूज्याः, सुधर्मस्वामिसन्निभाः ॥ ११ ॥
तत्पादपद्मरोलम्ब–सन्निभैर्वाचकोत्तमैः ।
श्रीधर्मविजयाह्वानैः, शोधिता नन्दताच्चिरम् ॥ १२ ॥ ”

३ अयं नियमो न सर्वदा स्वीक्रियते इति समर्थ्यते श्रीजयविजयकृतस्य सम्मेतशिखररासस्य ‘ ससि रस सुरपति(१६६४)’ इति रचनासमयनिर्देशात् । अपरञ्च एतदुपस्क्रियते सप्तदशशताब्दीयश्रीविजयसेनसूरिशिष्यश्रीधर्मसिंहशिष्यश्रीजयविमलशिष्यश्रीप्रीतिविमलप्रणीतायाः चम्पकश्रेष्ठिकथाया निम्नलिखितप्रशस्तिगतरचनासमयसमीक्षणात्—

सति रचनाकालः १४६१प्रमितो १७६१मितो वा वर्षः स्यात्, अब्धिशब्देन चैतुसङ्ख्यायाः सप्तसङ्ख्याया वा सूचकत्वात् । उक्तं च वाग्भटालङ्कारे १९तमे निम्नलिखिते पद्ये—

"तपगच्छमानसे यः सूरिः श्रीहीरविजयसूरि(वर)ः ।
शुक्लद्विपक्षचारी राजितो राजहंस इव ॥ ४७४ ॥
तत्पट्टधारिधीरः सूरिः श्रीविजयसेनसूर्यभिधः ।
स जयतु जीवलोकेऽपि यावन्मेरुर्भवेदचलः ॥ ४७५ ॥
तत्पादपद्मपरिमलसेवी श्रीधर्मसिंहगणिनामा ।
तत्पादपङ्कजसेवी जयविमलगणिर्गणे जीयात् ॥ ४७६ ॥
श्रीआम्रस्थलचातुर्मासि मध्यस्थप्रीतिविमलेन ।
शशिरसबाणाग्न्यब्दे ( १६५३ ) विहिताः श्लोकाश्चारित्रस्य ॥ ४७७ ॥"

किञ्च विलोक्यतां ( पृ० ५६ ) श्रीदेवविजयगणिकृतपाण्डवचरित्ररचनासमयः ।

१ चतुःसङ्ख्यार्थेऽब्धिशब्दस्य प्रयोगः सुप्रसिद्धस्तथापि दीयते दृष्टान्तत्रितयम्—

( अ ) अञ्चलगच्छीय( विधिपक्षीय )श्रीमहेन्द्रप्रभसूरिशिष्याः श्रीजयशेखरसूरयः पञ्चदशशताब्दीं मण्डयामासुरिति विदितपूर्वं विदुषाम् । अतः उपदेशचिन्तामणिस्वोपज्ञटीकागतनिम्नलिखितपद्यप्रदर्शितो रचनासमयः १४३६मितोऽब्दः इति कथने न मनागपि सन्देहः—

"व्यधां च तस्य स्वयमव्यलीकां, टीकां कथासारविचारहृद्याम् ।
दण्डायुधाम्भोनिधिचन्द्र(१४३६)सङ्ख्ये, वर्षे पुरे श्रीनृसमुद्रनाम्नि ॥११॥"

( आ ) श्रीजयशेखरसूरिकृतधम्मिलचरितमहाकाव्यरचनासमयः पञ्चशताब्दीगत इति सुस्पष्टम् । अनेन निम्नलिखितपद्येऽपि वारिधिशब्दस्य प्रयोगः चतुःसङ्ख्यासूचक इत्यवधार्यते—

"द्वि–षड्–वारिधि–चन्द्राङ्क( १४६२ )—वर्षे विक्रमभूपतेः ।
अकारि तन्मनोहारि, पूर्णं गूर्जरमण्डले ॥ १० ॥"

( इ ) उपदेशमालाबालावबोधप्रान्ते निम्नलिखित उल्लेखो वरीवर्ति इति ज्ञायते स्वर्गस्थशास्त्रविशारद-श्रीविजयधर्मसूरिसङ्कलितप्रशस्तिसङ्ग्रहतः—

"बाणेशमूर्त्युदधिशीतमहो( १४८५ )मिति( ता )ब्दे श्रीसोमसुन्दरगुरुप्रवरैः प्रणीतः ।
संवत् १४९९ दुन्दुभिसंवत्सरे श्रावणवदि ४ गुरुदिने तद्दिने पुस्तिका श्राविकारूपाईओसवालवंशोत्पन्ना-(न्नया) आत्मपठनार्थे पुस्तिका ले(लि)खापितं(ता) ॥"

२ आब्धिशब्दः सप्तसङ्ख्याद्योतकोऽपि वर्वर्ति । एतदुपस्क्रियते निम्नलिखितानिदर्शनैः । दीक्षासमये रामविजयेत्यभिधानां श्रीविजयतिलकसूरीणां सूरिपदं १६७३तमेऽब्दे पौषमासे द्वादशतिथ्यां श्रीसोमविजयोपाध्यायप्रेरणया जातमिति श्रीविजयतिलकसूरिरासकस्य १०६तमे पृष्ठे निर्दिष्टम्, अतः निम्नलिखितपद्यगतवारिधिशब्देन सप्तसङ्ख्या निश्चीयते ।

"श्रीमद्विक्रमतोऽग्निवारिधिरसग्लो ( १६७३ )सम्मिते हायने—
कस्मात् सोमलनामकेन वि( सु ? )धिया दहसूरसद्वासरे ।
पौषे रुद्रतिथौ कुजे कलिवशाद् भ्रष्टाद् दुराचारतः
क्रीत्वा द्युम्नबलेन रामविजयः सूरीकृतः स्तैन्यतः ॥"

—ऐतिहासिकराससङ्ग्रहे ( भा० ४, पृ० २३

" वारणं शुभ्रमिन्द्रस्य, चतुरः सप्त चाम्बुधीन ।
चतस्रः कीर्तयेद् वाऽष्टौ, दश वा ककुभः क्वचित् ॥ "

किन्तु इयं घटनाऽघटिता, श्रीविजयसेनसूरीश्वरराज्याद्युल्लेखात् । तस्मात् सङ्ख्यावाचकशब्दा यथा निवेशितास्तथा अङ्का अपि गणनीया इति समुचितं भाति । एवं सति अब्धिशब्देन

---

श्रीजयविजयकृतकल्पदीपिकायाः समयसूचके पद्येऽपि अब्धिशब्दः सप्तसङ्ख्यावाचको वर्तते ( प्रेक्ष्यतां तदर्थमग्रेतनं पृष्ठम् ) ।

मुनिश्रीभक्तिविजयभाण्डागारसत्ककल्पसूत्रसटब्बकप्रतिलेखनकालसूचकानिम्नालिखिते—

" मल्लघुसतीर्थ्यरुचिरो दयापरोऽभिख्यया दयाम्भोधिः ।
तस्य प्रेरणया खलु रचितो लिखितो मया ( **विद्याविलासेन** ) पूर्वम् ॥ ५ ॥
निधि–नयन–नीरधि–धरा( १७२९ )प्रमिते वर्षे सुकार्तिके मासे ।
कठमोरे परिवसथे जयतु चिरं वाच्यमानोऽसौ ॥ ६ ॥ "

—पद्ये नीरधिशब्दः सप्तसङ्ख्यावाचकः, यतः प्रान्तप्रारम्भे " संवत् १७२९ वर्षे भाद्रपदासितसप्तम्यां सोमवारे लिखितमिदं कल्पसूत्रं सटब्बकम् " इत्युल्लेखो विलसति ।

पूर्वोक्तप्रशस्तिसङ्ग्रहगतनिम्नलिखितपङ्क्तिगत' समुद्र 'शब्दः सप्तसंज्ञासूचक इति ज्ञायतां विचक्षणैः ।

" संवत चंद समुद्र सिवाथी ( ? ) शशी युत वर्ष विचारइ तिसी
चैत तेसिता तसु छट्ठि गिरापति मांन रचियुं संयोग बतीसी ३२
**अमरचंद** ' मुनी आग्रहै समर हूई सरसति
संगम बत्तीसी रची आछी आंनि उकति ४२

इति श्रीमन्**मांनमुनि**ना विरचितायां चतुर्थोन्माद संवत् १७६२ वर्षे मति द्वितीय आसाढ सुदि २ दिने वारशनिस्व( श्च )रे "

श्री**नयविमल**कृतपुण्यपत्तनगतभाण्डारकरप्राच्यविद्याशोधनमन्दिरसत्क**जम्बूकुमाररास**करचनासमयनिर्देशकारिपङ्क्तिगतजलनिधिशब्दोऽपि सप्तसङ्ख्यावाचकः, तन्मुनिवरसत्तासमयस्य सप्तदशशताब्दीरूपेण सुप्रसिद्धत्वात् । एतद्रासकप्रशस्तिस्तु यथा—

" तपगच्छनायक सवि सुषदायक श्री**विजयप्रभ**सूरि राया बे
जस आणा मनवंछितपूरण कल्पतरुनी छाया बे धन० १३
आचारी जिम वृंत ( ? ) सूरीसर मुनिवरने सुखदाया बे
जस प्रतिमा सिंहनाद सुणीनइं वादी हारि मनाया बे धन० १४
संप्रति विजयमान तस सेवक **धीरविमल** कवि राया बे
तस सेवक **नयविमलइं** मतिसुं **जंबु** गणधर गाया बे धन० १५
... ... ... थिरपुरनगर मझारि बे १६
वसु कृशानु जलनिधि सशी ( १७३८ ) वर्षइं एह चढयो सुप्रमाणइ बे
मार्गशिर्ष सित तेरसि दिवसइं शशीसुतवाद(र)वषाणि बे १७
**कुशलविजय** पंडित संवेगी तास कहणथी कीधो बे

चतुःसङ्ख्यायाः स्वीकारे [1]१६४१तमोऽब्दो रचनासमयः स्यात्, एष एव निर्धारितो 'जैन गूर्जरकविओ'संज्ञके पुस्तके ( पृ० ३१९ ), परन्तु न चायं समीचीनः पन्थाः श्रीविजयदेवसूरीणां यौवराज्ये तद्विधानोल्लेखात् । इदमुक्तं भवति—विजयदेवेतिसुगृहीतनामधेयैः १६४३तमे वैक्रमीयाब्दे दीक्षा कक्षीकृता । त्रयोदशसंवत्सरान्तरं ( १६५६ तमेऽब्दे ) तु तैः सूरिपदं प्रापे । अनेन १६४१ तमोऽब्दः रचनासमय इति सर्वथाऽघटनीया घटना । ननु एवं सति आनन्दकाव्यमहोदधेः सप्तमे मौक्तिके ( पृ० ११३, १२६ ) १६६४ इति यो रचनासमयो निरदेशि स स्वीक्रियताम् । नैव, एतत्स्वीकारे क्षतिर्विद्यते, यत इन्दुरसाब्धीन्दुशब्दतः एषा कल्पनाऽपि दुर्घटा । किं पुनः तत्प्रामाण्यम् ?[2] । अस्यां परिस्थित्यां चतुःसङ्ख्यासूचकोऽब्धिशब्दः सप्तसङ्ख्यावाच्यपि वर्तते इति लक्षीकृत्य रचनासमयः[3]१६७१ इति निर्धार्यते ( पण्डितवर्यैः श्रीयुतलालचन्द्रैरयमेव समयो [4]जेसलमीरभाण्डागारीयग्रन्थानां सूच्यां निर्धारितः ) । १६७१तमे वर्षे वृत्तिरचनास्वीकारे न कोऽपि दोषः, अतः श्रीविजयसेनसूरिसत्तासमयस्तु १६७२तमाब्दपर्यन्तः ।

श्रीशोभनस्तुतिवृत्तिप्रशस्त्येदमपि स्फुटीभवति यदुत श्रीमन्तो भवन्तोऽन्तेवासिनः [5]श्रीदेव-

---

१ अस्मिन् वर्षे विजयादशम्यां शुक्रवारे उग्रसेनेति नगरे आग्रेति सुप्रसिद्धे 'जयविजयचोपाइ'नाम्नी कविता गुम्फिता गूर्जरगिरायां श्रीकल्याणधीरवाचकशिष्यैः श्रीमद्भिः धर्मरत्नैः खरतरगच्छीयैः श्रीजिनमाणिक्यसूरिशिष्यश्रीमाणिक्यमन्दिरप्रशिष्यैः इति ज्ञायते 'जैन गूर्जर कविओ'नामकस्य ग्रन्थस्य २६७–२६८तमपृष्ठावलोकनेन । टीकाकारनामादिसमानतासूचिकेयं कविता, अत एषा टिप्पनी ।

२ डॉ. रामकृष्णभाण्डारकरस्य Report on the search for Sanskrit Mss. in the Bombay presidency ( 1883–84]) नाम्नि पुस्तके ( P. 7 ) समयोऽयं निरदेशि इति ज्ञायते निम्नलिखितोल्लेखावलोकनेन, परन्तु स भ्रान्तिमूलकः ।

" The date of the composition of the commentary as given in verse 2 ( 1 ) is Samvant 1461. But Vijayasena died in Samvat 1671 and Vijayadeva was made a suri in 1656 ( Ind. Ant. p. 256 ). So Samvat 1461 cannot be the true date of the composition. The true date must be somewhere about 1664 as given at p. 156. "

३ अस्मिन् वर्षे वैशाखशुक्लतृतीयायां श्रीविजयसेनसूरिभिः 'अमदावाद'नगरे सागराणां समस्ता ग्रन्था अप्रामाणिका इत्युद्घोषणा कारिता । तत्खण्डनतत्परौ श्रीनेमिसागर–श्रीभक्तिसागरौ गच्छाद् बहिष्कृतौ पण्डितवर्यैः ।

४ यद्यपि ग्रन्थेऽस्मिन् ६७तमे पृष्ठाङ्के १६७० इति मुद्रितं वर्तते, तथाप्ययं मुद्रणदोष इति मह्यं निवेदितं पण्डितवर्यैः ।

५ प्रशस्तिसङ्ग्रहे ( यतिश्रीलालचन्द्रभाण्डागारस्य ) अभिधानचिन्तामणिप्रान्ते ५२तमायां प्रशस्तौ श्रीदेवविजयानां सहिजश्रीनाम्नी साध्वी इत्युल्लेखः, स चायम्—

" संवत् १६४० वर्षे चैत्रमासे शुक्लपक्षे पञ्चमीशुक्रवारे लिषि(खि तोऽ)यं ग्रन्थः श्रीमालीज्ञातीयभणसालिजगमालभार्याश्राविकादाडिमदेलिखापितं नवानगरमध्ये पण्डितश्रीदेवविजयजीसाध्वीसहिजश्रीपठनार्थम् ।"

अत्रेदमवधार्यं यदुत इमे श्रीदेवविजयाः प्रस्तुता न वेति न निश्चीयते सप्तदशशताब्द्यां देवविजयनामधारिनानामुनीश्वरसम्भवात् ।

विजयविबुधानाम् । इमे भवद्गुरवः तपागच्छीयश्रीविजयदानसूरीश्वरशिष्यश्रीविजयराज-सूरिविनेया इति प्रतिभाति धर्मरत्नमञ्जूषाप्रशस्तिगतनिम्नलिखितपद्यावलोकनेन—

"श्रीविजयसेनसूरी-श्वराणां गुणशालिनाम् ।
राज्ये विजयमानानां, प्रभूतप्रभुताभृताम् ॥ ९ ॥
तत्पट्टे कैरवाराम-सुधाधामसमात्विषाम् ।
श्रीविजयदेवसूरी-श्वराणां यौवराज्यके ॥ १० ॥
रसर्तुदर्शनचन्द्र( १६६६ )-वत्सरे विक्रमार्कतः ।
ज्येष्ठमासे सिते पक्षे, पञ्चम्यां गुरुवासरे ॥ ११ ॥
श्रीविजयदानसूरी-श्वरशिष्यशिरोमणेः ।
श्रीविजयराजसूरेः, शिष्यः सरलमानसः ॥ १२ ॥
हिताय मन्दबुद्धीनां, सुबोधाय सुबुद्धीनाम् ।
चकार 'कुलक[२]'व्याख्यां, श्रीदेवविजयः सुधीः ॥ १३ ॥—कुलकम्
तच्छिष्यः शेमुषीमुख्यो, नितान्तविनयान्वितः ।
स्वबुद्ध्या जयविजयः, शोधयामासिवानिमाम् ॥ १४ ॥
गाम्भीर्यौदार्यधैर्यादि-गुणमाणिक्यरोहणाः ।
वैराग्यवासितस्वान्ताः, विश्वविख्यातकीर्तयः ॥ १५ ॥
चतुर्विद्याविदः श्रीमद्-वाचकश्रेणिशेखराः ।
जयन्ति जगति श्रीमत्-कल्याणविजयाह्वयाः ॥ १६ ॥—युग्मम्
तत्पादपङ्कजद्वन्द्व-सेवाहेवाकिमानसैः ।
श्रीसङ्घविजयाह्वानैः, श्रीधर्मविजयाह्वयैः ॥ १७ ॥
नैककोविदकोटीरैः, सर्वशास्त्रविशारदैः ।
विचार्य प्रतिभावर्यै-रियं सम्भूय शोधिता ॥ १८ ॥"

अनेनावबुध्यते यदुत वृत्तिरियं संशोधिता श्रीजयविजय-श्रीसङ्घविजय-श्रीधर्मविजयादिमुनीश्वरैः ।

---

१ श्रीदेवेन्द्रसूरिकृतदानादिकुलकस्येयं वृत्तिर्या पण्डितहीरालालैः प्राकाश्यं नीता ऐसवीये १९१५ तमेऽब्दे ।

२ कुलकेऽस्मिन् दान-शील-तपो-भावरूपश्चतुर्विधो धर्मो व्याख्यातः ।

सप्ततिशतस्थानप्रकरणवृत्तिप्रशस्तिप्रेक्षणेन तु श्रीराजविजयसूरीणां श्रीदेवविजया अन्तेवासिन इत्यवगम्यते। सा चेत्थम्—

" श्रीसुधर्मादितः पट्ट–पारम्पर्यात् तपोगणे।
राज्ये श्रीविजयसेन–सूरीन्द्राण[illegible]॥ १ ॥
यौवराज्ये च तत्पट्ट–पूर्वभूध्रैकभास्व[illegible]
श्रीमद्विजयदेवाख्य–सूरीणां शोभित[illegible] ॥ [illegible]
वर्षे श्रीविक्रमाद् व्योम–वाहर्त्तुशशि( १६७० [illegible]मिते।
माघश्वेततृतीयायां, तिथौ तरणिवासरे ॥ ३ ॥
श्रीराजविजयसूरी–श्वराणां शिष्यशेखरः।
श्रीदेवविजयप्राज्ञः, परोपकृतिकर्मठः ॥ ४ ॥
'श्रीसप्ततिशतस्थान'–वृत्तिमेतामचीकरत्।
जयादिविजयाह्वानः, तच्छिष्यः समशोधयत् ॥ ५ ॥
श्रीकीर्तिसागरप्राज्ञो, जयादिविजयश्च सः।
इत्येताभ्यां च सम्भूय, भूयः संशोधिता ह्यसौ ॥ ६॥[2]
पुनर्मात्सर्यमुत्सार्य, शोध्यतां धीधनैरियम्।
आचन्द्रार्कं चिरं जीयाद्, वाच्यमाना च साधुभिः ॥ ७ ॥ "

सूयपुरस्थमोहनलालजीजैनज्ञानभाण्डागारस्य रामायणप्रतिप्रान्ते निम्नलिखितोल्लेखेऽ[illegible] श्रीराजविजयेति नाम—

" स्वस्ति श्रीमत्तपागच्छे भट्टारकयुगप्रधानश्री५श्रीविजयदानसूरिशिष्यआचार्यश्रीराजविजयसूरिशिष्यपं०देवविजयगणिभिः विरचितं समाप्तं चेदं रामायणं ॥ छ ॥ "

१६६०तमे वैक्रमाब्दे राजनगरे विरचितस्य श्रीयशोविजयजैनग्रन्थमालायां प्रसिद्धस्य पाण्डवचरित्रस्य निम्नलिखिता प्रान्ता प्रशस्तिरप्युपस्करोतीममभिप्रायम्। सा चेत्थम्—

" स्वस्ति श्रीमत् 'तपा'गच्छे, भट्टारकपुरन्दराः।
श्रीविजयदानसूरि–प्रवरा गुणशालिनः ॥ १ ॥
श्रीराजविजयसूरिः शिष्यस्तेषां गुणाग्रणीर्जयति।
तच्छिष्यदेवविजयः प्राप्तोत्तमपण्डितश्रीकः ॥ २ ॥

---

१ इयं श्रीसोमतिलकसूरिकृतसप्ततिशतकस्थानप्रकरणस्य वृत्तिर्या मुद्रापिता श्रीआत्मानन्दसंसदा।

२ अनेनावसीयते यदियं वृत्तिः संशोधिता श्रीजयविजयैः श्रीकीर्तिसागरैश्च।

३ अयमुल्लेखो वर्तते भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरस्थप्रतौ—

" सकलभट्टारकश्री५विजयप्रभसूरिस्व (रीश्व)रशिष्यमहोपाध्यायश्री५श्रीउदयविजयगणिशिष्यगणि तत्त्वविजयलिषितं श्रीद्वीपबन्दिरे श्रील(न)वलक्ष्य(क्ष)पार्श्वप्रसादात् संवत् १७५३ वर्षे वैशाष सुदि ३ दिने मंगलवारे"

शशि-रस-रस-ख( १६६० )मितेऽब्दे मासे माघे तिथौ च मासमिते ।
शुक्ले गुरुगुरुभयुते राजन्वद[illegible]ादे ॥ ३ ॥
जीर्णं पाण्डवचरितं शत्रु[illegible]कं च तथा ।
शास्त्रं च नलचरित्रं वि[illegible]मधिगम्य ॥ ४ ॥
सुगमत्वाद् ग[illegible] चकार विस्तरतः ।
स्वस्य प[illegible]बोधं ललितवचनं च ॥ ५ ॥—कुलकम्
छा[illegible]चिद् व्याकरणागमविरुद्धरचितमिह ।
[illegible] परोपकारैकबुद्धिधनैः ॥ ६ ॥
[illegible]तसाः श्रीमन्तः श्रीशान्तिचन्द्रगुरुचन्द्राः ।
[illegible]रत्नचन्द्रैर्विबुधैः संशोधितं स्वधिया ॥ ७ ॥
[illegible]चन्द्रमसौ यावद्, यावत् सप्त कुलाचलाः ।
श्रीमत्तपागणस्ताव–दयं जयतु पुस्तकः ॥ ८ ॥ "

[illegible] निर्धार्यते श्रीदेवविजयगुरुनाम राजविजय इति। एवं सत्यपि राजविजय-[illegible] विजयराजाभिधानेभ्यो भिन्ना इति मन्तव्यमस्थानीयं, यतः सूरिपदमाप्त्यनन्तरं उत्तर-[illegible] पूर्वनिपातः प्रायो भवति यथा विजयदानसूरिनाम्नि ।

श्रीदेवविजयानां कृतिततिर्यथा—

| ग्रन्थनाम | ग्रन्थाग्रम् | रचयासमयः | |
|---|---|---|---|
| रामचरित्रं ( गद्यम् ) | ५००० | १६५२ | अमुद्रितम् |
| पाण्डवचरित्रं ( गद्यम् ) | ९५०० | १६६० | मुद्रितम् |

१ अस्य प्रथमसर्गस्य प्रान्तेऽयमुल्लेखः—

" इति श्रीमत्तपागच्छे भट्टारकश्रीहीरविजयसूरिविजयराज्ये आचार्यश्रीविजयसेनसूरियौवराज्ये पं०श्रीदेवविजयगणिविरचिते गद्यबन्धे श्रीरामचरित्रे राक्षसवंश–वानरवंशोत्पत्ति–रावण–कुम्भकर्ण–बिभीषण-जन्मवर्णनो नाम प्रथमः सर्गः । "

दशमान्ते तु यथा—

" इति श्रीमत्तपा० श्रीरामचरित्रे श्रीरामनिर्वाणगमनो नाम दशमः सर्गः । समाप्तं चेदं रामायाणम् । श्री इदं रामायणं प्रायेण श्रीहेमाचार्यकृतं रामायणं उपजीव्य मया कृतमिति संस्कृतभाषयैव लिखितं सत्यपि प्राकृतपद्यबन्धचरित्रे तथापि संस्कृतपद्यबन्धचरित्रे मया आत्मविश्वात्मविदार्थं कर्मक्षयार्थं च गद्यबन्धेन कृतमिति । स्वस्ति [ सत्य ] श्रीमत्तपागच्छे भट्टारकयुगप्रधानश्रीविजयदानसूरिशिष्यश्रीराजविजयसूरिशिष्यपण्डितश्रीदेव-विजयगणिभिर्विरचितं समाप्तं चेदं रामायणम् । छ । संवत् १६५२ वर्षे आश्विनमासे कृष्णपक्षे दशम्यां तिथौ गुरुपुष्ययोगे श्रीमन्मरुस्थल्यां ज्येष्ठस्थित्यां स्थितेन पं० श्रीदेवविजयेन श्रीमालपुरे नगरे श्रीमदकब्बरराज्ये विरचितं श्रीरामायणम् ।

प्रत्यक्षरं निरूप्यास्य, ग्रन्थमानं विनिश्चितम् ।
सम्यग्गणन( नाद् ? ) ज्ञेयं, श्लोकपञ्चसहस्रकम् ॥ १ ॥

| | | | |
|---|---|---|---|
| धर्मरत्नमञ्जूषा | [1]१२०१६ | १६६६ | मुद्रिता |
| सप्ततिशतकस्थानवृत्तिः | २६५० | १६७० | मुद्रिता |
| पॅद्मचरित्रम् [2] | २०[illegible] | | |

एतद्ग्रन्थगुम्फितृभिरन्यैर्वा [3]१६५८तमे [illegible]याब्दे विरचितं अर्हन्नामसहस्रं [4]१६९८-

---

पदाक्षरपरिभ्रष्टं, मात्राहीनं च यद् [illegible] ।
क्षन्तव्यं तद् बुधैः सर्वं, कस्य न स्खलन[illegible]भवेत् ! ॥ २ ॥
अक्खरमत्ताहीणं जं चिअ पढियं अयाणमाण[illegible] ।
तं खमह मज्झ सव्वं जिणवयणविणिग्गया वाण[illegible] ३ ॥

श्रीवाचकाग्रेसरः धर्मसागः"। प्रशस्तिसङ्ग्रहे तु एवम्—"धर्मसाग" स्थान[illegible]रक्रमाब्जभृङ्गैर्बुध-पद्मसागर( रैः ) एतच्चरित्रं स्वधिआ( या ) सुशोधितं वचस्विवाच्यं भवतु श्रियं( यः ) [illegible] ।"

१ एतत् प्रतीयते धर्मरत्नमञ्जूषाप्रशस्तिगतप्रान्तपद्यप्रेक्षणात्—

" प्रत्यक्षरं निरूप्यास्य, ग्रन्थमानं विनिश्चितम् ।
श्लोकानां च सहस्राणि, द्वादशाप्यथ षोडश ॥ २१ ॥ "

२ ' रामचरित्र 'रचयितारः अपरपर्यायवाचि' पद्मचरित्र 'मपि रचेयुरिति दुःसम्भावना, तथापि [illegible] ग्रन्थमानभिन्नतामवलोक्य क्रियतेऽयमुल्लेखो जैनग्रन्थावल्याधारेण ।

३ एतदवगम्यते प्रशस्तेः त्रयोदशपद्यावलोकनेन ।

४ ग्रन्थोऽयं दशाधिकारमयः । दशमं विहाय प्रत्येकप्रान्ते दशमस्य तु उपान्ते पद्यमिदम्—

" देवाधिदेवस्य दशाधिकार—सहस्रनामस्तवनस्य पाठात् ।
इतः सतां संस्मृतितत्पराणां, भवन्तु भव्या विजयश्रियो द्राक् ॥ "

एतद्वृत्तिर्यथा—

" देवाधिदेवस्य—अर्हतः दश अधिकारा यस्मिन् सहस्रनाम्नां स्तवने तस्य इतः—प्रत्यक्षात् पाठात्—भणनात् स्मरणपरायणानां उत्तमानां भव्या—मनोज्ञा विजयश्रियो भवन्तु—सम्पद्यन्तामिति । अत्र वृत्ते देवविजयेत्यनेन सहस्रनामकर्तुर्नाम गर्भितमवसेयमित्याशीर्वादसूचकमित्यर्थः । " दशमाधिकारस्य पद्यमन्तिमं यथा—

" श्रीमुनिविजयगणीनां, वाचकपदशालिना सुशिष्येण ।
अर्हन्नामसहस्रं, विनिर्मितं देवविजयेन ॥ १५ ॥ "

एतद्वृत्तिर्यथा—

" विक्रमार्कसमयादष्टापञ्चाशदधिकषोडशशतवर्षातिक्रमे विनिर्मितस्य श्रीविजयसेनसूरिचरणैर्दृष्टस्य सकल-शास्त्रनिर्णेतृपण्डितश्रीलाभविजयगणिभिः किञ्चिन्मात्रं शोधितस्य तीर्थकरसहस्रनामसूत्रस्य अष्टनवत्यधिक-षोडशशतवर्षातिक्रमे विनिर्मिता 'सुबोधिका'नाम्नी वृत्तिः सम्पूर्णा इति आर्यार्थः । "

तमे 'सुबोधिका'भिधा स्वोपज्ञा तद्वृत्तिश्च निरमायि इति सन्देहदोलारूढं वर्तते यतः तद्वृत्तिर्मति-प्रारम्भे उल्लेखोऽयम्—

" भट्टारकपुरन्दरभट्टारकश्री ५ श्रीवि[illegible]सूरिचरणेभ्यो नमः । श्रीविजयराज-सूरिगुरुभ्यो नमः । वाचकमुख्य [illegible]श्रीमुनिविजयगणिगुरुभ्यो नमः । वाचकप्रवर-वाचकश्रीकल्याणविजयगणिगु[illegible] " । इदमुक्तं भवति यदुतात्र श्रीविजयराजसूरि-श्रीमुनिविजयगणि-श्रीकल्[illegible]गणीतिनामानः त्रयोऽपि महाशया गुरुरूपेण निर्दिष्टाः । परन्तु एतेषु श्रीमुनिविज[illegible]विजयगणीनां दीक्षागुरवः, श्रीकल्याणविजयगणयस्तु विद्यागुरव इति ज्ञायते [illegible]नामसहस्रवृत्तेः प्रशस्तिगततृतीयपद्यप्रेक्षणेन, परन्तु नावगम्यते किमर्थं श्रीविज[illegible] गुरुरूपेण निर्देशः । सा प्रशस्तिस्तु यथा—

" श्री[illegible]यसेनसूरी-श्वरपट्टप्रभावका अभवन् ।
[illegible]पक्षपतयः, सूरीश्रीविजयतिलकाख्याः ॥ १ ॥

[illegible]ऽतिप्रकटे, पूर्वगिरौ दिनपतिप्रतिमविभवाः ।
विजयन्ते यतिपतयः, श्रीविजयाण(न)न्दसूरीन्द्राः ॥ २ ॥

दीक्षाया मम गुरवः, श्रीमन्मुनिविजयवाचका आसन् ।
विद्यायास्तु श्रीमद्—वाचककल्याणविजयाह्वाः ॥ ३ ॥

एतेषां गुरुराजां, प्रसादमासाद्य दशशतमितानाम् ।
अर्हन्नाम्नां वृत्ति—र्विनिर्मिता देवविजयेन ॥ ४ ॥

एकमपि नामधेयं, तीर्थकृतोऽनवगताभिधेयमपि ।
जप्तं श्रुतमिष्टकरं, किं पुनरधिकानि सार्थानि ? ॥ ५ ॥

तेनार्थसहितनाम—स्मरणं तीर्थेशितुर्महाफलदम् ।
अर्हत्सहस्रनाम्नां, सूत्रं वृत्तिर्मया विहिते ॥ ६ ॥

जिनशासनभक्तानां, मनीषिणां चरणपद्मरेणुसमः ।
एकां विज्ञप्तिमहं, कुर्वे विनयं विधाय पुरः ॥ ७ ॥

---

१ आनन्दकाव्यमहोदधेः सप्तमस्य मौक्तिकस्य प्रस्तावनायां ( ११९तमे पृष्ठे ) अर्हन्नजिनसहस्र-( अशुद्धमभिधानमिदं )कर्तारः श्रीजयविजयानां गुरव इति उदलेखि, परन्तु श्रीमुनिविजयगणीनां श्रीजयविजय-नामानः प्रशिष्या आसन् इत्युल्लेखाभावे श्रीदेवविजयानां श्रीराजविजयसूरिभिः सह विनेयविनेयिभावघटनात्मिक-युक्तिवैकल्ये च सति एतन्मतं विचारासहमिति मे मतिः ।

२ प्रवर्तकश्रीकान्तिविजयमुनिपुङ्गवसत्का प्रतिरियम् ।

श्रीमन्तः सूरिवरा, वाचकमुख्याः सुधीश्वरा गणयः ।
मुनयोऽपि च मम [illegible], [illegible] सदादराः सन्तः ॥ ८ ॥

नास्मद्गच्छीयकृतं, नास्मद्गु[illegible]येयमिह ।
श्रीजिनशासनभक्तै–रानेयं नु खलु [illegible] तः ॥ ९ ॥

ये यद्गच्छे सन्तो, ये यद्गुरुनि[illegible]न्ते ।
तेषां गीतार्थानां, तन्नामग्रहणमुचितमिह ॥ [illegible] ॥

तेनैतत्पठनादौ, लिखनादौ नैव मत्सरः कार्यः ।
शासनभक्तजनानां, जिनाभिधानस्मृतिः स(सु)[illegible] ॥ ११ ॥

वृत्तेः सूत्रस्य तथा, कर्तृकवेर्योऽभिधापरावर्तम् ।
निर्मास्यति तन्मूर्ध्नि, सङ्घाज्ञाभङ्गपातकं पततु ॥ १२ ॥

विक्रमतोऽष्टापञ्चा–शदधिकषोडशशतेषु ( १६५८ ) वर्षाणाम् ।
सूत्रं कृतमष्टनव–त्यधिकेषु ( १६९८ ) गतेषु वृत्तिरपि ॥ १३ ॥

मतिमान्द्यादौत्सुक्या–दधिकं न्यूनं च यन्मया लिखितम् ।
तच्छोधयन्तु विबुधा–धीशाः करुणां विधाय मयि ॥ १४ ॥

अर्हन्नामसहस्र–स्तवनं निर्माय यन्मया सुकृतम् ।
प्राप्तं तेन समग्रे, श्रीसङ्घे भवतु कल्याणम् ॥ १५ ॥

श्रीकीर्तिविजयवाचक–शिष्योपाध्यायविनयविजयाख्यैः ।
समशोधि वृत्तिरेषा, निधि-निधि-रस-शशि( १६९९ )मिते वर्षे ॥ १६ ॥

एतच्छास्त्रं विबुधै–रधीयमानं च लिख्यमानं च ।
जिनपतिशासनभक्तै–राचन्द्रार्कं चिरं जीयात् ॥ १७ ॥"

अत्रत्यषोडशपद्यपरामर्शेन समुपतिष्ठति प्रश्नो यदुत संशोधनककर्मणि कस्मात् जयविजयेति नाम न निरदेशि श्रीदेवविजयैः ?। किं तदानीं ते स्वर्गवासिन आसन् अथवा किमु न चेमे श्रीशोभनस्तुतिवृत्तिकाराणां गुरवः ?। एते तु मुनिश्रीदीप्तिविजयकृत-मङ्गलकलशरासकप्रशस्तौ सूचिताः श्रीदेवविजयाः श्रीविजयदानसूरीश्वरशिष्यश्री-राजविमलोपाध्यायानां प्रशिष्याः श्रीमुनिविजयोपाध्यायानां तु शिष्याः इति प्रतिभाति ।

१ एतत्प्रशस्तिगतप्रासङ्गिकपद्यानि यथा—

"श्रीविजयमानसूरीसरू 'तप'गच्छनो सणगार रे
तेहने राज्ये रंगे करी रास रच्यो सुविचार रे. पुण्य करो तमे प्राणीआ ( २ )

एवं सति इमे श्रीदेवविजयाः '[1]प्रेमलालच्छीरास'-'[2]विजयतिलकसूरिरासनामकगूर्जरकृति-कर्तॄणां [3]श्रीमुनिविजयवाचकविनेयानां श्री[illegible]नां गुरुबान्धवाः । एभिरन्यैः समाननामकैर्वा श्रीहीरविजयसूरि-श्री[illegible] केचित् प्रश्नाः पृष्टा ये सोत्तराः दरीदृश्यन्ते हीरप्रश्नोत्तरे सेनप्रश्नो[illegible]

१६७६तमे वैक्रमीयाब्दे [illegible]सूरिषु शिरोहीनगरमागच्छत्सु तद्दर्शनार्थमाजग्मुः एके श्रीदेवविजय[illegible]नमण्डिताः । कतिपयेषु वासरेषु व्यतीतेषु तैः सूरिभिरेभ्यो वाचकपदं [illegible] तदनन्तरं तैः सूरिवर्यैः स्वशिष्यश्रीसोमविजयवाचकशिष्य-श्रीकमलविजयेभ्यः [illegible] प्रददे ये तु विजयानन्दसूरिनाम्ना प्रख्यातिमगुः । एतेषां श्रीविजयानन्दसूरीणा[illegible]तमे शरादि श्रीविजयदेवसूरिभिः सह विभेदोऽजानि । तदा

---

[illegible]सूरीसर, उत्तम जेहनुं नाम रे
[illegible]मांहि वखाणाअे भाग्यवंत गुणधाम रे. पुण्य० ( ३ )
तेहना शिष्य सुहंकरू श्रीराजविमळ उवज्झाय रे
तेहना शिष्य वखाणीए श्रीमुनिविजय उवज्झाय रे. पुण्य० ( ४ )
तेहना शिष्य वखाणीए संवेगी शिरदार रे
श्रीदेवविजय वाचकवरू 'ओसवंश' सणगार रे. पुण्य० ( ५ )
'प्राग्वंश' कुल उपना निजगुरुने सुखदाइ रे
श्रीमानविजय पंडितवरू दोलत अधिक सवाइ रे. पुण्य० ( ६ )
गुरुनामे सुख उपजे मनिं बुद्धि सघली आवे रे
दीप्तिविजय सुख कारणे रास रच्यो शुभ भावे रे. पुण्य० ( ७ )
निज शिष्य धीरविजय तणुं वाचवानुं मन जाणीरे
रास रच्यो रलीआमणो मनमांहि उल्लट आणी रे. पुण्य० ( ८ )
संवत् सतरे जाणीए वरस ते ओगण पच्चासो ( १७४९ ) रे
भणे गुणे जे सांभळे कवि दीप्तिनी फळजो आसो रे. पुण्य० ( ९ ) "

१ १६८९तमेऽब्दे कार्तिकशुक्लपञ्चम्यां ( दशम्यामिति जैनगूर्जरकविओनाम्नि ग्रन्थे ) बरहानपुरे रचितोऽयं ग्रन्थ **आनन्दकाव्यमहोदधेः** प्रथममौक्तिके मुद्रितः ।

२ १६९७तमे संवत्सरे पौषशुक्लरविवासरे बरहानपुरे व्यरचि ग्रन्थोऽयं यः **ऐतिहासिकरासस‌ङ्ग्रहस्य** चतुर्थे भागे मुद्रितो यस्य च स्वहस्तलिखिता प्रतिः लींबडीभाण्डागारे समस्ति ।

३ इमे 'वीसनगर'वास्तव्यवणिक्**केशवशाभार्यासोमाइ**कुक्षौ जाताः । श्री**हीरविजय**सूरिप्रदत्त-वाचकपदवीधारिभिरेभिः केचित् प्रश्नाः पृष्टाः श्री**विजयसेन**सूरिभ्यः ये **सेनप्रश्ने** ( सप्तमात् द्वादशपर्यन्ताः ) दृष्टिपथमवतरन्ति ॥

प्रवचनपरीक्षादिनानाग्रन्थगुम्फितृश्रीधर्मसागरोपाध्यायपक्षकारिश्रीविजयदेवसूरीन् विहाय श्रीदेवविजयाः श्रीविजयानन्दसूरीणामाज्ञां पालयामासुः । इमे श्रीदेवविजया श्रीअर्हन्नामसहस्रस्तोत्रविधातृभ्यो न भिन्नाः स्युरिति त[illegible]प्रान्त्यप्रशस्तिगतनवमदशमपद्यावमर्शनेन ।

प्रायः समसमयिसमाननामधारिणः अन्येऽपि [illegible] मुनिवर्याः । यथाहि—

श्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीक[illegible]विजय[illegible]दर्शनहिमकरगगनग्रैवेयक(१६९०)-सङ्ख्यवत्सरे विरचितस्य 'विचाररत्नाकरस्य संशोधकाः श्री[illegible]विजयवाचकाः श्रीरामविजयानां विनेया इति ज्ञायते एतद्ग्रन्थस्य प्रशस्ति(पृ० २०१)गतनिम्नलिखितपद्यालोचनेन—

" एतेषामादेशात् समुच्चितः प्रवचनादयं ग्रन्थः ।
श्रीहीरविजयगणिपतिशिशुपाठककीर्तिविजयेन ॥ २८ ॥
संशोधितश्च सुविहितचूडामणिरामविजयबुधशिष्यैः ।
श्रीदेवविजयवाचकवृषभैः कोविदकुलोत्तंसैः ॥ २९ ॥ "

परन्तु इमे देवविजया अपरे इति भाति । यदि रामविजयस्थाने राजविजय[illegible] पाठो भवेत् तर्हि त्वन्यथा सम्भावना ।

---

१ आनन्दकाव्यमहोदधेः सप्तमे मौक्तिके प्रसिद्धे 'कविवर समयसुन्दर 'नाम्नि निबन्धे ( पृ० ३ ) कुमतिकंदकुद्दालस्यापरं नाम प्रवचनपरीक्षा दरीदृश्यते, परन्तु तत् प्रमाणविकलं प्रतिभाति । एतज्जिज्ञासुभिर्विलोकयतां ऐतिहासिकराससङ्ग्रहस्य चतुर्थस्य विभागस्य मुनिराजश्रीविद्याविजयविरचितं निरीक्षणम् ( पृ० १२ ) ।

२ इमे महोपाध्यायाः श्रीधर्मसागरगणयः श्रीहीरहर्ष(हीरविजयसूरि)-श्रीराजविमलोपाध्यायसहयोगिनः समग्रविद्याविलासवसतयः सकलवादिमौलिमौलयः औष्ट्रिकमतोत्सूत्रदीपिका( सं. १६१७ )-व्याख्यानविधिशतक-कल्पकिरणावली( सं. १६२८ )-तपागच्छपट्टावली-तत्त्वतरङ्गिणी-सर्वज्ञशतक-तद्वृत्ति-श्रीजम्बूद्वीपप्रज्ञप्तिवृत्ति-( सं. १६३९ )-महावीरविज्ञप्तिद्वात्रिंशिका-पर्युषणाशतक-तद्वृत्ति-ईर्यापथिकीषट्त्रिंशिकाप्रमुखप्रौढग्रन्थगुम्फितारः पं. श्रीजीवर्षिगणीनां विनेयाः श्रीलब्धिसागरादीनां गुरवः ( षट्त्रिंशज्जल्पविचारकर्तृश्रीभावविजयमतेन ), सोहमकुलरत्नपट्टावलीप्रयोजकाभिप्रायेण श्रीविजयदेवसूरीणां मातुलाश्च । एतेषां परम्पराऽवसीयते लींबडीभाण्डागारसत्कसर्वज्ञशतकबालावबोधप्रतिगतानिम्नलिखितोल्लेखात्—

" इति श्रीमत्तपागच्छाधिराजभट्टारकश्रीविजयसेनसूरीश्वरपट्टालङ्कारसुविहितसाधुपरम्परासुन्दरीशृङ्गारहार-भट्टारकश्रीराजसागरसूरीश्वरपट्टोदयाचलसहस्रकिरणतरुणप्रभावभट्टारकश्रीवृद्धिसागरसूरीश्वरविजयमानराज्ये महोपाध्यायश्रीधर्मसागरगणिशिष्यमुख्योपाध्यायश्रीश्रुतसागरगणिशिष्यकलिन्दिकाश्रयोपाध्यायश्रीपशान्तिसागरगणिशिष्यसकलगुणगरिष्ठवाचकश्रीबुद्धिसागरगणिसतीर्थ्यपण्डितश्रीअमृतसागरगणिविरचिते श्रीसर्वज्ञशतकवृत्तिबालावबोधे प्रथमाधिकारः ॥ "

३ विचित्रेयं रचनासमयनिर्देशिनी शैली ।

४ ग्रन्थोऽयं प्राकट्यं नीतः श्रेष्ठिदेवचन्द्र-लालभाईजैनपुस्तकोद्धारसंस्थया ।

किञ्च ' श्रीविजयप्रभसूरिसज्झाय '-' श्रीविजयदेवसूरिसज्झाय 'कर्तृणां श्रीतत्त्वविजयानां गुरवः श्रीदेवविजयाः के इति निर्णीयतां [illegible] ।

धर्मबुद्धिपापबुद्धिकथाप्रान्ते निम्नलिखि[illegible] समस्ति—

“ गद्यबन्धात् कथा चेयं, [illegible] कृता मया ।
श्रीमानविजया[illegible]द्धिः कार्या सुपण्डितैः ॥ ६५ ॥
तपगच्छा[illegible]तुल्यश्रीविजयदेवसूरीणाम् ।
पट्टे [illegible] श्रीविजयप्रभसूरिवराः ॥ ६६ ॥
तेषां [illegible] विबुधश्रीजयविजयसद्गुरूणाम् ।
[illegible]ण स्वशिष्यदेवविजयस्य कृते ॥ ६७ ॥”

[illegible]विजयाः प्रस्तुता न वेति मीमांसनीयं सङ्ख्यावद्भिः ।

[illegible]देवविजयै रचितः उत्तराध्ययनस्वाध्यायः, परन्तु न निश्चीयते के इमे इति । [illegible] गाथे तु यथा—

“ पणमिय गोयमसामिं, थुणामि भत्तीइ उत्तरज्झयणं ।
पढमं विणयज्झयणं, परीसहज्झयण तह बीयं ॥ १ ॥
सिरितवगच्छमुणीसर–रज्जे सिरिविजयसेणसूरीणं ।
एसो सज्झाय कओ, विबुहेणं देवविजएणं ॥ १३ ॥”

यतिश्रीविवेकविजयसत्कोदयपुरस्थभाण्डागारस्य सीमन्धरस्वामिविज्ञप्तिस्तवनप्रान्ते निम्मलिखितोल्लेखो वर्तते—

“ संवत् १६९४ वर्षे माह सुदि १२ बुधे वाल्हीग्राममध्ये मुनिकेस( श )त्र लिस( खि )तं ॥ गणिश्रीदेवविजयजी तत्शिष्यगणिदीपविजयवाचनार्थं ” अत्र कान् देवविजयानुद्दिश्योल्लेखोऽयमिति न ज्ञायते ।

लींबडीज्ञानमन्दिरसत्कहस्तलिखितप्रतिसूचिपत्रे निम्नलिखितग्रन्थविधायकानां देवविजयेति नाम दृश्यते, परन्तु तेषामभिज्ञानार्थं विशिष्टसाधनानामावश्यकता—

( १ ) अढार नात्रानी सज्झाय ( सं० १६१८ ), ( २ ) एकादशीस्वाध्यायः, ( ३ ) चन्दनबालास्वाध्यायादिः ( सं० १६२० ), ( ४ ) दादापार्श्वनाथस्तवनम्, ( ५ ) नेमिजिनस्तवनम्, ( ६ ) पञ्चमीस्वाध्यायः, ( ७ ) सीमन्धरस्वामिचैत्यवन्दनम्, ( ८ ) अष्टकर्मचूर्णतपःस्वाध्यायः ।

* श्रीशङ्केश्वरपार्श्वस्तवने एकादशी गाथा यथा—

“ सत्तर सत्तावीस १७२७ संवच्छरे हो लाल सुदि माधव गुरुवार सा.
तेरस दिन प्रभु वीनव्यो हो लाल देवविजय जयकार सा०

मुनिविनयविजयलिखितं सादडीनगरे कल्याणमस्तु ”

* श्रीनेमिजिनस्तवनान्ते एकादश्यां गाथायां निर्देश एवम्—

“ नेमि राजुल बिहुं शिवसुख [illegible] मिलिआ .ेलि मिलिआ हो हेजे हिलिआ हो
यदुपतिराय वाचक देवविजय [illegible] श्रीविजय नित जयकारी हो य० ”

‘ जैन गूर्जरकविओ’संज्ञके पुस्तके (४४९तमे [illegible]) उल्लेखोऽयम्—

“संवत् १७२४ वर्षे भाद्रवा सुदि ८ शुक्रे श्रीमत्तपा[illegible]च्छे भट्टारकश्री२१श्रीराजविजयसूरीश्वरराज्ये सकलपंडितसभाशृंगारहारभालस्थलतिलकायमानप[illegible]तश्री७श्रीदेवविजयगणिशिष्यपंडितोत्तमपंडितप्रवरपंडितश्री५श्रीतेजविजयगणिशिष्यपंडितश्री२श्री[illegible]माविजयगणिशिष्यमुनिसूरविजयेन लिखितं श्रीसादडीनगरे श्रीचिंतामणिपार्श्वना[illegible]सादात् स्वयं वाचनार्थमिति श्रेयः । ”

एतदुल्लेखत्रये के देवविजया लक्ष्यीकृता इति निर्णीयन्तां निर्विशेषवि[illegible] ।

श्रीजिनप्रभसूरिकृत‘श्रीअजितनाथ’स्तवनस्य दक्षिणविहारिमुनिरत्नश्रीअ[illegible]सत्कप्रतिप्रान्ते वर्ततेऽयमुल्लेखः—

“ पं. देवविजयगणिलिखितम्, सभाशृङ्गारहारमुनिज्ञानविजयपठनार्थमिति [illegible] ।”

अत्र के इमे देवविजया इत्यन्वेषयन्तु इतिहासज्ञाः ।

श्रावक भीमसींह माणक द्वारा प्रसिद्धिं नीते भक्तामरस्तोत्राभिधे ग्रन्थे ( पृ० १५७ ) निम्नलिखिते उल्लेखे—

“ विजयदेव सूरिंद पटधर, विजयसिंह गणधार ॥
सीस इणि परें रंगें बोले, देवविजय जयकार ॥ जे नर भक्ति भाव उदार ॥५॥
संवत् सत्तर त्रीस ( १७३० ) वर्षे, पौष शुदि सित वार ॥
तेरशी दिन मरुदेवीनंदन, गायो सब सुखकार ते नर लच्छीके भरतार ॥ जे० ॥६॥ ”

—देवविजयेति नाम वर्वर्ति, परन्तु इमे प्रस्तुता न सम्भवन्ति श्रीविजयसिंहविनेयत्वात् १७३०तमवैक्रमीयहायनोल्लेखाच्च । इदमुक्तं भवति यदुत यदि श्रीदेवविजयैः विंशतिवर्षीयैः रामायणं निर्ममे इति स्वीक्रियते तर्हि वर्षेऽस्मिन् तेषां वयः शतप्रायं भवति ।

वाचकवर्यश्रीकल्याणविजयगणिशिष्यरत्नश्रीधर्मविजयवाचकेभ्योऽभ्यासं कृत्वा यैः श्रीजयविजयैः शोभनस्तुतिवृत्तिर्व्यरचि तैरेव कल्याणविजयगणिराससमेतहीरविजयसूरिपुण्यखाणिसज्झायेति कृतिद्वयं गुर्जरगिरायां गुम्फितमुत अन्यैः सदृशनामधारिभिरिति सन्देहदोलारूढम् । तत्र च हेतुरयम्—

१६५५तमे वैक्रमेऽब्दे आश्विनशुक्लपञ्चम्यां विरचिते कल्याणविजयगणिरासे तत्कर्तृ-

श्रीजयविजयैः कल्याणविजयपादपद्मसेवा प्रार्थिता, न तु श्रीदेवविजयचरणकमलस्येति प्रतीयते निम्नलिखितपङ्क्त्यवलोकनेन—

" संवत सोल पंचावन ( १६[illegible] ) वत्सर आसो मास रे
शुद्ध पख्य( क्ष ) पं[illegible] दिने, रचीओ अनोपम रास रे
जगि जयवंत[illegible]ण, पूरो मनह जगीस रे
सेवा चरण[illegible] तणी मागे जयविजय शीश रे । "

' हीरविजयसूरिपु[illegible]णिसज्झाय'नाम्नि गूर्जरकाव्येऽपि कल्याणविजयवाचकानां शिष्यत्वं सूचितं त[illegible]ः । तथाहि—

" सिरि [illegible]ल्याणविजयवाचक प्रति दीठइ मन मोहइ
[illegible] सीस जयविजय भणइं ए पूरु मनह जगीस "

परन्तु [illegible]( १६६४ )प्रमिते वर्षे सम्मेतशिखरतीर्थमालायाः कर्तारः श्रीजयविज[illegible]तस्तुतिवृत्तिकारा इति मनने न चैतावान् सन्देहः । यतस्तत्र श्रीकल्याणवि[illegible]णप्रसादात् बोधप्रकाशोऽजनि श्रीजयविजयानामिति सूचितम्, अर्थात् श्रीधर्म[illegible]कस्थाने श्रीकल्याणविजयानां विद्यागुरुरूपेणोल्लेखः । यथाहि—

" श्रीकल्याणविजय गुरुचरण प्रसादइ हुओ मुझ बोधप्रकाश
जयविजय विबुध इम जंपइ सुख अनंता सो पावइ "

श्रीसुमतिविजयशिष्यश्रीरामविजयकृते श्रीशान्तिजिनरासे प्रान्तप्रशस्तौ श्रीधर्मविजयान्तेवासिरूपेण येषां श्रीजयविजयानां नामनिर्देशः कृतः त एव प्रस्तुतवृत्तिकारा इति प्रायः निश्चीयते । सा प्रशस्तिरेवम्—

" श्रीगुरु हीर सूरिसर शिष्य कल्याणविजय उवज्झाय पुरंदर दिन दिन चढती जगीसा
शा रखानंदन सोभागी साचो वड वैरागी
संमति अरथ विचार सदगुरु साचो शुभमति रागी.
मात पूंजी बाइ कुखे जायो, नामे नव निधि थाअे,
वाचक धर्मविजय वर तेहना, दीपे अधिक सवाइ.
तस अंतेवासी गुणए भरिया, बोल न बोले विरुआ,
श्रीजयविजय विबुध श्रुत दरिया, पाले सुधी किरिया.
तस पदपंकज भमर सरीसा श्रीशुभविजय कवीशा,
तस चरणांबुज सेवक सुंदर शुभ किरिया गुणशूरा.

१ एतेषां पाण्डित्यं प्रकटीभवति तत्कृतलक्ष्मीसागरसूरिरास-चोवीसी-उपदेशमालावृत्तिप्रमुखग्रन्थावलोकनेन
२ अयं ग्रन्थो निरमायि १७८५ तमेऽब्दे वैशाखशुक्लसप्तम्यां गुरुवासरेऽमदवादानगरे ।

श्रीगुरु सुमतिविजय उपगारी, प्रतपो कोडी वरीश।
ते श्रीगुरु महिमानिधि संनिधि रास रसिक में निपाया
शांति प्रभु गुणराशि भणतां नव निधि आनंद पाया "

अनेनेदमपि स्फुटीभवति यत् श्रीजयविजयानां श्रीशुभविजयनामा शिष्यः, श्रीसुमतिविजयनामा प्रशिष्यश्च।

व्योमरसरतिचन्द्र( १६६० )प्रमिते वर्षे वैक्रमीयवर्षे आश्विनशुक्लपूर्णिमायां गिरिपुर-वागडमध्ये गुम्फितं गूर्जरगिरायां शुकनचोपाइ( शकुनचतुष्पादिका )नामकं काव्यं श्रीजयविजयैः प्रस्तुतवृत्तिकारैः इति प्रशस्तिप्रान्तगतनिम्नलिखित--

"( शुकनदीपिका चउपइ नाम, शुकनार्णवमांहि ए ठाम;
अथवा वसंतराजनी साख, शुकनोद्धार भाखीए भाख. ४०
एतला ग्रंथ जोइने कही, अल्पबुद्धि करी जे में लही;
जमक न जोढ्यो अक्षरबंध, वर्णमात्र नवि जाण्यो संबंध. ४१
साचो करज्यो जाण सुजाण, पंडित आगल अछुं अजाण;
शुकन समुद्र न लाभे पार, चंच भरी कीधो उद्धार ).
व्योम रस रती (ऋतु) चन्द्र (१६६०) वखाण, संवत्सर ए हीयडे आण;
सरद ऋतु जे आसो मास, राका पूर्ण चंद्र कलावास.
विबुधमुख्य दक्ष आणीये, पंडित देवविजय वखाणीये;
तास सीस कर जोडी कहे, शुकन सुणतां सवि सुख लहे.
ए भणतां सवि लहइ ऋद्धि, ए भणतां पामीजे वृद्धि;
जयविजयने परमानंद, भणतां गुणतां सदा आणंद."

—पङ्क्तिप्रेक्षणेन च प्रमाणीभवति उल्लेखः। ( धनुश्चिह्नान्तर्गतेनोल्लेखेन ज्ञायते कवीश्वराणां लघुता अन्यान्यग्रन्थविलोकनापिपासा च। )

---

१ एतज्जिज्ञासुभिर्द्रष्टव्यतामानन्दकाव्यमहोदधेः सप्तमं मौक्तिकम्।

२ मुनिश्रीजिनविजयसङ्ग्राहितप्रशस्तिसङ्ग्रहे—

" सारं गरीयः शकुनार्णवेभ्यः, पीयूषमेतद् रचयाञ्चकार।
माणिक्यसूरिः सुगुरुप्रसादाद्, यत्पाननः स्याद् विबुधप्रमोदः ॥ ४२ ॥
वसुवह्निवह्निचन्द्रे ( १३३८ )—ऽब्दाश्वयुजि पूर्णिमातिथौ रचितः।
शकुनानामुद्धारोऽभ्यासवशादस्तु चिद्रूपः ॥ ४३ ॥
श्रीअजितसिंहसूरीणा-मन्तेवासिना कृतः।
माणिक्यसूरिणोद्धारः, शकुनानां परिस्फुटः ॥ ४४ ॥
—संवत् १५४४ वर्षे फाल्गुनसुदि १२ रविवासरे मांगल्यपुरवरे मु. सोममूर्तिलिखितं "

एतस्य प्रथमाध्यायसमाप्तौ तु अयमुल्लेखः—

" पंडित देवविजय केरो सीस, बोलि भाणुजय नामें सीस;
दुर्गा शकुन उदधि नहि पार, संखेपें कीधो उद्धार."

उपरितनपङ्क्तिप्रेक्षणेन समुपतिष्ठति श[illegible] यदुत 'शकुनचतुष्पादिका'रचयितारः श्रीभाणुजयाः श्रीजयविजया एवान्ये वा ।

महोपाध्यायश्रीविनय[illegible]गणिभिः श्रीविजयदेवसूरीनुद्दिश्य लिखिते विज्ञप्तिपत्रे ( विज्ञप्तित्रिवेण्याः प्रस्तावना[illegible] २९तमे पृष्ठे ) अयमुल्लेखः—

" जयविज[illegible]नामधिज्जा वेलाउलबंदिरे ठिआ विबुहा ।
अमरविजयेन मुनिना युक्ता मुनिवृद्धिविजयेन ॥ ९२ ॥ "

अत्रत्याः श्रीजयविजया अपि के इति निर्णीयन्तामितिहासज्ञैः ।

[illegible]अकब्बरक्ष्मापत्यामन्त्रणपुरस्सरं पादशाहामिलनार्थं श्रीविक्रमात् १६३९प्रमिते वर्षे [illegible]दश्यां जाग्रद्भाग्यसेवधिः प्रियागमविधिश्चारित्रिणां चावधिः गुरुर्हीरहीरविजय-[illegible]मुनिवरपरिवृताः 'फत्तेहपुरसीक्री 'नगरे प्रविविशुः तदा कल्पदीपिकाकर्तारः श्री[illegible]यास्तेषु मुनिवर्येष्वासन्निति समवगम्यते कविराजश्रीऋषभदासप्रणीतश्रीविजय-[illegible]सूरिरासान्तर्गतनिम्नलिखितपङ्क्तिप्रेक्षणेन—

" फत्तेपुर भणी आवे जसें, अनेक पंडित पुंठिं तसें;
जसविजय जयविजय पंन्यास, कल्पदीपिका कीधी खास."

—आनन्दकाव्यमहोदधौ पञ्चमे मौक्तिके १०८तमे पृष्ठे

एतेषां पंन्यासपदवी प्रदत्ता श्रीहीरविजयसूरिभिः १६४७तमे शरदि स्तम्भनतीर्थे । तत्र च एतत्पुस्तकस्य १७०तमपृष्ठगतनिम्नलिखिताः पङ्क्तयः प्रमाणम्—

" हीर आव्या साहा श्रीमल्ल घेर, तिहां धन खरचीयां बहु पेर,
साधतणी पोहोचाडे आस, जयविजय कीधा पंन्यास,
सडताले संवच्छरी रही, हीरविजय पछे चाल्या सही. "

१६७७ प्रमिते संवत्सरे कल्पदीपिका यैः श्रीजयविजयैर्व्यरचि ते प्रस्तुतवृत्तिकारेभ्यो भिन्ना इति मान्यता नास्थानीया, कर्तृस्वहस्तलिखितप्रतौ श्रीजयविजयवाचकस्य महोपाध्याय-

---

१ + इयं प्रतिः वडोदरानगरस्य राजकीयमुख्यपुस्तकालये वर्तते । तत्र प्रारम्भिक उल्लेखस्तु यथा—
" महोपाध्यायश्रीविमलहर्षगणिगुरुभ्यो नमो नमः । "

अन्तिमस्त्वेवम्—

" सुविहितमुनिवृन्दासेव्यमानांह्रिपद्मा
जिनगुरुजनवाक्याराधनोद्भूतपद्माः ।
विजयिविजयसेनश्रीगुरोः प्रौढपट्टे
विजयतिलकसंज्ञा जज्ञिरे सूरिचन्द्राः ॥ ४ ॥

श्रीविमलहर्षगणिविनेयत्वेनोल्लेखदर्शनात् ।

इयं कल्पदीपिका श्रीभद्रबाहुस्वामिसूत्रितकल्पसूत्रस्य टीका वर्तते या श्रीविमलहर्षो-

---

तेषां पट्टेऽवदातद्युतिरुचिरुचिजित्वरैः शोभमाना
रङ्गद्वैराग्यमुख्यैर्विमलतरगुणैर्दत्तविश्वप्रमोदैः ।
निश्शेषाचार्यचक्रावनिरमणगणे सार्वभौमायमाना
राजन्ते श्रीसनाथाः सविजयविजयानन्दसूरीन्द्रमुख्याः ॥ ५ ॥
त्रिभुवनजनसेव्याः सर्वशास्त्राम्बुराशौ
जलधिशयनदेश्याः श्री'तपा'गच्छधुर्याः ।
विमलविमलहर्षा रेजिरे वाचकेन्द्राः
सकलगुणगरिष्ठाः प्राप्तभूरिप्रतिष्ठाः ॥ ६ ॥
तत्पादाम्भोजभृङ्गो बुधजयविजयः स्वस्य चित्तप्रमोद-
प्राप्त्यर्थं मुग्धबुद्ध्याऽलिखदतिसुगमां दीपिकां कल्पसत्काम् ।
वर्षे सप्तार्णवाङ्गद्विजपपरिमिते ( १६७७ ) कार्तिके श्वेतषष्ठ्यां
श्रीमत्पार्श्वप्रभावाज्जयतु च सुचिरं वाच्यमानेयमार्यैः ॥ ७ ॥
प्रत्यक्षरं गणनया ग्रन्थे-ऽस्मिन् श्लोकसङ्ख्यया ।
चतुस्त्रिंशच्छती जज्ञे द्वात्रिंशत्कलिता किल ॥ ८ ॥
विद्वद्वृन्दशिरोमणिपण्डितवरभावविजयगणिमुख्यैः ।
इति श्रीकल्पदीपिकेयं समशोधि जिनागमे भक्तैः ॥ ९ ॥

श्रीकल्पदीपिका लिखिता च प्रथमादर्शे स्वयं स्वशिष्यवृद्धिविजयगणिप्रार्थनया + +"

१ "१६५०तमेऽब्दे प्रथमचैत्रमासपूर्णिमायां श्रीशत्रुञ्जययात्राऽकारि श्रीविमलहर्षोपाध्यायैः पं. देवहर्ष-पं०धनविजय-पं०जयविजयप्रमुखशतद्वयमुनिवर्यपरिवारेण सार्धम्" इति ज्ञायते श्रीयुतजिनविजयसम्पादितस्य प्राचीनजैनलेखसंग्रहस्य द्वितीयविभागस्य ३३तमलेखाङ्कात् ।

इमे श्रीविमलहर्षाः श्रीभावविजयगुरुश्रीमुनिविमलगुरवः। पण्डितवर्यश्रीयुतलालचन्द्रैस्तु ते श्रीविजय-तिलकसूरीणां प्रशिष्याः, श्रीविजयानन्दसूरीणां शिष्या इत्यसूचि आनन्दकाव्यमहोदधेः सप्तममौक्तिके (पृ० १२३,१२४) पूर्वम् । परन्तु इमे पण्डितवर्या मह्यं निवेदयन्त्यधुना यदुत इमे श्रीविजयदानसूरीणामन्तेवासिनः यतः श्रीजयविजयैः सूरिपरिपाट्यां ( पट्टावल्यां ) उल्लेखोऽयमकारि—

" सिरिसाहेगनिहाणो सूरिवरो विजयसेणमुणिपवरो ।
एगुणसट्ठि( ५९ )तमे पट्टे सोहम्मसामिसमो ॥ २३ ॥
तप्पट्टे सट्ठि( ६० )तमो पट्टधरो विजयतिलयसूरीसो ।
भाणु व्व भविअमाणसपंकयबोहत्थमुप्पन्नो ॥ २४ ॥
संपइ इगसट्ठि( ६१ )तमो तप्पट्टे गणहरो विहरमाणो ।
वायग-बुह-जइजुत्तो विजयाणंदो जयइ सूरी ॥ २५ ॥
सिरिविजयदाणगणहर-सीसा वरवायगा भुवणपुज्जा ।
नामेण विमलहरिसा कुवाइमयदलणलद्धजया ॥ २६ ॥

पाध्यायशिष्यश्रीमुनिविमलशिष्यैः उत्तराध्ययनसूत्रवृत्ति-ध्याननिरूपणचोपाइ-चम्पकमालाकथा-शान्तिजिन-शङ्खेश्वर-पार्श्वनाथस्तवनप्रमुखग्रन्थगुम्फितृभिः श्रीभावविजयवाचकैः ( श्रीभानुविजयानां गुरुभिः ) संशोधिता ।

जयेतिनाममुनिवरैर्गूर्जरभाषायां विजयसेनसूरिसज्झायसंज्ञकं काव्यं निरमायि इति ऐतिहासिकसज्झायमालायाः प्रथमे भागेऽवलोक्यते । पदैकदेशे पदसमुदायोपचारादिमे जयविजयाः प्रस्तुतवृत्तिकारा अपरे वेति मीमांसाभूमिमवतारयन्तु विशेषज्ञाः ।

---

तप्पयपंकयमहुअरचुहेण जयविजयनामधेएणं ।
सूरीणं परिवाडी संथुणिआ मंगलं दिसउ ॥ २७ ॥ "

१ श्रीरोहिणीनगरे विरचितेयं वृत्तिः सतीर्थ्यश्रीविजयहर्षमुनीश्वरसाहाय्येन १६८९ तमेऽब्दे । उक्तं च प्रशस्तौ तैः—

" तेषां शिष्याणुरिमां भावविजयवाचकोऽलिखद् वृत्तिम् ।
स्वपरावबोधविधये स्वल्पधियामपि सुखावगमाम् ॥ १९ ॥
निधि-वसु-रस-वसुधा( १६८९ )मितवर्षे श्रीरोहिणीमहापुर्याम् ।
सोऽस्याः प्रथमादर्शं स्वयमेव प्रापयत् सिद्धिम् ॥ २० ॥"

[illegible]चनासमयः १६९६तमो वर्षः ( चैत्रकृष्णदशमीरविवासरः स्तम्भनतीर्थे ) । एतदवगम्यते प्रशस्ति-[illegible]ध्यानस्वरूपनिरूपणप्रबन्धस्य निम्नलिखितप्रशस्तिप्रेक्षणेन—

" श्रीविमलहर्ष उवझाय श्रीमुनिविमल सकलवाचकशिरोमणि विराजइ;
सीस तस भावविजयो भणइ सेवीइ ध्यानसुरतरु सदा सिद्धि काजइ. ध्यान० ११
वर्षधर-निधि-सुधारुचिकला ( १६९६ ) वछरइ चैत्र वदि दसमी रविवार संगइ;
ध्यान अधिकार अविकार सुखकारगो ' खंभ ' नयरइं रच्यो चित्त रंगई. ध्यान० १२ "

३ एतद्रचनासमयः १७०८तमोऽब्दः । मुद्रापितेयं कथा श्रीआत्मानन्दसंसदा ।

४ श्रीभावविजयवाचकाः प्रखरपण्डिता अन्यान्यग्रन्थसंशोधका इत्यवगम्यते श्रीविनयविजयोपाध्यायकृतलोकप्रकाशस्य प्रान्तप्रशस्तिगतनिम्नलिखितपद्यावलोकनेन—

" उत्तराध्ययनवृत्तिकारकैः सुष्ठु भावविजयाख्यवाचकैः ।
सर्वशास्त्रनिपुणैर्यथागमं ग्रन्थ एष समशोधि सोद्यमैः ॥ ३१ ॥ "

एभिः श्रीविनयविजयगणिकृता सुबोधिकानाम्नी कल्पसूत्रवृत्तिरपि संशोधिता ।

अपरेऽपि तपागच्छीयाः श्रीभावविजया वर्तन्ते इत्यवगम्यते लींचभाण्डागारस्य अभिधानचिन्तामणिप्रतिप्रान्तस्थनिम्नलिखितोल्लेखावलोकनेन—

" संवत् १७४४ वर्षे वैशाष वदि ६ शनिवारे । श्रीपत्तनपुरे सकलभट्टारकपुरन्दरभट्टारकश्रीश्रीश्री१७-श्रीहीरविजयसूरीश्वरतच्छिष्यपण्डितप्रवरपं०श्री५श्रीशुभविजयग(णि)पं०श्रीभावविजयग(णि)शिष्यपं०सिद्धिविजयग(णि)शिष्यचतुरविजयल(लि)खितं शिष्यमुनिविवेकविजयपठनार्थम् । "

५ " अष्टापदनी यातरा फल पामि हो भावइं भणी मासके ।
श्रीभावविजय उवज्झायनो भाण भासइं हो फलइं सघली आशके ॥ २३ ॥ "

इत्यष्टापदस्तवनप्रान्तस्थोल्लेखदर्शनेन श्रीभावविजयानां भानुविजयः शिष्यः इति प्रतिभाति ।

अपरञ्च जयविजयेतिनाम्ना विश्रुता अन्येऽपि कतिपया मुनीश्वराः सन्ति, परन्तु ते प्रस्तुतटीकाकाराद् भिन्नाः। तत्र तु श्रीशान्तिसूरिकृतजीवविचारस्य श्रीपाठकरत्नाकररचितवृत्ति-प्रान्तप्रशस्तिगतनिम्नलिखितपद्यसार्धद्वयं प्रमाणम्—

"आद्यो वाचकसेनधीनपट्टुधीर्यो मन्त्रविद्याऽग्रणी-
रन्योऽभून्महिमाग्रलाभसहितः पुण्यश्रियां संहितः ॥ ८ ॥
सुगुणगणिस्तृतीयः सरलमतिः कुशलसिंहनामाऽन्यः ।
विख्यातचन्द्रवर्धनगणिरप्यासीत् क्रमेण ततः ॥ ९ ॥
तेषां शिष्यत्रितयं समजनि जगतीतले विदितविद्यम् ।
श्रीमेघनन्दन-दयानन्दन-जयविजयनामानः ॥ १० ॥"

किञ्च श्रीविजयहंसगणिशिष्यपं० जयविजयगणयोऽपि अन्ये । एभिः पर्यन्ताराधना-प्रतिरलेखि । 'श्रीविजयप्रभसूरिसज्झाय'कर्तारः श्रीजयविजया अप्यपरे, [illegible]श्रीगुण-विजयानां शिष्यत्वात् ।

एवं वैक्रमीयसप्तदशशताब्द्यां १६६१तमे वर्षे संमेतशिखरतीर्थमालाविधा[illegible] १६५५तमेऽब्दे कल्याणविजयगणिरासरचयितारः, हीरविजयसूरिपुण्यखाणिसज्झायकर्तारः, विजयसेनसूरिसज्झायप्रणेतारो जयविजयाः एकैव व्यक्तिर्भिन्ना वा स्युः, परन्तु १६७०तमे शरदि सप्ततिस्थानकवृत्तेः धर्मरत्नमञ्जूषायाश्च संशोधनेन यैः श्रीदेवविजयानां साहाय्यं कृतं ते तु प्रस्तुतवृत्तिकाराः शकुनचोपाइरचयितार एवेति कथने कः सन्देहः? ।

श्रीजयविजयगणिभिर्लिखिताः प्रतयः—

प्रो. पिटर्सन( १८९२–९५ )रिपॉर्टगतसङ्ग्रहणीप्रतिर्लिखिता श्रीशोभनस्तुतिवृत्तिकारै-रित्यवगम्यते निम्नलिखितोल्लेखात्—

"संवत् १६६८ वर्षे फाल्गुनमासे कृष्णपक्षे नवम्यां तिथौ रविवासरे लिखितेयं प्रतिः सकलकोविदकुलालङ्कारहारपण्डितप्रकाण्डश्री ५ श्रीदेवविजयगणिचरणवरपुण्डरीकपरिचरणचरण-प्रवणान्तःकरणमधुकरेण गणिना जयविजयेनेति श्रेयः"

डॉ०भाण्डारकर( १८८४–८७ )रिपॉर्टगतशैक्षोपस्थापनविधिप्रतिरपि लिपीकृतै-भिरित्यवबुध्यते निम्नलिखितोल्लेखात्—

"सकलपण्डितपुरन्दरापुरन्दरायमाणपण्डितश्री५श्रीदेवविजयगणिचरणाम्बुजचञ्चरीकेण

---

१ एतदवगम्यते उदेपुरस्थगोडीजीभाण्डागारसत्कप्रतिप्रान्तस्थेन निम्नलिखितोल्लेखेन—
"संवत् १६७८ वर्षे कार्तिक शुदि अष्टमी दिने बृहस्पतिवारे श्रीधाणुरानगरे पं०श्रीविजयहंसगणी-शिष्यपं० जयविजयगणिना लिखिता ।"

गणिना जयविजयेन लिखितं ॥ संवत् १६७१ वर्षे आश्विनासित ८ दिने । श्री ईदलपुरनगरे........"

लींबडीभाण्डागारसत्का ऋषिमंडलप्रतिरपि लिखिताऽमीभिरिति ज्ञायते निम्नलिखितोल्लेखात्—

" संवत् [1]१६७३ वर्षे पौषासितद्वादशीतिथौ बुधवासरे सकलपण्डितमण्डलीमुकुटायमानपण्डितश्री५श्रीदेवविजयगणिचरणारविन्दचञ्चरीकायमान( ण )पं०जयविजयगणिना लिखितेयं प्रतिरिति "

श्रीजयविजयगणीनां शिष्यादिपरिवारः—

विबुधवरश्री[2]जयविजयगणीनां श्रीशुभविजयनामा शिष्यः श्रीसुमतिविजयाह्वः प्रशिष्यः, श्रीरामविजयाभिधस्तेषां शिष्यस्य प्रशिष्य इति प्राग् ( पृ० ६४ ) निर्दिष्टम् । अत्र तु तेषां [3]मेरुविजयाभिधानोऽपरः शिष्य इति सूच्यते । तत्र '[4]गजसुकुमाल'सज्झायप्रमुखगूर्जरकृतयः प्रमाणम् । तथाहि—

"[illegible]नि उपसम एणी परे आदरेजी ते लहे अविचल शिवसुखवास रे ।
[illegible]जयविजय तेणे सुपसाउलेजी मेरुविजयनी पुंगी आश रे ॥१४॥"

अपर[illegible]ायमालायां २२५तमे पृष्ठे—

" श्रीअकबर पुर मांहे रही, कीधो एह सज्झाय ।
संवत् सत्तर कर १७०२ श्रावण मासे, व्रत पालतां रे दुःख दुरित पलाय के ॥२८॥
श्री देवविजय पंडितवरु, श्रीजयविजय बुधराय ।
तस शिष्य मेरुविजय कहे व्रत पालतां रे नवनिधि घरि थाय के ॥ २९ ॥

—नववाडनी सज्झायेति संज्ञकायां गूर्जरकृतौ

---

१ अनेनावगम्यते यदुत एतावत्संवत्सरं यावत् तु तेषां सत्तायाः सम्भावना ।

२ चुनीजी( काशी )भाण्डागारस्य **भगवतीसूत्र**स्तबुकविवरणप्रतिप्रान्तस्थनिम्नलिखितोल्लेखगता इमे एव अन्ये वेति गवेषणीयमितिहासज्ञैः—

" संवत् १८०२ वर्षे शाके १६६७प्रवर्तमाने ज्येष्ठ( ष्ठ )वदि १४ तिथौ रविवारे सकलपण्डितशिरोमणिपण्डितश्री**जयविजय**गणिशिष्यश्रीविजय(?)गणिपण्डितश्री**धीरविजय**गणिभाग्य**विजयेन** लिपीकृतं श्रीपद्मावतीनगरे महाराजाधिराजश्री**अभैसिंहजी**विजय( यि )राज्ये ।"

३ एतेषां शिष्यनामावगम्यते श्री**विजयधर्म**सूरिसङ्कलिते प्रशस्तिसङ्ग्रहे राजप्रश्नीयोपाङ्गान्ते निम्नलिखितोल्लेखात्—

"संवत् १७२४ वर्षे भाद्रपदासितैकादश्यां तिथौ भौमवासरे पुष्यनक्षत्रे सकलपण्डितमण्डलीमण्डनैकमुकुटायमानपं०श्री**जयविजय**गणिशिष्यपण्डितश्री**मेरुविजय**गणिचरणारविन्दचञ्चरीकायमाणमानसेन गणिना **दर्शनविजयेन** ।'

श्री**मेरुविजय**नामधेया अन्येऽपि मुनिवरा अभूवन् । तज्जिज्ञासुभिर्द्रष्टव्यतां पण्डितावतंसश्री**मेरुविजय**गणिकृतश्रीचतुर्विंशतिजिनानन्दस्तुतीनां मदीया भूमिका ( पृ० २५–२६ ) ।

४ १९३४तमेऽब्दे अमदावादस्थ'टाइम्स'मुद्रणालये मुद्रिते उत्तमचंद–केशवलाल–सांकलचंदद्वारप्रकाशिते सज्झायमालासंज्ञके ग्रन्थे गजसुकुमालसज्झायस्य पृष्ठाङ्कः ४५३तमः ।

अनेनदमपि प्रतीयते यदुत श्रीमेरुविजयसत्तासमयः वैक्रमीयाऽष्टादशशताब्दी। ईरियावहीसज्झाय–मेतार्यमुनिसज्झाय–नंदिषेणमुनिसज्झायसंज्ञकानि गूर्जरकाव्यानि एतत्कर्तृकाणि। तत्र नंदिषेणमुनिसज्झायप्रान्ते ( पृ० ४३२ ) निगदितं तैः—

" जयविजय गुरु सीस, तस हरख नमे निश दीस,
मेरुविजय इम बोले, एहवा गुरुने कुण तोले "

अनेन हर्षविजयनामाऽन्योऽपि विनेयः श्रीजयविजयानामिति ज्ञायते।





---

१–२ प्रेक्ष्यतामुपर्युक्तायां सज्झायमालायाम् ( पृ० ७३, ४२३ )—
"इम जे इरियावहि पडिक्कमे, शिवरमणी ते साथे रमे
श्रीजयविजय गुरुनो शीश, मेरुविजय ते नामे शीस " १६
" पंडित जयविजय केरो मेरु नमे रिषिराज
एहवा महामुनिवरने नामे, लहिए अविचल राज " १५

# श्रीसिद्धिचन्द्रगणिवृत्तान्तः



अथ द्वितीयवृत्तिविरचयितारः कविकुञ्जराः कुन्देन्दुकीर्तयः श्रीसिद्धिचन्द्रगणयः कां मेदिनीमण्डलीं कदा च स्वचारित्रपवित्रतया पावयामासुरिति जिज्ञासमानस्य जिज्ञासा तत्कृतवृत्ति-प्रारम्भप्रतिष्ठितपद्यपञ्चकप्रेक्षणेन प्रशाम्यति । तथाहि—

" अस्ति श्रीमदखण्डपाठकगणप्राप्तप्रतिष्ठोन्नति—
भूपालावलिवन्द्यमानचरणः श्रीभानुचन्द्रो गुरुः ।
यत्कीर्तिर्भुवनाङ्गणे गुणगणच्छन्ने न मान्ती पुनः
भ्रा( धा ? )तुः कर्णगताऽकरोदभिनवब्रह्माण्डयाच्ञामिव ॥ १ ॥
यदुपदेशवशेन मुदं वहन्, निखिलमण्डलवासिजने निजे ।
मृतधनं च करं च स जीजिआऽभिधमकब्बरभूपतिरत्यजत् ॥ ३ ॥
तस्यान्तेनिषद्यी विधेयजगतीलोकः स्मरो मूर्त्तिमान्
विद्वद्वृन्दगजेन्द्रतर्जनहरिः श्रीसिद्धिचन्द्रोऽस्ति सः ।
यत्कीर्तिं भुजगाङ्गनावलिभिरुद्गीता समाकर्णयन्
आनन्दामृतपूर्णकर्णकुहरः शेषः सुखं खेलति ॥ ४ ॥[१]
परेषां यद् दूरे हृदयसरणेरस्ति तदिदं
घधानानामष्टोत्तरशतकमालोक्य मुदितः ।
महाराजः श्रीमानकबरनृपो यस्य सहसा
भुवि ख्यातामाख्यां सपदि विदधे खुस्फहमिति ॥ ५ ॥
बालबोधकृते तेन, परोपकारशालिना ।
संक्षिप्ता क्रियते वृत्तिः, शोभता शोभनस्तुतेः ॥ ६ ॥ "

अनेन स्फुटीभवति यदुतेमे परोपकारिशिरोमणयः श्रीसिद्धिचन्द्रगणयः कविकोटि-

---

१ एतत्पद्येनावगम्यते यदुत श्रीसिद्धिचन्द्रगणिभिः निजलघुताया निर्देशं विहाय सौवं पाण्डित्यं प्रकटी-कृतम् । एषा पद्धतिर्दोषात्मिकेति मन्यमानैः मीमांसामेदिनीमवतार्यतां श्रीमद्वाग्भटैर्यदुक्तं स्वप्रशंसायां **काव्यानुशासनस्य** स्वोपज्ञालङ्कारतिलकवृत्तौ । तच्चेदम्—

" विनिर्मितानेकनव्यभव्यनाटकच्छन्दोऽलङ्कारमहाकाव्यप्रमुखमहाप्रबन्धबन्धुरोऽपारतरशास्त्रसागरसमुत्तरण-तीर्थायमानशेमुषीसमभ्यस्तसमस्तानवद्यविद्याविनोदकन्दलितसकलकलाकलापसम्पदुद्भटो महाकविः (श्रीवाग्भटोऽ-भीष्टदेवतानमस्कारपूर्वकमुपक्रमते । ) "

२ छन्दोभङ्गनिवारणार्थं पदविनिमयः ।

कोटीरश्रीभानुचन्द्रोपाध्यायानां शिष्यवर्या विद्वद्धुर्या अष्टोत्तरशतावधानकर्मकर्मठाः समकालीनसम्राट्श्रीअकब्बरप्रदत्त'खुस्फु(ष्फ)हमिति विरुदमण्डिताश्च । तेषां वाचकश्रीभानुचन्द्रान्तेवासित्वं मुनितारकतारकपतिश्रीहीरविजयसूरीश्वरसहाध्यायिश्रीसकलचन्द्रोपाध्यायशिष्यरत्नश्रीसूरचन्द्र पंन्यासप्रशिष्यत्वं च स्पष्टीभवति तद्गुरुवरकृतकादम्बरीवृत्तिप्रारम्भगतनिम्नलिखितपद्यावलोकनेन—

"श्रीमत्तपःपक्षसहस्रदीधितिः, श्रीहीरसूरिः समभून्महोदयः ।
यद्वक्त्रसौन्दर्यगुणं विलोकयन्, ययौ सुरौघः किमु निर्निमेषताम् ? ॥ ६ ॥
अनन्यसौजन्यगुणैर्गरीयान्, विशिष्टशिष्टाचरणैर्वरीयान् ।
तत्पट्टपाथोनिधिपूर्णचन्द्रो, विराजते श्रीविजयादिसेनः ॥ ७ ॥
तत्पट्टोदयचूलाव-लम्बिपूर्णेन्दुसन्निभः श्रीमान् ।
श्रीविजयतिलकसूरिर्भूरिगुणैर्भूपितो जयति ॥ ८ ॥
तत्सम्प्रदाये प्रथितप्रभावो, बभूव दानर्षिरतिप्रसिद्धः ।
यदीयवैराग्यकथां प्रवक्तुं, प्राप्तो गुरुः किं हरिसन्निधानम् ? ॥ ९ ॥
तद्दीक्षितानेकविनेयवर्ग—मुक्तालतामध्यमणिप्रकारः ।
श्रीवाचकेन्द्रः सकलादिचन्द्रो, बभूव विश्वाद्भुतवाग्विलासः ॥ १० ॥
श्रीसूरचन्द्रः समभूत् तदीय—शिष्याग्रणीर्न्यायविदां वरेण्यः ।
यत्तर्कयुक्त्या त्रिदिवं निषेवे, तिरस्कृतश्चित्रशिखण्डिजोऽपि ॥ ११ ॥
तदीयपादाम्बुजचञ्चरीको, विराजतेऽद्धा हरिधीसखाभः ।
श्रीवाचकः सम्प्रति भानुचन्द्रो, ह्यकब्बरक्ष्मापतिदत्तमानः ॥ १२ ॥
श्रीशाहिचेतोऽब्जषडङ्घ्रितुल्यः, श्रीसिद्धिचन्द्रोऽस्ति मदीयशिष्यः ।
'कादम्बरी'वृत्तिरियं तदीय—मनोमुदे तेन मया प्रतन्यते ॥ १३ ॥"

---

१ श्रीविजयप्रशस्ति( स० ९, श्लो० २८ )टीकाऽवलोकनादवगम्यते यदुत १६३९तमे विक्रमार्के ज्येष्ठकृष्णत्रयोदश्यां फतेहपुरप्रवेशसमये श्रीहीरविजयसूरीश्वरैः सार्धं ये त्रयोदश मुनीश्वरा आसन् तेषु श्रीशान्तिचन्द्रनामा मुनीश्वरो नृपमनोरञ्जकोऽष्टोत्तरशतावधानविधायक आसीत् ।

२ एतदर्थमवलोक्यतां पृष्ठम् ७८ ।

३ एभिरुपाध्यायैः निरमायि नानाकृतयो गूर्जरगिरायामिति ज्ञायते 'जैनगूर्जरकविओ'संज्ञकात् पुस्तकात् ( पृ० २७५—२८४ ) ।

४ इदमपि विचित्रं यथा महाकविश्रीबाणभट्टतत्तनयाभ्यां प्रणीता कादम्बरी तथा तट्टीका श्रीभानुचन्द्रोपाध्यायतच्छिष्यरत्नश्रीसिद्धिचन्द्रगणिभ्यां विनिर्मिता अर्थात् पितृपुत्रकृतकाव्यस्य वृत्तिर्व्यधायि गुरुशिष्याभ्याम् ।

विद्वद्धुरन्धराणां मुनिपुरन्दराणां श्रीसिद्धिचन्द्रगणीनां षट्शास्त्रविज्ञता फारसीभाषा-निपुणता पुस्फु(ष्फ)हमिति बिरुदधारिता च सविशेषं समर्थ्यते तत्कृतभक्तामरस्तोत्रवृत्तिप्रारम्भिक-निम्नलिखितपद्यैः—

“ कर्ता [1]शतावधानानां, विजेतोन्मत्तवादिनाम् ।
वेत्ता षडपि शास्त्राणा–मध्येता फारसीमपि ॥
अकब्बरसुरत्राण–हृदयाम्बुजषट्पदः ।
दधानः पुरफहमिति, बिरुदं शाहिनाऽर्पितम् ॥
तेन वाचकचन्द्रेण, सिद्धिचन्द्रेण तन्यते ।
भक्तामरस्य बालानां, वृत्तिर्व्युत्पत्तिहेतवे ॥

एतस्यां श्रीभक्तामरवृत्तौ श्रीसिद्धिचन्द्रगणिभिः स्वप्रणीतवृद्धप्रस्तावोक्तिरत्नाकरात् कानिचित् पद्यानि उल्लेखितानि । निदर्शनार्थमवतार्यते पद्यत्रितयम्—

[2]उत्कूजन्तु वटे वटे बत बकाः काका वराका अपि
क्वां कुर्वन्तु सदा निनादपटवस्ते पिप्पले पिप्पले ।
सोऽन्यः कोऽपि रसालपल्लवलवग्रासोल्लसत्पाटवः
क्रीडत्कोकिलकण्ठकूजनकलालीलाविलासक्रमः ॥
[3]वारां राशिरसौ प्रभूय भवतीं रत्नाकरत्वं गतो
लक्ष्मीस्त्वत्पतिभावमेत्य मुरजित् जातस्त्रिलोकीपतिः ।
कन्दर्पो जनचित्तरञ्जन इति त्वन्नन्दनत्वादभूत्
सर्वत्र त्वदनुग्रहप्रणयिनी मन्ये महत्त्वस्थितिः ॥
[4]गौरीशङ्करयोः सुतो विजयते स्वामी कुमारव्रती
धत्तेऽद्यापि चतुर्मुखस्य तनया कौमारमेव व्रतम् ।
यल्लक्ष्मीपतिभूः प्रियाद्वययुतोऽनङ्गोऽपि संसेव्यते
तन्मन्ये कमले ! त्वदाश्रयवशात् सर्वोऽपि मान्यो जनः ॥ ”

अनेनावसीयते वाचकचन्द्राणां श्रीसिद्धिचन्द्रगणीनां प्रखरपाण्डित्यं परन्तु तेषां यावनी-भाषाप्रगुणितनिःशेषग्रन्थज्ञातृत्व–शाहिराजाध्यापकत्व–चारित्रनिश्चलत्व–गुरुवचनासक्तत्व–कादम्बरीकाव्योत्तरभागवृत्तिकारत्वादिविषयस्तु विशदीक्रियते तत्कृतैतद्वृत्तिप्रारम्भिकनिम्नलिखित-पद्यैः—

---

१ एतत्स्तोत्रप्रान्ते अन्यग्रन्थेषु च अष्टोत्तरशतावधानेत्युल्लेखो दरीदृश्यते ।

२ एतत् पद्यं प्रेक्ष्यते श्रीभक्तामरस्तोत्रस्य षष्ठश्लोकवृत्तौ सुभाषितरत्नभाण्डागारे ( पृ० २३६ ) च ।

३-४ एते पद्ये त्ववलोक्येते अन्तिमश्लोकवृत्तौ ।

" मेरुः स्नात्रभवैः सकुङ्कुमपयःपूरैः परीतोऽभवत्
पीतस्तेन सुवर्णपर्वत इति ख्यातिं जगाम क्षितौ ।
देवीनृत्यविशीर्णहारमणिभिस्तारो गतस्तारका-
धारोऽसाविति यज्जनिव्यतिकरः सोऽव्याद् वृकां(पा)ङ्कः प्रभुः ॥ १ ॥
श्रीमाञ्शान्तिः प्रभुरवतु वो गाढसर्वाङ्गबाधा
यं राजश्रीः सुभगमभजत् किं नु यस्य प्रभोर्न ? ।
तद्रागोऽन्तःकरणमविशद् व्युष्टचेष्टाविशिष्टं
वार्धिस्यन्दस्तटमिव विषं भोगिचूडामणीयत् ॥ २ ॥
जाग्रज्ज्योतिरकब्बरक्षितिपतेरभ्यर्णमातस्थिवान्
'सिद्धा'द्रैः ( द्रेः ) करमोचनादिसुकृतं योऽकारयच्छाहिना ।
जीवानामभयप्रदानमपि यः सर्वत्र देशे स्फुटं
श्रीमत्पाठकपुङ्गवः स जयताच्छ्रीभानुचन्द्राभिधः ।
तच्छिष्यः सुकृतैकभूर्मतिमतामग्रेसरः केसरी
शाहिस्वान्तविनोदनैकरसिकः श्रीसिद्धिचन्द्राभिधः ।
पूर्वं श्री'विमला'द्रिचैत्यरचनां दूरीकृतां शाहिना
विज्ञाप्यैव मुहुर्मुहुस्तमधिपं योऽकारयत् तां पुनः ॥ ४ ॥
यावन्या किल भाषया प्रगुणितान् ग्रन्थानशेषांश्च तान्
विज्ञाय प्रतिभागुणैस्तमधिकं योऽध्यापयच्छाहिराट् ।
दृष्ट्वाऽनेकविधानवैभवकलां चेतश्चमत्कारिणीं
चैकेषु स्पृह(चक्रे षुष्फह)मेति सर्वविदितं गोत्रं यदीयं पुनः ॥ ५ ॥
प्रोच्चैः पञ्चसहस्रतुङ्गतुरगाञ्श्रीसिन्धुरान् दुर्धरान्
दत्त्वा प्राग्भवसम्भवप्रणयतो धृत्वा करे यं जगौ ।
शाहिश्रीमदकब्बरक्षितिपतिस्त्यक्त्वा व्रतं दुष्करं
श्रीमत्संयमयामिनीश ! वसुधाधीशोऽधुना त्वं भव ॥ ६ ॥
साक्षात् कन्दर्परूपः क्षितितलविदितो वाचकव्रातशक्रः
स्मृत्वा वाक्यं गुरूणां गुरुवचनरतो भक्तिपर्वानगर्वात् ।
धीमान् षट्शास्त्रवेत्ता रचयति रुचिरां सज्जनैः श्लाघनीयां
टीकां कादम्बरीयां निजगुरुघटितां किञ्चिदूनास्थितां सः ॥ ७ ॥ "

---

१-२ एते खलु अशुद्धस्थले । अशुद्धिपरिहारस्तु धनुश्चिह्नान्तर्गतवर्णद्वारा मया सूचितः । ३-४ एतत् पद्यद्वयमलं दृश्यते मुद्रिते **वसन्तराजशकुनशास्त्रे** ( श्लो० ८,९ ) ।

एतेषाममतिमप्रतिभाशालिनां श्रीसिद्धिचन्द्रगणीनां निष्कलङ्कितव्रतत्वं च वर्णितं श्रद्धावतंसकविराजश्रीऋषभदासैर्निजनिर्मिते श्रीहीरविजयसूरिरासे ( पृ० १८५–१८६ )। तथाहि—

सिद्धचंद मुनिमां वडो, जिम मृगकुलमां सिंह ।
जेणे जांगीर नर देखतां, राखी सासन–लीह. मुनिवर रे सुंदर रे ॥१॥
भाणचंद–शिष्यसार, देवल पोखध राखीआ ।
वायां पाडणहार, भाणचंद–शिष्य सार. मुनि० ॥ २ ॥
ते· संगम वचने वळी, परीसहि न चल्यो वीर ।
भत्त ।ल्यो जई गिर बोलो, सिद्धचंद मुनिधीर. मुनि० ॥ ३ ॥
रथ घोडा पालखी, आपुं ऋद्धि अनेक ।
योग दुनीआं लीओ, लो हम जेसो भेख. मुनि० ॥ ४ ॥
देव परीख्या करि, न चल्यो मेघरथ राय ।
सिद्धचंद मुनि नवि चल्यो, विनति करे पातशाय. मुनि० ॥ ५ ॥
भय देखाड्यो पातशा, बांधो तुम सिरि पाग ।
सूरत खूब न नाहजी, अब कयसा बेराग ? मुनि० ॥ ६ ॥
सिद्धचंद कहि पातशा, एक माग्या मुज देह ।
गुरि दीआ मुज भेखडी, ओ मत पीछा लेय. मुनि० ॥ ७ ॥
सूरगरी जेसा देखती, खुसी हुओ पातशाहि ।
नमि पाये नीवाजीओ, ऋषभदास गुण गाय. मुनि० ॥ ८ ॥

एतेषां करुणावरुणालयानां यत् परोपकारित्वमप्यत्र वर्णितं १८५ तमे पृष्ठे तैः कवीश्वरैः, तत्तात्पर्यमेवम्—

एकदा बर्हानपुरनगरे द्वात्रिंशच्चौरा हन्यमाना आसन् । तदा दयार्द्रचित्तैरेभिः पातशाहित आज्ञां गृहीत्वा तत्र गत्वा ते मोचिताः । अपरश्च जयदासजपो नामको वणिग् द्विपचरणमर्दनेन मार्यमाणोऽरक्षि तैः ।

रूपतर्जितरतिपतिभिः प्रज्ञाप्रभावपरास्तशक्रसूरिभिर्वादिद्विपेन्द्रदर्पहरहरिभिः श्रीसिद्धिचन्द्रगणिभिर्न केवलं नाना टीका विरचिताः, किन्तु कोविदवृन्दचन्द्रनिजगुरुवर्यश्रीभानुचन्द्रकृतवसन्तराजशकुनशास्त्रटीकाऽपि संशोधिता ‘सीरोही ’नगरनरपतिश्रीमानखयराजादेशमासाद्य । तत्र तद्वृत्तिप्रारम्भिकनिम्नलिखितपद्यानि प्रमाणम्—

" अस्ति श्रीमदुदारवाचकसभालङ्कारहारोपमः
प्रख्यातो भुवि हेमसूरिसदृशः श्रीभानुचन्द्रो गुरुः ।
श्री'शत्रुञ्जय'तीर्थशुल्कनिवहप्रत्याजनोद्यद्यशाः
शाहिश्रीमदकब्बरार्पितमहोपाध्यायदृप्यत्पदः ॥ २ ॥
तच्छिष्यः सुकृतैकभूर्मतिमतामग्रेसरः केसरी
शाहिस्वान्तविनोदनैकरसिकः श्रीसिद्धिचन्द्रोऽस्ति सः ।
पूर्वं श्री'विमला'दिचैत्यरचनां दूरीकृतां शाहिना
विज्ञाप्यैव मुहुर्मुहुस्तमधिपं योऽकारयत् तां पुनः ॥ ३ ॥
यावन्या किल भाषया प्रगुणितान् ग्रन्थानशेषांस्तथा[1]
[2]चिन्तारत्नमुखांश्च यं गुरुधियं ध्यात्वा नृपोऽध्यापयत् ।
दृष्ट्वा चौष्यवधानसाधनकलां[3] चेतश्चमत्कारिणीं
चक्रे[4] पुस्फ(ष्फ)हमेति विश्वविदितं गोत्रं यदीयं महत् ॥ ४
[6]तच्चित्तकौतुककृते हि[5] वसन्तराज—सच्छाकुनस्य विवृतिं प्रणयत्यभिज्ञः
श्रीसूरचन्द्रचरणाम्बुजचञ्चरीकः, श्रीशाहिराजकृतसत्कृतिभानुचन्द्रः ॥
' जम्बू 'द्वीपाभिधे द्वीपे, क्षेत्रे ' भरत 'नामनि ।
राजते रजतस्वर्ण—चतुर्वर्णविभूषितम् ॥ ६ ॥
' अर्बुदा 'द्रिसमीपस्थ-' सारणेश्वर'शोभितम् ।
सीरोही नगरं, तत्र तिलकं नगरीषु यत् ॥ ७ ॥—युग्मम्
नीलरत्नमहासौध—रश्मिवल्लिवितानके ।
यत्र रात्रिषु कुर्वन्ति, तारकाः सुमविभ्रमम् ॥ ८ ॥
मुखैश्चन्द्रमसं नेत्रैः, कमलं कोकिलं स्वरैः ।
गमनै राजहंसं च, जिग्युर्यत्राबला अपि ॥ ९ ॥
प्रतापाक्रान्तदिक्चक्रः, साक्षाच्छक्र इवापरः ।
श्रीमानखयराजाख्यस्तत्रास्ते[7] भूमिजम्भजित् ॥ १० ॥
.... .... .... .... ....
[2]तस्यादेशं समासाद्य सौमनस्यपयोनिधेः ।
वृत्तिर्वसन्तराजस्य सिद्धिचन्द्रेण शोध्यते ॥ १८ ॥ "

---

१ खेमराजश्रीकृष्णदासश्रेष्ठिना मुम्बय्यां प्रकाशिते वसन्तराजशाकुने मुनिराजश्रीचतुरविजयप्रेषितैतदुल्लेखात् भिन्नता दरीदृश्यते, तस्मात् पाठान्तराणि दीयन्ते, तथाहि—

१ न शेषांस्तान । २ विज्ञाय प्रतिभागुणैस्तमधिकं योऽध्यापतच्छाहिराट् । ३ दृष्ट्वाऽनेकविधानवैभवकलाम् । ४ चक्रेषु स्फुटमेति (अर्थानवबोधात् पाठोऽयमशुद्धः) । ५ हि सः । ६ तद्बुद्धिवैभवकृते । ७ खपराजा० ।

२ श्लोकोऽयं न विद्यते मुद्रिते ग्रन्थे ।

वाचकचन्द्रश्रीसिद्धिचन्द्रगणीनां कृतिततिः—

( १ ) श्रीशोभनस्तुतिवृत्तिः २२०० [1]श्लोकप्रमिता ।

( २ ) कादम्बरीकथोत्तरभागटीका निर्णयसागरमुद्रणालये मुद्रिता ।

( ३ ) श्रीमानतुङ्गसूरिकृतभक्तामरस्तोत्रवृत्तिः । श्रावकभीमसिंहमाणेकद्वारा मुद्रापिता पूर्वोक्ते मुद्रणालये ।

( ४ ) वृद्धप्रस्तावोक्तिरत्नाकरः ।

( ५ ) महोपाध्यायश्रीभानुचन्द्रगणिचरित्रम् ।

( ६ ) धातुमञ्जरी १२०० श्लोकप्रमिता ।

( ७ ) श्रीसुबन्धुकविकृतवासवदत्तावृत्तिः ३२००श्लोकमिता ।

( ८ ) कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिकृतानेकार्थनाममालावृत्तिः २०००श्लोक-सङ्ख्यात्मिका ।

( ९ ) सप्तस्मरणवृत्तिः ।

( [2]१० ) संक्षिप्तकादम्बरीकथानकम् ( गूर्जरभाषायाम् ) ।

( ११ ) वसन्तराजीयशाकुनशास्त्रवृत्तिसंशोधनम् ।

खुस्फु(ष्फ)हमितिपदार्थः—

नानाग्रन्थविधातृ—वसन्तराजशकुनशास्त्रटीका[3]संशोधयितृ—पातशाहिपण्डितचेतश्चमत्कार्यष्टोत्तरशतावधानिश्रीसिद्धिचन्द्रगणीनां खुस्फु(ष्फ)हमितिबिरुदविचारो नास्थाने ।

खुस्फुहमिति पदस्थाने 'खुष्फहम्' पदप्रयोगः समीचीनः, यतः खुशूशब्द उत्तमवाचकः

१ एतावत्यपि वृत्तिः संक्षिप्तेति निरदेशि टीकाकारैः स्वयम् । अनेनानुमीयतां चतुरचेतोभिः स्वचेतसि बृहद्वृत्तिप्रमाणम् ।

२ अस्य प्रारम्भस्तु यथा—

" ॐ ॥ महोपाध्यायश्री ५ भानुचन्द्रगणिगुरुभ्यो नमः ॥
श्रीसर्वज्ञं नत्वा भक्त्या स्वीयं च सद्गुरुं स्मृत्वा ।
कादम्बर्युद्धारो विधीयते सिद्धिचन्द्रेण ॥ १ ॥

विदिशा नगरी वेत्रवती नदीनिं तरिं । त्यहां राजा शौद्रक राज्य करिं ।..."

अन्तेऽयमुल्लेखः—

" पूर्वि वृद्धभोजइं बाणपंडित पासिं कादंबरीनी कथा नवनवरससंयुक्त करावी । ते कथा घणुं कठिन ते माटइ मंदबुद्धिनइ प्रीच्छवानइ अर्थि संक्षेपइं लोकभाषाइं ये प्रबंध कीधो छि ।

पातशाहश्रीअकब्बरजल्लालदीनश्रीसूर्यसहस्रनामाध्यापक—श्रीशत्रुंजयतीर्थकरमोचनाद्यनेकसुकृतविधायक-महोपाध्याय—श्रीपभानुचंद्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदितपातशाहश्रीअकब्बरजल्लालदीनप्रदत्तखुष्फहमापराभिधानमहोपाध्यायश्रीसिद्धिचंद्रगणिविनिर्मितं संक्षिप्तकादंबरीकथानकं समाप्तं । छ ॥"

३ एतत्प्रतीत्यर्थं प्रेक्ष्यतां वसन्तराजशकुनटीकाप्रान्तस्थ उल्लेखोऽयम्—

इति श्रीमहोपाध्यायभानुचन्द्रगणिविरचितायां तच्छिष्यमहोपाध्यायश्रीसिद्धिचन्द्रगणिना विचार्य शोधितायां वसन्तराजशकुनटीकायां विंशतिको वर्गः ।"

पारसीयभाषायां वर्तते, फहम्‌शब्दो बुद्धिवाचकोऽरब्बीभाषायां च विद्यते। अतः खुष्फह्‌मित्यनेन सुबुद्धिरित्यर्थः।

श्रीसिद्धिचन्द्रगणीनां भावचन्द्रा गुरुभ्रातर इति ज्ञायते भाण्डारकर-ओरियेन्ट्‌ल-इन्स्टिट्यूट्‌संज्ञसंस्थोपलब्धायाः श्रीशोभनस्तुतिवृत्तिप्रतेः प्रान्तगतनिम्नलिखितपद्येन—

" निरतीचारचारित्राः, सौजन्यगुणशालिनः।
भ्रातरो भावचन्द्राह्वा, आद्यादर्शमलीलिखन्॥ "

एतेषां श्रीलब्धिचन्द्राः श्रीसुमतिचन्द्रा अपि गुरुबन्धव इति ज्ञायते निम्नलिखितोल्लेखावलोकनेन—

( १ )*३७गाथाप्रमाणकस्य नवखण्डपार्श्वनाथस्तवनस्य प्रतेः प्रान्ते—

" वीरपरंपरहीरपटोधर सेन जश सबल विजयसेनसूरि
तास पट दीपतो वादिमद जीपतो गच्छपति श्रीविजयदेवसूरि आ.
सकलवाचकसभाभामिनीभूषणं वाचक श्रीगुरुभानुचंदा
तास चरणांबुजचंचरीक मुद भरी प्रणमति विबुधवर लब्धिचंदा "

( २ )*" इति सुरसुंदरीचोपइ संपूर्ण सं. १६७४ वर्ष फागुणसुदि ७ दिने मंगलवारे महोपाध्यायश्रीभानुचंद्रगणिशिष्यपंडितलब्धिचंद्रगणिना लिखिता। साधवीश्रीरूपलक्ष्मीशिष्याणीसाधवीगुणलखमीवाचनाय समर्पिता"

*ग्रन्थसूचीपत्रशीर्षके—

"महोपाध्यायश्रीभानुचंद्रगणितत्‌शिष्यपं.सुमतिचन्द्रग.शिष्यग.आणंदचंद्रस्य पुस्तकस्य टीप लिख्यते "

श्रीसिद्धिचन्द्रगणीनां शिष्यपरम्परा—

महोपाध्यायश्रीसिद्धिचन्द्राणां सुबुद्धिचन्द्रनामानो विनेया इत्यवसीयते पुण्यपत्तनपुरस्थभाण्डारकरप्राच्यशीलदूतप्रतिप्रान्ते निम्नलिखितोल्लेखदर्शनात्—

" पातशाहिश्रीअकब्बर....महोपाध्यायश्रीभानुचन्द्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदितपातिशाहश्रीअकब्बरतथापातिशाहजिहांगीरप्रदत्तखु(खु)ष्फहमूनादिरञ्जमान( रुञ्जमान ? )-द्वितीयाभिधानमहोपाध्यायश्री५सिद्धिचन्द्रग[ णि ]शिष्येण मुनिसुबुद्धिचन्द्रेण लिखितं काव्यमेतत् संवत् १७०१वर्षे आश्विन वदि द्वितीयायां श्री'कर्पटवाणिज्य'नगरे"

एतेषां कियन्तोऽन्तेवासिन इति नावगम्यते साधनाभावात्, परन्तु लींबडीभाण्डागारसत्कपद्मसागरीकथाप्रतिप्रान्तस्थनिम्नलिखितोल्लेखगतासिद्धिचन्द्राः प्रस्तुतास्तर्हि तत्र तेषां शिष्यप्रशिष्यादिनामानि ज्ञायन्ते यथा—

" संवत् १७५९ वर्षे आसो शुदि ९ दिने रविवारे 'समनी।' ग्राममध्ये लिखिता महोपाध्याय-श्रीश्रीश्रीश्रीश्री १०८ श्रीसिद्धिचन्द्रगणिशिष्यपण्डितश्री ११ श्रीअमीचन्द्रगणिशिष्यपण्डितश्री ५ श्रीगुणचन्द्रगणितत्शि( च्छि )ष्यगणिगोविन्दचन्द्रेण ल( लिपी )कृतं स्ववाचनार्थम् ॥ शुभं भवतु ॥ श्री "

श्रीभानुचन्द्रगणिचरित्रम्—

अथोपक्रम्यते श्रीअकब्बरजल्ला(ला)लुद्दीन-सूर्यसहस्रनामाध्यापक—श्रीशत्रुञ्जयतीर्थकरमोचन—गोवधनिवर्तनाद्यनेकसुकृतविनिर्मापक--महामहोपाध्याय--पाठकपुङ्गव—श्रीभानुचन्द्रगणिचरितदिग्दर्शनम् । श्रीगूर्जरदेशान्तगतसिद्धपुरवास्तव्यरामजीवणिजो रमादे भार्याऽऽसीत् । तयोर्दम्पत्यो-रङ्गजी—भाणजीनामानौ द्वौ पुत्रौ आस्ताम् । तयोः भाणजीनामा पुत्रो यदा सप्तवर्षीयोऽभवत् तदा शालायामध्ययनार्थं प्रेषितः । वर्षत्रितये विद्याभ्यासं संपूर्णीकृतवान् । श्रीविजयदानसूरिवरा-देशाद् ये साक्षरचक्रचूडामणिश्रीधर्मसागरोपाध्यायकृत' कुमुतिकुद्दाल 'नामकग्रन्थो जलशरणमकारि तैः श्रीसूरचन्द्रपंन्यासानां समागमेन वैराग्यरङ्गरङ्गितेन भ्रातृयमलेनानेन दीक्षा जगृहे । तदा भाणजीशिष्यस्य भानुचन्द्रेति नाम्ना प्रसिद्धिरजनि । अन्यान्यग्रन्थाभ्यासेन पंन्यासपदं प्राप्तं श्रीभानुचन्द्रमुनिवरैः । श्रीअकब्बरभूपालानुज्ञया अष्टोत्तरशतावधान—कृपारसकोशप्रणयितृश्रीशान्तिचन्द्रोपाध्यायेष्वन्यत्र विहरमाणेषु सार्धसहस्रद्वयमुनिनायकश्रीहीरविजयसूरिभिः पातिशाहसकाशं प्रेषिता इमे सुगृहीतनामधेयाः श्रीभानुचन्द्रगणयः । अनवद्यविद्याविशारदैस्तै-रहारि हृदयं निजचातुरीप्रभावेण पातिशाहस्य अब्बुलफजलेतिनाम्नः प्रधानप्रधानस्य च ।

एकदा काश्मीरं प्रति प्रयाणे कृते पातशाहिना साकं इमेऽपि मुनिवराः चेलुः । प्रतिदिनं सूर्यस्य सहस्रं नामानि शुश्राव सम्राट् तन्मुखारविन्देन । अनेन तेषां सूर्यसहस्रनामाध्यापकरूपा प्रसिद्धि-र्जाता । यथाऽवसरं श्रीशत्रुञ्जयतीर्थकरमोचनकारि फुरमानं लेखापितं भूपतेः । ततो लाभपुरे ( लाहोरपुर्यां ) समागते नृपतौ तेन सार्धमाजग्मुः श्रीभानुचन्द्राः पादविहारेण ।

कियत्सु दिनेषु गच्छत्सु एतत्साधुसत्तमविद्याप्रभावचमत्कृतचेता नरपतिरेतान् श्रीहीरविजय-सूरिवरपट्टधारिरूपेण विभूषयितुमैच्छत् । परन्तु सेच्छा न सफलीकृता सूरिवरैः । तदा महासमारोहपूर्वकं तेन प्रादायि तेभ्य उपाध्यायपदवी ।

एभिरुपाध्यायैर्न केवलमध्यापितः श्रीअकब्बरपृथ्वीपतिः, परन्तु तत्पुत्रपौत्रा अपि । अपरञ्च

---

१ एतेषां जीवनवृत्तान्तरूपरेखाऽऽलेखिता शास्त्रविशारद—साहित्यधर्मोद्धारक—श्रीविजयधर्मसूरिशिष्यरत्न-व्याख्यानवाचस्पतिमुनिराजश्रीविद्याविजयैः ' सूरीश्वर अने सम्राट् ' संज्ञकाया निजकृतेः षष्ठे प्रकरणे ।

२ एतेषां समस्तानां समस्तपातकानां च वाचंयमानां नामधेयानि नोपलभ्यन्ते कुत्रचिदिति खाट्क्रियते मे हृदयम् । ३ सूर्यस्य नामसहस्रं समस्ति श्रीस्कन्दपुराणे इति श्रीसमयसुन्दरोपाध्याया अर्थरत्नावलीप्रमुखनानाग्रन्थविधातारः । ४ स्वनाममुद्राङ्कितलेखः ।

श्रीअकब्बरसभासद्बुद्धिजदर्पहरैरेभिः मालपुरीयवीजामतयो वादेन पराजिताः । तत्र तदुपदेशेन महान् प्रासादो निरमायि श्राद्धगणेन यत्र प्रतिष्ठा स्वयमकारि । ततो मारवाडदेशमागम्य जालोर-नगरे चातुर्मासं कृतवन्तो भवन्त एकविंशतिजनान् दीक्षामर्पयामासुः । जाता भवतां समग्रशिष्य-सङ्ख्या तु अशीतिः[1] । तेषु शिष्येषु त्रयोदश पंन्यासपदधारिण आसन् । तत्र श्रीसिद्धिचन्द्र-गणयो मुख्या इति प्रतिभाति । पण्डितश्रीदेवचन्द्रा अपि तेषां विनेया यद्वृत्तान्तो विचारयिष्यतेऽन्ते । श्रीऋद्धिचन्द्रनामानो मुनिवरा अपि तेषामन्तेवासिन इति ऋपिमण्डलमूलप्रतिप्रान्तेन निम्नलिखितेनोल्लेखेनावगम्यते—

“संवत् १७०५वर्षे मार्गशीर्षासितपञ्चम्यां शनिवारे । भट्टारकपुरन्दरभट्टारकश्री११(५?)श्री-विजयदेवसूरीश्वरचरणसेविमुनिभक्तिविजयपठनकृते ।। महोपाध्यायश्री१७(६?)श्रीसकलचन्द्र-गणितच्छिष्यपरवादिदलभञ्जनपण्डितश्री १७श्रीसूरचन्द्रगणितच्छिष्यश्रीशत्रुञ्जयकरमोचनाद्यनेक-सुकृतकारिमहोपाध्यायश्री१७( १८ )श्रीभानुचन्द्रगणितच्छिष्यसकलपरवादिगजकेशरिपण्डितश्री-(१)९श्रीऋद्धिचन्द्रगणिचरणसेविगणिललितचन्द्रेण लिखितम् । श्रीवीरमपुरे ”

अपरञ्च गवेषणीया श्रीऋद्धिचन्द्रनिर्मितमृगाङ्कचरित्रस्य[2] निम्नलिखिता प्रशस्तिः—

“श्रीमत्तपगणगगने, गगनमणिर्विजयसेनसूरीशः ।
तस्यानुक्रमपट्टे, गुरुर्विजयदेवसूरिवराः ।। २८४ ।। —आर्या
तद्गच्छे सततं जयन्तु सुखदाः श्रीभानुचन्द्राश्चिरं
षण्मासाभयदायकाः क्षितिपतिं ‘दिल्ली’पतिं पेशलम् ।
सद्वाग्भिः प्रतिबोध्य शास्त्रजलधेः पारङ्गता भूतले
तीर्थेशाकरकारका गतमदाः प्राग्भारपुण्योत्कराः ।। २८५ ।। —शार्दूल०
तस्य वर्यपदाम्भोजे, शिलीमुखानुकारिणा ।
सपर्यासक्तचित्तेन, ऋद्धिचन्द्रेण निर्मितम् ।। २८६ ।। —अनु०
इदं विश्वं प्रसिद्धस्य, भव्याम्भोरुहभास्वतः ।
सच्चरित्रं मृगाङ्कस्य, श्लोकाभ्यसनहेतवे ।। २८७ ।। —युग्मम्
पण्डितव्रातकोटीरै—रुदयचन्द्रधीधनैः ।
शुद्धीकृतमिदं सम्यक्, चरित्रं चित्तशान्तिकृत् ।। २८८ ।। ” —अनु०

एवं सत्यपि ऋद्धिचन्द्राः श्रीभानुचन्द्राणां शिष्या न वेति सन्देहास्पदं भवति श्रेष्ठिप्रेम-चन्द्ररतनजीभाण्डागारसत्कनवतत्त्वप्रकरणप्रतिप्रान्तेन निम्नलिखितोल्लेखावलोकनेन—

---

१ अशीतेर्मुनिमहाशयानां नामधेयानि न दृष्टिपथं श्रवणगोचरतां वा समागतानि ।
२ अस्य प्रसिद्धिकारिका श्रीआत्मानन्दसंसद् ।

" महोपाध्यायश्रीभानुचन्द्रगणिशिष्यपं.श्रीउदयचन्द्रगणिपं.श्रीऋद्धिचन्द्रगणि ॥ लिपीकृतं ग०श्रीसुखचन्द्रेण ॥ प्रवर्तिनीलीललक्ष्मीपठनकृते ।"

श्रीभानुचन्द्रगणीनां छात्राः श्रीहीरचन्द्रगणय इति गम्यते पादलिप्त( पालीताणा )-पुरस्थाणंदजीकल्याणजीभाण्डागारसत्कोपासकदशाङ्गप्रतिप्रान्तेन निम्नलिखितोल्लेखेन—

" संवत् १७२२वर्षे फागुण शुदि ५ गुरौ श्रीशत्रुञ्जयकरमोचनाद्यनेकसुकृतकारकमहोपाध्यायश्री५भानुचन्द्रगणितच्छिष्योपाध्यायश्री५श्रीहीरचन्द्रगणितच्छिष्यगणिरविचन्द्रेण लिखितेयं प्रति(ः) श्रीस्तंभतीर्थ महानगरे । "

श्रीभानुचन्द्राणां श्रीसोमचन्द्रगणयोऽपि विनेया इति ज्ञायते प्रो०पिटर्सन्‌चतुर्थरिपॉर्ट-( पृ० ११५ )गतनिम्नलिखितोल्लेखावलोकनेन—

" इति श्रीजिनदत्तसूरिविरचिते.........सम्पूर्णोऽयं विवेकविलासः ॥ संवत् १६८५ वर्षे फा[illegible]से शुक्लपक्षे द्वितीयातिथौ सोमवासरे मीनलग्ने वहमाने शुभवेलायां भट्टारकश्री१९-श्री[illegible]सूरिराज्ये श्रीशत्रुंजयकरमोचनाद्यनेकशुभकृतकारिश्रीश्रीश्रीश्रीश्रीभानुचन्द्रगणि-तच्छिष्यसोमचंद्रगणिनाऽलेखि । "

श्रीभानुचन्द्रगणीनां सन्तानीयादीनां नामानि प्रकाशयति श्रीगजसारमुनिराजप्रणीतस्य स्वोपज्ञावचूर्णिविभूषितस्य दण्डकप्रकरणस्य रूपचन्द्रमुनिकृतवृत्तिगता निम्नलिखिता प्रशस्तिः—

" श्रीहीरविजयसूरी–श्वरा बभूवुर्जगत्त्रयीविदिताः ।
तद्वाचका महोदय–राजः श्रीभानुचन्द्राह्वाः ॥ १ ॥ –आर्या०
जयन्तु ते वाचकभानुचन्द्रा, अभ्यस्तसद्वाङ्मयवीततन्द्राः ।
ये मानसे हंसतया बभूवु–रकब्बरक्षोणिपतेस्तु भूतेः ॥ २ ॥ –उप०
श्रीभानुचन्द्रामलपट्टचारु–प्रासादशृङ्गार्जुनकुम्भकल्पाः ।
ते सन्तु चारूदयचन्द्रसन्तः, सुखापनीः ( य नः ? ) सूरिकलालसन्तः ॥ ३ ॥ –उप०
सर्वार्थसार्थाकृतिकामधेन्वे, यस्य प्रसादाद् गुणचक्रधाम्नः ।
षट्त्रिंशिकायाः किल रूपचन्द्रो, वृत्तिं चकारोदयचन्द्रशिष्यः ॥ ४ ॥ –इन्द्र०
संवत्शरर्ष्यङ्गनिशेश( १६७५ )वर्षे, ज्येष्ठस्य कृष्णेतरचारुपक्षे ।
( षष्ठ्यां तिथौ वाक्पतिवर्यवारे, स्वस्यावबोधाय विनिर्मितेयम् ॥ ५ ॥ –इन्द्र०

१ भृगुकच्छीयश्रेष्ठिवर्यअनूपचन्द्रसत्कायामेकस्यां प्रत्यां निम्नलिखितोल्लेखेन ज्ञायते यदुत एतेषां श्रीविशालचन्द्राभिधा विनेयाः—

"श्रीशत्रुंजयकरमोचनादिसुकृतकारिमहोपाध्यायश्रीश्रीश्रीभानुचंद्रगणि-पंडितश्रीउदयचंद्रगणि-पंडितश्रीरूपचन्द्रगणि-तच्छिष्यप्रवरगणिश्रीविशालचंद्रेण लिखितं श्रीदेवकपट्टणमंदिरे वैशाख वदि २ दिने । "

ग्रन्थाग्रगणितं सर्व-सङ्ख्ययाऽत्र विनिश्चितम् ।
षट्त्रिंशदधिकं पञ्च, शतं जातमनुष्टुभाम् ॥ ६ ॥–अनु० ) "

अपरञ्च भृगुकच्छीयश्रेष्ठिवर्यअनूपचन्द्रमलुकचन्द्रभाण्डागरस्थतारङ्गमण्डनअजितनाथजिनस्तवनप्रान्तप्रतिगतेन निम्नलिखितोल्लेखेनापि गम्यते सन्तानीयादि—

"संवत् १८७४वर्षे वैशाखसुदि १०दिने महोपाध्यायश्रीश्रीश्रीशत्रुञ्जयकरमोचकश्रीश्रीवाचकभानुचन्द्र-तच्छिष्यश्रीभावचन्द्रगणि-तच्छिष्यपं. श्रीकनकचन्द्रगणि-तच्छिष्यश्रीपं.-श्रीकपूरचन्द्रगणि-तच्छिष्यपं.श्रीमयाचन्द्रगणि-तच्छिष्यपं.श्रीभक्तिचन्द्रगणि-तच्छिष्यपं.श्री-उदयचन्द्रगणि-तच्छिष्यपं.श्रीउत्तमचन्द्रगणि-तच्छिष्यशिवचन्द्रलिखितं राधनपुरे तपागच्छे श्रीश्रीश्रीभट्टारक१०८श्रीशिरोमणिभ०श्रीश्रीश्रीविजयजिनेन्द्रसूरीश्वरराज्ये "

## श्रीभानुचन्द्रगणिकृतिकलापः

१ कादम्बरीपूर्वार्द्धटीका।
२ वसन्तराजकृतशकुनशास्त्रटीका।

---

१ प्रारम्भिकपद्यानि तु यथा—

"स्वस्ति श्रीसदनं यदीयवदनं वेधा विधायाद्भुतं
वीक्ष्याश्चर्यमवाप सस्पृहतया सन्मार्जयन् वाससा ।
क्षिप्तं तच्च तथाविधैरनुगुणैर्वैषम्यमापादितं
मन्ये सम्प्रति लक्ष्यते घनपथे शीतद्युतेर्मण्डलम् ॥ १ ॥ –शार्दूल०
आनम्रत्रिदशेन्द्रमौलिमुकुटप्रोद्दामरत्नांशुभि—
र्यत्पादद्वितयं विचित्ररचनाभङ्गीभिरङ्गीकृतम् ।
दिङ्नागैश्च यदीयकीर्तिरतुला कर्णावतंसीकृता
स श्रीवीरविभुर्ददातु भवतां शश्वन्मनोवाञ्छितम् ॥ २ ॥ –शार्दूल०
यस्त्रैलोक्यरमाभिरस्पृहतया सानन्दमालोकित-
स्तीक्ष्णैः स्वर्गिवधूकटाक्षविशिखैर्यो लक्ष्यतां नागमत् ।
ज्ञानैः स्वात्मसमुत्थितैश्च निखिलान् भावान् समावेदयन्
स श्रीमान् भुवनावतंसकमणिः पायादपायात् प्रभुः ॥ ३ ॥–शार्दूल०
प्रादुर्भूता यदङ्गात् प्रसरति भुवने भारती भव्यरूपा
वक्तुं यत्सृष्टिजातान्न हि विभुरविभुः सद्विशेषानशेषान् ।
यद्वक्त्रे स्फीतिभावं दधदहिमरुचां न्यकृतिं निर्मिमीते
ज्ञानाद्वैतप्रकाशः स भवतु भवतां भूतये नाभिजातः ॥ ४ ॥ –स्रग्०
नमः सुकृतसन्दोह–शालिने परमात्मने ।
शम्भवे सर्ववेदार्थ–वेदिने भवभेदिने ॥ ५ ॥ –अनु०

३ सारस्वतव्याकरणवृत्तिः ।
४ [1]विवेकविलासटीका १६७१तमे वैक्रमीयाब्दे रचिता ।

---

जाग्रज्ज्योतिरकब्बरक्षितिपतेरभ्यर्णमातस्थिवान्
सिद्धाद्रेः करमोचनादिसुकृतं योऽकारयच्छाहिना ।
जीवानाभयप्रदानमधिकं सर्वत्र देशे स्फुटः
श्रीमद्वाचकपुङ्गवः स जयताच्छ्रीभानुचन्द्राभिधः ॥ ६ ॥ –शार्दूल०

.....................................................................................................

यस्यां विभान्ति धवलाः, क्षीरोदस्फाटिकालयाः । अक्षताख्यमहाराज–यशसां निचया इव ॥ ११ ॥
यस्य यद्द्विषतां चैव, कीर्त्यकीर्ती सितासिते । मिलन्त्यौ दिक्षु चक्राते, गङ्गायमुनयोर्भ्रमम् ॥ १२ ॥
रिपुदुर्यशसाऽस्पृष्टं, यद्यशो विश्वपावनम् । जलाशयेषु स्नातीव, शुद्ध्यै हंसावलिच्छलात् ॥ १३ ॥
कन्दमूलफलाहारा, वसानास्तारवीं त्वचम् । भूधूल्युद्धूलिता रेजु–र्यद्द्विषस्तापसा इव ॥ १४ ॥
स्पर्धिष्णुर्यत्प्रतापाग्नि–र्वाडवाग्निजिगीषया । विद्रुमद्रुमदम्भेन, विशतीव पयोनिधौ ॥ १५ ॥
[illegible] रचयन् भ्रान्ति–मभ्रान्तं सोमसूर्ययोः । व्यधान्नीराजनां नित्यं, यस्य कीर्तिप्रतापयोः ॥ १६ ॥
[illegible]गपि स्वर्गं, सङ्ख्यातीतेषु शत्रुषु । रणे यच्छन् कृपाणोऽस्य, यात्राहीनो बभूव न ॥ १७ ॥"

[1] विवेकविलासटीकायामवतरणरूपाः श्लोका इमे—

" आनम्रकम्रामरपूर्वदेवं, श्रीमारुदेवं प्रणमामि देवम् ।
व्यनक्ति निःशेषपदार्थसार्थान्, यदीयगीरद्भुतदीपिकेव ॥ १ ॥ –उप०
शान्तेर्निशान्तं शिवतातिरस्तु, श्रीशान्तिनाथो जगदेकनाथः ।
कुरङ्गलक्ष्माऽपि जिनाधिराजो, जज्ञे कदाचिन्न कुरङ्गभृद् यः ॥ २ ॥ –"
अरिष्टनेमिर्भगवानरिष्ट–सङ्घातनिर्घातकृदस्तु वः सः ।
सुपर्वशाखीव समीहितार्थं, करोति यत्पादयुगप्रणामः ॥ ३ ॥ –"
विघ्नौघविध्वंसनसावधानं, तं पार्श्वनामानमधीशमीडे ।
पद्माकरोल्लासकरौ( रो ) नराणां, यन्नाममन्त्रोऽजनि मित्रतुल्यः ॥ ४ ॥ –इन्द्र०
वीरं निजे चेतसि दध्महे तं, सुपर्वपृथ्वीधरशृङ्गधीरम् ।
गवां विलासैर्भुवनप्रबोधं, चकार यो भानुरिवोरुतेजाः ॥ ५ ॥ –उप०
श्रीमत्तपागणगणाधिपलब्धबोधि—
दार्नर्षिरित्यजनि पण्डितवृन्दवर्यः ।
तस्यान्तिषत्सकलवाचकमौलिमौलिः
श्रीवाचकः सकलचन्द्र इति प्रसिद्धः ॥ ६ ॥ –वसन्त०
शिष्यस्तदीयोऽजनि सूरचन्द्रा–भिधः सुधीः कोविदवृन्दचन्द्रः ।
नवीनभास्वत्कवितैककान्ता–मानवतीत्यद्भुतकीर्तिकान्तः ॥ ७ ॥ –उप०
सिद्धाद्रेः करमोचनादिसुकृतश्रेणीपवित्रीकृत—
स्वान्तः शाहिसुदत्तवाचकपदः श्रीभानुचन्द्राभिधः ।
तच्छिष्यः कुरुते विवेककलितो ग्रन्थो विलासाभिधो
यस्तस्याभिमतार्थसार्थरुचिरां वृत्तिं सतां सम्मताम् ॥ ८ ॥ –शार्दूल०

| | |
|---|---|
| ५ [1]शोभनस्तुतिटीका । | ७ [2]सूर्यसहस्रनाममाला । |
| ६ [2]भानुचन्द्रनाममाला । | ८ [3]रत्नपालकथानकम् । |

# श्रीसौभाग्यसागरसूरीणां परिचयः ।

तृतीयटीकाविरचयितारः श्रीमन्तः सौभाग्यसागराः श्रीआनन्दविमलसूरीश्वरसन्तानीय-श्रीज्ञानविमलसूरीणां पट्टधराः । तत्पट्टावलीलेशः, स्तम्भतीर्थे वृत्तिविरचना, श्रीज्ञानविमल-सूरिराजद्वारा तद्वृत्तेश्च १७७८ तमे वैक्रमीयाब्दे संशोधनं निम्नलिखितप्रशस्तितः स्फुटमवगम्यन्ते—

---

एतट्टीकाप्रथमोल्लासप्रान्तस्थ उल्लेखश्च यथा—

"इति श्रीशत्रुञ्जयकरमोचनादिसुकृतकारिमहोपाध्यायश्री**भानुचन्द्र**गणिविरचितायां **विवेकविलास**टीकायां प्रथमोल्लासः ।"

१ जैनग्रन्थावल्यां २९३तमे पृष्ठे उल्लेखो वर्तते यदस्या हस्तलिखितप्रतिः अमदावादस्थ[illegible]नाम-भाण्डागारे समस्ति, परन्तु प्रामादिकोऽयमिति प्रतिभाति तत्र पत्रलेखनपृच्छनतः ।

२ अद्याप्यप्रसिद्धायाः श्री**भानुचन्द्रनाममालायाः** प्रारम्भस्तु यथा—

श्रीसरस्वत्यै नमः ।

" स्वस्ति श्रीत्रिजगज्जन्तु—जातुजीवातुसन्निभः ।
शिवतातिः सतां भूया—**च्छान्ति**नाथो जिनेश्वरः ॥ १ ॥ —अनु०
तवा(नवी?)नकविताकान्ता—भिमानव्रतशालिनः ।
स्वगुरोः **सूरचन्द्रस्य**, प्रणम्य चरणाम्बुजम् ॥ २ ॥ –,,
**भावचन्द्रा**दिशिष्याणां, सम्यग्व्युत्पत्तिहेतवे ।
नामसङ्ग्रहनामानि, विलिख्यन्ते पृथक् पृथक् ॥ ३ ॥ –,,

प्रथमकाण्डाऽन्तेऽयमुल्लेखः—

"इति शत्रुञ्जयकरमोचनादिसुकृतकारिमहोपाध्यायश्री**भानुचन्द्र**गणिविरचिते विविक्तनामसङ्ग्रहे देवाधिदेवकाण्डः प्रथमः समाप्तः ।"

क्वचिद्गूर्जरागिरामिश्रिते ग्रन्थेऽस्मिन् षट् काण्डाः; ते १६९८ तमे वैक्रमीयेऽब्दे मार्गशीर्षमासि शुक्लपक्षे पञ्चम्यां तिथौ श्यामपुरीमध्ये लिखितायाः ११३पत्रात्मिकाया अमदावादस्थप्रत्या आधारेण यथा—

| | |
|---|---|
| १ देवाधिदेव-काण्डः | ४ तिर्यक्-काण्डः |
| २ देव— ,, | ५ नारक— ,, |
| ३ मनुष्य— ,, | ६ सामान्य— ,, |

३ इदमवसीयते यतिश्रीविवेकविजयसत्कघुमरावालाउपाश्रयगतप्रतिप्रान्तस्थनिम्नलिखितोल्लेखात्—

" उपाध्यायश्री**भानुचन्द्र**गणिभिरुदकदानोपरिकृतं **रत्नपालकथानकं** समाप्तम् । संवत्१६६२वर्षे ज्येष्ठसुदि १ गुरौ दिने मालपुरनगरतः मु० **रत्ना**लिखितं चिरदौलतीयापठनार्थम् ।"

"श्रीमत्तपागच्छसुधीर्वितन्द्रः, श्रीहीरविजयाभिधसूरिचन्द्रः।
यदुक्तिमाकर्ण्य दयार्द्रचेता, बभूव साहिश्रीअकब्बराख्यः ॥ १ ॥

जेजीयाख्यकरो व्यमोचनयतं स्वाज्ञां चिरं ग्राहिता-
ऽनेके निर्वृतयो क्षतं च गुरु संशत्रुञ्जयाख्यं परम्।
येन द्वादश वासराश्च विहिताः सत्त्वाभयोत्सर्जनात्
शुद्धाशुद्धगुणैरनेकविहितं धर्मादिकृत्यं मुदा ॥ २ ॥ -शार्दूल०

तत्पट्टे विजयादिसेनसुगुरुर्जातः सुधादीधिति-
स्तत्पट्टोदयभानुभानुरभवद् देवेशवन्द्यक्रमः।
श्रीमच्छ्रीविजयादिदेवसुगुरुः सूरीश्वरः शङ्कर-
स्तत्पट्टे विजयप्रभाख्यसुगुरुः सूरीशसेन( शीत ? )द्युतिः ॥ ३ ॥ -,,

तत्पट्टेऽजनि शीतरश्मिसदृशः संविज्ञचूडामणिः
श्रीज्ञानाद् विमलाभिधानसुगुरुः सूरीशवास्तोष्पतिः।
तत्पट्टाम्बरभास्वदर्कसदृशोऽनूचानवर्योपमो
सौभाग्यादिमसागराख्यसुगुरुस्तेनेयमाविष्कृता ॥ ४ ॥ -,,

रम्या शोभनपण्डितेन विहिता श्रीमज्जिनानां स्तुति-
स्तद्वृत्तिर्विहिता सुबोधकलिता प्रेक्षावतां ज्ञप्तये।
श्री[1]मानादिमसागराः समभवन् पूर्वं बुधा विश्रुता
एकैकस्य पदस्य युक्तिशतशो व्याख्या कृताऽनेकशः ॥ ५ ॥ -,,

सौभाग्यसूरिणा चेयं, कृता वृत्तिर्मनोरमा।
बन्दिरे स्तम्भतीर्थेऽस्मिन्, श्रीमत्पार्श्वप्रसादतः ॥ ६ ॥ -अनु०

श्रीज्ञानविमलसूरीश्वरेण संशोधिता चेयम्।
[2]वसुमुनिमुनिविधु( १७७८ )वर्षे माघोज्ज्वलसप्तमीदिवसे ॥ ७ ॥ -आर्या

---

१ १६०६तमे वैक्रमीयाब्दे श्रीउदयधर्मगणिभिः शतार्थी व्यरचीति जैनग्रन्थावल्यां ( पृ० ३४४ )। …त्रेदमपि निवेदितं यदुत एतद्विवरणमकारि श्रीमानसागरैः। इमान् मुनीश्वरानाश्रित्यायमुल्लेखो न वेति विचार्यताम्।

२ अनेन रचनासमयेनावसीयते यदुत जैनग्रन्थावली( पृ० ३१३ )गतोल्लेखानुसारेण १६५४ तमे वैक्रमीये …र्षे श्रीमहेश्वरसूरिप्रणीतशब्दभेदनाममालावृत्तिविधातारः श्रीज्ञानविमलमुनीश्वराः ( ये योद्धपुरे १६६१- …मे वैक्रमीयाब्दे श्रीहेमचन्द्रसूरिवर्यकृतनाममालाया दुर्गपदप्रबोधसञ्ज्ञकटीकारचयितॄणां श्रीवल्लभमुनीश्वराणां …रुवर्यास्ते ) प्रस्तुतश्रीसौभाग्यसागरगुरुवरेभ्यो भिन्नाः।

श्रीज्ञानविजयशिष्यश्रीनयविजयमुनिवरैः संशोधितस्य १७४५प्रमिते वर्षे लिखितस्य च श्रीपालचरित्रस्य प्रणेतारः श्रीविनयविमलानां प्रशिष्याः श्रीधीरविमलानां तु विनेयाः नयविमलेत्यपरनामधेयाः किं सौभाग्यसागरसूरीणां गुरुवर्या न वेति जिज्ञासा-समाधानार्थं विचार्यन्ते श्रीपालचरित्रप्रशस्तिगतानि निम्नलिखितपद्यानि—

" जीयात् स्वच्छ'तपा'ख्यदुग्धजलधिप्रोल्लासने पार्वणः
श्रीमत्श्रीविजयप्रभाख्यसुगुरुः सूरीशशीतद्युतिः ।
चित्रं मित्रहितः सदा कुवलयोल्लासं दधानः सतां
पक्षी नो जडसूः कृतान्तजनको दोषाकरो नो कदा ॥ १ ॥ —शार्दूल०

तद्धस्तदत्तोत्कटपट्टपूर्वा–चलेषु भास्वद्द्युमणीसमानः ।
जयत्यनूचानसुचक्रवर्ती, हीरोद्भवोऽयं [1]विजयादिरत्नः ॥ २ ॥ —उपजातिः

तद्गच्छे कविराजिकीर्तिवनिताभाले ललामायितः
श्रीविनयाद् विमलाभिधानसुधियः स्फूर्तिं परां बिभ्रति ।
यद्दृष्टे जनता मनस्सु निहिता धन्यादयः साधवः
साक्षात् संस्मरणस्य भावमखिला दृष्टा इवाभासते ॥ ३ ॥ —शार्दूल०

तद्रूपोऽस्ति गुणैश्च धीरविमलाह्वानो निदानं सदा-
चारस्फारशुभस्य पुद्गलवतां यद्दर्शनं साम्प्रतम् ।
चक्रे तच्छिशुना नयादिविमलेनेदं चरित्रं महत्
श्रीश्रीपालनरेशितुः पुनरिदं हृद्यं सुगद्यान्वितम् ॥ ४ ॥ —शार्दूल०

पूर्वप्राकृतगाथा–बन्धचरित्रात् ततोऽपि विज्ञाय ।
श्रीविनयविजयवाचक–कृतरासकतश्च सम्बन्धम् ॥ ५ ॥ —आर्या

उपजीव्य विहितमेतद्, व्याख्यानकृते च सभ्यजनतानाम् ।
तत् कर्तव्यं शुद्धं, सद्भिरिदं मैत्र्यमाधाय ॥ ६ ॥ — आर्या

श्रीज्ञानविजयसुकवेः, शिष्याः सन्न्यायबुद्धिपारीणाः ।
प्राज्ञा नयादिविजया–स्तेनेदं शोधितं सम्यक् ॥ ७ ॥ —आर्या

प्रथमादर्शे लिखितं, शरवेदमुनीन्दु( १७४५ )संमिते वर्षे ।
राधासिताद्वितीया–दिवसे श्री'उन्नता'ख्यपुरे ॥ ८ ॥ —आर्या

---

१ पाणिनीयद्व्याश्रयकर्ता श्रीविजयरत्नशिष्य इति जैनग्रन्थावल्यां ( पृ० ३३२ ), परन्तु एतद्ग्रन्थगुम्फिता अस्य विजयरत्नमुनीश्वरस्यान्तेवासी अन्यस्य वा इति न निश्चीयते साधनाभावात् ।

श्रीविजयप्रभसूरी-श्वरगुरुचरणप्रसादतो भव्याः ।
एतच्छ्रवणानुभावाद्, भवन्तु सन्मङ्गलालीनाः ॥ ९ ॥ —आर्या

एतद्वाचनलिखन-श्रवणात् पुण्यं समर्ज्जयन्तु जनाः ।
आचाम्लादितपःकर-णादधिकं च तद्भक्त्या ॥ १० ॥ —आर्या

सद्भिरहं नो हास्यो, दृष्ट्वा रचनां विसंस्थुलामस्य ।
उद्योगः कर्तव्यः, सद्गुणकथने वदन्ति ते एव ॥ ११ ॥ " —गीतिः

अनेनावगम्यते यदुत इमे श्रीज्ञानविमलसूरयः प्रस्तुतश्रीसौभाग्यसागरसूरीणां गुरवः । किञ्च इमे विद्यार्थिनः कविश्रीअमृतविमल-मेरुविमलयोरिति ज्ञायते 'वराही'नगरे १७३९नमेऽब्दे एभिः श्रीयुतहेमराजादिप्रार्थनया विरचितस्य पञ्चशतकश्लोकप्रमाणकस्य नवतत्त्ववार्तिकस्य निम्नलिखितप्रशस्तितः—

"श्रीविजप्रभसूरी-श्वरराज्ये विजयरत्नसाम्राज्ये ।
श्रीजिनमततत्सुमनः—पथप्रभातैकतपनाभे ॥ १ ॥ —आर्या

तद्गच्छसुविहितव्रति-गुणमणिमाणिक्यविनयविमलकविः ।
संयमधुराधुरीण-स्तच्छिष्यो धीरविमलकविः ॥ २ ॥ —,,

तच्छिष्यो नयविमलो, लिलेख 'नवतत्त्ववार्तिकं' सम्यक् ।
कविअमृतविमल-मेरु-विमलाभिधयोश्च विद्यार्थी ॥ ३ ॥—,,

यत्र सूत्रार्थसङ्ख्या, अनुष्टुभां पञ्चशतकमिह जातम् ।
प्राकृतभाषाबद्धं, सुगमं हृदयङ्गमं लोके ॥ ४ ॥ —,,

सज्जनकविभिः शोध्यं, धार्यं हृदयेऽपि हर्षमाधाय ।
बालविलासोदितमिव, जनकैराह्लादतस्तद्वत् ॥ ५ ॥ —,,

निधिगुणमुनीन्दु( १७३९ )माने, वर्षे हर्षेण 'वराही'नगरे ।
श्रीधर्मनाथजिनपति-प्रसादतः सफलमिदमाप्तम् ॥ ६ ॥ —,,

एतद्वाचनपुण्य-प्रभावतः शुद्धधर्मतत्त्वज्ञः ।
भवतु सदा नयविनय-प्रसक्तिनिपुणः सुहृग् लोके ॥ ७॥—,,

शिष्यप्रतिमश्रावक-ओंषडसंज्ञाकहेमराजस्य ।
मणिहारमाणजीकस्य, चाभ्यर्थनया कृतो यत्नः ॥ ८ ॥"—,,

एतेषां गुरुपरम्पराऽवबोधाय विलोक्यतां निम्नलिखिता प्रशस्तिः निजकृतिश्रीचंद्रकेवलि-रासकस्य आनन्दमन्दिरेत्यपराभिधस्य—

" संप्रति जे जयवंता हुता, 'तप' गच्छ शोभाकारी जी
श्रीआनंदविमल सूरिदीक्षित, कवि धर्मसिंह[1] मति सारी जी ॥ ९ ॥
तस शिष्य श्रीजयविमल विबुधवर, कीर्तिविमल शिष्य तेहना जी ।
शुद्धाचारी शुद्ध आहारी, बिरुद कहीए तेहना जी ॥ १० ॥
श्रीविनयविमल पंडित वैरागी, शिष्य तेहना लहीये जी ।
श्रीविजयप्रभसूरिनी आणा, शीश धरी निर( व )हीये जी ॥ ११ ॥
धीरविमल पंडित तस सेवक, समय माने शुद्ध वाणी जी ।
शक्ति प्रमाण क्रिया अनुसरता, शीखवता भवि प्राणी जी ॥ १२ ॥
' वर्धमान ' तप कारक तेहना, लब्धिविमल तस सीसा जी ।
लघु सेवक नयविमल विबुधनी, बुधमां सबल जगीसा जी ॥ १३ ॥
सुयण सहाये चित्त निरमाये, उपसंपद करी लीधुं जी ।
आचारजपदे ज्ञानविमल इति नाम थयुं सुप्रसिद्धं जी ॥ १४ ॥
निधि युग मुनि शशि ( १७४९ ) संवत माने, फागण शुदि पंचमी दिवसे जी ।
पत्तन नयर तणे तस पासे, पद पाम्युं शुभ देशे जी ॥ १५ ॥
विजयप्रभसूरिने पाटे, पक्ष संवेग सुहाया जी ।
ज्ञानविमल सूरि संप्रति दीपे, तेजे तरणि सवाया जी ॥ १६ ॥
तेणे ए आनंदमंदिर नामे, रास कर्यो सुख हेते जी ।
सागर–विजय बिहु समवाये, सुणवाने संकेते जी ॥ १७ ॥
राधनपुर शहेरे प्रारंभ्यो, संपूरण थयो तिहांहि जी ।
.... .... .... .... .... ....
नभ मुनि मुनि विधु ( १७७० ) संवत माने, अधिक अधिक उच्छाहे जी ॥ १८ ॥
एक शत एकादश छे ढाला, नव नव बंध रसाला जी ।
शत छोंहोत्तेर गुणयाल ग्रंथे, भणतां मंगलमाला जी ॥ २१ ॥ "

---

१ एतेषां **हर्षविमल**ेत्यपरमभिधानमिति समर्थ्यते श्री**नयविमल**गणिकृतसाधुवन्दनागतेन निम्नलिखितेनोल्लेखेन—
" श्री**आनन्दविमल** सूरीश्वर हस्तदीक्षित गुणधाम जी ।
**हर्षविमल** पंडित वैरागी, **धर्मसिंह** धरे नाम जी ॥ ३ ॥
तास शिष्य **जयविमल** अनोपम, गणिवर गुणमणिदरियो जी ।
**कीर्तिविमल** कवि तेहनो जागो, ज्ञानचरित्र जल भरियो जी ॥ ४ ॥ "

२ अनेन समर्थीभवति ८६तमपृष्ठस्य उल्लेखः । अपरश्चावगम्यते यदुत एतेषां सूरिपदप्रदानमकारि श्रीविजयप्रभसूरिभिः । अतो गुरुरूपेण तेषां नाम निरदेशि एभिः ।

एवं 'श्रीदयाविमलजैनग्रन्थमालायां प्रकाशितायाः सिरिनरभवदिट्ठंतोवणयमालायाः प्रस्तावनाऽनुसारेण निर्दिष्टः श्रीज्ञानविमलसूरिवृत्तान्तः। अधुना पं० कुशलविजयप्रेरणयैतत्सूरिभी रचितस्य एतद्ग्रन्थमालागतस्य जम्बूरासकस्य प्रस्तावनामनुसारि सूच्यते सूरिवराणां कतिपयानां कृतीनां कदम्बकम्—

| ग्रन्थनाम | ग्रन्थमानम् | स्थलम् | रचनासमयः | भाषा |
|---|---|---|---|---|
| १ [1]सिरिनरभवदिट्ठंतोवणयमाला | [2]५५७ | | | प्राकृता |
| २ पाक्षिकविधिप्रकरणं ( सटीकम् ) | ३५० | | १७२८ | संस्कृता |
| ३ साधुवन्दनारासकः | ४९५ | साचोर | १७२८ | गूर्जरी |
| ४ उपासकदशाङ्गसूत्रटब्बार्थः | १९० | | १७२९ | ,, |
| ५ जम्बूस्वामिरासकः | १०३५ | स्थिरपुरम् | १७३८ | ,, |
| ६ सुरसुन्दरीरासकः | | | | |
| ७ नवतत्त्ववार्तिकम् | ५०० | वाराही | १७३९ | प्राकृता |
| ८ रणसिंहराजर्षिरासकः | | | १७४० | गूर्जरी |
| ९ श्रमणसूत्रबालावबोधः (मु०) | १००० | राजधन्यपुर (राधनपुर) | १७४३ | संस्कृता |
| १० [3]प्रश्नद्वात्रिंशिका स्वोपज्ञबालावबोध-समेता | ३०० | | | ,, |
| ११ श्रीपालचरित्रम् ( गद्यम् ) | २००० | | १७४५ | गूर्जरी |
| १२ सार्धशतत्रयगाथास्तवनबालावबोधः | १५०० | | | |

१ " सिरिविजयप्पहसूरि—रज्जे सिरिविणयविमलकविराया।
सिरिधीरविमलपंडिय-सीसेण णएण णिद्दिट्ठा ॥ २४ ॥"

२ " पंचसया सगवण्णा ( ५५७ ) गाहा परिमाणमित्थ णिद्दिट्ठं।
सिरिपासणाहणाम—प्पहावओ मंगलं निच्चं ॥ २६ ॥"

३ श्रीदयाविमलजैनग्रन्थमालायां प्रसिद्धाया एतस्या अन्तिमं पद्यं यथा—
" गच्छेशश्रीविशेषे विजयप्रभगुरौ राज्यशोभां दधाने
क्षेत्रं क्षेत्रज्ञसत्ताप्रकटनपरमोद्दामधान्यव्रजानाम्।
इत्थं केशि-प्रदेशिप्रतिवचनमयं स्तोत्रमेतन्निबद्धं
'राजप्रश्नीय'सूत्रात् कविनयविमलेनेदमानन्दकारि ॥ ३२ ॥"

ततः परं पद्यमिदम्—
" प्रदेशिनृपवरप्रश्न—वार्तिकं बालबोधकं सुगमम्।
कविनयविमलेनैतत्, लिखितं कविहीरविमलकृते ॥ १ ॥"

| ग्रन्थनाम | ग्रन्थमानम् | स्थलम् | रचनासमयः | भाषा |
|---|---|---|---|---|
| १३ दशदृष्टान्तस्वाध्यायः | २१ | ढाल | | गूर्जरी |
| १४ श्रीप्रश्नव्याकरणसूत्रवृत्तिः[1] | ७५०० | सूर्यपुरम् ( सुरत ) | | संस्कृता |
| १५ संसारदावानलस्तुतिवृत्तिः | १२५ | | | संस्कृता |
| १६ कल्याणमन्दिरस्तोत्रगीता | | | | |

---

१ स्वर्गस्थश्रीविजयधर्मसूरिसङ्कलितप्रशस्तिसङ्ग्रहे श्रीप्रश्नव्याकरण'टब्बा'ऽन्ते प्रशस्तिरेवम्—

" कुमततमोजलपतितं येन क्रियोद्धारयानपात्रेण ।
उद्धृतमिह जगतीतलं दत्त्वा श्रद्धानन्धधनम् ॥ १ ॥
श्रीमदानन्दविमलाख्याः सूरीन्द्रा जयन्तु ते विश्वे ।
श्रीमत्तपागणोदधिप्रोल्लासनशरदिन्दुनिभाः ॥ २ ॥
तेषां पट्टे जाता गुणाधिका विजयदा(न)सूरीन्द्राः ।
श्रीहीरविजयसूरिस्तत्पट्टेऽभूदमेयगुणः ॥ ३ ॥
येनाकब्बरभूपस्वान्ते करुणा निवेशिता जन्तोः ।
अद्यापि तस्य कीर्तिर्जागर्ति तदीयतन्त्रेषु ॥ ४ ॥
कूर्चालसरस्वतीति बिरुदं प्राप्तं च साहिना पुरतः ।
श्रीविजयसेनसूरिर्जातस्तत्पट्टमाणिक्यम् ॥ ५ ॥
तत्पट्टोदयशैले तरणिनिभा विजयदेवसूरीन्द्राः ।
स(श्री)विजयसिंहयुक्ताः प्रवचनवैशद्यकृद्वाचः ॥ ६ ॥
तत्पट्टप्रभुतायास्तिलकसमो धन्यपुण्यजनसव्यः ।
श्रीविजयप्रभसूरिः सञ्जातो भव्यहर्षकरः ॥ ७ ॥
तद्गच्छरत्नकल्पाः क्रियाकलापेन शुद्धचरणभृतः ।
श्रीविनयविमलसुधियः श्रीमत्सत्कीर्तिविमलयुजः ॥ ८ ॥
तच्छिष्याश्चरणधराः कवयः श्रीधीरविमलनामानः ।
तच्छिष्यो नयविमलो नयगमभङ्गप्रमाणपटुः ॥ ९ ॥
श्रीविजयप्रभसूरेः प्रसत्तिमासाद्य हृद्यवैराग्यात् ।
प्राप्तानूचानपद उपसम्पदया विरागमनाः ॥ १० ॥
सज्ज्ञानविमलसूरिरवाप्तनामा तपागणे ख्यातः ।
तेनेदं शिशुचेष्टितमिव विहितं विवरणं सम्यग् ॥ ११ ॥
उपजीव्य पूर्ववृत्तिं यदत्र मतिमान्द्यतो मया रचितम् ।
समयविहीनं सद्भिस्तच्छोध्यं मयि कृपां कृत्वा ॥ १२ ॥
... ... ... ...
अत्रार्थे खलु साहाय्यकारिणः क्षान्तिशालिनः कवयः ।
सुखसागरनामानः कृताव(तोप ?)धानास्तदा जाताः ॥ १५ ॥
प्रथमादर्शे लिखिता तैरेव तरणिपुरवरे रम्ये ।
विद्वद्भिर्वाच्यमाना जयतु चिरं तत्त्वबोधकुला(करा ?)॥ १६ ॥ '

| | ग्रन्थनाम | ग्रन्थमानम् | स्थलम् | रचनासमयः | भाषा |
|---|---|---|---|---|---|
| १७ | आनन्दमन्दिररासकः (मु०) | ७६०० | राजधन्यपुरम् | १७४९–१७७० | गूर्जरी |
| १८ | द्वादशव्रतग्रहणरासकः | ३०० | | १७५० | गूर्जरी |
| १९ | रोहिणीअशोकचन्द्ररासकः (मु०) | २००० | सैयदपरु (सूर्यपुरे) | १७५० | |
| २० | शब्दभेदनाममालावृत्तिः | ३८०० | | १७५४ | संस्कृता |
| २१ | दीपालिकाकल्पबालावबोधः | १२०० | राजनगरम् ( अहमदाबाद ) | १७६३ | |
| २२ | अध्यात्मकल्पद्रुमबालावबोधः | ८००० | | १७७० | |
| २३ | पाक्षिकसूत्रबालावबोधः ( मु० ) | ५५०० | राजधन्यपुरम् | १७७३ | |

अपरञ्च भाष्यत्रयबालावबोध–योगदृष्टिस्वाध्याय–जिनवरस्तवन–पद–कलशादयोऽपि ग्रन्था जग्रन्थिरे एभिः सूरिशेखरैः ।

एतेषां जन्म–दीक्षाऽऽदिवृत्तान्तो यथा—

[1]भिन्नमालीयवीसाओसवालज्ञातीयश्रीवासवश्रेष्ठिपत्नी कनकावती १६९४तमे वैक्रमीयाब्दे पुत्ररत्नमसुषूवत् । पितृभ्यामस्य नथुमल्लेति नामाकारि । तेन १७०२तमे हायने श्रीधीरविमलगणिसकाशे मुक्तिदूतिका दीक्षा जगृहे । तदा नयविमलेति नामनिष्पत्तिः । १७४८तमे वर्षे अणहिल्लपट्टणसमीपस्य सण्डरग्रामे सूरिपदं प्रापि विजयप्रभसूरिसकाशात् । तदा ज्ञानविमलेति नाम निरधारि । एतत्सूरिवर्यकृततीर्थमालातोऽवसीयते यदुत १७५५-तमे वर्षे तैः विविधतीर्थयात्राऽकारि । सूर्यपुरात् निर्गत्य रानेर–भरुच–गन्धार–कावीप्रमुखाणि गूर्जरीय-तीर्थानि वन्दित्वा मारवाडस्थनानातीर्थानि प्रणम्य सिद्धपुर-महेसाणा–राजनगर( अमदावाद )द्वारा पुनः सूर्यपुरे आगमि षण्मासान्ते ।

१७७७तमेऽब्दे इमैः प्रोत्साहिताः श्रीसिद्धाचलयात्रार्थं सङ्घपूर्वकगमनाय सूर्यपुर-निवासिप्रेमजीपारेखेतिश्रेष्ठिवर्याः । एतद्वर्णनं रासकरूपेणाकारि कविश्रीदीपसागरशिष्य-श्री[3]सुखसागरैः स्वकृतौ प्रेमविलासाभिधायाम् । एतेषामनेकभव्यप्रतिबोधकानां विविधग्रन्थगु-म्फितॄणा [4]जिनप्रतिमाप्रतिष्ठाकारिणां देहोत्सर्गः समजनि वैक्रमीये १७८२तमे आश्विन-कृष्णचतुर्थ्यां गुरुवासरे । स्तम्भनतीर्थवासिश्रावकैः एतत्पादुकायुक्तः स्तूपो निमार्पितो भवद्दर्शनार्थम् । श्रीमतां ज्ञानभाण्डागारो विद्यतेऽधुना अस्मिन् नगरे खारगेटेति नाम्ना प्रसिद्धे उपाश्रये ( विलोकयतां सिरिनर०मालायाः प्रस्तावना ) ।

---

१ चिन्त्योऽयमुल्लेखः, अवलोक्यतां ८६तमं पृष्ठम् ।

२ मुद्रितोऽयं ग्रन्थः ।

३ एभिः प्रथमादर्शोऽलेखि सूरिवर्यकृतभूयिष्ठग्रन्थानाम् ।

४ प्रेक्ष्यतां श्रीमद्बुद्धिसागरसूरिकृतस्य जैनधातुप्रतिमालेखसङ्ग्रहस्य प्रथमे विभागे लेखाङ्कः ६९९तमः ७०९तमश्च द्वितीये तु ५६६, ५६७, ५६९, ५७०, ६५७ इति सङ्ख्यात्मकाः ।

किञ्च–सैयदपुरा( सूरत )गतश्रीचन्द्रप्रभचैत्यस्य भूमिगृहे विद्यते पादुकैतेषाम्। तत्प्रतिष्ठाकारिणः प्रस्तुताः श्रीसौभाग्यसागरसूरयः। अत्र तत्रत्यनिम्नलिखित उल्लेखः प्रमाणम्—

"संवत् १७८२ वर्षे शाके १६४७ श्रीभट्टारकश्रीविजयप्रभसूरीश्वरपट्टप्रभाकरभट्टारकश्री५श्रीज्ञानविमलसूरीश्वरपादुकाभ्यो नमः। प्रतिष्ठितं श्रीसौभाग्यसागरसूरिभिः श्रीः।"

अपरञ्च—श्रीमद्बुद्धिसागरसूरिकृतजैनधातुप्रतिमालेखसङ्ग्रहे ( द्वितीये भागे १६५-तमे पृष्ठे ) अयमुल्लेखः—

"संवत् १७८४ मागसिरवदि ६ दिने बुधवासरे श्रीस्तंभतीर्थबंदिरे श्रीतपागच्छे सुविहितभट्टारकश्रीआणंदविमलसूरिपट्टप्रभावकश्रीविजयदानसूरितत्पट्टेभश्रीहीरविजयसूरिपट्टे सद-....विजयसेनसूरिपट्टे भ०श्रीविजयदेवसूरिपट्टप्रभावकसकलभ०पुरंदरभ०श्रीविजयप्रभसूरिपट्टे संविज्ञपक्षे भट्टारकप्रभुश्रीज्ञानविमलसूरीश्वरचरणपादुकाः शुभं भवतु॥"

१७२८तमे वैक्रमीयाब्दे यैः श्रीलावण्यविमलमुनिवरैः निम्नलिखित—

"हृदयसदायादवतः पापाट्व्यां दुरासदाया दवतः।
अरिसुमुदायादवतस्त्रिजगन्माः स्मरेण दायादवतः॥ १ ॥"

—प्रारम्भिकपद्यं नलोदयकाव्यं लिपीकृतं तेषां गुरुवर्याणामपि श्रीज्ञानविमलेति नामधेयं विद्यते, यतो दक्षिणविहारिमुनिरत्नश्रीअमरविजयसत्कहस्तलिखितप्रतौ चतुर्थोच्छ्वासप्रान्तस्थ उल्लेखोऽयम्—

"सकलकोविदकोटीकोटीरहीरायमाणपंडितश्री५श्रीज्ञानविमलगणितत्क्रमकजचञ्चरीकायमाणमुनिलावण्यविमलेन लिपीकृतमिदं काव्यम्॥ संवत् १७२८ वर्षे ज्येष्ठ शुदि चतुर्दशी रवौ।"

किञ्च—श्रीविजयधर्मसूरिसङ्कलिते प्रतिमालेखसंग्रहेऽयमुल्लेखः—

"संवत् १७७९ वर्षे जेठ सुदि ३ रवौ( वौ )श्रीपार्श्वनाथबिंबं कारापितं॥ सा दीपचंद सा० कीका कारापितः॥ जवहरी नानचंदः प्रतिष्ठितं श्रीज्ञानविमलसूरीश्वरैः।"

एतत्सूरीश्वरपट्टविभूषणानां श्रीसौभाग्यसागरसूरीणां श्रीसुमतिसागराः पट्टधारिणः। तत्र १७९३तमे वैक्रमीयाब्दे उपदेशशतकप्रणायितृभिः श्रीकीर्तिविमलगणिविनेयैः श्रीऋद्धिविमलगणिप्रशिष्यैः श्रीविबुधविमलसूरिभी रचिता निजकृतिसम्यक्त्वपरीक्षा-टब्बकगता पट्टपरम्परा प्रमाणम्। यतस्तत्रोल्लेखश्च यथा–श्रीसौभाग्यसागरसूरयः श्रीविजयप्रभ-

१ दीक्षासमये एतेषां लक्ष्मीविमलनाम्ना प्रख्यातिः। एभिः श्रीशान्तिभक्तामरकाव्यं व्यरचि यत्प्रस्तावनायां एतज्जीवनवृत्तान्तस्य स्थूला रूपरेखाऽऽलेखिता मया।

सूरिपट्टालङ्कारश्रीज्ञानविमलसूरिपट्टे सञ्जाताः, तेषां च पट्टे वर्धमानादितपश्चर्याकारिणः श्री-सुमतिसागरसूरयोऽभूवन् यैः सूरिपदं प्रदत्तं श्रीविबुधविमलसूरिभ्यः।

श्रीसौभाग्यसागरैरेतां श्रीशोभनस्तुतिवृत्तिं विहाय केऽपरे ग्रन्था रचिता इति तु न निर्णीयते साधनाभावात्। परन्तु 'जैनगूर्जरकविओ' इति संज्ञकग्रन्थस्य १३३तमपृष्ठोल्लेखेनावगम्यते यत् सौभाग्यसागरेतिनामधेया अपरेऽपि सूरयः सन्ति । ते तु वडतपागच्छीयश्रीलब्धिसागरसूरीणां प्रशिष्याः श्रीधनरत्नसूरीणां तु विनेयाः। एतेषामन्तेवासिभिः १५७८ तमे वैक्रमीयाब्दे आश्विनशुक्लसप्तम्यां 'दमण' नगरे चम्पकमालारासो रचितः।

---

# श्रीदेवचन्द्रगणीनां चरित्रादिक्

तुरीयटीकाकाराः श्रीदेवचन्द्रगणयः पण्डितप्रकाण्डमण्डलाखण्डल- सूर्यसहस्रनामाध्यापकश्रीभानुचन्द्रगणिविनेया अष्टोत्तरशतावधानि-खुष्फहमितिबिरुदधारिश्रीसिद्धिचन्द्रगुरुबान्धवाश्च।

श्रीमद्भिः श्रीशोभनस्तुतिवृत्तिं विहाय नवतत्त्वचतुष्पादिका गूर्जरगिरायां ग्रथितेति 'जैनगूर्जरकविओ' (पृ० ५७९) गतनिम्नलिखितोल्लेखेनावसीयते—

"सुविहित साधु तणो शृंगार, श्रीविजयदेवसूरि गणधार,
तास पाटे प्रगटयो सूरिसिंह, विजयसिंहसूरि राखी लीह. ३३
गुरु श्रीसकलचंद उवझाय, सूरचंद पंडित कविराय,
भानुचंद वाचक जगचंद, तास सीस कहे देवचंद. ३४
ए चोपइ रची कर जोड, कविता कोइ म देजो खोड,
अधिको ओछो सोंधी जोडी, भणतां गुणतां संपति कोड." ३५

अपरञ्च गूर्जरभाषागुम्फिता शत्रुञ्जयतीर्थपरिपाटी अपि श्रीमतां कृतिरिति निर्धार्यते ५८०तमपृष्ठगतनिम्नलिखितपङ्क्तिप्रेक्षणेन—

---

१ एतत्प्रतीत्यर्थं विलोक्यतां ८९तमं पृष्ठम्। अपरञ्च इदं समर्थ्यते एकादशीदेववन्दन-विंशतिस्थानकस्वाध्यायादिनानाग्रन्थप्रणेतृभिः श्रीज्ञानविमलसूरिवरैर्विरचितस्य पर्युषणपर्वमाहात्म्यस्य प्रान्तगतेन निम्नलिखितोल्लेखेन—

"श्रीविजयप्रभसूरि इगसठमे पाटे, श्रीविजयदेवसूरि आपे जी।
संवेगी शुद्ध पंथ प्ररूपक, 'विमल' शाखा शणगारी जी।
ज्ञानविमलसूरि बासठमे पाटे, विजयवंत सुखकारी जी ॥ १७ ॥"

२ एतद्बोधार्थं विलोक्यतां 'जैनऐतिहासिकगूर्जरकाव्यसञ्चय' नामकं पुस्तकं (पृ० १०)।

३ एतत्समर्थने दृश्यतां कादम्बरी-विवेकविलासादिटीका।

४ अवलोक्यतां १५५तमं पृष्ठं 'सूरीश्वर अने सम्राट्' इति नाम्नो ग्रन्थस्य।

"श्री'तप'गछपति गुणनिलो ए मालंतडे श्रीविजयदेव सूरिंद;
जांणे जिगि उदयो सही ए मा० मूरतिवंतो चंद. सु. ११
साह थिरा नंदनवरु ए मा० मोहनवल्लीकन्द;
जे सेवइं भावइं करी ए मा० तस घरि नित्य आणंद. सु. १२
श्रीविजयदेवसूरि पाटि गयो ए मा० श्रीविजयसिंह सूरिराय;
जेहने प्रणमें नित्य प्रतिं ए मा० सुरनर भूपति पाय. सु. १३
सीस वाचक भानुचंदनो ए मा० मागइं देवचंद देव;
वली वली मुझनें आळयो ए मा० शेत्रुंजय केरी सेव. सु. १४

कळस

गुरु श्रीहीरविजयसूरि पसायें श्रीभानुचंद उवझाया,
कासमीर अकबरसा पासइं शेत्रुंजय दाण छुराया;
तास सीस देवचंद कहें ए गिर गिरनो राया,
भेटयो भाव धरी ए तीरथ मनवंछित सुख दाया.
आज मनवंछित सुख पाया. ३५"

किञ्च तेषां पृथ्वीचन्द्र–सौभाग्यपञ्चमीस्तुतिकृतिनिर्देशोऽपि वर्तते 'जैन गूर्जर कविओ" नाम्नि पुस्तके ( पृ० ५७९ )। एभिरपराणि कानि कानि पुस्तकानि प्रणीतानि इति नावगम्यते। किन्तु १८००तमे वैक्रमीयाब्दे मानमुद्राभञ्जननाटकरचयितारः श्रीदेवचन्द्रगणयोऽन्ये इति सुस्पष्टं ज्ञायते रचनासमयावधारणेन।

एतेषां श्रीविवेकचन्द्रगणयः शिष्या इति प्रतिभाति 'जैन गूर्जर कविओ' इति नामकग्रन्थस्य ५९तमे पृष्ठे निम्नलिखितोल्लेखदर्शनेन—

"श्री शे(श)त्रुंजयकरमोचनादिसुकृतिकृत्यसुकृतिकारिमहोपाध्यायश्री१९(?)श्रीभानुचन्द्रगणिचरणाम्बुजचञ्चरीकायमानपण्डितश्रीदेवचन्द्रगणिसकलपण्डितशिरोमणिपाण्डितश्री१९ श्रीविवेकचन्द्रगणिशिष्यपण्डितश्रीप०श्रीतेजचन्द्रगणिपं० श्रीप०श्रीजिनचन्द्रगणिशि०ग०जिवनचन्द्रेण लिखितं सं १७५२ वर्षे ज्येष्ठ शुदि १० दिने गुरुवासरे लिपितं"

अनेन ज्ञायन्ते श्रीदेवचन्द्रगणीनां प्रशिष्यादीनामपि सुगृहीतनामधेयानि।

प्राचीनजैनलेखसङ्ग्रहे द्वितीये भागे ५१४तमे लेखाङ्के तूल्लेखोऽयम्—

"....श्रेयोऽर्थं प्रतिष्ठिता भाट्ट(भट्टा)रक श्रीविजयदेवसूरिनिर्देशात् महोपाध्यायश्री५ श्रीभानुचन्द्रगणिशिष्यपंडितश्रीविवेकचन्द्रगणिभिरिति मंगलम् ॥"

---

१ "मानमुद्राभञ्जननाटकं सनत्कुमारचक्रिविलासवतीसम्बन्धप्रतिबद्धं देवचन्द्रगणिकृतं १८००" इति बृहट्टिप्पनिकायाम्।

# परिशिष्ट-परिचयः ।



एवं श्रीशोभनस्तुतिं लक्ष्यीकृत्य तद्विधातृव्याख्यातृविषयके वक्तव्ये कथमपि पूर्णतां प्रापिते प्रस्तूयतेऽधुना परिशिष्टगतस्तोत्ररचयितृप्रस्तावः । तावदैन्द्रस्तुतिविधानेन श्रीशोभनस्तुतिसुगन्धग्रहणगन्धवाहानां महामहोपाध्यायादिविविधविरुदविभूषितानां शान्तदान्तस्वान्तवृत्तीनां मनीषिमण्डलमूर्धमणीनां श्रीयशोविजयगणीनां विषये किमपि वक्तुमुपक्रम्यते ॥

ननु एतच्चरितचर्चा चर्वितचर्वणाप्राया, यतस्तत्रभवद्भिरचितग्रन्थगतप्रशस्त्यादिना किंवदन्त्या च यदुपलब्धं तत् सर्वं प्रायो निर्दिष्टं साम्प्रतिकैर्मुनिमतल्लिकैः द्वात्रिंशद्द्वात्रिंशिका-ऽध्यात्मसार-प्रतिमाशतकादिप्रस्तावनासु । सत्यमेतत् तथापि श्रीमतां स्वपरसमयसिद्धहस्तता-शासनप्रभावकता-तत्त्वश्रयाराधकतादिगुणगणेनाक्षिप्तत्वान्मे मनसः सज्जनसङ्कीर्तने पौनरुक्त्यमपि न दोषायेति विपश्चितां कथनस्य चाधारेण क्रियतेऽयं प्रयासः स्थूलशेमुषीशालिनाऽपि मया ।

तत्र न्यायविशारदाः श्रीयशोविजयवाचकद्विरदाः कस्मिन् कुले मङ्गलप्रसूतिं प्रसूतिं प्रापुः ? तत्रभवन्तो भवन्तः कदा कतमां मेदिनीमण्डलीं मण्डयामासुः ? कैर्वाग्वाचस्पतिविभावैरध्यापिता भवन्तः ? कथं च प्रापुरपारसंसारपारावारपारप्रापणपटु वैराग्यम् ? तत्फलभूतां च सिद्धिसुन्दरीसमागमकारिणीं भागवतीं दीक्षां कदा कक्षीचक्रुः ? कांस्कान् ग्रन्थान् जग्रन्थुः ? काभ्यो भव्यराजीवराजीभ्यः प्रव्रज्याकरं वितीर्य ता उद्धारयामासुः कलिकालकर्दमात् ? इत्यादि प्रश्नाः सहजाः, तथापि तेषां निःशेषसमाधानार्थं न पर्याप्तिः साधनानाम्, अतः परं किं खेदास्पदमस्ति ?

जन्मसमयः—

आनन्दघनपद्यरत्नावल्या उपोद्घाते गुर्जरसाहित्यपरिषन्निबन्धरूपन्यायविशारदजीवने अन्यत्र च विक्रमाब्दे १६७०-८० मध्ये जन्मसमयः कल्पितः, परन्तु न चायं वास्तविक इत्यसूचि मुनिराजश्रीप्रतापविजयैः श्रीलोकनालिकाबालावबोधगतनिम्नलिखितपुष्पिकाऽऽधारेण—

"स्वार्थाय लोकनालेर्जसविजयाह्वः प्रतनुधिषणः ॥ ४ ॥ इति श्रीलोकनालि बालावबोध ॥ संवत् १७०७ वर्षे कार्तिक वदि १ भोमे...नक्षत्रे लिषाइतं । १६६५ वर्षे ज्येष्ठ शुदि १३ सोमे अनुराधा नक्षत्रे कृतः ।"

परन्तु एतच्चिन्त्यमिति मन्यन्ते केचित् जसविजयेत्यनेन अन्यमुनिवर्यसम्भावनायाः । एतन्निर्णयार्थं प्रतिं विना को मे प्रयासो भवेत् ? । अपरञ्च निवेदयन्ति श्रीचतुरविजयाः अधुनोपलब्धरासकाधारेण श्रीमतां वैक्रमीये १६८८तमे वर्षे दीक्षां वणिक् कुलं च । भवद्भिर्जन्मतः सप्तमेऽष्टमे हायने दीक्षा जगृहे इति निःसन्दिग्धम् ।

---

१ उक्तं च आवश्यकनिर्युक्तौ—

"सज्झायझाणतवोसहेसु उवाएसथुइपयाणेसु ।
संतगुणकित्तणेसु अ न हुंति पुणरुत्तदोसाओ ॥ १ ॥"

जन्मभूमिः—

गूर्जरभाषाऽनुवादालङ्कृते लोकनालिकाबालावबोधाख्ये ग्रन्थे शब्दरचनां विलोक्यानुमितं श्रीप्रतापविजयैर्यदुतात्रभवद्भिर्जनुषा सनाथीभूता गूर्जर( सौराष्ट्र )भूरिति । परं नैतत् समीचीनं, उक्तरासके तु 'कनोड्ड'( कन्होड्ड )ग्रामे जन्म, पत्तनासन्नवर्तिकुणागीरिग्रामतः श्रीमतां गुरवः श्रीनयविजयमुनिप्रवरास्तत्र समाजग्मुश्चेत्युल्लेखः ।

श्रीसरस्वतीसाक्षात्कारः—

जम्बूस्वामिरासकगतेन निम्नालिखितेनोल्लेखेन स्फुटीभवतीदम्—

"मा तूठी मुज उपरे जपता जाप उपगंग"

अपरश्चेदं समर्थ्यते अध्यात्ममतपरीक्षाप्रशस्तिगतेन निम्नलिखितेन पद्येन—

"येषामत्युपकारसारविलसत्सारस्वतोपासनाद्
वाचः स्फारतराः स्फुरन्ति नितमामस्मादृशामप्यहो ।
धीरश्लाघ्यपराक्रमास्त्रिजगतीचेतश्चमत्कारिणः
सेव्यन्ते हि मया नयाद्विविजयप्राज्ञाः प्रमोदेन ते ॥ १३ ॥"

"ऐंकारजापवरमवाप्य कवित्वविस्त्व—वाञ्छासुरद्रुमुपगङ्गमभङ्गरङ्गम्"

इति च प्राहुः श्रीमन्तो महावीरस्तुतौ । अनेनावगम्यते यदुत विद्यावनिताविलासलम्पटनिवासभूमिं वाराणसीं ( काशीं ) गतवन्तो भवन्तः । तत्र द्वादश वर्षानध्ययनं च चक्रुरिति कथा न सर्वथा काल्पनिकी । अपरश्च काशीगतैर्भवद्भिः समवापि सुचीर्णतपःप्राग्भारैरुपगङ्गमैङ्कारजापमन्त्रः साधितश्च । किञ्च मन्त्रसाधनोपयोगोऽकारि परोपकारिकारिभिः स्मारितश्रुतकेवलिभिः तमस्तरणतरणिपरःशतग्रन्थप्रणयने ।

अवधारणशक्तिः—

( १ ) 'भक्तामरस्तवश्रवणमन्तरेण नैव भोक्ष्ये' इति गृहीतो नियमः श्रीमतां मात्रा गुरुसकाशे । प्रवर्षितुं लग्नो मेघः, न शक्नोत्युपाश्रयं सा गन्तुम् । न च पचति किमपि । क्षुधार्तैः पृष्टं श्रीमद्भिः कारणं, यथास्थितं प्रोक्तवती सा । प्रत्यहं मात्रा समं गच्छद्भिरुपाश्रयं निशम्यावधारितः

१ प्रघोषोऽयं यद् वाचकविनयविजयगणिभिः सार्द्धं काश्यां जग्मिवांसः श्रीमन्तः, परं स्वयं त्वेवमुल्लिखति स्वप्रणीतद्वात्रिंशद्द्वात्रिंशिकायाः प्रशस्तौ—

"प्रकाशार्थं पृथ्व्यास्तरणिरुदयाद्रेरिह यथा
यथा वा पाथोभृत्सकलजगदर्थं जलनिधेः ।
तथा वाणारस्याः सविधमभजन् ये मम कृते
सतीर्थ्यास्ते तेषां नयविजयविज्ञा विजयिनः ॥"

पद्येनामुनाऽनुमीयते यदत्रभवतां गुरवोऽपि सविधमेवासंस्तदा ।

श्रीभक्तामरस्तवः पठितस्तदाऽस्खलितं पूज्यपादैः । पूर्णं प्रत्याख्यानम्, हृष्टा माता, विहिता भुक्ता च रसवती ।

( २ ) द्वादश वर्षाणि वसद्भिः काश्यां श्रीमद्भिः समधीतान्यशेषाणि न्यायशास्त्राणि, स्थितश्चैकः सप्तसहस्रश्लोकप्रमाणो ग्रन्थः । स तु प्रार्थितोऽपि नाध्याप्यते स्वमहत्वक्षतिभीत्या गुरुणा । लब्धः प्रसन्नीकृत्य गुरुं विलोकनाय । एकस्यामेव रात्रौ कण्ठीकृत्य चतुःसहस्री श्लोकानां श्रीमद्भिः त्रिसहस्री श्रीविनयविजयोपाध्यायैश्च प्रातः प्रत्यर्पितो गुरवे । इत्येताभ्यां किंवदन्तीभ्यां ध्वन्यतेऽत्रभवतामसाधारणावधारणाशक्तिः ।

अवधानप्राप्तिः[२]—

अष्टादशावधानेन चमत्कृतश्चेतसि गूर्जराधिपतिः श्रीमहबतखानाख्य इति वृत्तान्तस्य वास्तविकतायां न मनागपि सन्देहः ।

पदवीप्रदानम्—

श्रीविजयप्रभसूरिवरैः प्रादायि एभ्यो वाचकपदं १७१८तमे विक्रमवर्षे इति विद्यते सुजसवेलीभासनामकगूर्जरकाव्यगतनिम्नलिखितपद्यावलोकनात्—

" ओली तप आराध्युं विधि थकी तस फल करतलि कीध
वाचक पदवी सतर अढारमां जी विजयप्रभ........दीध. "

अष्टादशावधानिनः न्यायविशारद-न्यायाचार्य-महामहोपाध्याय-श्रीयशोविजयवाचकाः तपगणगगनाङ्गणार्कश्रीहीरविजयसूरीश्वरशिष्यश्रीकल्याणविजयगणिशिष्यश्रीलाभविजय-

---

१ एतेषां काशीनिवासः समर्थ्यते स्वरचितस्य श्रीसीमन्धरस्वामिविज्ञप्तिस्वरूपस्य सार्धशतत्रयगाथाप्रमाणकस्य च स्तवनस्य प्रान्तस्थेन निम्नलिखितोल्लेखेन—

" रहिअ काशी मठे जेहथी मे भले न्याय दर्शन विपुल भाव पाया "

ऐन्द्रस्तुतीनां स्वोपज्ञवृत्तिप्रशस्तावपि—

" मामध्यापयितुं सदासनसमध्यासीनकाशीमहा-
सन्नासीरितियोगदुर्जयपरत्रासी यदीयः श्रमः ।
आसीच्चित्रकृदिन्दुशुभ्रयशसो दासीकृतक्ष्माभुजो
नोल्लासी भुवि तान् नयादिविजयप्राज्ञानुपासीन्न कः ? ॥ ११ ॥"

सामाचारीप्रशस्तौ च

" विप्रानात्मवशांश्चिरं परिचितां काशीं च बालानिव
क्ष्मापालानपि विद्विषो गतनयान् मित्राणि चाजीगणत् ।
मन्न्यायाध्ययनार्थमात्रफलकं वात्सल्यमुल्लास्य ये
सेव्यन्ते हि मया नयादिविजयप्राज्ञाः प्रमोदेन ते ॥ ९ ॥ "

२ जैनशासने बहवो मुनिवरा अनेकावधानसमृद्धा दरीदृश्यन्ते यथाहि—सहस्रावधानिनः श्रीमुनिसुन्दरसूरयः, अष्टोत्तरशतावधानिनः श्रीसिद्धिचन्द्रगणयः, श्रीहीरविजयसूरिवरसार्थगताः श्रीमन्तः शान्तिचन्द्राश्च

गणिशिष्य-श्रीजीतविजयगणिशिष्यश्रीनयविजयगणीनां विनेयाः श्रीपद्मविजयगणीनां सोदराः। सरस्वतीकृपाकटाक्षकलितायां वाराणस्यां विबुधवरैः श्रीमद्यशोविजयवाचकवर्याणां समर्पितं न्यायविशारद-न्यायाचार्येति विरुदद्वयम्। अत्र स्वकृतजैनतर्कभाषाप्रशस्तिगतमान्त्यार्धं पद्यं प्रमाणम्। तच्च यथा—

"पूर्वं 'न्यायविशारद'त्वबिरुदं काश्यां प्रदत्तं बुधैः[2]
'न्यायाचार्य'पदं ततः कृतशतग्रन्थस्य[3] यस्यार्पितम्॥"

अनेनैतदप्यवसीयते यदप्रतिमप्रतिभाशालिभिरेभिर्महाशयैर्ग्रन्थशती [4]ऐन्द्रपदाङ्किता निर्मिता। तत्रोपलब्धाः संस्कृतप्राकृतभाषागुम्फिता ग्रन्थास्तु इमे—

| ग्रन्थाङ्कः | ग्रन्थनाम | ग्रन्थमानम् | टीका | प्रकाशनम् |
|---|---|---|---|---|
| १ | [5]अध्यात्ममतपरीक्षा (प्रा० गा.१८४) | ४००० | [6]स्वोपज्ञा | श्रेष्ठिदे. ला. जैनपु० |

---

१ एभिर्मुनिवरैः समशोधि श्रीज्ञानविमलसूरिकृतं श्रीपालचरित्रं ( प्रेक्ष्यतां ८७तमं पृष्ठम् )।

२ अत्र जनश्रुतिरेवम्—

आयासीत् तत्रैकदा कश्चन दाक्षिणात्यन्यायविपश्चित् दर्पोद्धुरकन्धरो विजेतुं वाराणसेयविबुधान्। तदानीं समवाप्तस्वकीयविद्यागुरुवरादेशास्तत्रभवन्तस्तेन समं विधाय विविधप्रबलयुक्तिभङ्गभङ्गीभिर्वादं पर्यभवंस्तम्, अत एव निरीक्ष्यावर्णनीयां विद्वत्तां सहर्षं व्यतार्षुर्वाराणसेयसुधियो न्यायविशारदेति विरुदं श्रीमद्भ्यः।

३ इयं न्यायविषया इति श्रीप्रतापविजयाः।

४ यथा सर्वतन्त्रस्वतन्त्रा गुणभूरयः श्रीहरिभद्रसूरयः संव्यधुः स्वोक्तिकलापं विरहशब्देन, श्रीमन्त उद्द्योतनसूरयः कुवलयमालां दाक्षिण्यचिह्नेन, सहस्रावधानिनः श्रीमुनिसुन्दरसूरयो निजं निर्मितिनिचयं जयश्री-शब्देन, श्रीअभयदेवसूरयो जयन्तकाव्यं श्रीपदेन, श्रीमलयगिरिसूरयः स्वकीयं ग्रन्थसन्दर्भं कुशलशब्देन, वायड-गच्छीयश्रीजिनदत्तसूरिविनेयाः श्रीअमरचन्द्रसूरयो निजपद्मानन्दमहाकाव्यं वीराङ्केण, श्रीनयचन्द्रसूरयोऽप्य-नेनैव चिह्नेन हम्मीरमहाकाव्यं, श्रीवर्धमानसूरयः श्रीवासुपूज्यचरित्रमाह्लादनाङ्केन, श्रीसिद्धसेनसूरयो विलासवतीं( विलासवई )कथां साधारणाङ्केन, श्रीजिनरत्नाचार्या लीलावतीकथासारमहाकाव्यं जिना-ङ्केन, श्रीलक्ष्मीतिलकोपाध्यायाः प्रत्येकबुद्धचरित्रं जिनलक्ष्म्यङ्केन, श्रीचारित्रसुन्दरगणयः कुमारपालमहा-काव्यं जयाङ्केन, श्रीजिनहर्षसूरयो वस्तुपालचरित्रं हर्षाङ्केण, श्रीरत्नमण्डनगणयः सुकृतसागरं मण्डनाङ्केन तथा महोपाध्यायश्रीयशोविजयगणयो निजकाव्यानि मण्डयामासुः ऐन्द्रपदेन यशःश्र्यङ्केन तु कानिचित्।

५ इदं न विस्मर्तव्यं विद्वद्वर्यैर्यदुत शेषा इव शेषीभूताः श्रीमतां सदालोका ग्रन्थालोका अल्पा अपि ख्याप-यन्त्येव महिमोदधीनां माहात्म्यमनवद्यम्।

६ दिगम्बरमतखण्डनात्मकस्य ग्रन्थस्यास्यादिमं पद्यं यथा—

"पणमिय पासजिणिंदं वंदिय सिरिविजयदेवसूरिंदं।
अज्झप्पमयपरिक्खं जहबोहमिमं करिस्सामि॥ १॥"

७ टीकादिर्यथा—"ऐंकारकलितरूपां स्मृत्वा वाग्देवतां विबुधवन्द्याम्।
अध्यात्ममतपरीक्षां स्वोपज्ञामेष विवृणोमि॥ १॥'

| न्थाङ्कः | ग्रन्थनाम | ग्रन्थमानम् | टीका | प्रकाशनम् |
|---|---|---|---|---|
| २ | अध्यात्मसारः[1] | [2]१३०० | पं०श्रीगम्भीर-विजयगणिकृता | [3]जैनधर्मप्रसारकसभा |
| ३ | अध्यात्मोपनिषद्[4] | २३१ | | ” |
| ४ | अनेकान्तव्यवस्था[5] | ३३५७ | | |
| *५ | अविदितनामा ग्रन्थः[6] | | | |
| ६ | अस्पृशद्गतिवादः[7] | | | आत्मानन्दसभा |
| ७ | आदिजिनस्तवनम्[8] | | | आगमोदयसमिति |
| ८ | आध्यात्मिकमतखण्डनम्[10] | | स्वोपज्ञा[11] | जै. ध. प्र. स. |

१ आद्यं पद्यम्—"ऐन्द्रश्रेणिनतः श्रीमा–न्नन्दतान्नाभिनन्दनः ।
उद्दधार युगादौ यो, जगदज्ञानपङ्कतः ॥ १ ॥"

२ जैनग्रन्थावल्या अनुसारेण, अन्यत्रापि प्राय एवं ज्ञेयम् ।

३ अनया संस्थया अध्यात्मसार-देवधर्मपरीक्षा–अध्यात्मोपनिषद्–आध्यात्मिकमतखण्डनसटीक-यतिलक्षण-मुच्चय–नयरहस्य–नयप्रदीप–नयोपदेशसावचूरि-जैनतर्कपरिभाषा–ज्ञानबिन्दुरूपग्रन्थदशकमेकत्रैव प्रसिद्धम् ।

४ "ऐन्द्रवृन्दनतं नत्वा, वीतरागं स्वयम्भुवम् । अध्यात्मोपनिषन्नामा, ग्रन्थोऽस्माभिर्विधीयते ॥ १ ॥"

५ जैनतर्केत्यपराभिधानायाः स्वोपज्ञप्रतिमाशतके ९७तमपद्यस्य टीकायां निर्दिष्टायाः स्याद्वादकल्पलता–परहस्यप्रणयनानन्तरं च रचिताया अस्या आद्यं पद्यमेवम्—

" ऐन्द्रस्तोमं नतं नत्वा, वीतरागं स्वयम्भुवम् ।
अनेकान्तव्यवस्थायां, श्रमः कश्चिद् वितन्यते ॥ "

६ अस्याग्रिमं पद्यमेवम्—

" ऐन्द्रश्रेणिनताय सिद्धिललनाकान्ताय कान्ताटवी-
भ्रान्तानां गतये निरस्तदुरितध्वान्ताय दान्तारये ।
वान्ताशेषविकारभारविमलस्वान्ताय चान्ताशुभ–
प्रक्रान्ताय नमो जिनाय विनयाश्रान्ताय शान्तात्मने ॥१॥ "

७ गुरुतत्त्वविनिश्चयप्रान्ते किञ्चिन्मात्रो मुद्रितोऽयं ग्रन्थः । एतस्याद्यं पद्यमिदम्–

" अस्पृशद्गतिमतीह शोभते सिध्यतो नहि मतिः सुमेधसाम् ।
इत्यखण्डितमपण्डपण्डिताचारमण्डनमसावुपक्रमः ॥ १ ॥ "

८ अस्याद्यं पद्यमिदम्—"आदिजिनं वन्दे गुणसदनं सदनन्तामलबोधं रे ।
बोधकतागुणविस्तृतकीर्तिं कीर्तितपथमविरोधं रे ॥१॥"

९ प्रेक्ष्यतां भूमिकायाः पृष्ठं द्वादशम् ।

१० प्राथमिकं पद्यमेवम्– " श्रीवर्धमानं जिनवर्धमानं, नमामि तं कामितकामकुम्भम् ।
आकारभेदेऽपि कुबुद्धिभेदे, शस्त्रस्य तुल्यं यदुपज्ञशास्त्रम् ॥ १ ॥"

११ अस्या आद्यं पद्यद्वयमेवम्—

| ग्रन्थाङ्कः | ग्रन्थनाम | ग्रन्थमानम् | टीका | प्रकाशनम् |
|---|---|---|---|---|
| ९ | आराधकविराधकचतुर्भङ्गी[1] | | | आत्मा० |
| १० | उपदेशरहस्यम् ( प्रा० )[2] | २७०० | स्वोपज्ञा[3] | श्रेष्ठिमनसुखभाइभगु० |
| ११ | ऐन्द्रस्तुतयः | | स्वोपज्ञा[4] अवचूरिश्च | आत्मा० आगमो० |
| १२ | गुरुतत्त्वविनिश्चयः[5] ( प्रा० )[6] | ९०५ | स्वोपज्ञा[7] | आत्मा० |
| १३ | जैनतर्कपरिभाषा[8] | ८०० | | जै. ध. प्र. स. |
| १४ | ज्ञानबिन्दुः[9] | १२५० | | " |
| १५ | ज्ञानसारः[10] | | स्वोपज्ञा[11] | |

" स्वस्ति श्रीपूर्णघूर्णन्नतसुरसुरसोल्लासिमूर्धार्पितस्रग्-
राजीराजीवगुञ्जद्भ्रमरपरिकरैः सेव्यपादारविन्दः ।
स्वर्धाबन्धात् स्वभासामिव कनकगिरिं कम्पयन् स्वर्णवर्णः ।
शोभाभिर्वर्धमानः स जिनपरिवृढः पातु वो **वर्धमानः** ॥ १ ॥
नत्वा गुरुपदकमलं स्मृत्वा वाचं परोपकारकृते ।
स्वोपज्ञाध्यात्मिकमतखण्डनटीकां करोमि मुदा ॥ १ ॥ "

१ " श्रुतशीलव्यपेक्षाया-**माराधकविराधकौ** ।
प्रत्येकसमुदायाभ्यां, चतुर्भङ्गीं श्रितौ श्रुतौ ॥ १ ॥"

इति **सामाचारीप्रकरणेन** सह मुद्रितस्य गद्यबद्धटीकाविभूषितस्यास्य प्रारम्भिकं पद्यम् ।

२ " नमिऊण **वद्धमाणं**, वुच्छे भविआण बोहणट्ठाए ।
सम्मं गुरूवइट्ठं **उवएसरहस्समुक्किट्ठं** ॥ १ ॥ " इति पद्यं प्रारम्भे ।

३ टीकादौ एवम्—"ऐंकारकलितरूपां स्मृत्वा वाग्देवतां विबुधवन्द्याम् ।
निजमुपदेशरहस्यं विवृणोमि गभीरमर्थेन ॥"

४ स्वोपज्ञटीकादौ—
" ऐन्द्रवृन्दनतं पूर्ण-ज्ञानं सत्यगिरं जिनम् । नत्वा विवरणं कुर्वे, स्तुतीनामर्हतामहम् ॥ ".

५ **गुरुतत्त्वनिर्णयादभिन्नो** न वेति न निर्णयः ।

६ प्रारम्भिका गाथा त्वेवम्—
" पणमिय **पासजिणिंदं** संखेसरसंठियं महाभागं ।अत्तट्ठीण हिअट्ठा **गुरुतत्तविणिच्छयं** वुच्छं ॥ "

७ सप्तसहस्रीप्रमाणिकाटीकादौ इत्थम्—
" ऐन्द्रश्रेणिनतं नत्वा, जिनं स्याद्वाददेशिनम् । स्वोपज्ञं विवृणोम्येनं, **गुरुतत्त्वविनिश्चयम्** ॥ १ ॥ "

८ "ऐन्द्रवृन्दनतं नत्वा, जिनं तत्त्वार्थदेशिनम् । प्रमाणनयनिक्षेपै-**स्तर्कभाषां** तनोम्यहम् ॥ १ ॥"

९ ' ऐन्द्रस्तोमनतं नत्वा, **वीरं** तत्त्वार्थदेशिनम् । **ज्ञानबिन्दुः** श्रुताम्भोधेः, सम्यगुद्ध्रियते मया ॥ १ ॥

१० " ऐन्द्रश्रीसुखमग्नेन, लीलालग्नमिवाखिलम् । सच्चिदानन्दपूर्णेन, पूर्णं जगदवेक्ष्यते ॥ १ ॥"

११ गूर्जरवाण्यां बालावबोधः । तत्रादिर्यथा—
" ऐन्द्रवृन्दनतं नत्वा, **वीरं** तत्त्वार्थदेशिनम् । अर्थः **श्रीज्ञानसारस्य**, लिख्यते लोकभाषया ॥ १ ॥ "

| ग्रन्थाङ्कः | ग्रन्थनाम | ग्रन्थमानम् | टीका | प्रकाशनम् |
|---|---|---|---|---|
| | | | श्रीदेवचन्द्रकृत-ज्ञानमञ्जरीटीका | आत्मा० |
| *१६ | ज्ञानार्णवः[1] | | स्वोपज्ञा | |
| *१७ | तत्त्वविवेकः[3] | | | |
| *१८ | तिङन्वयोक्तिः[4] | | | |
| १९ | देवधर्मपरीक्षा[5] | ४२५ | | जै. ध. प्र. स. |
| २० | द्वात्रिंशद्द्वात्रिंशिका[6] | ५५००(ससूत्रम्) | स्वोपज्ञा[7] | " |
| २१ | धर्मपरीक्षा[8] ( प्रा० ) | ५५५० | स्वोपज्ञा[9] | हेमचन्द्राचार्यग्रन्थमाला |

१ "ऐन्द्रवीं तां कलां स्मृत्वा, धीमान् न्यायविशारदः। **ज्ञानार्णव**सुधास्नान–पवित्राः कुरुते गिरः ॥१॥"

२ ज्ञानपञ्चकप्रपञ्चात्मकोऽयं ग्रन्थः। अस्य संसूचनमकारि स्वयं ग्रन्थकारैर्**ज्ञानबिन्दौ** १४२तमे पत्राङ्के "मत्कृत-**ज्ञानार्णवा**दवसेयम्" इत्यादिना **शास्त्रवार्तासमुच्चय**वृत्तौ ( पृ० २०, ४८, ५४, २७०, ३६७ ) च।

३ आद्यं पद्यद्वयमेवम्–"ऐन्द्रश्रीर्यत्पदाब्जे विलुठति सततं राजहंसीव यस्य
ध्यानं मुक्तेर्निदानं प्रभवति च यतः सर्वविद्याविनोदः।
श्रीमन्तं **वर्धमानं** त्रिभुवनभवनाभोगसौभाग्यलीला–
विस्फूर्जत्केवलश्रीपरिचयरसिकं तं जिनेन्द्रं भजामः ॥ १ ॥"
सिद्धान्तसुधास्वादी परिचिन्तामणिर्नयोल्लासी।
**तत्त्वविवेकं** कुरुते न्यायाचार्यो **यशोविजयः** ॥ २ ॥"

तत्रेयमिष्टदेवतानमस्कारपूर्विका प्रतिज्ञागर्भा प्रथमा गाथा—
" नमिऊण **महावीरं** तियसिंदनमंसियं महाभागम्।
विसईकरेमि सम्मं दव्वथए **कूवदिट्ठंतं** ॥ १ ॥"

अनेन श्री**यशोविजय**गणीनां न्यायाचार्यत्वं, कूपदृष्टान्तनामकग्रन्थस्य **तत्त्वविवेका**दभिन्नता च सिध्यति।

४ " ऐन्द्रव्रजाभ्यर्चितपादपद्मं, सुमेरुधीरं प्रणिपत्य **वीरम्**। "
वदामि नैयायिकशाब्दिकानां मनोविनोदाय **तिङन्वयोक्तिम्** ॥ १ ॥"

५ "ऐन्द्रवृन्दनतं नत्वा, **वीरं** तत्त्वार्थदर्शिनम्। निराकरोमि देवानामधर्मवचनभ्रमम् ॥ १ ॥"

६ "ऐन्द्रशर्मप्रदं दानमनुकम्पासमन्वितम्। भक्त्या सुपात्रदानं तु मोक्षदं देशितं जिनैः ॥ १ ॥"

७ **तत्त्वार्थदीपिका**नाम्नीटीकादौ एवम्—
" ऐन्द्रवृन्दविनताङ्घ्रियामलं, यामलं जिनपतिं समाश्रिताम्।
योगिनोऽपि विनमन्ति भारतीं, भारती मम ददातु सा सदा ॥ १ ॥ "

८ आद्यं पद्यमित्थम्–"पणमिय पासजिणिंदं **धम्मपरिक्खा**विहिं पवक्खामि।
गुरुपरिवाडीसुद्धं आगमजुत्तीहिं अविरुद्धं ॥ १ ॥"

९ टीकाऽऽदिर्यथा—"ऐन्द्रश्रेणिकिरीटकोटिरनिशं यत्पादपद्मद्वये
हंसालिश्रियमादधाति न च यो दोषैः कदापीक्षितः।
यद्वागीः कल्पलता शुभाशयभुवः सर्वप्रवादस्थिते–
र्ज्ञानं यस्य च निर्मलं स जयति त्रैलोक्यनाथो जिनः ॥ १ ॥"

| ग्रन्थाङ्कः | ग्रन्थनाम | ग्रन्थमानम् | टीका | प्रकाशनम् |
|---|---|---|---|---|
| २२ | नयप्रदीपः[1] | | | जै. ध. प्र. स. |
| २३ | नयरहस्यम्[2] | | | ” |
| २४ | नयोपदेशः[3] [4] | | स्वोपज्ञा नयामृत-तरङ्गिणीनाम्नी श्रीभावप्रभसूरिकृत-पर्यायसमेता च[5] | ” |
| *२५ | निशाभक्तविचारः[6] | | | आत्मा० |
| २६ | न्यायखण्डनखण्डखाद्यम्[7] ( महावीरस्तवनप्रकरणम् ) | ५५०० | | श्रेष्ठिमन० |
| २७ | न्यायालोकः[8] [9] | १२०० | | ” |

१ "ऐन्द्रादिप्रणतं देवं, ध्यात्वा सर्वविदं हृदि । सप्तभङ्गनयानां च, वक्ष्ये विस्तरमाश्रुतम् ॥१॥"

२ "ऐन्द्रश्रेणिनतं नत्वा वीरं तत्त्वार्थदेशिनम् । परोपकृतये ब्रूमो रहस्यं नयगोचरम् ॥ १ ॥"

३ "ऐन्द्रधाम हृदि स्मृत्वा, नत्वा गुरुपदाम्बुजम् । **नयोपदेशः** सुधियां, विनोदाय विधीयते ॥ १ ॥

४ अस्य १४३तमं पद्यं यशःश्रीपदगर्भितम्, तद् यथा—

" सुनिपुणमतिगम्यं मन्दधीदुःप्रवेशं, प्रवचनवचनं न क्वापि हीनं नयौघैः ।
गुरुचरणकृपातो योजयंस्तान् पदे यः, परिणमयति शिष्यांस्तं वृणीते यशःश्रीः "

५ वृत्तिप्रारम्भे—

" ऐन्दवीव विमला कलाऽनिशं भव्यकैरवविकाशनोद्यता ।
तन्वती **नय**विवेकभारती भारती जयति विश्ववेदिनः ॥ "

६ "ऐन्द्रश्रेणिनतं नत्वा, **वीरं** तत्त्वार्थदेशिनम् । स्वरूपेणैव दुष्टत्वं, **निशाभक्ते** विभाव्यताम् ॥१॥"

७ आद्यं पद्यम्—"ऐङ्कारजापवरमाप्य कवित्ववित्त्व-वाञ्छासुरद्रुमुपगङ्गमभङ्गरङ्गम् ।
सूक्तैर्विकासिकुसुमैस्तव **वीर** ! शम्भो–रम्भोजयोश्चरणयोर्वितनोमि पूजाम् ॥ १ ॥"

८ यदभ्यासेन बुद्धेस्तलस्पर्शिता सूक्ष्मता गहनता विचारणायाश्चाधिपत्यं सम्प्राप्यते तस्य नव्यन्यायस्य परिष्काररूपोऽयं ग्रन्थो **न्यायालोकवत्** । यस्यां प्रमेयाणां मीमांसा सत्तमेन प्रकारेण दरीदृश्यते यत्र च **सम्मतितर्क**गतविविधदर्शनतत्त्वोहापोहो मनोमोहकया पद्धत्या सङ्क्षिप्तः सा **स्याद्वादकल्पलता**ऽपि नव्यन्यायेन जटिला, किन्तु दुर्गमतायामनयोरपेक्षया न्यूना ।

९ प्रारम्भ एवम्—"प्रणम्य परमात्मानं, जगदानन्ददायिनम् ।
**न्यायालोकं** वितनुते, धीमान् न्यायविशारदः ॥ १ ॥"

१० **न्यायखण्डनवत्** अस्यापि स्वहस्तलिखिता प्रतिः समस्ति ।

| ग्रन्थाङ्कः | ग्रन्थनाम | ग्रन्थमानम् | टीका | प्रकाशनम् । |
|---|---|---|---|---|
| २८ | [1]पञ्चनिर्ग्रन्थीप्रकरणम् | | | |
| २९ | [2]परमज्योतिःपञ्चविंशतिका | | | श्रीमन्मुक्ति- जैनमोहनमाला |
| ३० | [3]परमात्मपञ्चविंशतिका | | | श्रीमन्मुक्ति० |
| ३१ | [4]प्रतिमाशतकम् | | [5]स्वोपज्ञा | ,, |
| | | | श्रीभावप्रभसूरिकृता लघुवृत्तिश्च | आत्मा० |
| ३२ | [6]प्रतिमास्थापनन्यायः | | | श्रीमन्मुक्ति० |
| ३३ | [7]फलाफलविषयकप्रश्नोत्तरम् | | | |
| ३४ | [8]भाषारहस्यम् | | [10]स्वोपज्ञा | श्रेष्ठिमनःसुख० |
| ३५ | [11]मार्गपरिशुद्धिः | | | श्रीमन्मुक्ति० |

१ श्रीअभयदेवसूरिकृतादन्यदिदम् ।

२ "ऐन्द्रं तत्परमं ज्योति–रुपाधिरहितं स्तुमः । उदिते स्युर्यदंशेऽपि, सन्निधौ निधयो नव ॥ १ ॥"

३ "परमात्मा परं ज्योतिः, परमेष्ठी निरञ्जनः । अजः सनातनः शम्भुः, स्वयम्भूर्जयताज्जिनः ॥ १ ॥"

४ अस्य प्रारम्भः–"ऐन्द्रश्रेणिनता प्रतापभवनं भव्याङ्गिनेत्रामृतं
सिद्धान्तोपनिषद्विचारचतुरैः प्रीत्या प्रमाणीकृतः ।
मूर्तिः स्फूर्तिमती सदा विजयते जैनेश्वरी विस्फुर–
न्मोहोन्मादघनप्रमादमदिरामत्तैरनालोकिता ॥ १ ॥"

५ टीकाप्रारम्भे–
" ऐन्द्रश्रेणीप्रणतश्रीवीरवचोऽनुसारियुक्तिभृतः ।
**प्रतिमाशतकग्रन्थः** प्रथयतु पुण्यानि भविकानाम् ॥ "

६ 'पूजां०' हे प्रभो! 'सं० असुमतां–प्राणिनां सतामुत्तमानां' अयं प्रारम्भभागः । अपूर्णोऽयं ग्रन्थः ।

७ 'जैनसाहित्यसंशोधके' तृतीये खण्डे द्वितीयेऽङ्के प्रसिद्धिं यास्तीति श्रूयते ।

८ प्रारम्भिकं पद्यं यथा–"पणमिय पासजिणिंदं **भासरहस्सं** समासओ वोच्छं ।
तं नाऊणं सुविहिया चरणविसोहिं उवलहंति ॥ १ ॥"

९ एतद्ग्रन्थप्रारम्भगतनिम्नलिखित—
" भाषाविशुद्ध्यर्थं रहस्यपदाङ्किततया चिकीर्षिताष्टोत्तरशतग्रन्थान्तर्गतप्रमारहस्य–स्याद्वादरहस्यादिसजातीयं प्रकरणमिदमारभ्यते "
—पङ्क्तिप्रेक्षणेनावगम्यते यदुत उपाध्यायपुङ्गवैः प्राणायि रहस्यशब्दाङ्किता ग्रन्थशती अष्टोत्तरा ।

१० टीकाप्रारम्भे पद्यं त्वेवम्—
ऐन्द्रवृन्दनतं पूर्ण–ज्ञानं **सत्यमिरं जिनम्।**
नत्वा **भाषारहस्यं स्वं, विवृणोमि यथामति ॥** "

११ मूलमात्रमुत्तरार्धमेव मुद्रितं, पूर्वार्धस्यानुपलब्धेः । एतत्प्रारम्भस्तु यथा—

| ग्रन्थाङ्कः | ग्रन्थनाम | ग्रन्थमानम् | टीका | प्रकाशनम् |
|---|---|---|---|---|
| ३६ | मुक्ताशुक्तिः | | | |
| ३७ | यतिदिनचर्याप्रकरणम् | | | |
| ३८ | यतिलक्षणसमुच्चयः ( प्रा० ) | २६३ | | जै. ध. प्र. स. |
| ३९ | वैराग्यकल्पलता | ६०५० | | भीमसिंहमाणेक |
| ४० | श्रीगोडीपार्श्वस्तोत्रम् | १०८ ( पद्यात्मकम् ) | | |
| ४१ | श्रीविजयप्रभसूरिस्वाध्यायः | ७ ,, | | अत्रैव |
| ४२ | श्रीशङ्खेश्वरपार्श्वस्तोत्रम् | ११२ ,, | | |

" ऐन्द्रश्रेणिनताय प्रथमाननयप्रमाणरूपाय । भूतार्थभासनाय त्रिजगद्गुरुशासनाय नमः । "

१ **वैराग्यकल्पलतायाः** किमपि प्रकरणमिदमिति केचित् ।

२ श्रीवीरः श्रेयसे यस्य, चित्रं स्नेहदशात्यये । सद्ध्यानदीपोऽदीपिष्ट, जलसङ्गमविप्लवात् ॥ १ ॥

३ ' कृतिरियं महोपाध्यायश्री**यशोविजय**गणीनाम् ' इति तत्प्रकरणान्ते १७६१वर्षे लिखितादर्शे, भृगुकच्छीयभाण्डागारगतप्रतौ तु ' **महिमप्रभ इति कर्तृ**नामधेयम् ।

४ सिद्धत्थरायपुत्तं तित्थयरं पणमिऊण भत्तीए ।
सुत्तोइअणीईए सम्मं **जइलक्खणं** वुच्छं ॥ १ ॥" इति पद्यं प्रथमम् ।

५ अर्धप्राया मुद्रिता गूर्जरानुवादसमेतायस्या आद्यं पद्यमिदम्—
" ऐन्द्रीं श्रियं **नाभिसुतः** स दद्या—द्यापि धर्मस्थितिकल्पवल्लिः ।
येनोप्तपूर्वा त्रिजगज्जनानां, नानान्तरानन्दफलानि सूते ॥ १ ॥ "

६ षड्दर्शनमान्यतागर्भितः सप्तपद्यात्मको ग्रन्थोऽयम् । स चैवम् ( कडखो)-
" श्रीविजयसूरीशपट्टाम्बरे जयति **विजयप्रभः** सूरिरर्कः ।
जैनवैशिष्ट्यसिद्धिप्रसङ्गादिना निजगृहे योगसमयाय तर्कः ॥ १ ॥
ज्ञानमेकं भवद् विश्वकृत् केवलं दृष्टबाधा तु कर्तरि समाना ।
इति जगत्कर्तृलोकोत्तरे सङ्गते सङ्गता यस्य धीः सावधाना ॥ श्रीविजय० २ ॥
ये किलापोहशक्तिं सुगतसूनवो जातिशक्तिं च मीमांसका ये ।
सङ्गिरन्ते गिरं ते यदीयं नयद्वैतपूतां प्रसह्य सहन्ते ॥ श्रीविजय० ३ ॥
कारणं प्रकृतिरङ्गीकृतं कापिलैः क्वापि नैवात्मनः काऽपि शक्तिः ।
बन्धमोक्षव्यवस्था तदा दुर्घटेत्यत्र जागर्ति यत्प्रौढशक्तिः ॥ श्रीविजय०४ ॥
शाब्दिकाः स्फोटसंसाधने तत्परा ब्रह्मसिद्धौ च वेदान्तनिष्ठाः ।
**सम्मति**प्रोक्तसङ्ग्रहरहस्यान्तरे यस्य वाचा जितास्ते निविष्टाः ॥ श्रीविजय० ५ ॥
ध्रौव्यमुत्पत्तिविध्वंसकिर्मीरितं द्रव्यपर्यायपरिणतिविशुद्धम् ।
विस्रसायोगसङ्घातभेदाहितं स्वसमयस्थापितं येन बुद्धम् ॥ श्रीविजय० ६ ॥
इति नुतः श्रीविजयप्रभो ! भक्तितस्तर्कयुक्त्या मया गच्छनेता ।
श्री **यशोविजय**सम्पत्करः कृतधियामस्तु विघ्नापहः शत्रुजेता ॥ श्रीविजय० ७ ॥"

| ग्रन्थाङ्कः | ग्रन्थनाम | ग्रन्थमानम् | टीका | प्रकाशनम् |
|---|---|---|---|---|
| ४३ | समीकापार्श्वस्तोत्रम् | | | |
| ४४ | सामाचारीप्रकरणम् | | स्वोपज्ञा | आत्मा० |
| ४५ | स्तोत्रावलिः | | | |

---

## पूर्वाचार्यकृतग्रन्थानां न्यायाचार्यकृता उपलब्धाष्टीकाः

| | | |
|---|---|---|
| १ | अष्टसहस्रीविवरणम् | ८(५?)००० |

---

१ " जह मुणिसामायारिं संसेविय परमनिव्वुइं पत्तो ।
तह वद्धमाणसामिय ! होमि कयत्थो तुह थुईए ॥ १ ॥" इत्याद्यं पद्यम् ।

२ टीकाप्रारम्भे तु—

" ऐंकारकलितरूपां स्मृत्वा वाग्देवतां विबुधवन्द्याम् ।
सामाचारीप्रकरणमेष स्वकृतं सुविवृणोमि ॥ १ ॥"

३ अष्टसहस्रीविवरणप्रारम्भे—

" ऐन्द्रं महः प्रणिधाय न्यायविशारदयतिर्यशोविजयः ।
विषमामष्टसहस्रीमष्टसहस्र्या विवेचयति ॥ १ ॥

( मुनिवरश्रीचतुरविजयज्ञापिते पद्ये तु ' विषमामष्टसहस्रीं पञ्चसहस्र्या विवेचयति ' इति पाठभेदः )

सिताम्बरशिरोमणिर्विदितचारुचिन्तामणि-
र्विधाय हृदि रुच्यतामिह समानतन्त्रे नये ।
अनर्गलसमुच्छलद्बहलतर्कवर्णोदक-
च्छटाभिरयमुत्सवं वितनुते विपश्चित्कुले ॥ २ ॥

स्याद्वादार्थः क्वापि कस्यापि शास्त्रे यः स्यात् कश्चिद् दृष्टिवादार्णवोत्थः ।
तस्याख्याने भारती सस्पृहा मे भक्तिव्यक्तेर्नाग्रहोऽणौ पृथौ वा ॥ ३ ॥

अम्भोराशेः प्रवेशे प्रविततसरितां सन्ति मार्गा इवोच्चैः
स्याद्वादस्यानुयोगे कति कति न पृथक् सम्प्रदाया बुधानाम् ? ।
शक्यः स्वोत्प्रेक्षितार्थैररुचिविषयतां तत्र नैकोऽपि नेतुं
जेतुं दुर्वादिवृन्दं जिनसमयविदः किं न सर्वे सहायाः ? ॥ ४ ॥

समन्तभद्रो हि ( नु ) कारिकाणां कर्ता तु वक्ता त्वकलङ्कदेवः ।
व्याख्याति भाष्यानुगमेन विद्यानन्दोऽप्यमन्दोऽयमतः स्फुटं ताः ॥ ६ ॥

श्रेय इति अलङ्करणे इत्यत्रान्वयि । श्रीवर्धमानस्येति ॥

अन्ते—

ज्ञानेऽन्यहेतुश्च जिनप्रसादात् ॥

इति श्रीमदकबरसुरत्राणप्रदत्तजगद्गुरुबिरुदधारकभट्टारकश्रीहीरविजयसूरीश्वरशिष्यमुख्यमहोपाध्याय-श्रीकल्याणविजयगणिशिष्यावतंसपण्डितश्रीलाभविजयशिष्याग्रेसरपण्डितश्रीजीतविजयगणिसतीर्थ्यालङ्कार-पण्डितश्रीनयविजयगणिचञ्चरीकचरणकमलेन ( ? चरणकमलचञ्चरीकेण ) पण्डितश्रीपद्मविजयगणिसहोदरेण महोपाध्यायश्रीयशोविजयगणिना विरचिते अष्टसहस्रीविवरणे दशमः परिच्छेदः ॥ १० ॥ "

| ग्रन्थाङ्कः | ग्रन्थनाम | ग्रन्थमानम् | विशेतषा | प्रकाशनम् |
|---|---|---|---|---|
| २ | कम्मपयडी( कर्मप्रकृति )टीका[1] | १३००० | स्वहस्तलिखिता | श्रेष्ठि दे. ला. |
| ३ | कम्मपयडीलघुटीका[2] | | | आत्मा० |
| ४ | तत्त्वार्थवृत्तिः[3] | | | श्रेष्ठिमन० |
| ५ | द्वादशारचक्रोद्धारविवरणम्[4] | १८००० | | |
| ६ | धर्मसङ्ग्रहोपरि टिप्पणम् | | | श्रेष्ठि दे. ला. |
| ७ | पातञ्जलयोगसूत्रवृत्तिः[5] | | | आत्मा० |
| ८ | योगविंशिकाविवरणम्[6] | | | आत्मा० |
| ९ | शास्त्रवार्तासमुच्चयटीका[7] ( स्याद्वादकल्पलता ) | १३००० | | श्रेष्ठि दे. ला. |

---

१ आद्यं पद्यम्—"ऐन्द्री समृद्धिर्यदुपास्तिलभ्या, तं पार्श्वनाथं प्रणिपत्य भक्त्या ।
व्याख्यातुर्माहे सुगुरुप्रसाद-मासाद्य कर्मप्रकृतिं गभीराम् ॥ १ ॥"

२ सप्तगाथामात्रा मुद्रिता कर्मप्रकृतिलघुवृत्तिः आत्मानन्दसंसदा । तस्याः प्रारम्भो यथा—
"ऐन्द्रश्रेणिनतं नत्वा, वीरं तत्त्वार्थदेशिनम् । अथ संक्षेपतः कर्म-प्रकृतेर्यतनतो ब्रुवे ॥ १ ॥"

३ एकाध्यायावसाना अपूर्णा उत्तरभागस्यानुपलब्धेः । कारिकायाः प्रथमं सटीकं श्लोकपञ्चकं विशीर्णम्, अतः प्रथमाध्यायाद्यसूत्रवृत्तिभागो दीयतेऽत्र । स चैवम्—

"इदमाद्यमनवद्यमुक्तिपथोपदेशसूत्रं सकलतत्त्वार्थशास्त्राभिधेयमुररीकृत्य प्रवृत्तं द्वादशाङ्गप्रवचनार्थसङ्ग्राहि सामायिकसूत्रवत् ।"

४ "प्रणिधाय परं रूपं राज्ये श्रीविजयदेवसूरीणाम् ।
नयचक्रस्यादर्शं प्रायो विरलस्य वितनोमि ॥ १ ॥" इति प्रारम्भिकं पद्यम् ।

स्व०श्रीविजयधर्मसूरिसङ्कलिते प्रशस्तिसङ्ग्रहे चुनीजीभाण्डागारप्रतिगतनयचक्रस्यान्ते उल्लेखोऽयम्—
"आदर्शोऽयं रचितो राज्ये श्रीविजयदेवसूरीणाम् ।
सम्भूय यैरमीषामभिधानानि प्रकटयामि ॥ १ ॥
विबुधाः श्रीनयविजया गुरवो जयसोमपण्डिता गुणिनः ।
विबुधाश्च लाभविजया गणयोऽपि च कीर्तिरत्नाख्याः ॥ २ ॥
तत्त्वविजयमुनयोऽपि प्रयासमत्र स्म कुर्वते लिखने ।
सह रविविजयैर्विबुधैरलिखच्च यशोविजयविबुधः ॥ ३ ॥
ग्रन्थप्रयासमेनं दृष्ट्वा तुष्यन्ति सज्जना बाढम् ।
गुणमत्सरव्यवहिता दुर्जनदृक् वीक्षते नैव ॥ ४ ॥"

५ "ऐन्द्रवृन्दनतं नत्वा, वीरं सूत्रानुसारतः । वक्ष्ये पातञ्जलस्यार्थं, साक्षेपं प्रक्रियाश्रयम् ॥ १ ॥"

६ "ऐं नमः । अथ योगविंशिका व्याख्यायते–'मुक्खेण' त्ति मोक्षेण" इति प्रारम्भभागः ।

७ "ऐन्द्रश्रेणिनताय दोषहुतभुङ्नीराय नीरागता-धीराजद्विभवाय जन्मजलधेस्तीराय धीरात्मने ।
गम्भीरागमभाषिणे मुनिमनोमाकन्दकीराय स-न्नासीराय शिवाध्वनि स्थितिकृते वीराय नित्यं नमः॥१॥"

| ग्रन्थाङ्कः | ग्रन्थनाम | ग्रन्थमानम् | प्रकाशनम् |
|---|---|---|---|
| १० | षोडशकवृत्तिः[1] | १२०० | श्रेष्ठि दे. ला. |
| ११ | स्तवपरिज्ञापद्धतिः[2] | | श्रीमन् मुक्ति० |

# अनुपलब्धा ग्रन्थाष्टीकाश्च ।



१ अध्यात्मबिन्दुः ( ? )
२ अध्यात्मोपदेशः
३ अलङ्कारचूडामणिटीका[3]
४ आकरः[4]
५ आत्मख्यातिः ( ज्योतिः ? )
६ काव्यप्रकाशटीका
७ छन्दश्चूडामणिटीका
८ ज्ञानसारचूर्णिः
९ तत्त्वालोकविवरणम्
१० त्रिसूत्र्यालोकविधिः
११ द्रव्यालोकः
१२ प्रमारहस्यम्
१३ मङ्गलवादः
१४ लताद्वयम्[5]
१५ वादमाला
१६ वादरहस्यम्[5]
१७ विचारबिन्दुः
१८ विधिवादः

---

१ योगदीपिकाऽभिधावृत्तिप्रारम्भे—

"ऐन्द्रश्रेणिनतं वीरं, स्मृत्वाऽस्माभिर्विधीयते । व्याख्या षोडशकग्रन्थे, संक्षिप्ताऽर्थावगाहिनी ॥ १ ॥"

२ प्रतिमाशतकस्य ( ६७ तमपद्यस्य ) स्वोपज्ञवृत्त्यन्तर्गता २०३ गाथाप्रमाणिका । आद्यं पद्यं यथा—

" अथ स्तवपरिज्ञया, प्रथमदेशनादेश्यया
गुरोर्गरिमसारया स्तवविधिः परिस्तूयते ।
इयं खलु समुद्धृता सरसदृष्टिवादादितः
श्रुतं निरघमुत्तमं समयवेदिभिर्वर्ण्यते ॥ १ ॥ "

साक्षितया निर्दिष्टमिदं स्वयं कर्तृभिः शास्त्रवार्तासमुच्चयटीकायां ( पृ० २२।२०९ ) ।

३ प्रपञ्चितं चैतदलङ्कारचूडामणिवृत्तावस्माभिरिति प्रतिमाशतके ( ९९तमपद्यस्य स्वोपज्ञटीकायाम् ) ।

४ इदं वैराग्यकल्पलतास्याद्वादकल्पलतासञ्ज्ञकमाहोस्विदन्यदिति प्रश्नः ।

५ रहस्यपदाङ्किता अन्येऽपि ग्रन्था अनुपलब्धाः ।

| | |
|---|---|
| १९ [1]वीरस्तवटीका | २४ सिद्धान्ततर्कपरिष्कारः |
| २० वेदान्तनिर्णयः | २५ सिद्धान्तमञ्जरीटीका |
| २१ वेदान्तविवेकसर्वस्वम् | २६ स्याद्वादमञ्जूषा ( स्याद्वादमञ्जरीटीका ) |
| २२ वैराग्यरतिः | २७ [2]स्याद्वादरहस्यम् |
| २३ शठप्रकरणम् | |

न केवलं संस्कृतप्राकृतभाषानिबद्धा गद्यपद्यात्मिकाः कृतयः कृतिकुञ्जराणाम्, परन्तु एभिर्महानुभावैर्द्रव्यगुणपर्यायरासकाद्यनेके ग्रन्था जग्रन्थिरे गूर्जरगिरायामपि[3] । तत्रापि लोकप्रकाश-शान्तसुधारस-लघुहैमप्रक्रियादिप्रणेतृमहामहोपाध्यायश्रीविनयविजयगणीनां 'श्रीपालराजानो रासेति' नाम्नी गूर्जरकृतिः वैक्रमीये १७३८तमेऽब्दे समाप्तिं नीता एभिर्महाशयैः तेषां विश्वासभाजनैरिति न विस्मर्तव्यम् ।

अनेन स्फुटीभवति यत् कियदुपकारं चक्रुर्विविधविषयविशारदाः श्रीयशोविजयपादाः । [4]परोपकारिचक्रशक्रैरेभिरन्येषां ग्रन्था अपि संशोधिताः । एतत्समर्थनेऽवलोक्यतां निम्नलिखितं उपाध्यायश्रीमानविजयकृतधर्मसङ्ग्रहगतं पद्यम्—

"सत्तर्ककर्कशधियाऽखिलदर्शनेषु, मूर्धन्यतामधिगतास्तपगच्छधुर्याः ।
काश्यां विजित्य परयूथिकपर्षदोऽग्र्या, विस्तारितः प्रवरजैनमतप्रभावः ॥ १ ॥
तर्कप्रमाणनयमुख्यविवेचनेन, प्रोद्बोधितादिममुनिश्रुतकेवलित्वाः ।
चक्रुर्यशोविजयवाचकराजिमुख्या, ग्रन्थेऽत्र मय्युपकृतिं परिशोधनाद्यैः ॥ २ ॥
बाल इव मन्दगतिरपि, सामाचारीविचारदुर्गम्ये ।
अत्राभूवं गतिमां-स्तेषां हस्तावलम्बेन ॥ ३ ॥"

श्रीमद्भिरानन्दघनमहर्षिभिः श्रीज्ञानविमलसूरिभिश्च समं गाढतरः सम्बन्धः श्रीमतामिति अष्टपद्या नवपदपूजया चानुमीयते ।

यद्यप्येतन्नानानिर्मितिनिचयस्य सुपरिचयः शेमुषीशालिनां स्पृहणीयोऽत्यावश्यको महा-

---

१ इयं न्यायखण्डनखण्डखाद्यतो भिन्ना न वेति सन्देहः ।

२ साक्षिरूपेण निर्दिष्टोऽयं ग्रन्थो **न्यायालोकस्य** तृतीयस्य प्रकाशस्य प्रान्ते भागे, यथाहि—
"पर्यायाश्चानन्ता इति न तेषां विविच्य विभाग इत्यधिकमत्रत्यं तत्त्वं **स्याद्वादरहस्यादावनुसन्धेयम्**"

३ ८४दिक्पटबोलनामको ग्रन्थो 'डिंगल'भाषायां, १०१ बोल-१०८बोलसञ्ज्ञकस्तु गूर्जरगिरि ।

४ एतेषां संवेगमार्गनायकरूपेणापि सौजन्यं समस्तीति समर्थ्यते श्रीविबुधविमलसूरिकृतायाः **सम्यक्त्वपरीक्षाया** निम्नलिखितेन पद्येन—

" धत्ते न्याययशा यशोविजयतां श्रीवाचको नामनि
साहाय्याद् बुध **ऋद्धिनामविमलः** संवेगमार्गस्थितः ।
तच्छिष्यो गुरुकीर्ति**कीर्तिविमलो** बुद्धो गुरुस्तच्छिशुः
सूरिः **श्रीविबुधाभिधानविमलो** ग्रन्थं व्यधत्तामुकम् ॥ "

निबन्धनिबन्धीभूतश्च तथापि यथेष्टसाधनस्थानसङ्कोचात् नारभ्यते प्रयास ऐतादृग्। अत्र तु प्रत्येकजिनवरस्तुतिप्रान्तपद्यस्थदेवतानुतिरूपविषयाणां छन्दसां च साम्येन श्रीशोभनस्तुतीनां प्रतिकृतिरूपतां गतानामैन्द्रस्तुतीनां पदादीनां तुल्यत्वं लक्ष्यीक्रियते। यथाहि—

| शोभनस्तुतयः | ऐन्द्रस्तुतयः |
|---|---|
| [3] १,४,३, पायाद् वः श्रुतदेवता निदधती तत्राब्जकान्तिक्रमौ | १,४,२ सौभाग्या श्रयतां हिता निदधती पुण्यप्रभाविक्रमौ |
| २,४,३ वितरतु दधती पविं क्षतोद्यत- | २,४,१ पविमपि दधतीह मानसीन्द्रै— |
| ३,४,३ श्रीवज्रशृङ्खलां कज- | ३,४,३ इह वज्रशृङ्खलां दु- |
| ४,१,१ त्वमशुभान्यभिनन्दन ! नन्दिता- | ४,१,१ त्वमभिनन्दन ! दिव्यगिरा निरा- |
| ४,४,३ परिगतां विशदामिह रोहिणीं | ४,४,३ मदहितानि परैरिह रोहिणी |
| ५,१,१, मदमदनरहित ! नरहित ! | ५,१,१ नम नमदमरसदमरस० |
| ५,३,४ स्मरास्मराधीरधीरसुमतः सुमतः | ५,३,३–४ परमपरमस्मर ! स्मर महामहा धीरधीर ! समयं समयम् |
| ५,४,३ घनघनकाली काली | ५,४,१ कालीकाली रसरस- |
| ६,२,२ मुद्राऽऽगताऽमरसभाऽसुरमध्यगाऽऽद्याम् | ६,२,२ पुण्यानि काचन सभासु रराज नव्या |
| ६,४,१, गान्धारि! वज्रमुसले जयतः समीर- | ६,४,३ गान्धारि! वज्रमुसले जगतीं तवास्याः |
| ८,१,१ तुभ्यं चन्द्रप्रभ ! जिन ! नमस्तामसोज्जृम्भितानां | ८,१,१ तुभ्यं चन्द्रप्रभ ! भवभयाद् रक्षते लेखलेखा- |
| ८,३,१ सिद्धान्तः स्तादहितहतयेऽख्यापयद् यं जिनेन्द्रः | ८,३,३ सिद्धान्तोऽयं भवतु गदितः श्रेयसे भक्तिभाजा- |
| ८,४,१ वज्राङ्कुश्यङ्कुशकुलिशभृत् ! त्वं विधत्स्व प्रयत्नं | ८,४,१ सा त्वं वज्राङ्कुशि ! जय मुनौ भूरिभक्तिः सुसिद्ध— |
| १०,१,१ जयति शीतलतीर्थकृतः सदा | १०,१,१ जयति शीतलतीर्थपतिर्जने |
| ११,४,१ धृतपविफलाक्षालीघण्टैः करैः कृतबोधित- | ११,४,३–४ वितरतु महाकाली घण्टाक्षसन्ततिविस्फुरत्- |

१ अयमपि प्रश्नः परामर्शनीयो यदुत काः काः कृतयः सङ्कलिता महोपाध्यायैर्वाराणसीगमनस्य पूर्वमुत्तरतो वा। एतदूहापोहार्थं कतिपया सामग्री मयैकत्रीकृताऽपि ग्रन्थगौरवभयादत्र नोपस्थीयतेऽधुना।

२ स्तुतिचतुर्विंशतिकायाः ७६तमे पद्ये कपर्दियक्षस्य संस्तवः, ऐन्द्रस्तुतिषु तु एतस्मिन् पद्ये सरस्वत्याः स्तुतिरित्येकमपवादस्थलम्।

३ एतेऽङ्का अनुक्रमेण जिनवर-पद्य-पङ्क्तिसूचका ज्ञेयाः।

| | |
|---|---|
| | पविफलकरा द्युत्यागेहा घनाघन-राजिता |
| १५,२,२ ततान लसमानया | १५,२,२ भाऽसमाना ततान या |
| १८,१,१ व्यमुश्चचक्रवर्त्तिलक्ष्मी० | १८,१,३ विगणितचक्रवर्तिवैभव० |
| १८,३,१ भीममहाभवाब्धिभवभीतिविभेदि परास्तविस्फुरत्— | १८,३,१ भीमभवोदधेर्भुवनमेकतो विधुशुभ्र-मञ्जसा— |
| १८,४,१ याऽत्र विचित्रवर्णविनतात्मजपृष्ठ-मधिष्ठिता हुतात् | १८,४,१—२ चक्रधरा करालपरघातबलिष्ठमधिष्ठिता प्रभा— सुरविनता तनुभवपृष्ठमनुदिता पद-रङ्गतारवाक् |
| १९,१,१ मुदंस्तनुं प्रवितर मल्लिनाथ ! मे | १९,१,१ महोदयं प्रवितनु मल्लिनाथ ! मे |
| २१,३,१ जलव्यालव्याघ्रज्वलनगजरुग्-बन्धनयुधो | २१,४,१ गजव्यालव्याघ्रानलजलसमिद्-बन्धनरुजो— |
| २२,४,१ हस्तालम्बितचूतलुम्बिलतिका यस्या जनोऽभ्यागमद् | २२,४,३ दध्यान्नित्यमिताऽऽम्रलुम्बिलतिका-विभ्राजिहस्ताऽहि तं |

निर्वाणसमयः—

प्रान्ते एतेषां स्मृतिशेषाणां पूज्यपादानां विद्यावारिधीनां दिगन्तप्रसृतयशसां [1]श्रीयशोविजयानां निर्वाणस्थलं दर्भावती (डभोइ) तत्समयश्च १७४५तमे वैक्रमीयेऽब्दे माघमासे सुदि वसन्तपञ्चमीति सूचनेन विरम्यते प्रथमपरिशिष्टपरिचितेः ।

द्वितीये परिशिष्टे श्रीवीरस्तुतिः समस्ति यया संस्मार्यन्ते श्रीसुमतिजिनस्तुतयः श्रीशोभनमुनिवरविरचिताः, यतोऽत्र यमकसाम्यं चतुरचेतश्चमत्कारि विद्यते । एतत्प्रणेतृश्रीरविसागरानुद्दिश्य किमपि वक्तुं नोपक्रम्यते, रविसागरेति नाम्ना प्रसिद्धानां मुनीश्वराणामनेकत्वात् ।

तृतीयपरिशिष्टस्य मुद्रणसमये स्तुतिरियं पूर्वाचार्यप्रणीतेत्यसूचि श्रीचतुरविजयैः, अधुना संसूच्यते तैः पं०शीलशेखरेति कर्तृनामधेयम् । किन्तु विशिष्टसाधनाभावात् तेषां वृत्तान्तो नावगम्यते ।

एवं परिशिष्टत्रितयसम्बन्धिनि वक्तव्येऽपि सम्पूर्णतां प्राप्ते पूर्णा भवति भूमिका, तथाप्यधुना क्रियते स्तुतिचतुर्विंशतिकागतश्रीवीरस्तुतिच्छन्दःस्मारकदण्डकादिच्छन्दोग्रथितायाः स्तुतित्रितय्या उल्लेखो यः समासादितप्रत्याधारेण नास्थानीयः । तावत् प्रक्रम्यते—

---

१ १७३७तमे वैक्रमीयेऽब्दे एभिः प्रतिष्ठितं सिद्धचक्रमद्यापि समस्ति सूर्यपुरे 'कल्याणपार्श्वनाथ'जिनालये ।

श्रीमुनिसुन्दरसूरिविरचिता

# ॥ श्रीवर्धमानजिनस्तुतिः ॥

( ‘ गगन ’दण्डकच्छन्दसि निबद्धा )



ॐ नमो वीतरागाय ।

त्रिभुवनविभ(?)वीप्सितार्थप्रथाप्रत्यलत्वातिकल्पद्रुमोग्रप्रभावस्फुरत्सौरभाद्यत्क्रमाम्भोजरोलम्बलीलावलम्ब्युल्लसद्भक्तिसन्नम्रनाकाधिराट्—

नरपतिततिमौलिसन्मौलिभास्वत्प्रभाजालविद्योतितोपान्तदेशस्त्वमर्हस्त्रिलोकैकबन्धो ! धराधीशसिद्धार्थवंशाग्रभूषामणे ! वर्धमानप्रभो ! ।

कुवलयवनकोकिलश्यामलागाधमोहान्धकारप्रका(चा)रापहार्कबिम्बोपमापारकारुण्यपाथोनिधे ! धाम ! धाम्नां विधेहि प्रसद्याशु मे विभ्रतः

सुकरुणरसगोचर ! त्वं चिरं भीष्मसंसारकान्तारवासोद्भवैर्दुःखपूरैः श्रितस्याधुना पादयुग्मं त्वदीयं कथञ्चित् पुराणैरगण्यैः सुपुण्यैःशिवम् ॥ १ ॥

वितरतु मम निर्वृतेः शर्म सा सन्ततिस्तीर्थराजां विचक्रे सुपर्वेश्वरैः देशनासद्म यस्यास्तदेकश्रिया भ्राजितं भाभराभ्रंलिहादभ्रवप्रत्रयी—

परिगतमुरु किन्नरस्त्री ममारब्धगीतिप्रतिश्रुन्निनादौघवाचालिताशान्तरालं प्रमोदातिरेकात् प्रनृत्यत्सुरालीक्रमाघातसंक्षुब्धगोत्राचलम् ।

त्रिदशततिभिराहितोद्दामवादित्रचक्राऽद्भुतैर्यत्र कोलाहलैः स्फुरति भुवीश्रि ( सुविस्तृ? )—तैर्नाकिनाथोचितोद्यत्पताकावलीनद्धसत्किङ्किणीनिःस्वनैः सङ्गतैः—

स्तरलितितरस्तारमीयुस्तुरङ्गाः किलाहर्मणेर्यानयुग्यास्तथा त्रासमत्युद्भुतं नैव कुत्राप्यवस्थानमेकत्र सम्प्राप्नुयुस्ते यथाऽद्यापि भीता इव ॥ २ ॥

भवतु भवभिदे ममानन्तसङ्ख्यार्थवाचाक्षरालीजलागाधमध्यो जिनेन्दूक्तसिद्धान्तपाथोनिधिर्धीवरैरप्यगम्यस्तनूमत्कृपोल्लासिवेलाकुलो

बहुविधनयभङ्गकाऽप्रत्नरत्नोत्करभ्राजितोऽप्राप्तपारः सुपाठीनमालाभिरप्युल्लसद्धेतुरङ्गत्तरङ्गावलीमालितः प्राज्ययुक्तिप्रथाशुक्तिभृत् ।

पृथुचतुरनुयोगदीव्यत्तटः स्पष्टदृष्टान्तमुक्ताकलापाचिताङ्कप्रदेशो मुनीन्द्रादिसद्वृत्तसर्पत्तिमिश्रेणिभिः सङ्कुलः श्रीनिवासो गभीरत्वभू—

विबुधजनमनोमुदुल्लासनप्रत्यलप्रेङ्खादिद्धप्रमाणौघकेलिमहाभूमिभृद्धोरणीबन्धुरः सूक्तसन्दोहभास्वत्प्रवालालयो देवताऽधिष्ठितः ॥ ३ ॥

अपहर भयमम्भसा सम्भृतस्य भ्रमोद्रेकरूपेण संसारपाथोनिधेर्वीतरागोक्तसिद्धान्तबोधप्रथायानपात्रप्रदानेन वाग्देवि ! विश्वार्चिते !

सुमधुरगतिनिःस्वनं हंसमाकि( धि )रूढवत्यङ्गिनां त्वं शिवाकाङ्क्षिणां लोलरोलम्बझङ्कारारवैरिवागीयमानोल्लसत्सौरभं बिभू(भ्र)ती पुण्डरीकं करे ।

सितकरहारनीहारशुभ्रप्रभाभासमाने ! नरोल्लासिभक्त्या नमन्नाकिनागाङ्गनाचक्रवालोत्तमाङ्गच्युतोदारसिन्दूररेणूत्करै–

ररुणितमभिधारयन्ती क्रमद्वन्द्वमज्ञानविद्वेषिणि ! क्रोधपूरादिवाशेषविश्वत्रयीबोधिरत्नापहार प्रगल्भल ( भ ? )स्फुरद्विक्रमोद्दण्डपेन्किटि ( चापोत्कटे ? ) ॥ ४ ॥

---

उद्दामदण्डच्छन्दोबद्धा

## ॥ साधारणजिनस्तुतिः ॥

रुचिररुचिमहामणिस्वर्ण[2]दुर्वर्णनिर्वृत्तिपावित्र्यभृच्चित्रशा[3]लत्रयीमध्यमध्यासितं भाभिरुद्भासितं निर्जरोपासितं

स[4]मदमदनतुङ्गमा[5]तङ्गनिर्भङ्गसारङ्गनाथं सनाथं सहोभिर्महोभिर्महामोहसन्दोहविध्वंसदक्षं सदक्षं सदा ।

विघटितघनशोर्क[6]बिब्बोकम[7]ल्लोकमस्तोकदुष्पापसन्तापनिर्वापपाथोदमक्षोदमामोदविस्तारकं कारकं सम्पदां

मिलितललितसिद्धगन्धर्वविद्याधरश्रेणिसङ्गीतविस्फीतसौरभ्यविभ्राजिकीर्तिप्रदानं सदाऽऽनन्दमर्चामि तीर्थेश्वरम् ॥ १ ॥

प्रचलदमलकुण्डलभ्राजिगल्लस्थलप्रह्वसाखण्डलस्वर्गिसेव्योल्लसत्तारभामण्डलज्योतिरुद्द्योतिताखण्डदिग्मण्डलः

---

१ एतत्संशोधनार्थं प्रतियुगलं मह्यं प्रादायि प्रवर्तकैः श्रीमत्कान्तिविजयैः। तत्र क–प्रतेः ख–प्रतिः शुद्धतरा। २ रौप्य० । ३ ख–'साल०'। ४ ख–'समुदमद०'। ५ क–'मातुङ्ग'। ६ गर्वः । ७ ख–'मस्तोकसल्लोकदुष्पाप'।

समरमरकविघ्नसङ्घातनिर्घातनिष्णात ! विध्यातविस्तारिसंसारदुर्वारदावानलः पावितक्ष्मातलः क्षीणमायामलः ।

प्रकटविकटदर्पकन्दर्पविद्वेषिनिष्पेषिनिध्यानसद्ध्यानवाणीकृपाणीसमुच्छिन्नसंसीतिदुर्नीतिवल्लीवितान ! [1]प्रभो !

जिनविसर ! [2]मम क्षतानल्पदुः[3]कल्पसङ्कल्पकल्पद्रुकल्पः प्रकुष्णातु दोषं प्रमुष्णातु रोषं प्रतुष्णातु योषं भवान् ॥ २ ॥

कुमतकुमुदखण्डसच्चण्डमार्तण्डमुद्दण्डसद्भङ्गकल्लोलमालासमुद्रं समुद्रं सुमुद्रम्ययोगीन्द्रदेवेन्द्रवृन्दै[4]स्तुतं

यदि हि बत [5]जगज्जनावर्यवैधुर्यविध्वंसि[6]बोधोद्धुरं सौवमाधुर्यमाधुर्यदम्लानविज्ञानसन्तानभाजो गणाधीश्वराः ।

त्रिलसदसमवृद्धिदुर्बुद्धिवल्लीसमुच्छेदभल्लीसमानं समानं गुणश्रीनिधानं शमश्रीनिदानं शिवस्वर्गयानं भुवा

सु[7]रगिरिशिरोविस्फुरच्चारुचूलं सुपर्वानुकूलं सुवर्णाभिरामं नमस्यामि कामं तदुर्व्या ललामं [8]पवित्रासनं शासनम् ॥ ३ ॥

सरसरभसचारुवन्दारुवृन्दारकोदारस्फुरन्मौलिमौलिस्पृगप्रत्नरत्नप्रभाभारसारक्रमाधूतभूतभ्रमा

स्फटिकतुहिनचन्द्रनिस्तन्द्रसच्चन्द्रचन्द्रप्रभाजिष्णुवर्धिष्णुरोचिष्णुरोचिःप्रपञ्चस्र(स्तृ)ताशावकाशाभृताशा नमस्यन्नृणाम् ।

अपमलकलहंसमध्यासिता नासिता राजिताराजिता सम्पदा शर्मदा मन्दमन्दारमालाभिरभ्यर्चिता चर्चिता चन्दनै–

र्विकशितशतपत्रपत्राभनेत्रा पवित्रा विचित्रा मम ध्वस्तविद्या त्रिभिद्यादवद्यानि सद्यः प्रसद्यादलं भारती भारती ॥ ४ ॥

---

१ क–' प्रभोः '। २ क–' नमुक्ष० '। ३ ख–'सज्जल्पसङ्कल्प०'। ४ क–'स्थिति'। ५ ख–'जगुजिना०
६ ख–' बन्धोङ्कुरं सौधमाधुर्य० '। ७ क–'गुरुमिव विस्फुर०'। ८ क–' विपन्नासनं'।

# ॥ श्रीपार्श्वनाथस्तुतिः ॥

## ( ३० यगणगुम्फिता )



चिदानन्दकल्याणवल्लीवसन्तं लसन्तं महाप्रातिहार्यैः प्रधानैर्निधानैः शिवानां नवानां विशिष्टगरिष्ठैः स्फुरद्भाग्यसौभाग्यलक्ष्मीं ददानं निदानं जनानां लसद्भक्तिभारैर्भृतानां शिवश्रीरमायाः क्षमाया अगारं नगाधीशधैर्येण धुर्येण वर्यं

जगज्जन्तुराजीमनोऽभीष्टसम्पादनप्रौढगीर्वाणवृक्षोपमानं प्रभावैः प्रभूतैस्त्रिलोकीतलैश्वर्यकारिस्वरूपैः सनाथं सदा विश्वनाथं यशोभिः सुशोभां समानैरमानैर्निशानाथमन्दारगङ्गातरङ्गोत्कराणां समन्ताद् भृशं सञ्चरद्भिः शुभाभैः ।

नमन्नाकिनाथावलीसेव्यमानं मदक्रोधमायाभयैः क्लेशमानादिदोषद्रुदावानलं प्रत्यलस्फातिभृत्प्रीतिदानैकशुद्धानुभावं भवद्रोगभङ्गीभिरङ्गीकृतं कान्तिमत्कान्तलावण्यपूरैः पवित्रैः पुनानं समग्रं महीमण्डलं प्रीणयन्तं प्रभाभिः

प्रसिद्धाश्वसेनक्षमाधीशवंशोदयक्षोणिभृत्शृङ्गशृङ्गारणद्वादशात्मानमात्मानमाशु प्रशस्तं परं सर्वदेवाधिदेवं स्फुरद्विघ्नविध्वंसबद्धावधानं जिनं पार्श्वनाथं नमामि त्रिसन्ध्यं त्रिशुद्ध्या प्रसिद्धं समग्राग्रिमानन्तसम्पत्कृते भावतोऽहम् ॥ १ ॥

अगाधं स्फुरद्दर्पकन्दर्पपूरैर्भवाम्भोनिधिं नित्यमुक्तावधिं मानमायामदक्रोधनक्रावलीसङ्कुलं शोकसन्तापदुष्टापदालोलकल्लोलमालाकरालं दुरन्तातुलादृष्टपुष्टाम्बुसम्पत्करक्रूरविस्फुरत्कषायैस्तु पातालकुम्भैरिवाकीर्णमध्यं

जराजातिपाठीनपीठोत्कटं सङ्कटं मोहवल्लीवितानैर्भृशं सर्वतः पूरितं भूरितृष्णापयोभिः प्रभूतैः प्रचण्डैः कुबोधोद्धुतोर्वाग्निदुःसञ्चरं सञ्चरन्मत्सरातुच्छमत्स्यैर्भयोद्भूतिकृद्दर्शनं सत्वरं भव्यजीवा न के के तरन्ति प्रमोदात् समग्राः ? ।

यदीयं पदाम्भोजमासाद्य पोतोपमानं लसन्नव्यनानागुणश्रेणिमाणिक्यमालाभिरालिङ्गितं सङ्गतं विश्वशस्यश्रिया संश्रितं सर्वदा बुद्धिवृद्धैः समृद्धैः प्रबुद्धैर्विशुद्धार्थसार्थप्रदं देवताऽधिष्ठितं सत्कृतं लक्षणानां समाजैः प्रक्लृप्तोत्सवाद्यैः

मम श्रीजिनेन्द्राः सुरेन्द्रावलीनम्यमाना अमाना महोभिर्महद्भिर्जनानन्ददानप्रवीणैर्नवीनैर्जगज्जन्तुसन्तापविध्वंसकृद्वाग्विलासा निवासाः स्फुरच्छर्मलक्ष्म्या अभङ्गोत्तमानन्तसद्भाग्यसम्भारलभ्याः सृजन्तु प्रकामं मनोवाञ्छितं ते समग्रम् ॥ २ ॥

---

१ ख–' तलाश्चर्यकारि ' । २ ख–' सुशोभं ' । ३ ख–' क्लिशमानादिदोष द्रुमवानलं (?) ' । ४ ख–प्रबद्धै० । ५ क–समाजैररस्थात्सवाद्यैः (?) । ६ क–लक्ष्म्याः । ७ ख–'मे' ।

अनेकान्तसद्वादमूलं जगन्नाथदत्तत्रिपद्येकबीजं गणाधारमुख्यैः कलालब्धलक्षैरिवारामिकै रोपितं सर्वसम्पत्तिजाताभिलाषोद्युं(द्य)तिर्निस्तुषादूष्यवैदूष्यशिष्यव्रजक्षोणिपीठे प्रकृष्टोत्तमानन्तसद्भक्तिपूरैः सदार्द्रश्रियं श्रीयमाणे

स्फुटानित्यनित्यादिवादस्थलैः प्रत्यलैस्तार्किकश्रेणिसंशीतिदावौघविच्छेदलीलाविधौ [3]वेदसंख्यैः ककुन्मण्डलव्यापकैः प्रौढशाखाकुलैः शोभमानं समानन्दितानेकलोकं निजच्छायया स्वच्छया संहरन्तं दुरन्तं ततव्यापतापप्रचारं प्रभूतम् ।

अनन्तागमासङ्ख्यपर्यायवर्यप्रसर्पल्लसत्पल्लवैः प्रीणयन्तं [4]सकर्णव्रजैस्तूर्णमावर्ण्यमानैरमानैर्बुधाधीशनेत्राणि सच्चित्रकृद्व्यक्तिभृद्युक्तिभृद्युक्तिसंयुक्तवाक्यावलीपत्रराजीपवित्रप्रभं निर्वृतेः कारणं वारणं व्यापदां सन्ततेः सर्वकालं

जिनेन्द्रागमं सङ्गमं शुद्धसिद्धेः सुपर्वद्रुमं न्यायपुष्पावलीसङ्कुलं मञ्जुलं भङ्गजालप्रतानैः सदा सर्वतः सेव्यमानं मुनीशैः स्वपक्षद्वयीराजमानैर्मनोऽभीष्टसृष्टिपटिष्ठं श्रयेऽहं फलैः पूरितं विश्वविश्रामभूमिं मरुन्मण्डलीरक्ष्यमाणम् ॥ ३ ॥

चलत्कुण्डलामण्डिता खण्डितानेकशत्रुप्रचारा विचाराश्रिताऽगण्यलावण्यपूरप्रवाहैर्नवा हैमसौदर्यवर्यस्वदेहप्रभाभिः शुभाभिः प्रभावैः प्रभूतैर्विभूतिप्रदैः प्रीणयन्ती मुनीनां समाजं समाजन्यमानाश्रितश्रेणिरक्षा कलौ कल्पवृक्षा

स्फुरद्व्यक्तमुक्ताफलोदारहारश्रिया सङ्गता चङ्गतारुण्य[5]पुण्यालया लीलया सञ्चरन्ती चरन्ती [6]द्विषां प्रौढिरूढानुभावं विभावन्नताशेषगीर्वाणवर्णा सुवर्णाचलौपम्यभृद्धैर्यसौन्दर्यगाम्भीर्यतेजोभरैः सुन्दरैर्निर्भरं संश्रयन्ती महत्त्वम् ।

क्वणन्नूपुरालङ्कृता न्यक्कृताराति‍जाताऽद्भुता नागिनीराजिसम्पूजिता तर्जितापारविघ्नप्रकारा महामत्तमातङ्गरङ्गद्गतिप्राञ्जला विश्वविख्यातकीर्त्या शशाङ्कं जयन्ती जगद् रञ्जयन्ती भयं भञ्जयन्ती कुतीर्थप्रभूणां परेषां समेषां

मम श्रीनिवासा नगाधीशपत्नी घटा[6]कोटिसाम्राज्यलक्ष्मीं श्रयन्ती नयन्ती सदैवोन्नतिं शासनं पार्श्वनाथस्य देवाधिदेवस्य नित्यं मनश्चिन्तितं सत्वरं देवता[7]मुख्यपद्मावती स्वामिनी विश्वमाता ददातु त्रिलोकोत्तमं पुण्यकारुण्यपण्या[8]र्पणाभा ॥ ४ ॥

॥ इति पार्श्वनाथस्तुतिः सम्पूर्णा ॥

---

१ ख–' युत्यै '। २ क–' मूलैः '। ३ क–' देव '। ४ ख–' सकर्मव्रजै'। ५ ख–' पण्या'। ६ ख–'घोटि'। ७ क–' मुखपद्मा '। ८ ख–' पण्याभा '।

अन्ते एतत्संशोधनकर्मणि यैर्यैर्महानुभावैर्येन केनापि साहाय्यदानेनाहमृणीकृतस्तेषां सौजन्यं संस्मरामि । तत्र च अनुयोगाचार्यश्रीक्षान्तिविजयैः सटीकस्य मूलग्रन्थस्य द्वितीयवेलाशोधन-पत्राणां परिमार्जनेन अवशिष्टस्य तु विभागस्यैतादृक्कार्येणामूल्यसंसूचनैश्च दक्षिणविहारिमुनिराज-श्रीअमरविजयशिष्यरत्नश्रीचतुरविजयैश्च विशेषत उपकृतोऽस्मि ।

एवमन्यान्यपुस्तकाधारेण संशोध्य परिशिष्ट-पाठान्तरादिना परिष्कृत्य भूमिकया विशदी-कृत्य शुद्धिपत्रेण च संकलय्य सम्पादितेऽस्मिन् मनीषिमनोमनोरमे श्रीशोभनस्तुतिनामके ग्रन्थे नानाटीकासण्टङ्किते विविधप्रतिकृतिमण्डिते च स्तुतिस्तोत्ररसिकाः फलेग्रहितां नयन्तां मामकीनं परिश्रममेतत्पठनपाठनानुष्ठानेन संशोधयन्तु सूचयन्तु च शेमुषीशेखरा मम मतिमान्द्यप्रभवा दृष्टिदोषनिबद्धा वा स्खलनाः

इत्येवं सुज्ञसार्थं सहृदयहृदयं प्राञ्जलिः प्रार्थयेऽहं
हीरालालाभिधः श्रीरसिकतनुजनुट् चन्द्रिकामातृकश्च ।
येन श्री'वीर'वर्षेऽब्धिशरजिनमिते[1] 'वीर'जन्माहशुक्रे[2]
मुम्बायां[3] भूमिकेयं व्यरचि पुरि पृथुमङ्गलानन्दवृद्ध्यै ॥ १ ॥



१ २४५४तमे । २ चैत्रे शुक्लत्रयोदश्याम् । ३ तत्र मूलेश्वरवीथ्याम् ।

# अनुसन्धानरूपा पूर्तिः

पूज्यपादश्रीमत्कान्तिविजयसत्कस्तोत्रसङ्ग्रहस्य हस्तलिखितप्रतिरूपं सम्प्रति सम्प्राप्तं साधनं प्राय उपजीव्य क्रियते भूमिकाया मया हीरालालनामधेयेन पूर्तिरियमनुसन्धानद्वारेण।

( पृ. २,१ अ ) श्रीधर्मघोषसूरिकृता यमकस्तुतयः ३९पद्यमया यासामाद्यं पद्यं यथा—

" जिनं यशःप्रतापाऽस्त—पुष्पदन्तं समं ततः ।
संस्तुवे यत्क्रमौ मोहं, पुष्पदं तं समन्ततः ॥ १ ॥ "

( पृ. २, १ आ ) श्रीजिनसुन्दरसूरिसूत्रितं समचरणसाम्यसमलङ्कृतं २९पद्यात्मकं चतुर्विंशतिजिनस्तोत्रं स्तोत्रसमुच्चये मुद्राप्यमाणं समस्ति यस्याद्यं काव्यमिदम्—

" श्रीजिनर्षभ ! भवन्तमाश्रितो, देव ! भव्यनयनाभिनन्दन ! ।
भूरिवैभवभरो भवी भवे-देव भव्यनय ! नाभिनन्दन ! ॥ १ ॥ "

( पृ. ५, १३ अ ) सहस्रावधानिश्रीमुनिसुन्दरसूरिसूत्रिता पञ्चतीर्थङ्करस्तुतिर्नवपद्यप्रमेया समचरणसाम्यरूपयमकयमिता यस्याः प्रारम्भिकं पद्यं यथा—

" जय श्रीऋषभ ! श्रेयः, सुखानि समयाकर ! ।
देहि मे भद्ररत्नौघ !, सुखानि समयाकर ॥ १ ॥ "

( पृ. ६, १ अ ) श्रीचारित्रसुन्दरमुनिवरविरचितः २१पद्यात्मक आदिनाथस्तवो नानायमकमयः। अस्य प्रथमं पद्यं यथा—

" आदीश्वरं स्वतिशयालिविराजमानं
तीर्थङ्करं तनुविभाऽस्तविराजमानम् ।
भक्त्या प्रयुक्तयमकैर्नृपनाभिभूतं
स्तोष्ये त्रिधा न विलसन्मदनाभिभूतम् ॥ १ ॥ "

( पृ. ७,५ अ ) सर्वजिनसाधारणस्तव एकादशपद्यमयः प्रतिपादमेवंविधयमकविभूषितः । अस्य प्रारम्भो यथा—

---

१ अनेन अनुसन्धेयस्य पृष्ठस्य स्थानस्य च सूचनं क्रियते । अग्रेऽपि सुधीभिः संयोजनैवं स्मरणीया ।

२ द्वितीयात् सप्तमपर्यन्तेषु पद्येषु चरणसाम्यता यदङ्को यथा—१,२;१,३;१,४;२,३;२, ४;३,४। अष्टमे पद्ये चरणचतुष्कतुल्यता, नवमे, दशमे एकादशे च चरणसमानतेत्थम्—( १,४;२,३ ), ( १, २;३,४ ), ( १,३;२,४ )। द्वादशत्रयोदशे पद्ये श्लोकपुनरावृत्तिरूपमहायमकमण्डिते । आद्यपद्यमिव पद्यं चतुर्दशं यमकमाश्रित्य । प्रतिपादं प्रारम्भे वर्णचतुष्टयसमानता पञ्चदशे षोडशे चान्ते । त्र्यक्षरपुनरावृत्तिगर्भितं प्रत्येकं चरणं सप्तदशे । अष्टादशे आद्यचरणयोरन्ते अन्त्यचरणयोश्च प्रारम्भे वर्णसाम्यम् । शृङ्खलाबद्धं एकोनविंशतितमं पद्यम् । सप्तादशसदृशं विंशतितमं पद्यं यमकं लक्षीकृत्य । अन्तिमे एकविंशतितमे पद्ये कविनामनिर्देशः । ३ गरुडदर्पम् ।

" सरति सरति चेतः स्तोतुमेतन्मदीयं
महितमहितवृन्दैरप्यदस्त्वच्चरित्रम् ।
परमपरमबुद्धिस्फूर्तयो मादृशाः किं
विदुरविदुरधुर्यास्तात ! तत् ते स्वरूपम् ? ॥ १ ॥"

( पृ. ७, ५ आ ) श्रीसोमप्रभाचार्यकृतं श्रीजिनस्तवनं दशपद्यप्रमितं यस्याद्यं पद्यमेवम्—

" व्यधित साधितसाधुतपाः कृपां, शमघनामघनाशकरीं च यः ।
तमविराममविराद्धमनोभवं, जिनममानममानगुणं स्तुवे ॥ १ ॥"

(पृ. ७, ५ ई) श्री आह्लादमन्त्रिकृतं श्रीपार्श्वनाथस्तोत्रं दशपद्यात्मकं त्र्यक्षरयमकमण्डितं च वर्तते । तत्र प्रारम्भे पद्यं यथा—

" श्रीपार्श्वनाथ ! भवतो भवतोयराशि–कुम्भोद्भवस्य चरितं किमु वर्णयामि ? ।
यैः शङ्करप्रभृतयो भृतयोगमुद्रा, दोधूयिताः कुविषयैर्भुवि तज्जिगीषोः ॥ १ ॥"

( पृ. ९, १३ अ ) प्रत्येकपद्यस्य चतुर्थचरणे त्र्यक्षरपुनरावृत्तियमकमण्डितं २५पद्यात्मकं चतुर्विंशतिजिनस्तवनं द्रुतविलम्बितच्छन्दसि गुम्फितं श्रीसोमसुन्दरसूरिभिर्यस्य प्रारम्भिकं काव्यं यथा—

" सकलनाकिनिकायनमस्कृत--क्रमयुगं जिनपुङ्गवमादिमम् ।
स्मरत नाभिनरेन्द्रसुतं सता–ममितकामितकामघटोपमम् ॥ १ ॥"

एभिर्मुनिवर्यैर्विरचिता नन्दीश्वर–पुण्डरीक–गौतम–सर्वसिद्ध–सिद्धचक्र–सीमन्धरादिस्तुतयोऽप्येवंविधा एव ।

( पृ. ९, १४ अ ) श्रीसोमप्रभसूरिकृते नवपद्यात्मके सर्वजिनस्तवे प्रथमं पद्यं यथा—

" जिनपते ! द्रुतमिन्द्रियविप्लवं, दमवतामवतामवतारणम् ।
वितनुषे भववारिधितोऽन्वहं, सकलया कलया कलया कया ॥ १ ॥"

(पृ. ९, १६ अ ) श्रीमहावीरस्तवः १४पद्यात्मकः प्रतिपदमक्षरत्रयपुनरावृत्तियमकमण्डितो विद्यते । तस्य प्रथमं काव्यं यथा—

" कलशकलशरादिप्रोल्लसल्लक्षणौकः
पदमऽपदमऽघानां भव्यपद्माऽवबोधे ।
मिहरमिह रयेण स्तौमि चामीकरश्री–
वसुमऽवसुमतीत्थं वर्धमान ! प्रभो ! त्वाम् ॥ १ ॥"

( पृ. ९, १६ आ ) श्रीआदिजिनस्तवाष्टकं पद्यनवकमितमेतद्यमकसमलङ्कृतं निम्नलिखिताद्यपद्यात्मकं वर्तते—

" शिवरमावर ! मा वरमालितः
सकलया कलया कलयाऽऽकुलः ।
शुभवतो भवतो भवतोऽवतात्
सुवृषभो वृषभो वृषभो जिनः ॥ १ ॥"

( पृ. ९, १८ अ ) श्रीमुनिसुन्दरसूरिकृता श्रीमहावीरस्तुतिः—

" रुचिररुचिरुचस्ते वर्धमानाक्षरश्री–
दयित दयित भव्याः श्रेयसः शासनस्य ।
परमपरमतश्रीजैत्रभक्तः सदा स्या–
मुदयमुदयपात्रं यल्लभे शर्म नित्यम् ॥ १ ॥
महायत महायतचरणवन्दनाः श्रीजिनाः
सदोदयसदोदयप्रथितशुद्धपुण्यागमाः ।
शुभावनशुभावनत्रिदशराजवृन्दार्चिताः
सुरोचितसुरोचितप्रचितदामभिः पान्तु माम् ॥ २ ॥
सन्तः सन्ततशर्मणे दधति यं धीरोचिधीरोचितं
श्रीदश्रीदमदर्शकं हृदि सते सम्पन्नसम्पन्नतः ।
प्राणिप्राणितदानवाग् वितनुतां सर्वज्ञसर्वज्ञराट्
श्रेयःश्रेयसि वासकानि समयः पुण्यानि पुण्यानि मे ॥ ३ ॥
कारं कारं जिनानामतिमतिविभवा ये स्तवं वास्तवं वा
साराः साराः स्वभक्तेहितहितविपिने स्युः समानाः समानाः ।
क्रीडा क्रीडा महिम्नां सरसरतिसुरीराजयः श्रीजयश्री–
श्रेयःश्रेयस्विनस्तेऽसुरसुरपतयो मे क्रियासु क्रियासुः ॥ ४ ॥"

( पृ. १०, ७ अ ) प्रतिपादं त्रिः शर्मपदमण्डिता श्रीपार्श्वजिनस्तुतिर्वर्वर्ति यस्या आद्यान्तिमे पद्ये यथा—

" शर्म प्रयच्छ सुदशर्म तदेव शर्म
शर्म ह्यसार विद शर्म वितानशर्मन् ! ।
शर्म प्रभासितसुशर्म नरेशशर्म
शर्मप्रनिर्मित सुशर्म पुरेशशर्म ॥ १ ॥"

" इत्थं श्रीजयराजपल्लिनगरीसीमन्तिनीशेखरः
श्रीमत्पार्श्वजिनेश्वरः स विजयप्रौढप्रभावाकरः ।

---

१ एतदर्थानभिज्ञतया पदच्छेदादिकरणे नाहमलम् ।

शर्मप्रौढपदत्रिरूपकलिताद्यन्तातरालाखिल-
प्रोल्लासिक्रमवृत्त-विनुतः सम्पद्यतां शर्मणे ॥ ११ ॥"

( पृ. ११, ८ अ ) विविधयमकमयः २५पद्यात्मकः चतुर्विंशतिजिनस्तवो व्यरचि श्रीभुवनसुन्दरसूरिभिः । अस्य प्रथमं पद्यमेवम्—

*" विजयते वृषभः स शमास्पदं
जिनपतेरिह यस्य शुभं पदम् ।
प्रणमतां विपदोऽपि हि सम्पद-
न्त्यविकलं विकलङ्करमापदम् ॥ १ ॥"

( पृ. ११, ४ अ ) श्रीउत्तमसागर( ? )शिष्यनिर्मितं श्रीपार्श्वजिनाष्टकं १०पद्यात्मकं स्तोत्रसमुच्चये मुद्राप्यमाणं यस्याद्यं पद्यमित्थम्--

" सुरदानवमर्त्यमुनीन्द्रनतं, नतभव्यजनावलिदोषहरम् ।
हरभूधरहारियशःप्रकरं, करणेभनिषूदनसिंहनिभम् ॥ १ ॥"

*( पृ. ११, ४ आ ) श्रीरत्नशेखरसूरिकृतं श्रीरीरीमययुगादिजिनस्तवनं २५पद्यात्मकं यत्प्रारम्भो यथा—

" श्रेयःश्रीणां नमतां, मतामनन्तां ददानमपवृजिनम् ।
जिनवरवृषभं भास्वद्-भास्वन्तं स्तौमि सुत्पूर्वम् ॥ १ ॥"

(पृ. ११, ४ ई ) शृङ्खलाऽलङ्कारमण्डितं पद्याष्टकप्रमाणकं स्तम्भनपार्श्वस्तवनं समस्ति यस्यादिमं पद्यं यथा--

" स्तवीति तं पार्श्वजिनं सदैव तं, वतंसकं 'स्तम्भन'पत्तनावनेः ।
वनेचरा मत्तमतङ्गजादयो, दयोदधिं नाभिभवन्ति यं श्रितान् ॥ १ ॥"

( पृ. १२, ७ अ ) अंशत एवंविधालङ्कारालङ्कृता २५पद्यात्मका चतुर्विंशतिजिनस्तुति-र्यस्याः प्रथमं पद्यं यथा—

" प्रथमजिनवर ! प्रथमजिनवर ! निखिलनरनाथसुसेवितपदकमल !
कमलबन्धुबन्धुरमहोदय ! दययोधृतभीमभवरूपकूपगतलोकसमुदय ! ।
दयमानश्रियमसुमताममलचरित्रपवित्र !
चित्र(वि)स्ताखिल दुरितजय ! जय जय निष्कारणमित्र ! ॥ १ ॥"

( पृ. १५ ) पूज्यश्रीजिनभद्रसूरिशिष्यश्रीसिद्धान्तरुचिगणिवरविरचितं कर्तृ-कर्म-करण-सम्प्रदाना-ऽपादान-सम्बन्धा-ऽऽधार-सम्बोधन-क्रिया-द्विकर्म-पाद-श्लोकगूढं पद्यषोडशकेन गुम्फितं जयराजपुरीशश्रीपार्श्वजिनस्तवनं वेविद्यते यस्याग्रिमं पद्यमेवम्—

“ शश्वच्छासनवैरिदानवबधूवैधव्यदानोद्गतं
गीतं किन्नरकिन्नरीभिरभितो यस्य प्रतापं मुहुः ।
श्रुत्वा तेऽपि कुलाचलाः परिलसन्नीलप्ररोहच्छलाद्
रोमाञ्चं दधते स मे जिनपतिः श्रीआश्वसेनिः श्रिये ॥ १ ॥”

* (पृ. १६, ३ अ) प्रथमस्वरमयं श्रीहेमहंसगणिगुम्फितं युगादिजिनस्तवनं त्रयोदशपद्यप्रमितं यदारम्भो यथा—

“ नाभिनामनरनाथनन्दनं, पापतापशमनाय चन्दनम् ।
केवलाक्षरपदाप्तिहेतवे, केवलाक्षरपदैरहं स्तुवे ॥ १ ॥ ”

( पृ. २१, ५ अ ) विविधच्छन्दोनामगर्भितः ४६पद्यमितः श्रीनेमिजिनस्तवो वर्तते यस्याग्रिमं पद्यं यथा—

“ श्रीशैवेयं शिवश्रीदं, छन्दोभिः कैश्चिदप्यहम् ।
कन्दर्पविजयप्राप्ता--ऽस्तोकश्लोकश्रियं स्तुवे ॥ १ ॥ ”

* ( पृ. २१, ६ ) नवरसगर्भितं श्रीऋषभजिनस्तवनमेकादशपद्यात्मकं वर्तते यस्याग्रिमं पद्यमेवम्—

“ सुरासुराधीश्वररत्नकोटी—कोटीरहीरद्युतिरञ्जितांह्रिः ।
श्रीनाभिभूभृत्कुलकल्पवृक्षं, रसैरमीभिर्नवभिः स्तवीमि ॥ १ ॥ ”

( पृ. २२ ) श्रीधर्मघोषसूरिप्रणीतः

## ॥ एकद्विबहुवाक्यतुल्यस्तवः ॥

श्रीसोमतिलकसूरिकृतवृत्तेरुद्धृतयाऽवचूरिकयाऽलङ्कृतः

---

स्रस्ताशर्मा धृतसुमहिमा वीरितस्वान्तजन्मा
बाधासिन्धुप्रतरणसहा वासनावस्थितानाम् ।
अप्येको द्वौ किमुत बहवो वाऽनिशं ध्येयभावं
गाते येषां जिनवरवृषा वृद्धये किं न तेषाम् ? ॥१॥—मन्दाक्रान्ता०

कर्तृषु विशेषणेषु क्रियासु चैक-द्वि-बहुवचनतुल्यस्य स्तोत्रस्यावचूरिर्लिख्यते—‘स्रस्ता०’ स्रस्तानि—गलितानि अशर्माणि—दुःखानि यस्माद् याभ्यां येभ्यः स तौ ते । तथा एकवचनेन अन्प्रत्ययान्तत्वाद् व्यञ्जनान्तः शर्मन्शब्दः ततः प्रथमैकवचने ‘नि दीर्घः’ (सिद्ध० १-४-८५) इत्यनेन दीर्घत्वे च कृते ‘नाम्नो नोऽनह्नः’ ( सिद्ध० २-१-९१ ) इति नलोपे च सिद्धं

स्रस्ताशर्मा । द्विवचन-बहुवचनयोस्तु 'अर्तीरिस्तुसुहुसृघृधृक्षियक्षिभावाव्याधापायावलिशूप-दिनीभ्यो मः' ( हैमे सू. ३३८ ) इत्युणादिसूत्रेण मप्रत्ययान्तत्वात् स्वरान्तः शर्मशब्दः । ततो-द्विवचने स्रस्ताशर्मौ । पुरस्तात् ऋतशब्दः । 'ओदौतोऽवाव्' ( सिद्ध० १-२-२४ ) इति आवादेशश्च । बहुवचने स्रस्ताशर्माः पुरस्तात् वृतशब्दः । 'अवर्णभोभगोऽघोर्लुगसन्धिः' ( सिद्ध० १-३-२२ ) इति रलोपः । वृतः-स्वीकृतः सुष्ठु महिमा येन सः । द्वित्वे तु 'ॠ प्रापणे च' ( सिद्ध० धा० ) इति वचनात् ऋता-प्राप्ता शोभना महिमा याभ्यां तौ ऋतसुमहिमौ । 'गोश्चान्ते ह्रस्वोऽनंशिसमासेयोबहुव्रीहौ' ( सिद्ध० २-४-९६ ) बहुत्वे तु वृता सुमहिमा यैस्ते । एकत्वे महिमनशब्दस्ताद्धितिक इमन्प्रत्ययान्तः । द्वित्वबहुत्वयोस्तु महिमाशब्दः स्वरान्तः । दृश्यते च "घनभवनमदम्भोवाहि(ह)संवाहि(त)श्रीमहिमम-हिमभानोर्भानवः किं दहन्ति" इत्यादिषु । ( ३४९तम )उणादिसूत्रेण इमः । 'मह पूजायाम्' ( सिद्ध० धा० ) इति धातोः । 'वीरित०' विशेषेण ईरितो वीरितः वीरित ईरितो वा स्वान्तजन्मा-स्वान्तजन्मो वा-मनोभूः येन याभ्यां यैर्वा स तौ ते ॥ तथा जन्मशब्दो नकारान्तः प्रतीतः, हैमनाममाला( का० ६, श्लो० ३ )वृत्तौ त्वकारान्तोऽपि 'बाधा०' बाधा-पीडा द्वित्वे तु आधा-अनल्पविकल्पास्ता एव दुस्तरत्वात् सिन्धवो-महानद्यः तासां प्रतरणे सहः-सामर्थ्यं यस्य ययोर्येषां वा स तौ ते तथा । एकत्वे सह इति सकारान्तः । द्वित्वबहुत्वे स्वरान्तोऽनेकार्थः । वासना-भावना तया तस्यां वाऽवस्थितानां, द्वित्वे पुनरासनेषु-ध्याननिबन्धनेष्ववस्थितानाम् । अप्येको द्वौ किमुत बहवो वा इति व्यक्त्यर्थम् । अपि-किमुवाशब्दाः समुच्चये विकल्पे वा । अनिशं-निरन्तरं ध्येयभावं-ध्यातव्यतां गाते 'गाङ् गतौ' (सिद्ध०धा०)'वर्तमाना ते आते अन्ते' (सिद्ध० ३-३-६), अनतोऽन्तोऽदात्मने' (सिद्ध०४-२-११४) अन्ते नकारलोपे 'समानानां तेन दीर्घः' ( सिद्ध० १-२-१ ) इति दीर्घः । येषां-भव्याङ्गिनां कः कौ के । जिन-वरवृषा इति । जिनवरेषु-केवलिषु वृषा-इन्द्रः । द्वित्वबहुत्वे तु वृषः स्वरान्तः प्रधानश्चानेकार्थे ( हैमे श्लो० ५५९ ) । इदं विशेष्यं, शेषाणि विशेषणानि । वृद्धये-ऋद्धये सुकृतधनादिकं तेषां किं न स्यात् ? । अपि तु स्यादेव । मन्दाक्रान्ताच्छन्दः । "[1]मभनतता गौ घचैर्यतिः" इति ॥१॥

दूरापास्तसमस्तकुत्सनतमा वीताखिलान्तारजा
वामोल्लासविनाशशोभनमहा वृद्ध्यग्रिमोकावरम् ।
स्फूर्जद्धा वृषभाभिरामनयनिर्दग्धाशुभैधा बलं
गातामेक उभौ समे जिनवृषा वृद्धं प्रसादं सदा ॥२॥-शार्दूल०

'दूरा०'—कुत्स्यते-निन्द्यते जन्तुरनेनेति कुत्सनं, कुत्सनं च तत् तमश्च-अज्ञानं कुत्सनतमः, दूरेणापास्तं-प्रतिक्षिप्तं समस्तं-समग्रं कुत्सनतमो येन स दूरा० । द्वित्वबहुत्वे तु प्रकृष्टं कुत्सनं

१ "मो म्नो तौ भौ मन्दाक्रान्ता घचैः" इति छन्दोऽनुशासनेऽष्टमे पत्रे ।

कुत्सनतमम्। ‘प्रकृष्टे तमप्’ ( सिद्ध० ७–३–५ ) इति तमप्प्रत्ययः। ततो दूरापास्तं समस्तं कुत्सनतमं येन याभ्यां यैर्वा स तौ ते दूरापास्तसमस्तकुत्सनतमाः। ‘वीता०’ विशेषेण इतं वीतम्। द्वित्वे पुनः ‘ईङ्च् गतौ’( सिद्ध० धा० ) इत्यस्मात् क्ते ईतं अन्तर्गतं रजः-बध्यमानकर्मरूपं अन्तारजः। अत्र ‘रो रे लुग्दीर्घश्चादिदुतः’ ( सिद्ध० १–३–४१ ) इति रलुकि प्राग्दीर्घत्वे च सिद्धिः। ततो वीतं ईतं वाऽखिलम्—अशेषमन्तारजोऽन्तारजं वा यतः स तौ ते। रजशब्दः स्वरान्तोऽपि ( हैम )लिङ्गानुशासन( नपुं० श्लो० १ )वृत्तौ। ‘वामो० वामानि-प्रतिकूलानि आमाश्च–रोगाः तेषामुल्लासः–प्रादुर्भावस्तस्य विनाशात् शोभनं महः-प्रभावो यस्य ययोर्येषां वा स तौ ते। मह इति सकारान्तः स्वरान्तश्च तुल्यार्थोऽनेकार्थे। (हैमे श्लो० ६०४)। ‘वृद्ध्य०’ वृद्ध्या ऋद्ध्या वा अग्रिमं–प्रधानं ओकं ओको वा--समवसरणादिस्थानं यस्य ययोर्येषां स तौ ते। ओकः सकारान्तः स्वरान्तश्च। वरं–परिणामसुन्दरम्, अरं–शीघ्रम्। ‘स्फूर्ज०’ स्फूर्जन्त्यः–समन्ततः प्रसरन्त्यो भासो भा वा–देहद्युतयो यस्य ययोर्येषां स तौ ते। भाः सकारान्तः स्वरान्तश्च। ‘वृषभा०’ वृषभः ऋषभौ वा परस्परपर्यायः तस्येवाभिरामो नयो–यानं यस्य ययोर्येषां स तौ ते। निर्दग्धानि अशुभान्येव एधांसि–इन्धनानि येन सः, द्वित्व-बहुत्वयोस्तु निर्दग्धाऽशुभैधा येन याभ्यां यैः स तौ ते। ततो वृषभाभिरामनयश्चासौ निर्दग्धाशुभैधाश्चेत्यादि त्रिधाऽपि कर्मधारयः। एधः सान्तः स्वरान्तोऽपि। बलं-बलिष्ठम्। अत्र ‘गाङ् गतौ’ (सिद्ध०धा०)अस्मात् पञ्चमी तां आतां अन्तां वचनत्रयं देयम्। सिद्धिः प्राग्वत्। एकः उभौ–द्वौ एवं समे–सर्वे। जिनवृषा इति जिनाः–केवलिनस्तेषु वृषा इति प्राग्वत्। ‘वृधूङ् वृद्धौ’ (सिद्ध० धा०) इत्यस्मात् क्ते। एवं ‘ऋधूच् वृद्धौ’ ( सिद्ध० धा०) इत्यनेन ऋद्धं–समृद्धमित्यर्थः। प्रसादं–वाञ्छितार्थप्रापणलक्षणम्। सदा। “[१]मसजसततगाः शार्दूलविक्रीडितं ऊर्यतिः”। अष्टदलकमलबन्धः॥ २॥

सम्प्राप्तब्रह्मसीमा बत नु सुमुखमावर्यमाऽद्वैतधामा
वीक्षातीताप्तहेमा विततदुरितहा वृष्टवामा वितारम्।
एको द्वौ वाऽपि सर्वे प्रतिदिनमरिहा वाञ्छितश्रेयसे द्राक्
प्रत्ताप्तश्रीललामा वरमिह भविनामीशतान्नम्रकाणाम्॥३॥--स्रग्धरा०

‘सम्प्राप्त०’ सम्प्राप्ता ब्रह्मणि–परमपदे ज्ञाने वा सीमा येन याभ्यां यैः स तौ ते। सीमा-(शब्दो) नान्तः स्वरान्तोऽपि। ‘बत०’ बत नु इत्यव्ययद्वयं आश्चर्य-वितर्कयोः पूरणार्थे वा। ततः शोभनो मुखमेव माः–चन्द्रो यस्य सः। अत्र मास्शब्दः सकारान्तः। द्वित्वबहुत्वे तु अतनुः–अनल्पा शोभना च मा–लक्ष्मीर्ययोर्येषां तौ ते। ‘वर्य०’ वर्या–प्रधाना मा–श्रीर्यस्य स वर्यमः।

---

१ “म्सौ ज्सौ तौ गः शार्दूलविक्रीडितं छैः ( ऊः ? )” इति छन्दो० अष्टमे पत्रे।

अद्वैतानि–निरुपमाणि धामानि यस्य सः अद्वैतधामा । अनेकार्थः–"[1] धाम राशौ(रश्मौ ?) गृहे देहे स्थाने जन्मप्रभावयोः" (हैमे श्लो०२८२) इति । ततो वर्यमश्चासावद्वैतधामा च वर्य० । द्वित्वे पुनरर्यमा–सूर्यस्तद्वदद्वैतानि धामानि–भामण्डलादितेजांसि ययोस्तौ । बहुत्वे धाम, वर्यमाद्वैतधामं तेजो येषां ते । धामा नान्तः[2] स्वरान्तोऽपि । 'वीक्षा०' वीक्षा ईक्षा च–चिन्ता, दृश्यर्थधातूनां चिन्तार्थत्वादिति । तामतीतं चिन्ताऽतिक्रान्तं आप्तं–सांवत्सरिकदानावसरेऽर्थिभिः प्राप्तं हेम हेमं वा–सुवर्णं यतः स तौ ते । हेमशब्दो ललामवत् नकारान्तः प्रकट एव । स्वरान्तस्तु पुंनपुंसकलिङ्गे लिङ्गानुशासने ( हैमे श्लो० १०८)[3] । 'विितत०' विततं–भूरिभावाभ्यस्तत्वाद् विस्तृतम् । पक्षे इता–गता ता–जन्तोर्लक्ष्मीर्यस्मिन् सतीति इततं । यद्वा इः–कामस्तद्वशात् ततं–विस्तीर्णं दुरितं, ततो विततमिततं च दुरितं च तद् विततदुरितं तत् हन्तीति 'क्विप्' (सिद्ध० ५-१-१४८) इत्यनेन क्विपि प्रत्यये तल्लोपे प्रथमैकवचने च वितत० । द्वित्वे इततदुरितं हत इति 'क्वचिद्' (सिद्ध० ५–१–१७१) इति डप्रत्यये 'डित्यन्त्यस्वरादेः' ( सिद्ध० २–१–११४) इत्यन्त्यस्वरादिलोपे च इततदुरितहौ द्वित्वे बहुत्वेऽपीति । वृष्ट० 'वृषु(प) सङ्घाते (च) '(सिद्ध० धा०) क्ते सवृष्टं वामनशब्देन ह्रस्वं शरीरं येन सः । द्वित्वे तु 'ऋषैत् गतौ' रिष्टानि–गतानि वामानि–प्रतिकूलानि ययोः तौ । बहुत्वे तु वृष्टा–वान्ताः कामा वामाः–स्त्रियो यैस्ते । 'वितारं' विशेषेण तारं–मनोज्ञं यथा स्यात् । द्वित्वेऽरीणां समूह आरं तदभावादितारं–गतारिव्रजं यथा स्यात् । विशेष्यमाह–' अरिहा ' इति । अरीन्–रागादीन् हन्तीति हतो घ्नन्तीति क्विपि डप्रत्यये च । हनशब्दे नान्तत्वं स्वरान्तत्वं च सिद्धम्[4] । शेषं प्राग्वत् । 'वाञ्छित०' वाञ्छितं–मनोऽभिलषितं आञ्छितं च 'आछु आयामे' ( सिद्ध० धा० ) इति वचनादायतं–दीर्घं तच्च तच्छ्रेयश्च–कल्याणं सुकृतं परमपदं वा तस्मै द्राक्–शीघ्रम् । ईशतात् इत्यर्थसम्बन्धः । 'प्रत्ता०' प्रत्ता आराधकेभ्यः प्रकर्षेण वितीर्णा आप्तश्रीः-आर्हन्त्यलक्ष्मीर्यैस्ते प्रत्ताप्तश्रियः साध्वादयश्चत्वारः परमेष्ठिनः तीर्थकृन्नामकर्मप्राप्तिहेत्वर्हदादिविंशतिस्थानेषु तेषामाभाषितत्वादिति । तेषु विशिष्टपरमेष्ठित्वाल्ललामा इव 'प्रत्ता०' । इह ललामशब्दः पुंनपुंसकलिङ्गेऽधीतत्वात् पुंल्लिङ्गः । स च नान्तः स्वरान्तोऽपि । वरं–प्रधानं यथा स्यात् । अरं–शीघ्रं इह–जगति भविनां-संसारिजन्तूनां ईशतात्–स्वामीवाचरत्विति भावः । ईश इवाचरतु इतिवाक्ये 'कर्तुः क्विप् गल्भक्लीबहोडात् तु ङित्० ' ( सिद्ध०३–४–२५) इत्यादिना क्विपि प्रत्यये तल्लोपे पञ्चमी तुवि च । 'आशिषि तुह्योस्तातङ् ' ( सिद्ध० ४–२–११९ ) इत्यनेन तुवस्तातादेशे च कृते ईशतादिति सिद्धम् । ततो 'धुटस्तृतीयः'(सिद्ध० २–१–७६) द्

---

१ " धाम देह गृहे रश्मौ स्थाने जन्म-प्रभावयोः " इति विश्वे ( पृ. ९५, श्लो० १२१ ) ।

२ 'नान्तः' इति प्रत्यन्तरे ।

३ " स्तूपोडुपौ विटपमण्डपशष्पबाष्प–द्वीपानि विष्टपनिपौ शफडिम्बबिम्बाः ।
जम्भः कुसुम्भककुभौ कलभौ निभोऽर्म–सङ्कामसङ्क्रमललामहिमानि हेमः ॥"

४ 'हनशब्दः नान्तः स्वरान्तश्च सिद्धः' इति प्रत्यन्तरे ।

'तृतीयस्य पञ्चमे' (सिद्ध० १-३-१) न्। द्वित्वे तु ईशाविवाचरतामिति वाक्ये प्राग्वत् क्विपि तल्लोपे पञ्चमी तामिव ईशताम्। ततः 'तौ मुमो व्यञ्जने स्वौ' (सिद्ध० १-३-१४) अनेन मकारस्थाने निमित्तभूतनकारस्य स्वकीयोऽनुनासिको नकार एव क्रियते। बहुत्वे पुनः 'ईशिक् ऐश्वर्ये' (सिद्ध० धा०) आत्मनेपदित्वात् पञ्चमी अन्ता। 'अनतोऽन्तोऽदात्मने' (सिद्ध० ४-२-११४) नलोपः। भविनां कथम्भूतानां? 'नम्र'० नम्रं-भक्तिभरेणावनतं कं-मस्तकं येषां ते तेषाम्। "म्रौ भ्रौ यिः स्रग्धरा छछैः" (छन्दो० अष्टमे पत्रे) यतिः" ॥ ३ ॥

इत्येको द्वौ समे वा त्रिभिरभियतिभिः काव्यराजैः क्रियादि-
श्लेषैः श्रीधर्मघोषैरभिनुतमहिमा वर्यभावप्रकाशैः ।
त्रिच्छत्रीदण्डकैर्वान्तररिपुविजयान्यस्तविश्वत्रयान्तः-
कीर्तिस्तम्भैरिव श्रीजिनवरवृषभा वीक्षया ध्यासतां माम् ॥ ४ ॥-स्रग्०

॥ इति एकद्विबहुवाक्यतुल्यस्तवः ॥

'इत्येको०' इति-पूर्वोक्तप्रकारेण। एको द्वौ समे वेति प्रकटम्। त्रिभिः-त्रिसङ्ख्यैः। 'अभियतिभिः' अभिमुखाः-सुश्राव्यत्वादनुकूला यतयो-विरामाः काव्यान्तरालविश्रान्तयश्च[1] तैस्तथा। कैः? काव्यराजैः-प्रधानकाव्यैः। अत्र 'राजन्सखेः' (सिद्ध० ७-३-१०६) इत्यनेन राजेन्द्रशब्दादत्समासान्तः। किंविशिष्टैः? 'क्रियादिश्लेषैः' क्रियादीनां-क्रिया-कर्तृ-विशेषणानां श्लेषः-सादृश्येन निवेशो-रचना यत्र तैस्तथा। पुनः किं०? 'श्रीधर्मघोषैः' श्रीः-शोभा सैव धर्मः-स्वभावो यस्य सः श्रीधर्मा ततः श्रीधर्मा-शोभात्मको घोषो-ध्वनिविशेषो येषां ते श्रीधर्मघोषास्तैस्तथा। कर्तृपक्षे त्रिभिर्मनो-वाक्-कायैः, त्रिकरणशुद्ध्येत्यर्थः। 'अभियतिभिः'--विनीतत्वादभिमुखशिष्यमुनिभिः। 'काव्यराजैः' "कविरेव वा काव्यः भेषजादित्वात् ट्यण्" इति हैमनाममाला(अभि० का० २, श्लो० ३३)-वृत्ति (पृ.४७) वचनात् महाकविभिः। किं०? 'क्रियादि०' आदिशब्दस्य पश्चानुपूर्व्या प्रयुक्तत्वात् ज्ञानदर्शनक्रियापरायणैः। श्रीधर्मघोषैरिति नाम्ना आचार्यैः। किं कृतमित्याह-'अभिनुतमहिमा' इति अतिभक्तिभरभास्वरत्वादभिमुखेन स्तुतमहिमा। इह महिमशब्दस्वरूपं पूर्ववत्। पुनः किं० आचार्यैः? काव्यै-(यराजै)श्च 'वर्य०' वर्यः-प्रधानो भावप्रकाशो येषु येषां वा। "भावोऽभिप्रायवस्तुनोः, स्वभावजन्मसत्तात्मा-क्रियालीलाविभूतिषु" (हैमेऽनेकार्थे ५३८-५३९) इति। पक्षे अर्यः-स्वामी तस्य भावोऽर्यभावः, स्वामित्वमित्यर्थः। अथवा अरीणामभावोऽर्यभावः तेन प्रकाशानि-प्रकटानि कर्तृपक्षेऽप्येवम्। 'त्रिच्छत्रीणां' त्रयाणां छत्राणां समाहारस्त्रिच्छत्री तस्या दण्डैरेव दण्डकैः। वा इवार्थे॥ आन्तररिपुविजयात्-रागद्वेषमोहाख्यद्वेषित्रयविजयात् न्यस्तविश्वत्रयान्तःकीर्तिस्तम्भैरिव। विशेष्यपद-

[1] विश्रामा येषु ते।

माह-'श्रीजिन०' श्रिया-ज्ञानादिलक्ष्म्योपलक्षिता जिनाः-चतुर्दशपूर्विणस्तेषु वरा अवधिज्ञानिप्रभृतयस्तेषु वृषाः—श्रेष्ठाः केवलिनस्तेषु प्रातिहार्यादिविभूत्या भासते इति श्रीजिनवरवृषभाः। द्वित्वबहुत्वयोस्तु वृषभशब्दः श्रेष्ठार्थे। वीक्षा च ईक्षा च-चिन्ता तया ध्यासतां-प्रतिपद्यन्ताम्। कम्? माम्। अध्याङ् पूर्वः 'असी असी गत्यादानयोश्च' (सिद्ध० धा०) इति धातुः। अध्यास् अस्योभयपदित्वादेकत्वे पञ्चम्या आत्मनेपदस्य। द्वित्वे तु परस्मैपदस्य तामि शवि च प्रत्यये सिद्धम्। बहुत्वे तु 'आसिक् उपवेशने' (सिद्ध० धा०) इत्यस्याग्रे पञ्चम्या एव अन्तामि 'अनतोऽन्तोऽदात्मने' (सिद्ध० ४-२-११४) इति सिद्धम्॥ इति स्तोत्रावचूरिः॥ भट्टारकश्रीसोमतिलकसूरिकृतवृत्तेरुद्धृता॥ छ॥ छ॥

*( पृ. २३, २ अ ) श्रीधर्मघोषसूरिकृते श्रीपार्श्वनाथस्तवे ११ पद्यात्मके पञ्चमं पद्यमेतादृक्चमत्कारशालि—

"यः पूज्यो जगतां नमन्ति सुधियो यं येन मोहो जितो
यस्मै संस्पृहयन्ति चारुमतयो यस्माच्छुभं देहिनाम्।
यस्यानन्तचतुष्टयं निरुपमं यस्मिन् स्थितं सद्गुणैः
स श्रीपार्श्वजिनेश्वरो वितरताच्चारूपसंस्थः शिवम्॥ ५॥

*(पृ. २३, २ आ) अवलोक्यतामेभिरेव सूरिभिः प्रणीतं निम्नलिखितं यच्छब्दविभक्तिसप्तकसमलङ्कृतं श्रीवीरजिनस्तवनम्—

"जय श्रीसर्वसिद्धार्थ-सिद्धार्थनृपनन्दन!।
सुमेरुधीर! महावी-र! गम्भीर! जिनेश्वर!॥ १॥
योऽप्रमेयप्रमाणोऽपि, सप्तहस्तप्रमो मतः।
पूर्णेन्दुवर्ण्यवर्ण्योऽपि, स्वर्णवर्णसवर्णकः॥ २॥
सदृशं कौशिके शक्रे, सर्पे च क्रमसंस्पृशि।
पीयूषवृष्टिसृष्ट्या यं, दृष्ट्या दिष्ट्या विदुर्बुधाः॥ ३॥
विष्टपत्रितयोत्सङ्ग-रङ्गद्दुत्तुङ्गकीर्तिना।
सनाथं येन नाथेन, विश्वं विश्वम्भरातलम्॥ ४॥
यस्मै चक्रे नमः सेवा-हेवाकोत्सुकमानसैः।
वीराय गतवैराय, मर्त्यामर्त्यासुरेश्वरैः॥ ५॥
यस्माद् द्वेषादयो दोषाः, क्षिप्रं क्षीणाः क्षयः खनेः।
दोषा पूषमयूखेभ्य, इव हर्यक्षलक्षणात्॥ ६॥

यद्देहद्युतिसन्दोहं, सन्देहितवपुर्दधौ ।
रविः खद्योतपोतद्यु–त्याडम्बरविडम्बनाम् ॥ ७ ॥

भविना यत्र चित्तस्थे, स्युर्धीवृद्धिसिद्धयः ।
तं वर्द्धमानमानौमि, वर्द्धमानसुभावनः ॥ ८ ॥

इति यस्ते स्तवनं पठति वीरजिनेन्द्र ! जातरोमाञ्चः ।
यात्यपवर्गं स द्रुतमखर्वगर्वारिवर्गजयी ॥ ९ ॥ ”

२५तमे पृष्ठे श्रीचारित्रसुन्दरगणिसन्दृब्धानि भाषासप्तकनिबद्धानि स्तोत्राणीति निरदेशि, किन्तु भ्रान्तिमूलक उल्लेखोऽयमिति भाति यत एभिर्गणिवर्यैर्लिपीकृतानीमानि १५२२वर्षे । एतत्प्रणेतारस्तु श्रीऋषभदेवादिजिनपञ्चकस्य षड्भाषात्मकानां स्तोत्राणां विरचयितारः । तत्र श्रीवीरस्तुतिप्रान्तस्थं पद्यं प्रमाणम्—

“ एवं पञ्च जिना निरस्तवृजिनाः सद्भक्तिविभ्राजिना
षड्भाषामयसंस्तवेन मयका नीताः स्तुतेर्गोचरम् ।
त्रैलोक्यस्पृहणीयसिद्धिरमणीशृङ्गारणप्रत्यला
देयासुर्गुरुसोमसुन्दरकरप्राग्भारगौराः श्रियः ॥ ७ ॥ ”

पञ्चभ्यो जिनेभ्य आद्यतीर्थकरस्य नुतेः प्रथमं पद्यं निर्दिष्टं २५तमे पृष्ठे । श्रीशान्तिजिनमुद्दिश्य चैवम्—

“ श्रीमान् शान्तिजिनः पुनात्ववृजिनः सर्वान् स भव्याङ्गिनः
सन्त्यक्तोपरमा वितीर्य परमा आनन्दसंविद्रमाः ।
गौर्यस्य त्रिपदी जगत्त्रयवने स्वैरं चरन्तीतरां
चित्रं त्रासयति स्फुरत्तरमदान् दुर्वादिसिंहानपि ॥ १ ॥ ”

श्रीनेमिनाथस्तवस्य प्रारम्भ इत्थम्—

“ पारावारसमानसंसृतिसमुत्ताराय नारायणः
सेवामूर्यचरीकरी दृढतरी तुल्यांस यस्यादरी ।
देवानामपि देवता स परमब्रह्मस्वरूपः प्रभुः
शब्दब्रह्मविदाऽप्यगम्यमहिमा नेमीश्वरः पातु वः ॥ १ ॥”

श्रीपार्श्वनाथस्तोत्रस्य प्रारम्भिकं काव्यं यथा—

" भक्तिव्यक्तिप्रणमदमरस्वर्णकोटीरकोटी-
प्रेङ्खज्ज्योतिः प्रचलदचिरः कज्जलश्यामलद्युत् ।
श्रेयोवल्लीरुपचयमयः प्रापयंस्तापहर्ता
भूयात् पार्श्वः शमितदुरितोऽम्भोदवन्मोदकर्ता ॥ १ ॥"

श्रीमहावीरस्तुतौ प्रथमं पद्यमेवम्—

" विद्यानां जन्मकन्दस्त्रिभुवनभवनालोकनप्रत्यलोऽपि
प्राप्तो दाक्षिण्यसिन्धुः पितृवचनवशात् सोत्सवं लेखशालाम् ।
जैनेन्द्रीं शब्दविद्या पुरत उपदिशन् स्वामिनो देवतानां
शब्दब्रह्मण्यमोघं स दिशतु भगवान् कौशलं त्रैशलेयः ॥ १ ॥"

( पृ. २५, ५ अ ) कविवरनामगर्भितमष्टभाषामयं षडरचक्रबन्धनिबद्धं २४पद्यात्मकं श्रीसीमन्धरस्तवनं व्यरचि श्रीजिनहर्षसूरिभिः । अस्यान्त्यं पद्यमित्थम्—

"श्रीसीमन्धरतीर्थनाथमनिशं भाषाष्टकस्पष्टया
भक्त्येति त्रिजगत्समीहितकरं यः स्तौति भव्याङ्गभाग् ।
स श्रीमान् गुरुसोमसुन्दरपदप्रौढिमभावोदयं
नित्यानन्दसखीं वृणोति विमलां जैनेश्वरीं सम्पदम् ॥ २४ ॥"



नमः परमात्मने ।

सुविहितपुरन्दरश्रीशोभनमुनिवर्यविहिता

# ॥ स्तुतिचतुर्विंशतिका ॥



## १ श्रीऋषभजिनस्तुतयः

**अथ श्रीनाभिनन्दनस्तुतिः—**

भव्याम्भोजविबोधनैकतरणे ! विस्तारिकर्मावली-
रम्भासामज ! 'नाभि'नन्दन ! महानष्टापदाभासुरैः ।
भक्त्या वन्दितपादपद्म ! विदुषां सम्पादय प्रोज्झिता-
रम्भासाम ! जनाभिनन्दन ! महानष्टापदाभासुरैः ॥ १ ॥

—शार्दूलविक्रीडितम् ( १२,७ )

**समस्तजिनवराणां स्तुतिः—**

ते वः पान्तु जिनोत्तमाः क्षतरुजो नाचिक्षिपुर्यन्मनो
दारा विभ्रमरोचिताः सुमनसो मन्दारवा राजिताः ।
यत्पादौ च सुरोज्झिताः सुरभयाञ्चक्रुः पतन्त्योऽम्बरा-
दाराविभ्रमरोचिताः सुमनसो मन्दारवाराजिताः ॥ २ ॥ —शार्दूल०

**जिनप्रवचनप्रशंसा—**

शान्तिं वस्तनुतान् मिथोऽनुगमनाद् यन्नैगमाद्यैर्नयै-
रक्षोभं जन ! हेऽतुलं छितमदोदीर्णाङ्गजालं कृतम् ।
तत् पूज्यैर्जगतां जिनैः प्रवचनं दृप्यत्कुवाद्यावली-
रक्षोभञ्जनहेतुलाञ्छितमदो दीर्णाङ्गजालङ्कृतम् ॥ ३ ॥ —शार्दूल०

श्रुतदेवतास्मरणम्—

शीतांशुत्विषि यत्र नित्यमदधद् गन्धाढ्यधूलीकणा-
नाली केसरलालसा समुदिताऽऽशु भ्रामरीभासिता ।
पायाद् वः श्रुतदेवता निदधती तत्राब्जकान्ती क्रमौ
नालीके सरलाऽलसा समुदिता शुभ्रामरीभासिता ॥ ४ ॥ १ ॥—शार्दूल०



## २ श्रीअजितजिनस्तुतयः

अथ अजितनाथप्रणामः—

त'मजित'मभिनौमि यो विराजद्-
वनघनमेरुपरागमस्तकान्तम् ।
निजजननमहोत्सवेऽधितष्ठा-
वनघनमेरुपरागमस्तकान्तम् ॥ १ ॥
—पुष्पिताग्रा

जिनकदम्बकाभिनुतिः—

स्तुत जिननिवहं तमर्तितप्ता-
ध्वनदसुरामरवेण वस्तुवन्ति ।
यममरपतयः प्रगाय पार्श्वे-
ध्वनदसुरामरवेणवः स्तुवन्ति ॥ २ ॥ —पुष्पि०

जिनमतविचारः—

प्रवितर वसतिं त्रिलोकबन्धो !
गमनययोगततान्तिमे पदे हे ।
जिनमत ! विततापवर्गवीथी-
गमनययो ! गततान्ति मेऽपदेहे ॥ ३ ॥ —पुष्पि०

१ 'भ्रामरी भासिता' इत्यपि पदच्छेदः । २ 'गम ! नय०' इत्यपि संभवति ।

**मानसीदेव्याः प्रार्थना—**

सितशकुनिगताऽऽशु मानसीद्धा—
ऽऽत्ततितिमिरम्मदभा[1]सुराजिताशम्।
वितरतु दधती पविं क्षतोद्यत्—
ततत्तिमिरं मदभा[2]सुराजिता शम्॥ ४ ॥२॥ —पुष्पि०



## ३ श्रीशम्भवजिनस्तुतयः

**अथ श्रीशम्भवस्याभ्यर्थना—**

निर्भिन्नशत्रुभवभय !
शं भवकान्तारतार ! तार ! ममारम्।
वितर त्रातजगत्त्रय !
'शम्भव !' कान्तारतारतारममारम् ॥ १ ॥
— आर्यागीतिः

**जिनवराणामाश्रयाल्लक्ष्मीः—**

आश्रयतु तव प्रणतं
विभया परमा रमाऽरमानमदमरैः।
स्तुत ! रहित ! जिनकदम्बक !
विभयापरमार ! मारमानमदमरैः॥ २ ॥ —आर्या०

**जिनमतस्य प्राधान्यम्—**

जिनराज्या रचितं स्ता—
दसमाननयानया नयायतमानम्।
शिवशर्मणे मतं दध—
दसमाननयानयानया यतमानम्॥ ३ ॥ —आर्या०

१ '०भा सुरा०' इत्यपि पदच्छेदः। २ '०भासुराऽजिता' इत्यपि संभवति।

वज्रशृङ्खलायै प्रणामः—

शृङ्खलभृत् कनकनिभा
या तामसमानमानमानवमहिताम् ।
श्री'वज्रशृङ्खलां' कज–
यातामसमानमानमानवमहिताम् ॥ ४ ॥ ३ ॥ —आर्या०



# ४ श्रीअभिनन्दनजिनस्तुतयः

अथ अभिनन्दनस्य प्रार्थना—

त्वमशुभा'न्यभिनन्दन'! नन्दिता–
सुरवधूनयनः परमोदरः ।
स्मरकरीन्द्रविदारणकेसरिन् !
सुरव ! धूनय नः परमोऽदरः ॥ १ ॥
—द्रुतविलम्बितम्

समग्रजिनेश्वराणामभ्यर्थना—

जिनवराः ! प्रयतध्वमितामया
मम तमोहरणाय महारिणः ।
प्रदधतो भुवि विश्वजनीनता–
ममतमोहरणा यमहारिणः ॥ २ ॥ —द्रुत०

आगमस्तुतिः—

असुमतां मृतिजात्यहितायं यो
जिनवरागम ! नो भवमायतम् ।
प्रलघुतां नय निर्मथितोद्धता–
जिनवरागमनोभवमाय ! तम् ॥ ३ ॥ —द्रुत०

१ '०मावतम्' इत्यपि संभवति ।

श्रीरोहिण्यै नमः—

विशिखशङ्खजुषा धनुषाऽस्तसत्-
सुरभिया ततनुन्नमहारिणा ।
परिगतां विशदामिह 'रोहिणीं'
सुरभियाततनुं नम हारिणा ॥ ४ ॥ ४ ॥—द्रुत०

---

## ५ श्रीसुमतिजिनस्तुतयः

अथ श्रीसुमतिनाथस्य स्तुतिः—

मदमदनरहित ! नरहित !
'सुमते !' सुमतेन ! कनकतारेतारे ! ।
दमदमपालय ! पालय
दरादरातिक्षतिक्षपातः पातः ! ॥ १ ॥—आर्यागीतिः

समग्रजिनेश्वराणां विज्ञप्तिः—

विधुतारा ! विधुताराः !
सदा सदाना ! जिना ! जिताघाताघाः ! ।
तनुतापातनुतापा !
हितमाहितमानवनवविभवा ! विभवाः ! ॥ २ ॥ —आर्या०

सर्वज्ञसिद्धान्तस्य स्मरणम्—

मतिमाति जिनराजि नरा-
हितेहिते रुचितरुचि तमोहेऽमोहे ।
मतमतनूनं नूनं
स्मरास्मराधीरधीरसुमतः सुमतः ॥ ३ ॥ —आर्या०

कालीदेव्यै प्रार्थना—

नेगदाऽमानगदा मा-
महो महोराजिराजितरसा तरसा ।
घनघनकाली काली
बतावतादूनदूनसत्रासत्रा ॥ ४ ॥ ५ ॥ —आर्या०

## ६ श्रीपद्मप्रभजिनस्तुतयः

अथ श्रीपद्मप्रभाय विनतिः—

पादद्वयी दलितपद्ममृदुः प्रमोद-
मुन्मुद्रतामरसदामलतान्तपात्री ।
'पाद्मप्रभी' प्रविदधातु सतां वितीर्ण-
मुन्मुद्रतामरसदा मलतान्तपात्री ॥ १ ॥
—वसन्ततिलका

समग्रजिनेश्वराणां स्तुतिः—

सा मे मतिं वितनुताज्जिनपङ्क्तिरस्त-
मुद्राऽऽगताऽमरसभाऽसुरमध्यगाऽऽद्याम् ।
रत्नांशुभिर्विदधती गगनान्तराल-
मुद्रागतामरसभासुरमध्यगाद् याम् ॥ २ ॥ —वसन्त०

श्रीसिद्धान्तस्वरूपम्—

भ्रान्तिच्छिदं जिनवरागममाश्रयार्थ-
मारामममानम लसन्तमसङ्गमानाम् ।
धामाग्रिमं भवसरित्पतिसेतुमस्त-
मारामममानमलसन्तमसं गमानाम् ॥ ३ ॥ —वसन्त०

---

१ 'नगदामान०' इति पाठान्तरम् । २ '०सत्रा सत्रा' इत्यपि पदच्छेदः । ३ '०सदाऽऽमलता०' इत्यपि पाठः । ४ 'मुद्रा गताऽमरसभा सुरमध्यगाद्याम्' इत्यपि संभवति ।

गान्धारीदेवीस्तुतिः—

'गान्धारि !' वज्रमुसले जयतः समीर–
पातालसत्कुवलयावलिनीलभे ते ।
कीर्तीः करप्रणयिनी तव ये निरुद्ध–
पातालसत्कुवलया बलिनी लभेते ॥ ४ ॥ ६ ॥ —वसन्त०

---



## ७ श्रीसुपार्श्वजिनस्तुतयः

अथ श्रीसुपार्श्वजिनस्मरणम्—

कृतनति कृतवान् यो जन्तुजातं निरस्त–
स्मरपरमदमायामानबाधायशस्तम् ।
सुचिरमविचलत्वं चित्तवृत्तेः 'सुपार्श्वं'
स्मर परमदमाया मानवाधाय शस्तम् ॥ १ ॥
—मालिनी ( ८, ७ )

जिनराज्या ध्यानम्—

व्रजतु जिनततिः सा गोचरे चित्तवृत्तेः
सदमरसहिताया बोऽधिका मानवानाम् ।
पदमुपरि दधाना वारिजानां व्यहार्षीत्
सदमरसहिता या बोधिकामा नवानाम् ॥ २ ॥ —मालिनी

जिनमतप्रशंसा—

दिशदुपशमसौख्यं संयतानां सदैवो–
रु जिनमतमुदारं काममायामहारि ।
जननमरणरीणान् वासयत् सिद्धिवासे–
ऽरुजि नमत मुदाऽरं काममायामहारि ॥ ३ ॥ —मालिनी

महामानस्याः स्तुतिः—

दधति ! रविसपत्नं रत्नमाभास्तभास्वन्-
नवघनतरवारिं वा रणारावरीणाम् ।
गतवति ! विकिरत्यालीं 'महामानसी'ष्टा-
नव घनतरवारिं वारणारावरीणाम् ॥ ४ ॥ ७ ॥ —मालिनी



## ८ श्रीचन्द्रप्रभजिनस्तुतयः

अथ चन्द्रप्रभप्रभवे प्रणामः—

तुभ्यं 'चन्द्रप्रभ !' जिन ! नमस्तामसोज्जृम्भितानां
हाने कान्तानलसम ! दयावन् ! दितायासमान ! ।
विद्वत्पङ्क्त्या प्रकटितपृथुस्पष्टदृष्टान्तहेतू-
हानेकान्तानलसमदया वन्दितायासमान ! ॥ १ ॥
—मन्दाक्रान्ता ( ४, ६, ७ )

जिनेश्वराणां नुतिः—

जीयाद् राजी[1] जनितजननज्यानिहानिर्जिनानां
सत्यागारं जयदमितरुक् सारविन्दाऽवतारम् ।
भव्योद्धृत्या भुवि कृतवती याऽवहद् धर्मचक्रं
सत्यागा रञ्जयदमितरुक् सा[2] रविं दावतारम् ॥ २ ॥ —मन्दा०

सिद्धान्तस्तुतिः—

सिद्धान्तः स्तादहितहतयेऽख्यापयद् यं जिनेन्द्रः
सद्राजीवः स कविधिषणापादनेऽकोपमानः ।
दक्षः साक्षाच्छ्रवणचुलुकैर्यं च मोदाद् विहायः-
सद्राजी वः सकविधिषणाऽपादनेकोपमानः ॥ ३ ॥ —मन्दा०

---

१ 'राजिः' इत्यपि पाठः । २ 'सारविन्दा बतारम्' इति पाठान्तरम् ।

वज्राङ्कुश्याः स्तुतिः—

'वज्राङ्कुश्य'ङ्कुशकुलिशभृत् ! त्वं विधत्स्व प्रयत्नं
स्वायत्यागे ! तनुमदवने हेमताराऽतिमत्ते ।
अध्यारूढे ! शशधरकरश्वेतभासि द्विपेन्द्रे
स्वायत्याऽगेऽतनुमदवने हेऽमताराऽतिमत्ते ! ॥ ४ ॥ ८ ॥ —मन्दा०



# ९ श्रीसुविधिजिनस्तुतयः

अथ श्रीसुविधिनाथाय प्रार्थना—

तवाभिवृद्धिं 'सुविधि'र्विधेयात्
स भासुरालीनतपा दयावन् ! ।
यो योगिपङ्क्त्या प्रणतो नभःसत्-
सभासुरालीनतपादयाऽवन् ॥ १ ॥

—उपजातिः

जिनेश्वरेभ्योऽभ्यर्थना—

या जन्तुजाताय हितानि राजी
सारा जिनानामलपद् ममालम् ।
दिश्यान्मुदं पादयुगं दधाना
सा राजिनानामलपद्ममालम् ॥ २ ॥

—इन्द्रवज्रा

जिनवाणी—

जिनेन्द्र ! भङ्गैः प्रसभं गभीरा-
ऽऽशु भारती शस्यतमस्तवेन ।
निर्नाशयन्ती मम शर्म दिश्यात्
शुभाऽरतीशस्य तमस्तवेन ! ॥ ३ ॥ —उप०

१ 'शुभा रतीश०' इत्यपि पाठः ।

ज्वलनायुधायै विज्ञापना—

दिश्यात् तवाशु 'ज्वलनायुधा'ऽल्प—
मध्या सिता कं प्रवरालकस्य ।
अस्तेन्दुरास्यस्य रुचोरु[1] पृष्ठ—
मध्यासिताऽकम्प्रवरालकस्य ॥ ४ ॥ ९ ॥ —इन्द्र०

---

## १० श्रीशीतलजिनस्तुतयः

अथ श्रीशीतलजिनस्तुतिः—

जयति[2] 'शीतल'तीर्थकृतः सदा
चलनतामरसं सदलं घनम् ।
नवकमम्बुरुहां पथि संस्पृश—
च्चलनतामरसंसदलङ्घनम् ॥ १ ॥
—द्रुतविलम्बितम्

जिनानां स्मरणम्—

स्मर जिनान् परिनुन्नजरार[3]जो—
जननतानवतोदयमानतः ।
परमनिर्वृतिशर्मकृतो यतो
जने[4] ! नतानवतोऽदयमानतः ॥ २ ॥ —द्रुत०

सिद्धान्तस्वरूपम्—

जयति कल्पितकल्पतरूपमं
मतमसारतरागमदारिणा ।
प्रथितमत्र जिनेन मनीषिणा—
मतमसा रतरागमदारिणा ॥ ३ ॥ —द्रुत०

---

१ '०रुपृष्ठ—' इत्यपि संभवति । २ 'जयतु' इति पाठान्तरम् । ३ '०रुजो—' इति पाठान्तरम् । ४ 'जननता०' इत्यपि संभवति ।

मानवीदेव्याः स्तुतिः—

घनरुचिर्जयताद् भुवि 'मानवी'
गुरुतराविहतामरसङ्गता ।
कृतकराऽस्त्रवरे फलपत्रभा-
गुरुतराविह तामरसं गता ॥ ४ ॥ १० ॥ —द्रुत०

## ११ श्रीश्रेयांसजिनस्तुतयः

अथ श्रीश्रेयांसजिनस्य परमं वैराग्यम्—

कुसुमधनुषा यस्मादन्यं न मोहवशं व्यधुः
कमलसदृशां गीतारावा बलादयि तापितम् ।
प्रणमततरां द्राक् 'श्रेयांसं' न चाहृत यन्मनः
कमलसदृशाङ्गी तारा वाऽबला दयिताऽपि तम् ॥ १ ॥
—हरिणी ( ६, ४, ७ )

जिनवराणां तल्लक्षणगर्भितस्तुतिः—

जिनवरततिर्जीवालीनामकारणवत्सला-
ऽसमदमहिताऽमारा दिष्टासमानवराऽजया ।
नमदमृतभुक्पङ्क्त्या नूता तनोतु मतिं ममा-
ऽसमदमहितामारादिष्टा समानवराजया ॥ २ ॥ —हरिणी

जिनागमस्य स्तुतिः—

भवजलनिधिभ्राम्यज्जन्तुव्रजायतपोत ! हे
तनु मतिमतां सन्नाशानां सदा नरसम्पदम् ।
समभिलषतामर्हन्नाथागमानतभूपतिं
तनुमति मतां सन्नाशानां सदानरसं पदम् ॥ ३ ॥ —हरिणी

१ '०तराऽविहता०' इत्यपि पाठः । २ 'प्रणमततमां' इत्यपि पाठः । ३ '०माराऽऽदिष्टासमानवरा जया' इत्यपि पाठः ।

श्रीमहाकालीदेव्या विजयः—

धृतपविफलाक्षालीघण्टैः करैः कृतबोधित—
प्रजयतिमहा कालीमर्त्याधिपङ्कजराजिभिः।
निजतनुलतामध्यासीनां दधत्यपरिक्षतां
प्रजयति 'महाकाली' मर्त्याधिपं कजराजिभिः ॥४॥११॥ —हरिणी



## १२ श्रीवासुपूज्यजिनस्तुतयः

अथ श्रीवासुपूज्यवन्दनम्—

पूज्य ! श्री' वासुपूज्या 'वृजिन ! जिनपते ! नूतनादित्यकान्ते—
ऽमायासंसारवासावन ! वर ! तरसाली नवालानबाहो !।
आनम्रा त्रायतां श्रीप्रभवभवभयाद् बिभ्रती भक्तिभाजा—
मायासं सारवाऽसावनवरतरसालीनवाला नवाऽहो ! ॥ १ ॥
—स्रग्धरा( ७,७,७ )

जिनराज्यै प्रार्थना—

पूतो यत्पादपांशुः शिरसि सुरततेराचरच्चूर्णशोभां
या तापत्राऽसमाना प्रतिमदमवतीहारता राजयन्ती।
कीर्तेः कान्त्या ततिः सा प्रविकिरतुतरां जैनराजी रजस् ते
यातापत्त्रासमानाऽप्रतिमदमवती हारतारा जयन्ती ॥ २ ॥ —स्रग्०

जिनवाण्याः स्वरूपम्—

नित्यं हेतूपपत्तिप्रतिहतकुमतप्रोद्धतध्वान्तबन्धा—
ऽपापायाऽऽसाद्यमानाऽमदन ! तव सुधासारहृद्या हितानि।
वाणी निर्वाणमार्गप्रणयिपरिगता तीर्थनाथ ! क्रियान्मे—
ऽपापायासाद्यमानामदनत ! वसुधासार ! हृद्याहितानि ॥३॥ —स्रग्०

श्रीशान्तिदेव्याः स्तुतिः—

रक्षःक्षुद्रग्रहादिप्रतिहतिशमनी वाहितश्वेतभास्वत्–
सन्नालीका सदा सापरिकरमुदिता सा क्षमालाभवन्तम् ।
शुभ्रा श्री'शान्ति'देवी जगति जनयतात् कुण्डिका भाति यस्याः
सन्नालीका सदासा परिकरमुदिता साक्षमाला भवन्तम् ॥ ४ ॥१२॥ —स्रग्०



## १३ श्रीविमलजिनस्तुतयः

अथ श्रीविमलनाथाय प्रणामः—

अपापदमलं घनं शमितमानमामो हितं
नतामरसभासुरं विमलमालयाऽऽमोदितम् ।
अपापदमलङ्घनं शमितमानमामोहितं
न तामरसभासुरं 'विमल'मालयामोदितम् ॥ १ ॥
—पृथ्वी ( ८, ९ )

समस्तजिनेश्वराणा नुतिः—

सदानवसुराजिता असमरा जिना भीरदाः
क्रियासु रुचितासु ते सकलभारतीरा यताः ।
सदानवसुराजिता असमराजिनाभीरदाः
क्रियासुरुचितासु ते सकलभा रतीरायताः ॥ २ ॥ —पृथ्वी

जिनप्रवचनप्रणामः—

सदा यतिगुरोरहो ! नमत मानवैरञ्चितं
मतं वरदमेनसा रहितमायताभावतः ।
सदायति गुरोरहो न मतमानवैरं चितं
मतं वरदमेन सारहितमायता भावतः ॥ ३ ॥ —पृथ्वी

श्रीरोहिण्यै विनतिः—

प्रभाजि तनुतामलं परमचापला 'रोहिणी'
सुधावसुरभीमना मयि सभाक्षमालेहितम् ।
प्रभाजितनुताऽमलं परमचापलाऽऽरोहिणी
सुधावसुरभीमनामयिसभा क्षमाले हितम् ॥ ४ ॥ १३ ॥ —पृथ्वी

---



## १४ श्रीअनन्तजिनस्तुतयः

अथ श्रीअनन्तनाथस्य स्तुतिः—

सकलधौतसहासनमेरव-
स्तव दिशन्त्वभिषेकजलप्लवाः ।
मत'मनन्तजितः' स्नापितोल्लसत्-
सकलधौतसहासनमेरवः ॥ १ ॥

—द्रुतविलम्बितम्

जिनसमुदायस्य विज्ञप्तिः—

मम रतामरसेवित ! ते क्षण-
प्रद ! निहन्तु जिनेन्द्रकदम्बक ! ।
वरद ! पादयुगं गतमज्ञता--
ममरतामरसे विततेक्षण ! ॥ २ ॥ —द्रुत०

आगमस्तुतिः—

परमतापदमानसजन्मनः-
प्रियपदं भवतो भवतोऽवतात् ।
जिनपतेर्मतमस्तजगत्त्रयी-
परमतापदमानसजन्मनः ॥ ३ ॥ —द्रुत०

श्रीअच्युतायाः स्तुतिः—

रसितमुच्चतुरं गमनाय कं
दिशतु काञ्चनकान्तिरिता'ऽच्युता'।
धृतधनुःफलकासिशरा करै–
रसितमुच्चतुरङ्गमनायकम् ॥ ४ ॥१४॥ —द्रुत०

---



## १५ श्रीधर्मजिनस्तुतयः

अथ श्रीधर्मनाथाय प्रणामः—

नमः श्रीधर्म ! निष्कर्मो–दयाय महितायते !।
मर्त्यामरेन्द्रनागेन्द्रै–र्दयायमहिताय ते ॥ १ ॥
—अनुष्टुप्

जिनसमूहस्य स्तुतिः—

जीयाज्जिनौघो ध्वान्तान्तं, ततान लसमानया।
भामण्डलत्विषा यः स, ततानलसमानया ॥ २ ॥ — अनु०

भारत्याः संकीर्तना—

भारति ! द्राग् जिनेन्द्राणां, नवनौरक्षतारिके।
संसाराम्भोनिधावस्मा--नवनौ रक्ष तारिके ! ॥ ३ ॥ — अनु०

श्रीप्रज्ञप्तिदेव्याः स्तुतिः—

केकिस्था वः क्रियाच्छक्ति–करा लाभानयाचिता।
'प्रज्ञप्ति'र्नूतनाम्भोज–करालाभा नयाचिता ॥४॥१५॥ —अनु०

---

## १६ श्रीशान्तिजिनस्तुतयः

**अथ श्रीशान्तिनाथस्य स्तुतिः—**

राजन्त्या नवपद्मरागरुचिरैः पादैर्जिताष्टापदा-
द्रेऽकोप ! द्रुतजातरूपविभया तन्वाऽऽर्य ! धीर ! क्षमाम् ।
बिभ्रत्याऽमरसेव्यया जिनपते ! श्री'शान्ति'नाथास्मरो-
द्रेकोपद्रुत ! जातरूप ! विभयातन्वार्यधी[2] ! रक्ष माम् ॥ १ ॥

—शार्दूलविक्रीडितम्

**जिनवराणां विजयः—**

ते जीयासुरविद्विषो जिनवृषा मालां दधाना रजो-
राज्या मेदुरपारिजातसुमनःसन्तानकान्तां चिताः ।
कीर्त्या कुन्दसमत्विषेषदपि ये न प्राप्तलोकत्रयी-
राज्या मेदुरपारिजातसुमनःसन्तानकान्ताञ्चिताः ॥२॥ —शार्दूल०

**जिनमतस्य स्तुतिः—**

जैनेन्द्रं मतमातनोतु सततं सम्यग्दृशां सद्गुणा-
लीलाभं गमहारि भिन्नमदनं तापापहृद् यामरम् ।
दुर्निर्भेदनिरन्तरान्तरतमोनिर्नाशि पर्युल्लस-
ल्लीलाभङ्गमहारिभिन्नमदनन्तापापहृद्यामरम् ॥३॥ —शार्दूल०

**श्रीब्रह्मशान्तियक्षस्य स्तुतिः—**

दण्डच्छत्रकमण्डलूनि कलयन् स 'ब्रह्मशान्तिः' क्रियात्
सन्त्यज्यानि शमी क्षणेन शमिनो मुक्ताक्षमाली हितम् ।
तप्ताष्टापदपिण्डपिङ्गलरुचिर्योऽधारयन्मूढतां
संत्यज्यानिशमीक्षणेन शमिनो मुक्ताक्षमालीहितम् ॥४॥१६॥

—शार्दूल०

———

१ 'तन्वाऽर्य!' इत्यपि संभवति। २ प्रथमान्तं पदं वा।

## १७ श्रीकुन्थुजिनस्तुतयः

अथ श्रीकुन्थुनाथाय वन्दनम्—

भवतु मम नमः श्री'कुन्थु'नाथाय तस्मा-
यमितशमितमोहायामितापाय हृद्यः ।
सकलभरतभर्ताऽभूज्जिनोऽप्यक्षपाशा-
यमितशमितमोहायामितापायहृद् यः ॥ १ ॥

—मालिनी ( ८,७ )

सकलतीर्थपतिभ्यः प्रणतिः—

सकलजिनपतिभ्यः पावनेभ्यो नमः सन्-
नयनरवरदेभ्यः सारवादस्तुतेभ्यः ।
समधिगतनुतिभ्यो[1] देववृन्दाद् गरीयो-
नयनरवरदेभ्यः सारवादस्तु तेभ्यः ॥ २ ॥ —मालिनी

सिद्धान्तस्मरणम्—

स्मरत विगतमुद्रं जैनचन्द्रं चकासत्-
कविपदगमभङ्गं हेतुदन्तं कृतान्तम् ।
द्विरदमिव समुद्यद्दानमार्गं धुताघै-
कविपदगमभङ्गं हे तुदन्तं कृतान्तम् ॥ ३ ॥ —मालिनी

श्रीपुरुषदत्तायै प्रार्थना—

प्रचलदचिररोचिश्चारुगात्रे ! समुद्यत्-
सदसिफलकरामेऽभीमहासेऽरिभीते ! ।
सपदि 'पुरुषदत्ते !' ते भवन्तु प्रसादाः
सदसि फलकरा मेऽभीमहासेरिभीते ॥ ४ ॥ १७ ॥

—मालिनी

---

१ 'गतनतिभ्यो देववृन्दाद् वरीयो—' इत्यपि पाठः ।

# १८ श्रीअरजिनस्तुतयः

**अथ श्रीअरनाथाय प्रणिपातः—**

व्यमुचच्चक्रवर्तिलक्ष्मीमिह तृणमिव यः क्षणेन तं
सन्नमदमरमानसंसारमनेकपराजितामरम् ।
द्रुतकलधौतकान्तमानमतानन्दितभूरिभक्तिभाक्-
सन्नमदमरमानसं सारमनेकपराजितामरम् ॥ १ ॥

—द्विपदी

**जिनवरेभ्यो वन्दना—**

स्तौति समन्ततः स्म समवसरणभूमौ यं सुरावलिः
सकलकलाकलापकलिताऽपमदाऽरुणकरमपापदम् ।
तं जिनराजविसरमुज्ज्ञासितजन्मजरं नमाम्यहं
सकलकला कलाऽपकलितापमदारुणकरमपापदम् ॥ २ ॥

—द्विपदी

**जिनागमाय नमः—**

भीममहाभवाब्धिभवभीतिविभेदि परास्तविस्फुरत्-
परमतमोहमानमतनूनमलं घनमघवते हितम् ।
जिनपतिमतमपारमर्त्यामरनिर्वृतिशर्मकारणं
परमतमोहमानमत नूनमलङ्घनमघवतेहितम् ॥ ३ ॥ —द्विपदी

**श्रीचक्रधरायाः स्तुतिः—**

याऽत्र विचित्रवर्णविनतात्मजपृष्ठमधिष्ठिता हुतात्-
समतनुभागविकृतधीरसमदवैरिव धामहारिभिः ।
तडिदिव भाति सान्ध्यघनमूर्धनि 'चक्रधरा'ऽस्तु सा मुदे-
ऽसमतनुभा गवि कृतधीरसमदवैरिवधा महारिभिः ॥ ४ ॥ १८ ॥

—द्विपदी

---

१ '०वतेऽहितम्' इत्यपि संभवति । २ 'मूर्ध्नि' इत्यपि पाठः ।

# १९ श्रीमल्लिजिनस्तुतयः

अथ श्रीमल्लिनाथस्य स्तुतिः—

नुदंस्तनुं प्रवितर 'मल्लि'नाथ ! मे
प्रियङ्गुरोचिररुचिरोचितां वरम् ।
विडम्बयन् वररुचिमण्डलोज्ज्वलः
प्रियं गुरोऽचिररुचिरोचिताम्बरम् ॥ १ ॥

—रुचिरा

जिनपतीनां स्तुतिः—

जवाद् गतं जगदवतो वपुर्व्यथा-
कदम्बकैरवशतपत्त्रसं पदम् ।
जिनोत्तमान् स्तुत दधतः स्रजं स्फुरत्-
कदम्बकैरवशतपत्रसम्पदम् ॥ २ ॥ —रुचिरा

सिद्धान्तश्लाघनम्—

स सम्पदं दिशतु जिनोत्तमागमः
शमावहन्नतनुतमोहरोऽदिते ।
स चित्तभूः क्षत इह येन यस्तपः-
शमावहन्नतनुत मोहरोदिते ॥ ३ ॥ —रुचिरा

श्रीकपर्दिस्मरणम्—

द्विपं गतो हृदि रमतां दमश्रिया
प्रभाति मे चकितहरिद्विपं नगे ।
वटाह्वये कृतवसतिश्च यक्षराट्
प्रभातिमेचकितहरिद् विपन्नगे ॥ ४ ॥ १९ ॥

—रुचिरा

---

१ 'प्रवितनु' इति पाठान्तरम् ।



## २० श्रीमुनिसुव्रतजिनस्तुतयः

अथ श्रीमुनिसुव्रतनाथस्य संस्तवनम्—

जिन 'मुनिसुव्रतः' समवताज्जनतावनतः
संमुदितमानवा धनमलोभवतो भवतः ।
अवनिविकीर्णमादिषत यस्य निरस्तमनः-
समुदितमानबाधनमलो भवतो भवतः ॥ १ ॥

—नर्कुटकम् ( ७, १० )

जिनसमुदायप्रणामः—

प्रणमत तं जिनव्रजमपारविसारिरजो-
दलकमलानना महिमधाम भयासमरुक् ।
यमतितरां सुरेन्द्रवरयोषिदिलामिलनो-
दलकमलाः ननाम हिमधामभया समरुक् ॥ २ ॥ —नर्कु०

सिद्धान्तस्तवनम्—

त्वमवनताज्जिनोत्तमकृतान्त ! भवाद् विदुषो-
ऽव सदनुमानसङ्गमन ! याततमोदयितः ।
शिवसुखसाधकं स्वभिदधत् सुधियां चरणं
वसदनुमानसं गमनयातत ! मोदयितः ! ॥ ३ ॥ —नर्कु०

श्रीगौरीसंस्तवः—

अधिगतगोधिका कनकरुक् तव 'गौर्युं'चिता-
ङ्कमलकराजि तामरसभास्यतुलोपकृतम् ।
मृगमदपत्रभङ्गतिलकैर्वदनं दधती
कमलकरा जितामरसभाऽस्यतु लोपकृतम् ॥ ४ ॥२०॥ —नर्कु०

---

१ ' स मुदित० ' इत्यपि पदच्छेदः समीचीनः । २ ' बृहतिका ' इति सौभाग्यसागरः ।

## २१ श्रीनमिजिनस्तुतयः

अथ श्रीनमिनाथस्य सङ्कीर्तनम्—

स्फुरद्विद्युत्कान्ते ! प्रविकिर वितन्वन्ति सततं
ममायासं चारो ! दितमद ! 'नमे'ऽघानि लेपितः ! ।
नमद्भव्यश्रेणीभवभयभिदां हृद्यवचसा–
ममायासञ्चारोदितमदनमेघानिल ! पितः ! ॥ १ ॥

—शिखरिणी ( ६, ११ )

जिनेश्वराणां जयः—

नखांशुश्रेणीभिः कपिशितनमन्नाकिमुकुटः
सदा नोदी नानामयमलमदारेरिततमः ।
प्रचक्रे विश्वं यः स जयति जिनाधीशनिवहः
सदानो दीनानामयमलमदारेरिततमः ॥ २ ॥ —शिख०

सिद्धान्तपरिचयः—

जल-व्याल-व्याघ्र-ज्वलन-गज-रुग्-बन्धन-युधो
गुरुर्वाहोऽपातापदघनगरीयानसुमतः ।
कृतान्तस्त्रासीष्ट स्फुटविकटहेतुप्रमितिभा–
गुरुर्वोऽहो ! पाता पदघनगरीयानसुमतः ॥ ३ ॥ —शिख०

कालीदेव्याः स्तुतिः—

विपक्षव्यूहं वो दलयतु गदाक्षावलिधरा–
ऽसमा नालीकालीविशदचलना नालिकबरम् ।
समध्यासीनाऽम्भोभृतघननिभाऽम्भोधितनया–
समानाली 'काली' विशदचलनानालिकबरम् ॥ ४ ॥२१॥ —शिख०

---

१ प्रथमान्तं पदं वा ।



## २२ श्रीनेमिजिनस्तुतयः

अथ श्रीनेमिनाथाय नमस्कारः—

चिक्षेपोर्जितराजकं रणमुखे योऽलक्ष्यसङ्ख्यं क्षणा-
दक्षामं जैन ! भासमानमहसं 'राजीमती'तापदम् ।
तं 'नेमिं' नम नम्रनिर्वृतिकरं चक्रे यदूनां च यो
दक्षामञ्जनभासमानमहसं राजीमतीतापदम् ॥ १ ॥

—शार्दूलविक्रीडितम्

जिनश्रेण्याः स्तुतिः—

प्राव्राजीज्जितराजका रज इव ज्यायोऽपि राज्यं जवाद्
या संसारमहोदधावपि हिता शास्त्री विहायोदितम् ।
यस्याः सर्वत एव सा हरतु नो राजी जिनानां भवा-
यासं सारमहो दधाव पिहिताशास्त्रीविहायोऽदितम् ॥ २ ॥

—शार्दूल०

जिनवाणीगौरवम्—

कुर्वाणाऽणुपदार्थदर्शनवशाद् भास्वत्प्रभायास्त्रपा-
मानत्या जनकृत्तमोहरत ! मे शस्ताऽदरिद्रोहिका ।
अक्षोभ्या तव भारती जिनपते ! प्रोन्मादिनां वादिनां
मानत्याजनकृत् तमोहरतमेश ! स्तादरिद्रोहिका ॥ ३ ॥

—शार्दूल०

अम्बादेव्याः स्तुतिः—

हस्तालम्बितचूतलुम्बिलतिका यस्या जनोऽभ्यागमद्
विश्वासेविततान्नपादपरतां वाचा रिपुत्रासकृत् ।
सा भूतिं वितनोतु नोऽर्जुनरुचिः सिंहेऽधिरूढोल्लसद्-
विश्वासे विततान्नपादपरता'ऽम्बा' चारिपुत्राऽसकृत् ॥ ४ ॥ २२ ॥

—शार्दूल०

---

१ 'यो लक्ष्य०' 'यो लक्षसंख्यं' 'योऽलक्षसंख्यं' इत्यपि पाठाः । २ 'जनभासमान०' इति पाठोऽपि समीचीनः ।

# २३ श्रीपार्श्वजिनस्तुतयः

अथ श्रीपार्श्वनाथाय प्रार्थना—

मालामालानबाहुर्दधददधदरं यामुदारा मुदाऽऽरा—
लीनाऽलीनामिहाली मधुरमधुरसा सूचितोमाचितो मा
पातात् पातात् स 'पार्श्वो' रुचिररुचिरदो देवराजीवराजी—
पत्राऽऽपत्त्रा यदीया तनुरतनुरवो नन्दको नोदको नो ॥ १ ॥
—स्रग्धरा

जिनेश्वराणा स्तुतिः—

राजी राजीववक्त्रा तरलतरलसत्केतुरङ्गत्तुरङ्ग—
व्यालव्यालग्नयोधाचितरचितरणे भीतिहृद् याऽतिहृद्या ।
सारा साऽऽराज्जिनानामलममलमतेर्बोधिका माऽधिकामा—
दव्यादव्याधिकालाननजननजरात्रासमानाऽसमाना ॥ २ ॥—स्रग्०

जिनवाण्या विचारः—

सद्योऽसद्योगभिद् वागमलगमलया जैनराजीनराजी—
नूता नूतार्थधात्रीह ततहततमःपातकाऽपातकामा ।
शास्त्री शास्त्री नराणां हृदयहृदयशोरोधिकाऽबाधिका वा—
ऽऽदेया देयान्मुदं ते मनुजमनु जरां त्याजयन्ती जयन्ती ॥ ३ ॥—स्रग्०

श्रीवैरोट्यायाः स्तुतिः—

याता या तारतेजाः सदसि सदसिभृत् कालकान्तालकान्ता—
ऽपारिं पारिन्द्रराजं सुरवसुरवधूपूजिताऽरं जितारम् ।
सा त्रासात् त्रायतां त्वामविषमविषभृद्भूषणाऽभीषणा भी—
हीनाऽहीनाग्र्यपत्नी कुवलयवलयश्यामदेहाऽमदेहा ॥ ४ ॥ २३॥ स्रग्०

---

१ 'शास्त्रीशा स्त्रीनराणां' इत्यपि पदच्छेदः




अथ श्रीवीरनाथाय विज्ञप्तिः—

नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालारजोरञ्जितांहे ! धरित्रीकृता-
वन ! वैरतमसङ्गमोदारतारोदितानङ्गनार्यावलीलापदेहेक्षितामोहिताक्षो भवान् ।
मम वितरतु 'वीर!' निर्वाणशर्माणि जातावतारो धराधीश'सिद्धार्थ'धाम्नि क्षमालङ्कृता-
वनवरतमसङ्गमोदारतारोदितानङ्गनार्यात्र! लीलापदे हे क्षितामो हिताक्षोभवान् ॥१॥

—अर्णवदण्डकम्

जिनसमूहस्य स्तुतिः—

समवसरणमत्र यस्याः स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिसालत्रयी-
सद्वनमदशोकपृथ्वीक्षणप्रायशोभातपत्रप्रभागुर्वराराट् परेताहितारोचितम् ।
प्रवितरतु समीहितं साऽर्हतां संहतिर्भक्तिभाजां भवाम्भोधिसम्भ्रान्तभव्यावलीसेविता-
ऽसदवनमदशोकपृथ्वीक्षणप्रा यशोभातपत्रप्रभागुर्वराराट्परेताहितारोचितम् ॥ २॥

—अर्णव०

भारत्यै प्रार्थना—

परमततिमिरोग्रभानुप्रभा भूरिभङ्गैर्गभीरा भृशं विश्ववर्ये निकाय्ये वितीर्यात्तरा-
महतिमतिमते हि ते शस्यमानस्य वासं सदाऽतन्वतीतापदानन्दधानस्य सोऽमानिनः।
जननमृतितरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जज्जनोत्तारनौर्भारती तीर्थकृत् !
महति मतिमते हितेशस्य मानस्य वा संसदातन्वती तापदानं दधानस्य सामानिनः३

—अर्णव०

श्रीअम्बिकायाः स्तुतिः—

सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फुरद्रश्मिसारक्रमाम्भोरुहे !
परमवसुतराङ्गजाऽऽरावसन्नाशितारातिभाराऽजिते ! भासिनी हारतारा बलक्षेमदा ।
क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटोत्कृष्टकण्ठोद्भटे संस्थिते! भव्यलोकं त्वमम्बा'ऽम्बिके!'
परमव सुतरां गजारावसन्ना शितारातिभा राजिते भासि नीहारतारावलक्षेऽमदा॥४॥२४॥

—अर्णव०

---

१ 'वरतम ! तङ्गमो०' इत्यपि पाठः । २ 'शालत्रयी-' इत्यपि पाठः। ३ '०मति मते' इत्यपि पदच्छेदः। ४ 'सामानिनः' इत्यपि संभवति । ५ मतिमतेहिते० इत्यपि पाठः । ६ सप्तम्यन्तं पदं वा । ७ 'भासिनीहा०' इत्यपि पाठः ।

॥ ॐ ऐं नमः ॥

सुविहितमण्डनश्रीशोभनमुनीश्वरप्रणीता

# ॥ स्तुतिचतुर्विंशतिका ॥

( टीकाचतुष्टयेन समलङ्कृता )

## १ श्रीऋषभजिनस्तुतयः

अथ श्रीनाभिनन्दननुतिः

भव्याम्भोजविबोधनैकतरणे ! विस्तारिकर्मावली–
रम्भासामज ! नाभिनन्दन ! महानष्टापदाभासुरैः ।
भक्त्या वन्दितपादपद्म ! विदुषां सम्पादय प्रोज्झिता–
रम्भासाम ! जनाभिनन्दन ! महानष्टापदाभासुरैः ॥ १ ॥

–शार्दूलविक्रीडितम् ( १२,७ )

पण्डितजयविजयगणिविरचिता विवृत्तिः ।

अवतरणम्—

प्रणम्य परमानन्द–दायिनं जिनकुञ्जरम् ।
श्रीगुरोः शासनाद् वक्ष्ये, विवृत्तिं शोभनस्तुतेः ॥ १ ॥

–अनुष्टुप्

इह हि तावदशेषविशेषविशारदा विशारदाः सर्वत्राऽपि प्रयोजनमुद्दिश्यैव प्रवर्तन्त तच्च मुख्यतः पुरुषार्थः । स च धर्मार्थकाममोक्षभेदाच्चतुर्धा भिद्यते । तत्रापि दुःखानुषङ्गपराङ्मुखानन्तसुखात्मकत्वेन परमपुरुषार्थत्वात् प्रधानतमत्वं मोक्षस्यैव । स च भगवदुपासनसाध्य इति मोक्षार्थी शोभनमुनिः ऋषभादीनां चतुर्विंशतिजिनानां क्रमेण काव्यचतुष्टयमयीश्चतुर्विंशतिस्तुतीः प्रणयन् प्रथमं श्रीऋषभप्रभोः स्तुतिमाह—

भव्याम्भोजेति । हे नाभिनन्दन!–हे नाभिनरेन्द्रसूनो! त्वं विदुषां–पण्डितानां महान्–उत्सवान् सम्पादय–देहि इति क्रियाकारकसंटङ्कः । तत्र 'सम्पादय' इति क्रियापदम् । कः कर्ता ? 'त्वम्' । कान् कर्मतापन्नान् ? 'महान्' । केषाम् ? 'विदुषाम्' । अपराणि सर्वाणि सम्बोधनानि । तेषां व्याख्या यथा– हे 'भव्याम्भोजविबोधनैकतरणे' ! भव्याः–मुक्तियोग्या जन्तवः तद्रूपाणि यानि अम्भोजानि–कमलानि तेषां विबोधने–विबोधजनने एकः–अद्वितीयः तरणिः–सूर्यः तत्सम्बोधनं हे भव्या० । हे 'विस्तारिकर्मावलीरम्भासामज' ! विस्तारिणी या कर्मावली–कर्मश्रेणी तद्रूपा या रम्भा–कदली तत्र सामजो–हस्ती तदुन्मूलकत्वात् तत्सम्बोधनं हे विस्तारि० । हे 'महानष्टापत्' ! महत्यो नष्टा आपदो यस्मात् स तथा तत्सम्बोधनं हे महानष्टा० । हे 'वन्दितपादपद्म' ! वन्दिते–नमस्कृते पादपद्मे–चरणकमले यस्य स तथा तत्सम्बोधनं हे वन्दितपाद० । कैः ? 'असुरैः' भवनवासिभिर्देवविशेषैः । कथंभूतैः ? 'आभासुरैः' आभासनशीलैः । कया ? 'भक्त्या' । हे 'प्रोज्झितारम्भ' ! प्रोज्झितः–प्रकर्षेण त्यक्तः आरम्भः–सावद्यव्यापारो येन स तथा तत्सम्बोधनं हे प्रोज्झितारम्भ !। हे 'असाम' ! न सामः–सरोगः असामः तत्सम्बोधनं हे असाम ! । हे 'जनाभिनन्दन' ! जनानां अभिनन्दनः–प्रह्लादनः तत्सम्बोधनं हे जनाभिनन्दन ! । हे 'अष्टापदाभ' ! अष्टापदं–सुवर्णं तद्वत् आभा–कान्तिर्यस्य स तथा तत्सम्बोधनं हे अष्टाप० ॥

अथ समासः–भव्या एवाम्भोजानि भव्याम्भोजानि 'कर्मधारयः' । भव्याम्भोजानां विबोधनं भव्या० 'तत्पुरुषः' । एकश्चासौ तरणिश्च एक० 'कर्मधारयः' । भव्याम्भोजविबोधने एकतरणिः भव्या० 'तत्पुरुषः' । तत्सम्बोधनं हे भव्या० । कर्मणां आवली कर्मावली 'तत्पुरुषः' । विस्तारिणी चासौ कर्मावली च विस्तारि० 'कर्मधारयः' । विस्तारिकर्मावली चासौ रम्भा च विस्तारि० 'कर्मधारयः' । विस्तारिकर्मावलीरम्भायां सामजः विस्तारि० 'तत्पुरुषः' । तत्सम्बोधनं हे विस्तारि० । नाभेर्नन्दनः नाभि० 'तत्पुरुषः' । तत्सम्बोधनं हे नाभि० । महानष्टा आपदो यस्य, यस्माद् वा स महानष्टापत् 'बहुव्रीहिः' । तत्सं० हे महा० । पादावेव पद्मे पादपद्मे 'कर्मधारयः' । वन्दिते पादपद्मे यस्य स वन्दित० 'बहुव्रीहिः' । तत्सम्बो० हे वन्दि० । प्रोज्झित आरम्भो येन स प्रोज्झि० 'बहुव्रीहिः' । तत्सं० हे प्रोज्झि० । सह आमेन वर्तते यः स सामः 'तत्पुरुषः' । न सामः असामः 'तत्पुरुषः' । तत्सं० हे असाम ! । जनानां अभिनन्दनः जना० 'तत्पुरुषः' । तत्सं० हे जना० । अष्टापदस्येव आभा यस्य सोऽष्टाप० 'बहुव्रीहिः' । तत्सं० हे अष्टा० । इति काव्यार्थः ॥ १ ॥

## श्रीसिद्धिचन्द्रगणिरचिता वृत्तिः ।

**प्रस्तावः—**

शश्वत् क्षीरपयोधिजामधुकरीसंसेव्यमानक्रमा-
म्भोजन्मद्वितयः शिवं स दिशतु श्रीपार्श्वचिन्तामणिः ।
कस्तूरीकृतपत्रवल्लिहृदया यत्कीर्तिकान्ता किमु
द्रष्टुं विश्वमितस्ततः शशितनुः कौतूहलाद् भ्राम्यति ॥ १ ॥
—शार्दूलविक्रीडितम्

अस्ति श्रीमदखण्डपाठकगणप्राप्तप्रतिष्ठोन्नति-
र्भूपालावलिवन्द्यमानचरणः श्रीभानुचन्द्रो गुरुः ।
यत्कीर्तिर्भुवनाङ्गणे गुणगणच्छन्ने न मान्ती पुनः
भ्रातुः कर्णगताऽकरोदमिनवब्रह्माण्डयाच्ञामिव ॥ २ ॥
—शार्दूल०

यदुपदेशवशेन मुदं दधन्
निखिलमण्डलवासिजने निजे ।
मृतधनं च करं च स जीजिआ-
ऽभिधमकब्बरभूपतिरत्यजत् ॥ ३ ॥
—द्रुतविलम्बितम्

तस्यान्तेनिलयी विधेयजगतीलोकः स्मरो मूर्तिमान्
विद्वद्वृन्दगजेन्द्रतर्जनहरिः श्रीसिद्धिचन्द्रोऽस्ति सः ।
यत्कीर्तिं भुजगाङ्गनावलिभिरुद्गीतां समाकर्णयन्
आनन्दामृतपूर्णकर्णकुहरः शेषः सुखं खेलति ॥ ४ ॥
—शार्दूल०

परेषां यद् दूरे हृदयसरणेरस्ति तदिदं
वधानानामष्टोत्तरशतमा( मवा ? )लोक्य मुदितः ।
महाराजः श्रीमानकब्बरनृपो यस्य सहसा
भुवि ख्यातामाख्यां सपदि खुस्फुहमेति विदधे ॥ ५ ॥
—शिखरिणी

बालबोधकृते तेन, परोपकृतिशालिना ।
संक्षिप्ता क्रियते वृत्तिः, शोभना शोभनस्तुतेः ॥ ६ ॥
—अनुष्टुप्

इह हि ग्रन्थारम्भे विशिष्टशिष्टाचारप्रतिपालनाय ‘ निर्विघ्नसमाप्तिकामो मङ्गलमाचरेत् ’ इति श्रुतिबोधितकर्तव्यताकं स्वाभीष्टदैवतश्रीऋषभस्वामिस्तुतिरूपमेवादौ मङ्गलमाचरन्नाह—भव्याम्भोजेति । हे नाभिनन्दन ! नाभेर्नन्दनो नाभिनन्दनः ‘ तत्पुरुषः ’ तस्य संबोधनं हे नाभिनन्दन ! नाभिनरेन्द्रसूनो ! त्वं विदुषां—पण्डितानां महान्—उत्सवान् संपादय—देहीत्यर्थः । ‘ पद गतौ ’ धातुः संपूर्वः आशीः—प्रेरणयोः परस्मैपदे मध्यमपुरुषैकवचनम् ‘ पदाग्रे हि भ्रुरादेर्णिः ’ ‘अत उपधायाः’ इति वृद्धिः ‘ अप् कर्तरि ’ इत्यप् ‘ गुणः ’ इत्यनेन गुणः ‘ ए अय् ’ ‘ अतः ’ इति हेर्लोपः । तथा च संपादय इति सिद्धम् । अत्र ‘संपादय’ इति क्रियापदम् । कः कर्ता ?। त्वम् । कान् कर्मतापन्नान् ?। महान् । “महश्चो (स्तु ?)त्सवतेजसोः” इत्यमरः ( श्लो० २७९७ ) । अदन्तोऽत्र महःशब्दः सकारान्तोऽप्यस्ति । यदाह—

“ नमं तु नमसा साकं, तपं च तपसा सह ।
रजं च रजसा सार्धं, महं च महसा समम् ॥”

इति विश्वः । विदुषां इत्यत्र विद्वश्शब्दस्य आमि परे ‘ वसोर्व उः ’ इति वस्योत्वे सकारस्य ‘ किलात्’ इति षत्वे च विदुषामिति सिद्धम् । अपराणि सर्वाणि भगवतः संबोधनानि । तेषां व्याख्या त्वेवम् । हे ‘भव्याम्भोजविबोधनैकतरणे’ ! भव्या—मुक्तियोग्या जन्तवः तद्रूपाणि यानि अम्भोजानि—कमलानि तेषां विबोधनं—प्रबोधजननं तत्र एकः—अद्वितीयो यः तरणिरिव तरणिः—सूर्यः तस्य संबोधनं हे भव्याम्भोजविबोधनैकतरणे !। यथा सूर्यः स्वकिरणैः अन्धकारं विनाश्य पद्मवनानि—कमलवनानि प्रबोधयति, तथा भगवानपि स्ववचनैः मिथ्यात्वतिमिरं दूरीकृत्य भव्यानां प्रबोधं विदधातीति भावः । हे ‘विस्तारिकर्मावलीरम्भासामज’ ! विस्तारिणी—प्रसरणशीला या कर्मावली—कर्मणां ज्ञानावरणादीनां आवली—श्रेणिः सैव रम्भा—कदली तस्यां सामज इव सामजो—गजः तस्य सं० हे विस्तारिकर्मावलीरम्भासामज !। “ सामवेदाज्जातः सामजः ” इति निरुक्तिः । “ सामानि गायतो ब्रह्मणः कराद्ष्टौ गजाः समुत्पन्नाः ” इति श्रुतेः । यथा हस्ती लीलयैव रम्भामुन्मूलयति, तथा प्रभुणाऽपि विनाऽऽयासेन कर्माण्युन्मूल्यन्ते इति भावः । हे ‘ महानष्टापत् ’ ! महत्यो नष्टा आपदो—विपत्तयो यस्मात् यस्य वा इति ‘ बहुव्रीहिः ’ तथा तस्य संबो० हे महानष्टापत् !। महच्छब्दस्य स्त्रियां पुंवद्भावात् ईपो निवृत्तिः ‘आन्महतः समानाधिकरण’ इति टेरात्वं च । हे ‘वन्दितपादपद्म’ ! वन्दिते—नमस्कृते पादावेव पद्मे—कमले यस्य इति ‘बहुव्रीहिः’ स तथा तस्य संबो० हे वन्दितपादपद्म !। “पद्यते—चरति अत्र लक्ष्मीः इति पद्मं” इति निरुक्तिः । “वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्” इत्यमरः (श्लो० ९४९) । कैः ?। असुरैः—भवनवासिदेवविशेषैः। “असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः” इत्यमरः (श्लो० २३) । कीदृशैः ?। आभासुरैः—आभासनशीलैः। आ-ईषत् सुरापेक्षया भासुरैः—दीप्यमानैरिति वा। “आङीषदर्थेऽभिव्याप्तौ सीमार्थे योगजेऽपि च ( धातुयोगजे ?)” इत्यमरः (श्लो० २८१४)। कया ?। भक्त्या। भक्तिः—श्रद्धा पूज्येष्वनुराग इतियावत्। तथा “श्रद्धावचनयोर्भक्तिः” इत्यमरः। “आराध्यत्वेन ज्ञानं भक्तिः” इति तु न्यायविदः। हे ‘प्रोज्झितारम्भ’ ! प्रोज्झितः—प्रकर्षेण त्यक्तः आरम्भः—सावद्यव्यापारो—हिंसात्मको दर्पो वा येन इति ‘बहुव्रीहिः’ स तथा तस्य संबो० हे प्रोज्झितारम्भ !।

"आरम्भस्तु त्वरायां स्यादुद्यमे वधदर्पयोः" इति विश्वः। हे 'असाम'! सह आमेन—रोगेण वर्तते यः स सामः न सामः असामः 'तत्पुरुषः' तस्य संबो० हे असाम!। "आम आमय आकल्यमुपतापो गदः समाः" इति हैमः (का० ३, श्लो० १२७)। हे 'जनाभिनन्दन'! जनानां—भव्यप्राणिनां अभिनन्दयति—आह्लादं उत्पादयति इति अभिनन्दनः तस्य सं० हे जनाभिनन्दन!। 'नन्दिग्रहादेः' इति युः 'युवोरनाकौ' इत्यनादेशः। हे 'अष्टापदाभ'! अष्टापदं—सुवर्णं तदिव आभा—कान्तिर्यस्य इति 'बहुव्रीहिः' तस्य संबोधनं हे अष्टापदाभ!। 'अष्टन आ संज्ञायाम्' इत्यात्वम्। "रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्" इत्यमरः (श्लो० १८९७)॥ १॥

## श्रीसौभाग्यसागरसूरिकृता वृत्तिः।

उपक्रमः—

श्रीमज्जिनेन्द्रं प्रणिपत्य भावतो
लिखामि वृत्तिं सुखबोधहेतवे।
श्रीमच्चतुर्विंशतितीर्थराज-
स्तुतेः सुधी "शोभन"निर्मितायाः॥ १॥
—इन्द्रवंशा

आसीत् पुरा "चोज्जयिनी"निवासी,
पवित्रगोत्रो द्विज "श(स)र्वदेवः"।
तस्यात्मजः "शोभन" नामसाधु-
र्बन्धुर्द्वितीयो "धनपाल"नामा॥ २॥
—उपजातिः

तेनान्यदा पण्डित "शोभने"न,
कृता चतुर्विंशतिका जिनानाम्।
स्तुतिस्वरूपा विविधार्थचित्रा-
ऽलङ्कारसारा सरसाऽप्रमेया॥ ३॥
—उप०

अथैतयोः सम्बन्धविस्तरस्तु तत्प्रबन्धादवसेयः। सांप्रतं तु शोभनस्तुतिकाव्यस्यार्थो लिख्यते। तत्र प्रथमं युगादिदेवस्तुतिमाह—भव्याम्भोजेति। भव्याः—सिद्धिगमनयोग्याः प्राणिनः त एवाम्भोजानि—कमलानि तेषां विबोधनं—प्रकाशकरणं तस्मिन् एकः—अद्वितीयः तरणिः—भास्वानिव भास्वान् तत्संबोधने हे भव्याम्भोजविबोधनैकतरणे!। पुनः विस्तारिणी—विस्तारवती—प्रसरणशीला या कर्मणां—ज्ञानावरणीयादीनां आवली—श्रेणिः सैव रम्भा—कदली तस्या उत्पाटने सामजः—द्विरद इव द्विरदः तत्संबुद्धौ हे विस्तारिकर्मावलीरम्भासामज!। पुनः हे नाभिनन्दन!—नाभिकुलगुरुपुत्र!। पुनः अष्टापदं—स्वर्णं तद्वद् आभा—कान्तिः यस्य तत्सम्बो० हे अष्टापदाभ!। पुनः भक्त्या—भावेन असुरैः—देवविशेषैः वन्दितं—प्रणमितं पादपद्मं—चरणकमलं यस्य स तत्सम्बो० हे वन्दितपादपद्म!। पुनः प्रोज्झिताः—त्यक्ताः आरम्भाः—सावद्यव्यापारा येन स तत्सम्बो० हे प्रोज्झितारम्भ!। पुनः अमो—रोगस्तेन सहितः सामः। तद्विरहितः असामः, अरोग इत्यर्थः। पुनः जनानां—विश्वलोकानां अभि—सामस्त्येन आनन्दनः—आनन्दकृत् तत्स-

म्बो० हे जनाभिनन्दन ! । पुनः महत्यो नष्टा-गता आपदो-विपदो यस्य यस्माद् वा स महानष्टापत् तस्य सम्बो० हे महानष्टापत् ! । त्वं विदुषां महान् सम्पादयेत्यन्वयः । 'सम्पादय' इति क्रियापदम् । कः कर्ता ? । त्वम् । 'सम्पादय' सम्यक् प्रकारेण निष्पादय-कुरु । कान् कर्मतापन्नान् ? । 'महान्' उत्सवान् । केषाम् ? । 'विदुषाम्' पण्डितानाम् । "महः क्षणोद्धवोद्धर्षाः" इति हैमः ( का० ६, श्लो० १४४ ) । किंविशिष्टैः असुरैः ? । आ-समन्तात् भासुरैः-देदीप्यमानैः । इति सम्बोधनप्रथमवृत्तार्थः ॥

अथ समासः—भव्या एव अम्भोजानि भव्याम्भोजानि, भव्याम्भोजानां विबोधनं भव्याम्भोजविबोधनं, एकश्चासौ तरणिश्च एकतरणिः, भव्याम्भोजविबोधने एकतरणिः भव्याम्भो० तरणिः तस्य सम्बो० हे भव्या० । विस्तारोऽस्या अस्तीति विस्तारिणी, कर्मणां आवली कर्मावली, विस्तारिणी चासौ कर्मावली च विस्तारिकर्मावली विस्तारिकर्मावली एव रम्भा विस्तारिकर्मावली-रम्भा, विस्ता० रम्भायां सामजः तस्य सम्बो० हे विस्तारि०रम्भासामज ! । नन्दयतीति नन्दनः, नाभेर्नन्दनो नाभिनन्दनः तत्सम्बो० हे नाभिनन्दन ! । अष्टापदवत् आभा यस्य स अष्टापदाभः तस्य सम्बो० हे अष्टापदाभ ! । पाद एव पद्मं पादपद्मं, वन्दितं पादपद्मं यस्य स वन्दितपादपद्मः तस्य सम्बो० हे वन्दितपादपद्म ! । प्रोज्झिता आरम्भा येन स प्रोज्झितारम्भः तत्सम्बो० हे प्रोज्झिता-रम्भ ! । अमेन सहितः सामः, न सामः असामः तत्सम्बो० हे असाम ! । जनान् अभिनन्दतीति जनाभिनन्दनः तत्संबो० हे जनाभिनन्दन ! । महत्यो नष्टा आपदो यस्य स महानष्टापत् तत्सं० हे महानष्टापत् ! । आ-समन्तात् भासुरा आभासुराः तैः 'आभासुरैः' । शार्दूलविक्रीडितम् ॥ १ ॥

## श्रीदेवचन्द्रविहिता व्याख्या ।

प्रारम्भः—

श्रेयःस्तोमतरङ्गिणीप्रियतमप्रोल्लासशीतद्युतिं
पापप्रोद्धतपङ्कपूगशमनप्रोद्दामपाथोधरम् ।
वन्देऽहं जिनकुञ्जरं गतजरामोहाघमायामयं
प्रीत्यावेशवशः सदा सुखकरं देवार्यदेवं मुदा ॥ १ ॥

—शार्दूलविक्रीडितम्

श्रीवर्धमानस्य शिशुः सुधर्मा
सल्लब्धिपात्रं गणभृद् बभूव ।
श्रीहीरपूर्वो विजयाग्रसूरि¹-
रासीद् गुरुस्तस्य परम्परायाम् ॥ २ ॥

—इन्द्रवज्रा

परमागमगमसंगम-संस्कृतवचनैरपास्तमानमलः ।
तत्पादमुकुटरत्नं, जयतात् श्रीविजयसेनगुरुः ॥ ३ ॥

—आर्या

श्रीविजयदेवसूरिस्तत्पट्टविभूषणं सदा जीयात् ।
श्रीमज्जैनप्रवचनप्रभावनाकृत्यविधिदक्षः ॥ ४ ॥

—आर्या

---

१ श्रीहीरविजयसूरिरित्यर्थः ।

अवनमदवनीन्द्रस्फारकोटीरहीर-
द्युतिपटलपयोभिर्धौतपादारविन्दः ।
स नयविजयलक्ष्मीदिवने देवकीभू-
र्जयति विजयसिंहः सूरिशार्दूलशावः ॥ ५ ॥
—मालिनी

श्रीभानुचन्द्रा वरवाचकेन्द्रा
विद्यारसेन्द्रा विनयानतेन्द्राः ।
अकब्बरक्ष्मापतिलब्धमानाः
साधुक्रियाकृत्यपरा बभूवुः ॥ ६ ॥
—उपजातिः

तेषां गुरूणां गुणभाजनानां
शिष्यैकलेशेन विधीयते मया ।
श्रीदेवचन्द्राभिधपण्डितेन
व्याख्याविधिः शोभनशोभनस्तुतेः ॥ ७ ॥
—इन्द्रवंशा

धनपालपण्डितबन्धुना श्रीशोभनसाधुना कृतानां षण्णवतिसंख्याकानां शोभनस्तुतीनां पण्डितदेवचन्द्रेण किंचिदर्थो लिख्यते । तत्रादौ श्रीनाभिनन्दनजिनस्तुतिमाह–भव्याम्भोजेति ।

व्याख्या प्रस्तूयते—तल्लक्षणं च "संहिता च पदं चैव" इत्यादि । एतच्च स्वबुद्ध्या योजनीयम् । ग्रन्थविस्तरभयात् मन्दमतीनां प्रतिपत्तिगौरवपरिहारार्थं वदतं (?) प्रतन्यते । हे नाभिनन्दन ! त्वं महान्–उत्सवान् विदुषां–पण्डितानां संपादय–निष्पादयेत्यर्थः । 'पद् गतौ' धातुः । 'संपादय' इति क्रियापदम् । कः कर्ता ? । त्वम् । कान् कर्मतापन्नान् ? । महान् । केषाम् ? । विदुषाम् । 'भव्याम्भोजविबोधनैकतरणे' इति । भव्या एव अम्भोजानि–पद्मानि तेषां विबोधनं–प्रबोधनं तस्मिन् एकः–अद्वितीयः तरणिः–सूर्यः यः सः तस्यामन्त्रणम् । यथा सूर्यः स्वकरपरम्पराभिः अन्धतमसं विधूय पद्मवनानि प्रबोधयति, तथा भगवानपि स्वभारतीसंभारैः मिथ्यात्वादिध्वान्तनिकरं दूरीकृत्य भव्यप्राणिनां बोधं विधत्ते इति भावः । 'विस्तारिकर्मावलीरम्भासामज' इति । विस्तारिणी कर्मणां–ज्ञानावरणादीनां आवलिः(ली?)–श्रेणिः सैव या रम्भा–कदली तस्यां सामजो–गजः यः सः तस्यामन्त्रणम् । यथा गजो लीलयैव रम्भामुन्मूलयति, तथा भगवता कर्माण्युन्मूल्यन्ते इति भावः । 'महानष्टापद्' इति नष्टा चासौ आपच्चेति पूर्वं 'कर्मधारयः' । ततो महती नष्टा आपद्—विपद् यस्मात् तस्यामन्त्रणम् । अत्र महत्-शब्दस्य पुंवद्भावादीपो निवृत्तिः । 'वन्दितपादपद्म' इति । पादावेव पद्मं पादपद्मं इति पूर्वं 'तत्पुरुषः' । ततो वन्दितं–नमस्कृतं पादपद्मं–चरणाम्भोजं यस्य सः तस्यामन्त्रणम् । कैः ? । असुरैः–भुवनपतिभिः । कया ? । भक्त्या । "आराध्यत्वेन ज्ञानं भक्तिः" इति वर्धमानचरणाः, तया । किंविशिष्टैः ? । 'आभासुरैः' आ–समन्तात् भासुरैः–दीप्यमानैः । 'प्रोज्झितारम्भ' इति । प्रकर्षेण उज्झिताः–त्यक्ताः आरम्भाः–सावद्यव्यापारा येन सः तस्यामन्त्रणम् । 'असाम' इति । अमो–रोगः तेन सह वर्तमानः सामः, न सामः असामः तस्यामन्त्रणम् । 'जनाभिनन्दन' इति । जनान्–लोकान् अभिनन्दयति–आनन्दयति यः तस्यामन्त्रणम् । 'अष्टापदाभ' इति । अष्टापदं–सुवर्णं तद्वत् आभा–कान्तिः यस्य तस्यामन्त्रणम् । "आभा राढा विभूषा श्रीः" इत्यभिधानचिन्तामणिः (का० ६, श्लो० १४८) एतानि सर्वाणि भगवतः सम्बोधनपदानि । इति प्रथमवृत्तार्थः ॥ १ ॥



समस्तजिनवराणां स्तुतिः—

ते वः पान्तु जिनोत्तमाः क्षतरुजो नाचिक्षिपुर्यन्मनो
दारा विभ्रमरोचिताः सुमनसो मन्दारवा राजिताः ।
यत्पादौ च सुरोज्झिताः सुरभयाञ्चक्रुः पतन्त्योऽम्बरा—
दाराविभ्रमरोचिताः सुमनसो मन्दारवाराजिताः ॥ २ ॥

—शार्दूल०

ज० वि०—ते वः पान्त्विति । ते जिनोत्तमाः—जिनवराः वः—युष्मान् पान्तु—रक्षन्तु इति क्रियाकारकसम्बन्धः । तत्र 'पान्तु' इति क्रियापदम् । के कर्तारः ? 'जिनोत्तमाः' । कान् कर्मतापन्नान् ? 'वः' । कथंभूता जिनोत्तमाः ? 'क्षतरुजः' क्षताः—क्षयं नीताः रुजो—रोगा यैस्ते तथा । यत्तदोर्नित्याभिसम्बन्धात् । ते के ? यन्मनः—यस्य मानसं दाराः—कलत्राणि न (आ)चिक्षिपुः—न क्षिप्तवन्तः, न चक्रुषुरिति भावः । अयं 'दार'शब्दः कलत्रवाचकः पुल्लिङ्गो नित्यं बहुवचनान्तो ज्ञेयः । तत्र 'आचिक्षिपुः' इति क्रियापदम् । कथं ? 'न' । के कर्तारः ? 'दाराः' । किं कर्मतापन्नम् ? 'यन्मनः' । दाराः कथंभूताः ? 'विभ्रमरोचिताः' विभ्रमैः—विलासैः रोचिताः—शोभिताः । पुनः कथंभूताः ? 'सुमनसः' शोभनानि मनांसि येषां ते तथा । पुनः कथंभूताः ? 'मन्दारवाराजिताः' मन्दो—मृदुः आरवः—शब्दो येषां ते तथा तादृशाः सन्तो राजिताः—शोभिताः । 'च' पुनः । सुमनसः—कुसुमानि यत्पादौ—येषां चरणौ सुरभयाञ्चक्रुः—सुरभीकुर्वन्ति स्मेति क्रियाकारकयोजना । अत्रायं 'सुमनस्'शब्दः सकारान्तः पुष्पवाचको बहुवचनान्तो मन्तव्यः । अत्र 'सुरभयाञ्चक्रुः' इति क्रियापदम् । काः कर्त्र्यः ? 'सुमनसः' । कौ कर्मतापन्नौ ? 'यत्पादौ' । सुमनसः कथंभूताः ? 'सुरोज्झिताः' सुरैः—देवैः उज्झिताः—उत्सृष्टाः, मुक्ता इत्यर्थः । किं कुर्वन्त्यः ? 'पतन्त्यः' गलन्त्यः । कस्मात् ? 'अम्बरात्' आकाशात् । पुनः कथं० ? 'आराविभ्रमरोचिताः' आराविणः—शब्दायमानाः ये भ्रमराः—मधुकरास्तेषां उचिताः—योग्याः । पुनः कथं० ? 'मन्दारवाराजिताः' मन्दाराणां—मन्दारकुसुमानां वारैः अजिताः याः तासामतिशायित्वेनाऽनभिभूता इति भावः । यथा मन्दारवारैः करणभूतैः कृत्वा अन्यैः पुष्पान्तरैरजिताः ॥

अथ समासः—जिनानां, जिनेषु वा उत्तमाः जिनोत्तमाः 'तत्पुरुषः' । क्षता रुजो यैस्ते क्षतरुजः 'बहुव्रीहिः' । येषां मनः यन्मनः 'तत्पुरुषः' । विभ्रमै रोचिताः विभ्रमरोचिताः 'तत्पुरुषः' । शोभनानि मनांसि येषां ते सुमनसः 'बहुव्रीहिः' । मन्दा आरवा येषां ते मन्दारवाः 'बहुव्रीहिः' । येषां पादौ यत्पादौ 'तत्पुरुषः' । सुरैरुज्झिताः सुरोज्झिताः 'तत्पुरुषः' ।

**आराविणश्च ते भ्रमराश्च आराविभ्रमराः 'कर्मधारयः'। आराविभ्रमराणामुचिता आरा० 'तत्पुरुषः'। न जिता अजिताः 'तत्पुरुषः'। मन्दाराणां वाराः मन्दा० 'तत्पुरुषः'। मन्दारवारैरजिता मन्दा० 'तत्पुरुषः'॥ इति काव्यार्थः॥ २॥**

**सि० वृ०—ते वः पान्त्विति।** ते जिनोत्तमाः—जिनवराः वः—युष्मभ्यं पान्तु—रक्षन्तु इत्यर्थः। 'पा रक्षणे' धातोः 'आशीःप्रेरणयोः' (**सारस्वते** सू० ७०३) परस्मैपदे प्रथमपुरुषबहुवचनम्। पा अग्रे अन्तु 'अप् कर्तरि' (**सा० सू०** ६९१) इत्यप्। 'अदादेर्लुक्' (**सा०** सू० ८८०)। 'सवर्णे दीर्घः [सह]' (**सा०** सू० ५२)। तथा च पान्तु इति सिद्धम्। "जिनः सामान्यकेवली" इति कोशात् जिनेषु—सामान्यकेवलिषु उत्तमाः जिनोत्तमाः इति सप्तमीतत्पुरुषः, 'न निर्धारणे' (**पाणिनीये** अ० २, पा० २, सू० १०) इति षष्ठीसमासनिषेधात्। कर्मधारये तु "परमोत्तमोत्कृष्टाः पूज्यैः" इति वचनात् उत्तमजिना इति स्यात्। "जिनः स्यादतिवृद्धे च, बुधे चार्हति जित्वरे" इति **विश्वः**। वः इत्यत्र 'बहुवचनस्य वस्नसौ' (**पा०** अ० ८, पा० १, सू० २१) इति युष्मान् इत्यस्य वसादेशः। कथंभूता जिनोत्तमाः? 'क्षतरुजः' क्षताः—क्षयं नीताः रुजो—रोगा यैस्ते तथा इति 'बहुव्रीहिः'। यत्तदोर्नित्याभिसम्बन्धात् ते के?। यन्मनः—येषां मनो यन्मनः दाराः—कलत्राणि न (आ) चिक्षिपुः—न क्षिप्तवन्तः, विकारमार्गं नानैषुः इत्यर्थः। 'क्षिप प्रेरणे' परोक्षे परस्मैपदे कर्तरि प्रथमपुरुषबहुवचनम्। क्षिप् अग्रे उस् धातोः 'द्विश्च' (**सा० सू०** ७१०) इति द्वित्वम्। 'पूर्वस्य हसादिः शेषः' (**सा०** सू० ७३९) इति पकारलोपः। 'कुहोश्चुः' (**सा०** सू० ७४६) इति ककारस्य चुत्वम्। 'णादि कित्' (**सा०** सू० ७०९) इति कित्संज्ञत्वात् गुणाभावः। तथा च चिक्षिपुः इति सिद्धम्। दारशब्दोऽत्र कलत्रवाचकः पुंल्लिङ्गो नित्यं बहुवचनान्त एव। दारयन्ति दीर्यन्ते एभिः इति वा दाराः। 'दारजारौ कर्तरि णिलुक् च' (**कात्यायनवार्तिके** २१८२) इति क्वचित् घञि साधुः। "भार्या जायाऽथ पुंभूम्नि, दाराः स्यात् तु कुटुम्बिनी" इत्यमरः (**श्लो०** १०८९)। क्वचिदाबन्तोऽप्युक्तः। यदुक्तम्—

"क्रोडा हावा तथा दारा, त्रय एते यथाक्रमम्।
क्रोडे हावे च दारेषु, शब्दाः प्रोक्ता मनीषिभिः॥"

**इति हट्टचन्द्रः।** क्वचिदनाबन्तोऽप्येकवचनान्तश्च "धर्मप्रजासंपन्ने दारे नान्यं कुर्वीत" इति **हैम्यां नाममालावृत्तौ।**

"संतोषस्त्रिषु कर्तव्यः, स्वदारे भोजने धने।
त्रिषु चैव न कर्तव्यो, दाने चाध्ययने नये॥"

इति **चाणक्योऽप्याह।** परमेतयोरत्र न ग्रहणम्, तथाप्रयोगाभावात्। प्रस्तुतानुपयोगित्वेऽपि व्युत्पत्तये प्रसङ्गादेत दर्शितमिति ध्येयम्। यन्मन इत्यत्र 'यरोऽनुनासिकेऽनुनासिको वा' (**पा०** अ० ८, पा० ४, सू० ४५) इति दकारस्य नकारः। कीदृशा दाराः? । 'विभ्रमरोचिताः' विभ्रमाः—भ्रूसमुद्भवविलासाः तैः रोचिताः—शोभिताः इति 'तत्पुरुषः'। यदाहुः—

" हावो मुखविकारः स्याद्, भावश्चित्तसमुद्भवः ।
विकारो नेत्रजो ज्ञेयो, विभ्रमो भ्रूसमुद्भवः ॥ "

इति केचित् । "योषितां यौवनजो विकारो विभ्रमः" इत्यन्ये । अपरे तु "मदहर्षरागजनितो विपर्यासो विभ्रमः" यथाऽनिमित्तमासनादुत्थायान्यत्र गमनं प्रियकथामाक्षिप्य सख्या सहालापनं मुधैव हसितक्रोधौ पुष्पादीनां सहसैव परित्यागः वस्त्राभरणमाल्यानां अकारणतः खण्डनं मण्डनं चेति वदन्ति । पुनः कीदृशाः ? ।'सुमनसः' शोभनानि-सस्नेहानि मनांसि येषां ते तथोक्ताः तादृशाः सन्तो राजिताः–शोभिताः, यथा स्वस्वाम्येव शृणोति तथैव जल्पन्ति नोच्चैर्जल्पन्ति, नान्येषां स्वं ज्ञापयन्तीति भावः । आहुश्च–

" गतागतकुतूहलं नयनयोरपाङ्गावधि
स्मितं कुलनतभ्रुवामधर एव विश्राम्यति ।
वचः प्रियतमश्रुतेरातिथिरेव कोपक्रमः
कदाचिदपि चेत् तदा मनसि केवलं मज्जति ॥ "

इति 'रसमञ्जर्यां' भानुकरमिश्राः । " मन्दोऽतीक्ष्णे च मूर्खे च, स्वैरे निर्भाग्यरोगिणोः । अल्पे च त्रिषु पुंसि स्यात् " इति मेदिनिः । वस्तुतस्तु अमन्दा ( इत्यत्र ) अकारप्रश्लेषः । न मन्दाः अमन्दाः, अतिविवेकिन इत्यर्थः । रवेण–शब्दमात्रेण आरं–अरिसमूहो रवारं तेन अजिताः–अकृतजयाः ते तथा । अर्थक्रियासमर्था अरयो न सन्त्येव । शब्दमात्रेण ये अरयः तैः अकृतजया इति भावः । च–पुनः सुमनसः–कुसुमानि यत्पादौ–येषां चरणौ सुरभयाञ्चक्रुः– सुरभीकुर्वन्ति स्मेत्यर्थः । ' डुकृञ् करणे ' धातोः कर्तरि परोक्षायां प्रथमपुरुषबहुवचनं उस् णिदन्तः । सुरभिर्नाम सौत्रो धातुः ' कासादिप्रत्ययात् ' ( सा० सू० ७६६ ) इत्याम् । अग्रे कृञ् धातुः तदग्रे उस् । 'द्विश्च' (सा० सू० ७१० ) इति धातोर्द्विर्वचनम् । कृञ् कृञ् उस् इति जातम् । 'रः' (सा० सू० ७६८ ) इत्यनेन पूर्वऋकारस्याकारः । 'कुहोश्चुः' (सा० सू० ७४६ ) इति पूर्वककारस्य चुत्वम् । तथा च चक्र उस् इति जातम् । ततः 'ऋ रम्' (सा० सू० ३९ )इति ऋकारस्य रकारः । ' स्वरहीनं [ परेण संयोज्यम् ] ' (सा० सू० ३६ ) तथा च सुरभि आम् चक्रुः इति जातम् । आम्प्रत्ययस्य दशविध आख्यातव्यतिरिक्तत्वात् न ङित्वमिति । 'गुणः' (सा० सू० १९२ ) इत्येनन गुणः । 'ए अय्' (सा० सू० ४१ ) । ' स्वरहीनम् ' ( सा० सू० ३६ )एवं च सुरभयाञ्चक्रुः इति सिद्धम् । 'सुरभयाञ्चक्रुः' इति क्रियापदम् । काः कर्त्र्यः ? । सुमनसः । अत्रायं सुमनःशब्दः सकारान्तः पुष्पवाचको बहुवचनान्तो मन्तव्यः । आह च—

" आपः सुमनसो वर्षा, अप्सरस्सिकताः समाः ।
एते त्रयो बहुत्वे स्युरेकत्वेऽप्युत्तरं त्रिकम् ॥ "

इत्यमरः । सुष्ठु मान्यते–पूज्यते आभिः इति समासः । " स्त्रियां वा बहुवचनान्तः " इति हैम्यां नाममालावृत्तौ । अत एव " सुमनाः पुष्पमालस्योः स्त्रियां " इति गौडोऽप्यवदत् । लक्ष्यं च ' वेश्याः श्मशानसुमना इव वर्जनीयाः " इति शूद्रकः । कौ कर्मतापन्नौ ? । यत्पादौ । पादशब्दोऽयं अकारान्तः क्वचित् पाद् इति व्यञ्जनान्तोऽपि दृश्यते । यदाह– " पादसमानार्थः पाद् अप्यस्ति "

इति दुर्गः । पदिस्यपि क्वचित् दृश्यते । यदाह—" पत्पादोऽङ्घ्रिश्चरणोऽस्त्रीषु " इति गौडः । " पदङ्घ्रिश्चरणोऽस्त्रियाम् " इत्यमरः ( श्लो० १२११ ) च । परमेतयोरत्र न प्रयोजनम् । प्रसङ्गाद् व्युत्पत्तये प्रदर्शितमेतत् । कथंभूताः सुमनसः ? । ' सुरोज्झिताः ' सुरैः—देवैः उज्झिताः—मुक्ताः । किं कुर्वत्यः सुमनसः ? । पतन्त्यः—गलन्त्यः । कस्मात् ? । अम्बरात्—आकाशात् । " अम्बरं व्योमवाससोः " इत्यनेकार्थः । पुनः कथंभूताः ? । ' आराविभ्रमरोचिताः ' आरावो—गुमगुमेति ध्वनिविशेषः विद्यते येषां ते आराविणः—शब्दायमाना ये भ्रमराः—द्विरेफाः तेषां उचिताः—योग्याः । अनेन सौरभातिशयः सूचितः । पुनः कथंभूताः ? । ' मन्दारवाराजिताः ' मन्दारो—देवतरुविशेषः तस्य पुष्पाणि मन्दाराणि तेषां वारः—समूहः तेन अजिताः—अपराभूताः इति ' तत्पुरुषः ' ।

" पञ्चैते देवतरवो, मन्दारः पारिजातकः ।
सन्तानः कल्पवृक्षश्च, पुंसि वा हरिचन्दनम् ॥ "

इत्यमरः ( श्लो० ९९–१०० ) । " समूहवाचको वारः, वारो वेश्यागणः स्मृतः." इति सुभूतिः । मन्दारवारो—मन्दारपुष्पसमूहः जितः—पराभूतो याभिः इति वा । " परापर्यभितो [ भूतो ] जितो भग्नः पराजितः " इति हैमः ( का० ३, श्लो० ४६९ ) ॥ २ ॥

सौ० वृ०—ते वः पान्त्विति । ते जिनोत्तमाः वो–युष्मान् पान्तु इत्यन्वयः । 'पान्तु' इति क्रियापदम् । के कर्तारः ? । जिनोत्तमाः । कान् कर्मतापन्नान् ? । ' वः ' युष्मान् । किंविशिष्टाः जिनोत्तमाः ? । 'ते' प्रसिद्धाः । ते के ? । यन्मनः सुमनसः दाराः न आचिक्षिपुः इति सम्बन्धः । ' आचिक्षिपुः ' इति क्रियापदम् । के कर्तारः ? । 'दाराः' कलत्राणि । 'आचिक्षिपुः' आचकृषुः । कथम् ? । 'न' निषेधे । किं कर्मतापन्नम् ? । 'यन्मनः' येषां तीर्थंकराणां मनः-चित्तम् । दाराः कस्य ? । 'सुमनसः' त्रिदशस्य । जातावेकवचनम् । किंविशिष्टा जिनोत्तमाः ? । 'क्षतरुजः' गतरोगाः । किंवि० दाराः ? । 'विभ्रमरोचिताः' विभ्रमा-हावभावविलासादयः तै रोचिताः-शोभिताः । पुनः किंवि० दाराः ? । ' मन्दारवाः ' मन्दः कोमलः आरवः-शब्दो यासां ता मन्दारवाः । पुनः किंवि० दाराः ? । 'राजिताः' लावण्यादिगुणैः शोभिताः । च-पुनः सुरोज्झिताः सुमनसः यत्पादौ सुरभयांचक्रुरित्यन्वयः । 'सुरभयांचक्रुः' इति क्रियापदम् । काः कर्त्र्यः ? । 'सुमनसः' पुष्पवृष्टयः । सुरभयांचक्रुः-सुगन्धीकृतवत्यः । कौ कर्मतापन्नौ ? । 'यत्पादौ' यच्चरणौ । किंविशिष्टाः सुमनसः ? । 'सुरोज्झिताः' देवमुक्ताः । 'पतन्त्यः' प्रगलन्त्यः । कस्मात् ? । 'अम्बरात्' आकाशात् । पुनः किंविशिष्टाः सुमनसः ? । आराविणः-शब्दायमानाः ये भ्रमरा-द्विरेफाः तेषां उचिताः-योग्याः । पुनः किंविशिष्टाः सुमनसः ? । मन्दाराणां-कल्पवृक्षाणां वाराः-समुदायाः तैरजिताः-अनतिशायिताः । इति पदार्थः ॥

अथ समासः—जयन्ति रागादीन् शत्रून् इति जिनाः-सामान्यकेवलिनः तेषु उत्तमाः जिनोत्तमाः । क्षता रुजो यैः येभ्यो वा क्षतरुजः । येषां मनः यन्मनः तत् यन्मनः । विभ्रमैः रोचिताः विभ्रमरोचिताः । मन्द आरवो यासां ताः मन्दारवाः । येषां पादौ यत्पादौ । सुरैः उज्झिताः सुरोज्झिताः । पतन्ति ताः पतन्त्यः । आरावो येषामस्तीति आराविणः, आराविणश्च ते भ्रमराश्च आराविभ्रमराः, आराविभ्रमरैः उचिताः आराविभ्रमरोचिताः । मन्दाराणां वाराः मन्दारवाराः, तैः मन्दारवारैः अजिताः मन्दारवाराजिताः । " सुमनाः पण्डिते पुष्पे, गोधूमे सज्जने सुरे " इत्यनेकार्थः ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥

दे०व्या०-ते वः पान्त्विति । ते जिनोत्तमाः-तीर्थंकराः वो-युष्मान् पान्तु-रक्षन्तु इत्यन्वयः । 'पा रक्षणे' धातुः । 'पान्तु' इति क्रियापदम् । के कर्तारः ? । 'जिनोत्तमाः' जिनाश्च ते उत्तमाश्च इति 'कर्मधारयः' । जिनाः-सामान्यकेवलिनः तेषु उत्तमाः-श्रेष्ठा इत्यर्थः । "जिनः सामान्यकेवली" इत्यनेकार्थः। किंविशिष्टा जिनोत्तमाः ?। 'क्षतरुजः' क्षताः-क्षयं प्रापिताः रुजो-रोगा यैस्ते तथा अवनीतलवर्तिसकलप्राणिनां आध्यात्मिकाधिदैविकाधिभौतिकरोगनिवर्तका इति भावः । यत्तदोर्नित्याभिसम्बन्धात् यन्मनः दाराः-कलत्राणि नाचिक्षिपुः-न क्षोभयामासुः इत्यन्वयः । 'क्षिप प्रेरणे' धातुः । 'आचिक्षिपुः' इति क्रियापदम् । के कर्तारः ? । दाराः । दारशब्दो नित्यं पुंलिङ्गो बहुवचनान्तश्च । किं कर्मतापन्नम् ? । 'यन्मनः' येषां मनो यन्मनः इति समासः । किंविशिष्टा दाराः ? । 'विभ्रमरोचिताः' विभ्रमाः-कटाक्षाक्षेपाः तैः रोचिताः-शोभिताः । तदुक्तम्—

"हावो मुखविकारः स्याद्, भावश्चित्तसमुद्भवः ।
विकारा नेत्रजा ज्ञेया, विभ्रमा भ्रूसमुद्भवाः ॥"

इति । पुनः किं० ? । 'सुमनसः' सुष्ठु मनो येषां ते तथा । पुनः किंविशिष्टाः ? । 'मन्दारवाराजिताः' मन्दः-अतिशयेन स्वल्पः आरवः-शब्दो येषां ते मन्दारवाः ते च ते [आ]राजिताश्च इति समासः । "संरावः (क्रुश्यो) राव आरावः" इत्यभिधानचिन्तामणिः (का० ६, श्लो० ३६)। पृथग्विशेषणे इति प्राञ्चः । वस्तुतस्तु अमन्दा इति अकारप्रश्लेषः । न मन्दा-अमन्दाः अतिविवेकिन इत्यर्थः । रवेण-शब्दमात्रेण आरं-अरिसमूहो रवारं तेन अजिताः-अकृतजयाः ते तथा । अर्थक्रियासमर्था अरयो येषां न सन्त्येव, शब्दमात्रेण अरयः तैः अकृतजया इति भावः । तु पुनरर्थे । तेन च-पुनः सुमनसः-पुष्पाणि यत्पादौ सुरभयांचक्रुः-सुरभयामासुरित्यर्थः । 'डुकृञ् करणे' धातुः । 'सुरभयांचक्रुः' इति क्रियापदम् । काः कर्त्र्यः ? । सुमनसः । कौ कर्मतापन्नौ ? । 'यत्पादौ' येषां पादाविति समासः । किंविशिष्टाः सुमनसः ? । 'सुरोज्झिताः' सुरैः-देवैः उज्झिताः-मुक्ताः । किं कुर्वत्यः सुमनसः ? । पतन्त्यः । कस्मात् ? । अम्बरात्-आकाशात् । पुनः किंविशिष्टाः ?। 'आराविभ्रमरोचिताः' आराविणः-शब्दायमानाः ये भ्रमराः-षट्पदाः तेषां उचिताः-योग्याः । एतेन सौरभातिशयः सूचितः । पुनः किंवि० ? । 'मन्दारवाराजिताः' मन्दारः-कल्पवृक्षः तस्य पुष्पाणि मन्दाराणि तेषां वारः-समूहः तेन अजिताः-अपरिभूताः । "मन्दारः कल्पपादपः" इत्यमरः । मन्दारवारः आ-समन्तात् जितो यया सा तथेति वा ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥

## जिनप्रवचनप्रशंसा—

शान्तिं वस्तनुतान्मिथोऽनुगमनाद् यन्नैगमाद्यैर्नयै-
रक्षोभं जन ! हेऽतुलं छितमदोदीर्णाङ्गजालं कृतम् ।
तत् पूज्यैर्जगतां जिनैः प्रवचनं दृप्यत्कुवाद्यावली-
रक्षोभञ्जनहेतुलाञ्छितमदो दीर्णाङ्गजालङ्कृतम् ॥ ३ ॥

—शार्दूलं०

ज०वि०—शान्तिं वस्तनुतादिति । हे जन ! तत् अदः प्रवचनं-शासनं वः-युष्माकं शान्तिं-क्षेमं तनुतात्-प्रथयतु इति क्रियाकारकसंटङ्कः । अत्र 'तनुतात्' इति क्रियापदम् । किं कर्तृ ? 'प्रवचनम्' । कां कर्मतापन्नाम् ? 'शान्तिम्' । केषाम् ? 'वः' ।

शान्तिं कथंभूताम् ? 'अतुलां' महतीम् । प्रवचनं कथंभूतम् ? 'कृतं' रचितम् । कैः ? 'जिनैः' तीर्थंकरैः । कथंभूतैः ? 'पूज्यैः' अर्चनीयैः । केषाम् ? 'जगतां' त्रिभुवनानाम् । तच्छब्दस्य यच्छब्दसापेक्षत्वात् तत् किम् ? यत् 'अक्षोभं' क्षोभयितुमशक्यम्, निश्चलमित्यर्थः । कैः ? 'नयैः' अनेकान्तात्मके वस्तुनि एकांशपरिच्छेदात्मकरूपैः । नयैः कथंभूतैः ? 'नैगमाद्यैः' नैगम-संग्रहप्रभृतिभिः । कस्माद्धेतोः नयैरक्षोभम् ? 'मिथोऽनुगमनात्' परस्परानुवर्तनात् । अयं भावः—भगवत्प्रवचने हि सर्वेऽपि नया अन्योन्यमनुवर्तन्ते, सर्वनयात्मकत्वात् तस्य । पुनः कथंभूतं प्रवचनम् ? 'छितमदोदीर्णाङ्गजालं' छितमदं—छिन्नदर्पं उदीर्णं—उदारं अङ्गानां—आचाराङ्गादीनां जालं—समूहो यत्र तत् तथा । पुनः कथंभूतम् ? 'दृप्यत्कुवाद्यावलीरक्षोभञ्जनहेतुलाञ्छितं' दृप्यन्ती—दर्पं व्रजन्ती या कुवादिनां आवली—श्रेणी सैव क्रूरात्मकत्वेन रक्षो—राक्षसः । अत्र लिङ्गभेदो न दोषाय, "लिङ्गभेदं तु मेनिरे" इति वचनस्य प्रामाण्यात् । तस्य भञ्जनाः—भङ्गकारिणो ये हेतवस्तैर्लाञ्छितं—चिह्नितम् । अत एव पुनः कथंभूतम् ? 'दीर्णाङ्गजालङ्कृतं' दीर्णः—शीर्णः अङ्गजः—कामो येषां ते तथोक्ताः अर्थात् श्रमणादयस्तैरलङ्कृतं—भूषितं सहितमिति भावः । अत्र द्वितीयपदे जनशब्दात् परो हे शब्दस्तु जनस्याभिमुख्याभिव्यक्तये प्राक् प्रयोज्यस्तथैव च दर्शितः ॥

अथ समासः—नैगमः आद्यो येषां ते नैगमाद्याः 'बहुव्रीहिः' । न विद्यते क्षोभो यस्य तत् अक्षोभं 'बहुव्रीहिः' । न विद्यते तुला यस्या असौ अतुला 'बहुव्रीहिः' । तां अतुलाम् । छितमदं च तत् उदीर्णं च छित० 'कर्मधारयः' । अङ्गानां जालं अङ्ग० 'तत्पुरुषः' । छितमदोदीर्णं अङ्गजालं यत्र तत् छित० 'बहुव्रीहिः' । कुत्सिता वादिनः कुवादिनः 'तत्पुरुषः' । कुवादिनां आवली कुवा० 'तत्पुरुषः' । दृप्यन्ती चासौ कुवाद्यावली च दृप्य० 'कर्मधारयः' । दृप्यत्कुवाद्यावल्येव रक्षो दृप्य० 'कर्मधारयः' । दृप्यत्कुवाद्यावलीरक्षसो भञ्जनाः दृप्यत्कु० 'तत्पुरुषः' । दृप्यत्कुवाद्यावलीरक्षोभञ्जनाश्च ते हेतवश्च दृप्य० 'कर्मधारयः' । दृप्यत्कुवाद्यावलीरक्षोभञ्जनहेतुभिर्लाञ्छितं दृप्यत्कु० 'तत्पुरुषः' । दीर्णोऽङ्गजो यैस्ते दीर्णाङ्गजाः 'बहुव्रीहिः' । दीर्णाङ्गजैरलङ्कृतं दीर्णाङ्ग० 'तत्पुरुषः' ॥ इति काव्यार्थः ॥ ३ ॥

सि०वृ०—शान्तिमिति । हे जन !—हे भव्यप्राणिन् ! तत् प्रवचनं—शासनं वो—युष्माकं शान्तिं कल्याणं उपशमं वा तनुतात्—प्रथयतु इत्यर्थः । "शमः शान्तिः शमथोपशमावपि" इति हैमः (का० २, श्लो० २१८) । 'तनु विस्तारे' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) परस्मैपदे प्रथमपुरुषैकवचनम् । तुप् 'तनादेरुप्' (सा० सू० ९९७), 'तुह्योस्तातङ् [आशिषि वा वक्तव्यः]' (सा० सू० ७०४) इति तातङादेशः । 'स्वरहीनम्०' (सा० सू० ३१) । तथा च तनुतादिति सिद्धम् । अत्र 'तनुतात्' इति क्रियापदम् । किं कर्तृ ? । प्रवचनम् । कां कर्मतापन्नाम् ? । शान्तिम् । "शान्तिः शमेऽपि कल्याणे" इति विश्वः । केषाम् ? । वः । 'षष्ठी चतुर्थी' (सा० सू० ३३९) इति षष्ठीबहुवचने युष्मच्छब्दस्य वमादेशः । तच्छब्दस्य यच्छब्दसापेक्षत्वात् तत् किम् ? । यत् प्रवचनं अक्षोभं—क्षोभयितुमशक्यम्

निश्चलमित्यर्थः । कैः ? । ' नयैः ' अनेकान्तात्मके वस्तुनि नयाः प्रमाणपरिच्छिन्नार्थैकादेशाः तैः । कीदृशैः नयैः ? । नैगमः आद्यः येषां ते नैगमाद्याः तैः नैगमसङ्ग्रहप्रभृतिभिः नयैरित्यर्थः । कस्माद्धेतोः नयैः अक्षोभम् ? । ' मिथोऽनुगमनात् ' मिथः—परस्परं अनुगमनं—अनुवर्तनं तस्मात् । भगवत्प्रवचने हि सर्वेऽपि नया अन्योन्यमनुवर्तन्ते सर्वनयात्मकत्वात् तस्येति भावः । " मिथोऽन्योन्यं रहस्यं " इत्यमरः ( श्लो० २८४७ ) । कथंभूतां शान्तिम् ? । ' अतुलाम् ' नास्ति तुला-साम्यं यस्याः सा तथा तां, महतीमित्यर्थः । " तुला पलशते राशौ, भाण्डे सादृश्यमानयोः " इति विश्वः । कीदृशं प्रवचनम् ? । ' छितमदोदीर्णाङ्गजालम् ' छितमदं च तत् उदीर्णं च इति ' कर्मधारयः ' । छितमदं—छिन्नदर्पम् उदीर्णं—उदारम् अङ्गानां—आचाराङ्गादिसूत्राणां जालं—समूहो यत्र तत् तथा । " जालं समूह आनायो, गवाक्षक्षारकावपि " इत्यमरः ( श्लो० २७३६ ) । ' शाच्छोरन्यतरस्याम् ' ( पा० ७०७, पा० ४, सू० ४१ ) इति विकल्पेन इकारान्तत्वे छित इति निष्पन्नम् । " लूने छिन्नं ( छिन्ने लूनं ? ) छितं दितं खण्डितं ( छेदितं ? ) वृक्णम् " इति हैमः ( का० ६, श्लो० १२५–१२६ ) । पुनः कीदृशम् ? । कृतं—विरचितम् । कैः ? । जिनैः । जयन्ति रागद्वेषौ इति जिनाः—तीर्थकराः तैः अर्थतस्तैरेव भाषितत्वात् । ' जि जये ' । ' इण् सिञ्जि ' इति नक् । पुनः कीदृशम् ? । ' दृप्यत्कुवाद्यावलीरक्षोभञ्जनहेतुलाञ्छितम् ' दृप्यन्ती—दर्पं व्रजन्ती या कुवाद्यावली—कुत्सिता वादिनः—कुवादिनः तेषां आवली—पङ्क्तिः । " राजिर्लेखा ततिर्वीथी, मालाल्यावलिपङ्क्तयः " इति हैमः ( का० ६, श्लो० ५९ ) । सैव क्रूराभिप्रायात् रक्षो—राक्षसः, अत्र लिङ्गभेदो न दोषाय । " लिङ्गभेदं तु मेनिरे " इति वचनस्य प्रामाण्यात् । तस्य भञ्जना—भङ्गकारका ये हेतवो—युक्तयः साध्यगमका वा तैः लाञ्छितं—सहितम् । पुनः कीदृशम् ? । ' अदः । प्रत्यक्षदृश्यम् । अदसः स्यमोर्लुकि स्त्रोविसर्गे रूपम् । पुनः कीदृशम् ? । ' दीर्णाङ्गजालङ्कृतम् ' अङ्गात्—शरीरात् जायते—उत्पद्यते इति अङ्गजः—कामः । " कमनः कलाकेलिरनन्यजोऽङ्गजः " इति हैमः ( का० २, श्लो० १४१ ) । दीर्णः—छिन्नः अङ्गजो यैस्ते दीर्णाङ्गजाः अर्थात् मुनयः तैः अलंकृतं—भूषितम्, सहितमितियावत् । प्रवचने मुनीनामेव प्राधान्येन निरूपणादात्मात्मवतोरभेदोपचारः । अत्र द्वितीयपदे जनशब्दात् परो हेशब्दस्तु जनस्याभिमुख्याभिव्यक्तये प्राक् प्रयोज्यः तथैव च दर्शितः । कीदृशैः जिनैः ? । पूज्यैः—अर्चनीयैः । केषाम् ? । ' जगतां ' जगदन्तवर्तिजनानामित्यर्थः ॥ १ ॥

सौ० वृ०—शान्तिमिति । हे जन !-हे लोक ! वो-युष्माकं तत् प्रवचनं अतुलां शान्तिं तनुतात् इत्यन्वयः । 'तनुतात्' इति क्रियापदम् । किं कर्तृ ? । 'प्रवचनं' गणिपिटकम् । तनुतात्-विस्तारयतात् । कां कर्मतापन्नाम् ? । 'शान्तिं' क्षमां मोक्षं वा । केषाम् ? । 'वः' युष्माकम् । किंविशिष्टां शान्तिम् ? । 'अतुलां' अनुपमाम् । किंविशिष्टं प्रवचनम् ? । 'तत्' प्रसिद्धम् । तत् किम् ? । यत् मिथोऽनुगमनात् नैगमाद्यैः नयैः अक्षोभं-अभञ्जनं अस्ति । 'अस्ति' इति क्रियापदम् । किं कर्तृ ? । यत् प्रवचनम् । अस्तीति विद्यते । कीदृशं प्रवचनम् ? । अक्षोभम् । कैः कृत्वा ? । 'नयैः' अनेकान्तात्मके वस्तुनि एकान्तपरिच्छेदात्मका नयाः [ तैः ] । किंभूतैर्नयैः ? । 'नैगमाद्यैः' नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढएवम्भूताद्यैः सप्तनयैः । कस्मात् ? । 'मिथः' परस्परम् । अनुगमात्-मिलनात् । पुनः कीदृशं प्रवचनम् ? । छितः-क्षतः मदो-दर्पः तेन कृत्वा उदीर्णानि-उत्कटानि अङ्गानां-आचाराङ्गादीनां दृष्टिवादादीनां वा जालं-समुदायो यत्र तत् छितमदोदीर्णाङ्गजालम् । पुनः की० प्रवचनम् ? । 'कृतं' निर्मापितम् । कैः ? जिनैः । कीदृशैः जिनैः ? । 'जगतां पूज्यैः' जगद्वन्द्यैः ।

पुनः कीदृशं प्रवचनम् ?। दृप्यन्ती-दर्पवती या कुवादिनां-कुपाक्षिकाणां आवली-पंक्तिः सैव क्रूरात्मकत्वात् रक्षः-राक्षसः तस्य भञ्जनशीला ये हेतवः-कारणानि तैः लाञ्छितं-अङ्कितम् । पुनः कीदृशं प्रवचनम् ?। 'अदः' प्रत्यक्षं दृश्यमानम् । पुनः किंवि० प्रवचनम् ?। दीर्णः-छिन्नः अङ्गजः-कामो यैस्ते एतादृशाः साधवः तैः अलङ्कृतं-शोभितम् । "निग्गंथे पावयणे" इति वचनात् । दीर्णाङ्गजालङ्कृतम् । इति पदार्थः ॥

अथ समासः—अनुगमनं-अनुगमः तस्मात् अनुगमनात् । नैगम आद्यो येषु ते नैगमाद्याः तैः नैगमाद्यैः । न विद्यते क्षोभो यत्र तत् अक्षोभम् । न विद्यते तुला यस्याः सा अतुला, तां अतुलाम् । छितः मदो यस्मिन् स छितमदः, छितमदेन उदीर्णानि छितमदोदीर्णानि, छि०दीर्णानि च तानि अङ्गानि छितमदोदीर्णाङ्गानि, छितमदोदीर्णाङ्गानां जालं यत्र तत् छितमदोदीर्णाङ्गजालम् । कुत्सितो वादो येषां ते कुवादिनः, कुवादिनां आवली कुवाद्यावली, दृप्यन्ती चासौ कुवाद्यावली च दृप्यत्कुवाद्यावली, दृप्यत्कुवाद्यावली एव रक्षांसि दृप्यत्कुवाद्यावलीरक्षांसि, दृप्यत्कुवाद्यावलीरक्षसां भञ्जनं दृप्यत्कुवाद्यावलीरक्षोभञ्जनं, दृप्यत्कुवाद्यावलीरक्षोभञ्जने हेतवः दृप्य० दृप्य०भञ्जनहेतुभिर्लाञ्छितं दृप्य०भञ्जनहेतुलाञ्छितम् । दीर्णः अङ्गजो यैस्ते दीर्णाङ्गजाः, दीर्णाङ्गजैः अलङ्कृतं दीर्णाङ्गजालं० ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या० शान्तिं वस्तनुतादिति । हे जन !-हे भव्यलोक ! तत् प्रवचनं-गणिपिटकलक्षणं वो-युष्माकं शान्तिं-उपशमं तनुतात्-विस्तारयतात् इत्यन्वयः । 'तनु विस्तारे' धातुः । 'तनुतात्' इति क्रियापदम् । किं कर्तृ ?। प्रवचनम् । कां कर्मतापन्नाम्?। शान्तिम् । केषाम् ?। वः । यत्तदोर्नित्याभिसम्बन्धात् यत् प्रवचनं अक्षोभं-अजेयं वर्तते इत्यध्याहारः । कैः ?। 'नयैः' नयाः-प्रमाणैकदेशाः तैः । किंविशिष्टैः नयैः ?। 'नैगमाद्यैः' नैगमा आद्या येषां ते नैगमाद्याः तैः । कस्मात् ?। 'मिथोऽनुगमनात्' मिथः-परस्परं अनुगमनं-अनुवर्तनं तस्मात् । अत्र 'गुणादस्त्रियां नवा'(सिद्धहेमे अ०२,पा०२,सू०७७)इति पञ्चमी।किंविशिष्टां शान्तिम्?।'अतुलां' न विद्यते तुला यस्याः सा तथा ताम् । 'तुला साम्ये मानदण्डे' इति विश्वः । किं० प्रवचनम्?। 'छितमदोदीर्णाङ्गजालम्' छितो-लूनः मदो येन, 'छिन्नं लूनं छितं दितम्' इत्यमरः एतादृशम् । उदीर्णं-उत्सेधितम् अङ्गानां-आचाराङ्गादीनां जालं-निवहो यत्र तत् । "जालं निवहसंचयः (यौ ?)" इत्यभिधानचिन्तामणिः (का०६,श्लो० ४८) । पुनः किंविशिष्टम् ? कृतं-निष्पादितम् । कैः ?। जिनैः-तीर्थंकरैः । अर्थतः तैरेव भाषितत्वात् । तथाचोक्तम्-"अत्थं भासइ अरहा, सुत्तं गंथंति गणहरा निउणं" इत्यावश्यके । पुनः किंविशिष्टम् ? । 'दृप्यत्कुवाद्यावलीरक्षोभञ्जनहेतुलाञ्छितं' दृप्यन्ती-माद्यन्ती या कुवाद्यावली कुवादिनो-बौद्धादयः तेषां आवली-पङ्क्तिः सैव क्रूराभिप्रायात् रक्षः-कीनाशः तस्य भञ्जना-भङ्गकारिणः ये हेतवो-युक्तयः तैः लाञ्छितं-मण्डितम् । पुनः किंवि० ?। अदः-विप्रकृष्टम्, मन्दमेधसामिति शेषः । तदुक्तम्—

"इदमः प्रत्यक्षगतं, समीपतरवर्ति चैतदो रूपम् ।
अदसस्तु विप्रकृष्टे, तदिति परोक्षे विजानीयात् ॥"—आर्या

इति । अदः प्रत्यक्षदृश्यमिति प्राञ्चः । पुनः किंवि० ? । 'दीर्णाङ्गजालङ्कृतम्' दीर्णः-विदारितः अङ्गजः-कन्दर्पो यैस्ते दीर्णाङ्गजाः-मुनयः तैः अलंकृतं-भूषितम्, मुमुक्षुप्रधानत्वेन तन्निरूपणात् । किंवि० जिनैः ? । पूज्यैः-अर्चनार्हैः । केषाम् ?। जगतां-त्रिभुवनानाम् ॥ ३ ॥ इति तृतीयवृत्तार्थः ॥

---

१ निर्ग्रन्थे प्रवचने । २ अर्थं भाषन्ते अर्हन्तः, सूत्रं ग्रथ्नन्ति गणधरा निपुणम् ।

श्रुतदेवता-स्मरणम्—

शीतांशुत्विषि यत्र नित्यमदधद् गन्धाढ्यधूलीकणा-
नाली केसरलालसा समुदिताऽऽशु भ्रामरीभासिता।
पायाद् वः श्रुतदेवता निदधती तत्राब्जकान्ती क्रमौ
नालीके सरलाऽलसा समुदिता शुभ्रामरीभासिता॥ ४॥

—शार्दूल०

ज० वि०—शीतांशुत्विषीति। श्रुतदेवता—वाग्देवी वः—युष्मान् पायात्—रक्षतु इति क्रियाकारकसम्बन्धः। अत्र 'पायात्' इति क्रियापदम्। का कर्त्री? 'श्रुतदेवता'। कान् कर्मतापन्नान्? 'वः'। श्रुतदेवता किं कुर्वती? 'निदधती' स्थापयन्ती। कौ? 'क्रमौ' चरणौ। कथंभूतौ? 'अब्जकान्ती' अब्जं—कमलं तद्वत् कान्तिर्ययोस्तौ अब्जकान्ती। कस्मिन्? 'नालीके' कमले। कथंभूते? 'तत्र' तस्मिन्। यत्तदोर्नित्याभिसम्बन्धात् तत्र कुत्र? 'यत्र' यस्मिन् नालीके। कथंभूते यत्र? 'शीतांशुत्विषि' शीतांशुः—चन्द्रः तद्वत् त्विट्-प्रभा यस्य तत् तथा तस्मिन्। भ्रामरी—भ्रमरसम्बन्धिनी आली—श्रेणी गन्धाढ्यधूलीकणान्—गन्धेनाढ्याः—सम्पन्ना ये धूलीकणाः—किञ्जल्कबिन्दवस्तान् नित्यं—सततं आशु—शीघ्रं अदधत्—पीतवती। अत्र 'अदधत्' इति क्रियापदम्। का कर्त्री? 'आली'। किं सम्बन्धिनी? 'भ्रामरी'। कान् कर्मतापन्नान्? 'गन्धाढ्यधूलीकणान्'। कुत्र? 'यत्र'। यत्र कथंभूते? 'शीतांशुत्विषि'। कथम्? 'नित्यम्'। पुनः कथम्? 'आशु' नित्यम्। आश्वित्यव्ययरूपस्य पदद्वयस्य पायादित्यनेनाप्यन्वयो युक्त एव। आली कथंभूता?। 'केसरलालसा' केसरेषु तद्गर्भपक्ष्मसु बकुलेषु वा लालसा—लम्पटा। पुनः कथंभूता? 'समुदिता' मिलिता पिण्डीभूतेत्यर्थः। पुनः कथंभूता? 'इभासिता' इभेषु—हस्तिषु आसिता—स्थिता मदलौल्यात्। यद्वा इभवदसिता-श्यामा। श्रुतदेवता कथंभूता? 'सरला' कौटिल्यरहिता। पुनः कथंभूता? 'अलसा' विश्रब्धा। स्वास्थ्यवतीत्यर्थः। पुनः कथंभूता? 'समुदिता' मुदितं—हर्षितं तेन सह वर्तमाना। पुनः कथंभूता? 'शुभ्रा' शुक्लच्छविः। पुनः कथं०? 'अमरीभासिता' अमरीभिः—अप्सरोभिः भासिता—शोभिता॥

अथ समासः—शीता अंशवो यस्य स शीतांशुः 'बहुव्रीहिः'। शीतांशोरिव त्विट् यस्य तत् शीतां० 'बहुव्रीहिः'। तस्मिन् शीतां०। गन्धेनाढ्या गन्धाढ्याः 'तत्पुरुषः'। धूलीनां कणाः धूलीकणाः 'तत्पुरुषः'। गन्धाढ्याश्च ते धूलीकणाश्च गन्धा० 'कर्मधारयः'।

---

१ 'भ्रामरी भासिता' इत्यपि पदच्छेदः समीचीनः।




निर्वाणकलिकायाम्—

"श्रुतदेवतां शुक्लवर्णां हंसवाहनां चतुर्भुजां वरदकमलान्वित-
दक्षिणकरां पुस्तकाक्षमालान्वितवामकरां चेति ।"



नि. सा. प्रेस.

ताम् गन्धा० । केसरेषु लालसा केसरलालसा 'तत्पुरुषः' । इभेष्वासिता इभासिता 'तत्पुरुषः' । यद्वा इभवदसिता इभासिता 'तत्पुरुषः' । श्रुतस्य देवता श्रुतदेवता 'तत्पुरुषः' । अब्जवत् कान्तिर्ययोस्तौ अब्जकान्ती 'बहुव्रीहिः' । सह मुदितेन वर्तते या सा समुदिता 'तत्पुरुषः' । अमरीभिर्भासिता अमरीभासिता 'तत्पुरुषः' ॥ इति काव्यार्थः ॥ ४ ॥

इति श्रीमद्वृद्धपण्डितश्रीदेवविजयगणिशिष्यपण्डितजयविजयगणिविरचितायां श्रीशोभनस्तुतिवृत्तौ श्रीऋषभस्तुतिवृत्तिः ॥ १ ॥

सि०वृ०—शीतांशुत्विषीति —श्रुतदेवता श्रुतस्य—शास्त्रस्य देवता—वाग्देवी । "श्रुतं शास्त्रावधृतयोः" इत्यमरः ( श्लो० २४८८ ) । वो—युष्मान् पायात्—रक्षेत् इत्यन्वयः । 'पा रक्षणे' धातोः 'विधिसंभावनयोः' ( सा० सू० ६९९ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनम् । पा अग्रे यात् पायात् इति सिद्धम् । लिङ् इति संज्ञा पाणिनीयानाम् । तृतीयस्वरमध्यः कवर्गपञ्चमान्त्यश्च । अत्र 'पायात्' इति क्रियापदम् । का कर्त्री ? । श्रुतदेवता । कान् कर्मतापन्नान् ? । वः । कीदृशी श्रुतदेवता ? । सरला—कौटिल्यरहिता । यथोक्तविहितोपासनानपि सद्वासनान् सेवकजनान् कृतार्थीकरणेन ऋजुत्वादिति भावः । पुनः कीदृशी ? । अलसा—आलस्ययुक्ता । अधिगतसर्वेच्छत्वादिति भावः । पुनः कीदृशी ? । 'समुदिता' मुदितं—हर्षितं तेन सह वर्तमाना समुदिता, मनसैव सकलचिन्तितार्थोत्पत्तेः । पुनः कीदृशी ? । 'शुभ्रा' शुक्ला, गौरवर्णेत्यर्थः । पुनः कथंभूता ? । 'अमरीभासिता' अमर्यो—देववध्वः ताभिर्भासिता—शोभिता । अङ्गरक्षादिनियोजितानां तासां सर्वदैव समीपवृत्तित्वादितिभावः । किं कुर्वती श्रुतदेवता ? । निदधती—स्थापयन्ती । कौ ? । क्रमौ—चरणौ । कथंभूतौ ? । 'अब्जकान्ती' अब्जं—कमलं तदिव कान्तिः ययोः तौ अब्जकान्ती । स्वभावतः तयोररुणवर्णत्वेन कमलकान्त्युपमानम् । अब्जानां कान्तिः याभ्यां तौ अब्जकान्ती इति वा । पूजार्थपरिमुक्ताब्जादप्यतिशयितसुकुमारत्वेन अतिशयितारुणत्वेन च ताभ्यां तस्यापि कान्त्युत्कर्षापादनादिति भावः । कस्मिन् ? । नालीके—कमले । "नालीकं पद्मखण्डेऽब्जे, नालीकः शरतल्पयोः" इति विश्वः । कथंभूते ? । तत्र -तस्मिन् । यत्तदोर्नित्याभिसम्बन्धात् तत्र कुत्र ? । यस्मिन् नालीके । कथंभूते ? । यत्र 'शीतांशुत्विषि' शीतांशुः—चन्द्रः तद्वत् त्विट्—प्रभा यस्य तत् तथा तस्मिन् । भ्रमराणां इयं भ्रामरी । 'तस्येदम्' (पा० अ० ४, पा० ३, सू० १२०) इत्यण् भ्रमरसम्बन्धिनीत्यर्थः । धातोरनद्यतने कर्तरि परस्मैपदे प्रथमपुरुषैकवचनम् दिप् 'दिबादावट्' ( सा० सू० ७०७ ) 'घेटो दधादेशश्च वा वक्तव्यः' इत्यनेन घेटो दधादेशे 'वावसाने' ( सा० सू० २४० ) इति दकारे अदधत् इति सिद्धम् । 'वा घेटां शोछोषोघाघेट्' एभ्यः परस्य सेर्लोपो वा भवति, इत्यनेन सेर्लोपे 'सन्ध्यक्षराणामा' ( सा० सू० ८०३ ) इत्यात्वे च अधात् । सेर्लोपाभावपक्षे अधासीदिति रूपत्रयं भवतीति ज्ञातव्यम् । अत्र 'अदधत्' इति क्रियापदम् । का कर्त्री ? । आली । किंसम्बन्धिनी ? । भ्रामरी । कान् कर्मतापन्नान् ? । गन्धाढ्यधूलीकणान् । "लवलेशकणाणवः" इत्यमरः ( श्लो० २१४८ ) । कुत्र ? । यत्र । यत्र कथंभूते ? । शीतांशुत्विषि । कथम् ? । नित्यम् । कथम् ? । आशु-नित्यम् । कथमाश्रित्यव्यय-

रूपस्य पदद्वयस्य पायादित्यनेनापि अन्वयो युक्त एव । आली कथम्भूता ? । ' केसरलालसा ' । केसरं-किञ्जल्कम् । " किञ्जल्कः केसरोऽस्त्रियाम् " इत्यमरः ( श्लो० ५९२ ) । तस्मिन् लालसा तृष्णातिरेकः औत्सुक्यं वा यस्याः सा केसरलालसा इति ' बहुव्रीहिः '। " तृष्णातिरेके औत्सुक्ये, लालसा लोलयाच्ञयोः " इति विश्वः । केसरशब्दोऽत्र दन्त्यमध्यः क्वचित्तालव्यमध्योऽपि । " आन्दोलकुसुमकेशरशरेण तन्वी " इति वासवदत्तायां दर्शनात् । पुनः कथंभूता ? । समुदिता—मिलिता । इतस्ततः समेत्य एकीभूतेत्यर्थः । " असितं सितिनीलं स्यात् " इत्यमरः । शार्दूलविक्रीडितं छन्दः । ' सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ' इति तल्लक्षणम् ॥ ४ ॥

इति पादसाहश्रीअकब्बरसूर्यसहस्रनामाध्यापकश्रीशत्रुञ्जयतीर्थकरमोचनाद्यनेकसुकृतविधायकमहामहोपाध्यायश्रीभानुचन्द्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदितपादसाहश्रीअकब्बरप्रदत्तखुस्फहमापराभिधानमहोपाध्यायश्रीसिद्धिचन्द्रगणिविरचितायां शोभनस्तुतिवृत्तौ श्रीऋषभदेवस्तुतिवृत्तिः ॥ १ ॥

सौ० वि०—शीतांश्विति । श्रुतदेवता अमरी वः-युष्मान् पायादित्यन्वयः । ' पायात् ' इति क्रियापदम् । 'पायात्' रक्षतात् । का कर्त्री ? । 'श्रुतदेवता' शासनाधिष्ठायिका । कान् कर्मतापन्नान् ? । 'वः' युष्मान् । किंविशिष्टा श्रुतदेवता ? । 'अमरी' सुरी । पुनः किंविशिष्टा श्रुतदेवता ? । इभो-गजः तत्र आसिता-स्थिता 'इभासिता' । गजवाहना इत्यर्थः । पुनः किंविशिष्टा श्रुतदेवता ? । 'शुभ्रा' गौरवर्णा । किं कुर्वती ? । 'निदधती' स्थापयन्ती । कौ कर्मतापन्नौ ? । ' क्रमौ ' चरणौ । किंविशिष्टौ क्रमौ ? । अब्जं-कमलं तद्वत् कान्तिः-प्रभा ययोः तौ ' अब्जकान्ती ' । कुत्र ? । ' तत्र ' नालीके-कमले । यत्र कमले भ्रामरी-भ्रमरसम्बन्धिनी आली-श्रेणिः अदधत्-पीतवती । कान् कर्मतापन्नान् ? । 'गन्धाढ्यधूलीकणान्' गन्धेन-सुरभिगन्धेन आढ्या-व्याप्ता या धूली-परागः तस्याः कणाः-लवाः तान् । कथम् ? । ' नित्यं ' सदा । कुत्र ? । यत्र नालीके । कथंभूते नालीके ? । शीतांशुः-चन्द्रः तद्वत् त्विट्-कान्तिर्यस्य तत् शीतांशुत्विट् तस्मिन् शीतांशुत्विषि । किंविशिष्टा भ्रामरी आली ? । केसरं-किञ्जल्कं केसरा वा तत्र लालसा-गृध्नुः । पुनः किंविशिष्टा आली ? । 'समुदिता' उद्यता । कथम् ? । 'आशु' शीघ्रम् । पुनः किंविशिष्टा भ्रामरी आली ? । इभासिताऽपि । कथंभूता श्रुतदेवता ? । 'भासिता' दीप्तिमती । पुनः किंविशिष्टा श्रुतदेवता ? । 'समुदिता' सहर्षा । इति पदार्थः ॥

अथ पदविग्रहः-शीता- शीतला अंशवो यस्य स शीतांशुः, शीतांशुवत् त्विट् यस्य तत् शीतांशुत्विट्, तस्मिन् शीतांशुत्विषि । अदधत् 'धेटो दधादेशः सौ परे' । अदधत् इति सिद्धम् । गन्धेन आढ्या गन्धाढ्या, गन्धाढ्या चासौ धूली च गन्धाढ्यधूली, गन्धाढ्यधूल्याः कणाः गन्धाढ्यधूलीकणाः, तान् गन्धाढ्यधूलीकणान् । केसरेषु लालसा केसरलालसा । सम्यग् उदिता समुदिता । भ्रमराणां इयं भ्रामरी । श्रुतस्य देवता श्रुतदेवता । अब्जवत् कान्तिर्ययोः तौ अब्जकान्ती । किंविशिष्टा श्रुतदेवता ? । ' सरला ' अवक्रा । पुनः किंविशिष्टा श्रुतदेवता ? । ' अलसा ' मन्थरगामिनी । मुद् संजाता अस्या इति मुदिता तया सहिता समुदिता । इभे आसिता इभासिता । अत्र वृत्तचतुष्टये मध्यात् पदयमकालङ्कारः ॥४॥

श्रीमद्युगादिदेवस्य, स्तुतेरर्थो लिवीकृतः ।
सौभाग्यसागराख्येण, सूरिणा गुणभूरिणा ॥ १ ॥

इति प्रथमऋषभदेवस्य स्तुतिः ॥

दे०व्या०-शीतांशुत्विषीति । श्रुतदेवता-भारतीदेवी वो-युष्माकं आशु-शीघ्रं यथा स्यात् तथा पायात्-रक्षतात् इत्यन्वयः । 'पायात्' इति क्रियापदम् । का कर्त्री ? । श्रुतदेवता । केषाम् ? । वः । किंविशिष्टा श्रुतदेवता ? । 'सरला' अवक्रा कैतवाभावात्, गात्रस्य ऋजुत्वाद् वा । पुनः किंविशिष्टा ? । 'अलसा' मन्थरा मन्थरगतित्वात् । पुनः किंविशिष्टा ? । समुदिता-सहर्षा । पुनः किं० ? । शुभ्रा-गौरा, वर्णेन इति शेषः । "अवदातगौरशुभ्र" इत्यभिधानचिन्तामणिः (का० ६, श्लो० २९ )। पुनः किं०विशिष्टा ? । 'अमरीभासिता' अमर्यः-देववध्वः ताभिः भासिता-शोभिता । यद्वा अमरीणां भा-कान्तिः तया सिता-बद्धा तासां सपर्याकारित्वेन समीपतरवृत्तित्वात् । "कीलितो यन्त्रितः सितः" इत्यभिधानचिन्तामणिः (का० ३, श्लो० १०१)। किं कुर्वती श्रुतदेवता ? । निदधती-स्थापयन्ती । कौ ? । क्रमौ-चलनौ । "पादोऽङ्घ्रि (पदोऽङ्घ्रि ?) श्चलनः क्रमः" इत्यभिधानचिन्तामणिः ( का० ३, श्लो० २८० )। कस्मिन् ? । तत्र नालीके-तस्मिन् कमले । तत्र कुत्रेत्याह-यत्रेति । यत्र-यस्मिन् नालीके भ्रामरी-भ्रमरसंबन्धिनी आली-श्रेणिः गन्धाढ्यधूलीकणान् नित्यं-अनवरतं यथा स्यात् तथा अदधत्-पपौ ।" धेट् पाने ' धातुः । 'अदधत्' इति क्रियापदम् । का कर्त्री ? । भ्रामरी आली । कान् कर्मतापन्नान् ? ।' गन्धाढ्यधूलीकणान्' गन्धेन आढ्या-व्याप्ता ये धूलीकणाः-पुष्परजांसि तान् । धूलीत्यत्र 'कृदिकारादक्तेरीप् [वा वक्तव्यः]' (सा० सू० ४००) इत्यनेनेप् । किंविशिष्टे नालीके ? । 'शीतांशुत्विषि' शीतांशुः-चन्द्रः तद्वत् त्विट्-कान्तिःयस्य तत् तस्मिन्, चन्द्रवदुज्ज्वले इति निष्कर्षः । किंविशिष्टा भ्रामरी आली ? । केसरलालसा । केसरं-किञ्जल्कं तत्र लालसा-लम्पटा । "किंजल्कः केसरोऽस्त्रियाम्" इत्यमरः । पुनः किंविशिष्टा ? । समुदिता-मिलिता । पुनः किंविशिष्टा ? । इभासिता इभः-करी तद्वत्-असिता । "कृष्णः स्यादसितः सितेतरः" इत्यभिधानचिन्तामणिः ( का ६, श्लो० ३३ ) । यदा तु इभे-गजे आसिता-विश्रब्धा इत्यर्थः तदा पूर्वं इति शेषः । किंविशिष्टौ क्रमौ ? । 'अब्जकान्ती' अब्जं-कमलं तद्वत् कान्तिः-श्रीः ययोः तौ ॥ ४ ॥



## २ श्रीअजितजिनस्तुतयः

अथ अजितनाथ-प्रणामः—

तमजितमभिनौमि यो विराजद्–
वनघनमेरुपरागमस्तकान्तम् ।
निजजननमहोत्सवेऽधितष्ठा–
वनघनमेरुपरागमस्तकान्तम् ॥ १ ॥

—पुष्पिताग्रा

जं० वि०—तमजितमिति । अहं तं अजितं–द्वितीयं तीर्थंकरं अभिनौमि–अभिष्टुवे इति क्रियाकारकयोगः । अत्र 'अभिनौमि' इति क्रियापदम् । कः कर्ता ? 'अहम्'। कं कर्मतापन्नम् ? 'अजितम्' । यत्तदोः परस्परसापेक्षत्वात् तं कम् ? यः अजितजिनः निजजननमहोत्सवे–स्वकीयजन्ममहामहे विराजद्वनघनमेरुपरागमस्तकान्तं—विराजन्ति–शोभनानि यानि वनानि तैर्घनो–निरन्तरो यो मेरुलक्षणः परागः–प्रधानपर्वतः तस्य मस्तकान्तं–शिखराग्रं, यद्वा विराजद्वनाः–शोभमानाम्भसो घना–मेघा यस्मिन् तादृशो यो मेरुपरागस्तस्य मस्तकान्तं अधितष्ठौ–अधिष्ठितवान्, आश्रितवानित्यर्थः । अत्र 'अधितष्ठौ' इति क्रियापदम् । कः कर्ता ? 'यः' । कं कर्मतापन्नम् ? 'विराजद्वनघनमेरुपरागमस्तकान्तम्' । कस्मिन् ? 'निजजननमहोत्सवे' । विराज० कथंभूतम् ? 'अनघनमेरुपरागम्' अनघः–अनवद्यः नमेरूणां–देववृक्षविशेषाणां परागः–रेणुर्यत्र स तथा तम् । पुनः कथंभूतम् ? 'अस्तकान्तम्' अस्तः–अस्तगिरिः–मन्दरः तद्वत् कान्तं–कमनीयम् । यद्वा अस्ता–उज्झिताः कान्ताः–स्त्रियो येनेति अजितस्वामिन एवेदं विशेषणम् ॥

अथ समासः—विराजन्ति च तानि वनानि च विराज० 'कर्मधारयः' । विराजद्वनैर्घनो विराज० 'तत्पुरुषः' । परश्चासौ अगश्च परागः 'कर्मधारयः' । मेरुश्चासौ परागश्च मेरु० 'कर्मधारयः' । विराजद्वनघनश्चासौ मेरुपरागश्च विराज० 'कर्मधारयः' । विराजद्वनघनमेरुपरागस्य मस्तकं विराज० 'तत्पुरुषः' । विराजद्वनघनमेरुपरागमस्तकस्यान्तो विराज० 'तत्पुरुषः'। तं विराज० । यद्वा विराजद् वनं येषु ते विराजद्वनाः 'बहुव्रीहिः' । विराजद्वनाः घना यस्मिन् स विराज० 'बहुव्रीहिः' । शेषं मेर्वादिकं पूर्ववत् समस्यते । महांश्चासावुत्सवश्च महोत्सवः 'कर्मधारयः' । जननस्य महोत्सवो जनन० 'तत्पुरुषः' । तस्मिन्

जनन० । नमेरूणां परागो नमेरुप० 'तत्पुरुषः' । न विद्यतेऽघं यस्मिन् सोऽनघः 'बहुव्रीहिः'। अनघो नमेरुपरागो यस्मिन् सोऽनघमेरुपरागः 'बहुव्रीहिः' । तमनघमेरु० । अस्तवत् कान्तोऽस्तकान्तः 'तत्पुरुषः' । तमस्तकान्तम् । जिनविशेषणपक्षे तु अस्ताः कान्ता येन सोऽस्तकान्तः 'बहुव्रीहिः' । तमस्तकान्तम् ॥ इति काव्यार्थः ॥ १ ॥

सि० वृ०—तमजितमभिनौमीति । अहं तं—अजितनाथं अभिनौमि—अभिष्टुवे इत्यर्थः । अभिपूर्वक 'नु स्तुतौ' धातोर्वर्तमाने कर्तरि परस्मैपदे उत्तमपुरुषैकवचनं मिप्, 'अप् कर्तरि' (सा० सू० ६९१), 'अदादेर्लुक्' (सा० सू० ८८०), 'ओरौ' (सा० सू० १९१) इत्युकारस्य औकारः । तथा च अभिनौमि इति निष्पन्नम् । अत्र 'अभिनौमि' इति क्रियापदम् । कः कर्ता ? । अहम् । कं कर्मतापन्नम् ? । अजितम् । परीषहादिभिर्न जित इत्यजितः तम् । यत्तदोः परस्परं सापेक्षत्वात् तं कम् ? । योऽजितजिनो निजजननमहोत्सवे—स्वकीयजन्ममहामहे विराजद्वनघनमेरुपरागमस्तकान्तं अधितष्ठौ—अधिष्ठितवान्—आश्रितवान् इत्यर्थः । अधिपूर्वकस्य 'ष्ठा गतिनिवृत्तौ' इति धातोः परोक्षायां कर्तरि परस्मैपदे प्रथमपुरुषैकवचने णप् । 'आदेः ष्णः स्नः' (सा० सू० ७४८) इति षकारस्य सकारः । 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति तकारस्य थकारः । 'द्विश्च' (सा० सू० ७१०) इति द्वित्वम् स्थ—स्था—णप् इति स्थिते 'झपानां जबचपाः' (सा० सू० ७१४) ' इति थकारस्य तकारः । 'आतो णप् डौ' (सा० सू० ८०४) इति णपः डौ डित्वाच्च टिलोपः । 'अडभ्यासव्यवायेऽपि' (का० वा० ३१९९) इति षत्वम् । इति प्रक्रियासूत्रेण अधितष्ठौ इति सिद्धम् । सारस्वते तु अधितस्थौ इत्येव भवति इति । वयं तु 'प्रादेश्च तथा तौ सुनगाम्' (सा० सू० ७५०) इत्यनेनाडागमः । द्वित्वव्यवधानेऽपि धातोः सस्य षत्वे 'ष्टुभिः ष्टुः' (सा० सू० ७९) इति टत्वे च सारस्वतेऽप्यधितष्ठाविति भवति । 'लोकाच्छेषस्य सिद्धिः०' (सा० सू० १४९४) इत्युक्तेः इति ब्रूमः । अत एव रघौ अपि षष्ठे सर्गे अधितष्ठावित्यत्र संजीविनीकारोऽपि 'अडभ्यासव्यवायेऽपि षत्वम्' इत्येवालीलिखत् । अत्र 'अधितष्ठौ' इति क्रियापदम् । कः कर्ता ? । अजितः । कं कर्मतापन्नम् ? । 'विराजद्वनघनमेरुपरागमस्तकान्तम्' विराजन्ति—शोभनानि यानि वनानि तैर्घनो—निबिडो यो मेरुलक्षणः परागः—परः—प्रकृष्टः स चासौ अगः—पर्वतः तस्य मस्तकान्तं—शिखराग्रम् । यद्वा विराजद्वनाः—शोभमानाम्भसः, "वनं काननणीरयोः" इति विश्वः, "स्यात् षण्डं काननं वनं" इति हैमः (का० ४, श्लो० १७६), घनाः—मेघाः यस्मिन् । शेषं पूर्ववत् । कस्मिन् ? । 'निजजननमहोत्सवे' महांश्चासावुत्सवश्च महोत्सवः, निजजननस्य महोत्सवो निजजननमहोत्सवः, तस्मिन् निजजननमहोत्सवे । कीदृशम् ? । 'अनघनमेरुपरागम्' अनघाः—पवित्रा ये नमेरवो—देववृक्षाः तेषां परागः—पुष्परेणुर्यत्र स तथा तम् । "नमेरुः सुरपुन्नाग" इत्यमरः । पुनः कथंभूतम् ? । 'अस्तकान्तं' अस्तः—अस्तगिरिः—मन्दरः तद्वत् कान्तं—कमनीयम् । "अस्तस्तु चरमः क्ष्माभृत्" इत्यमरः (श्लो० १३७) ।

अथवा अस्ता–उज्झिताः कान्ताः–स्त्रियो येन इत्यजितजिनस्यैवेदं विशेषणम् । पुनः कीदृशम् ? । तम् । तच्छब्दस्य ' त्यादेष्टेरः स्यादौ ' ( सा० सू० १७९ ) इति टेरात्वे ' अमृशसोरस्य ' ( सा० सू० १२६ ) इत्यकारलोपे च अमो रूपम् ॥ १ ॥

सौ० वि०—तमजितमिति । यः वृषेण-धर्मेण-आत्मस्वरूपेण भाति स कर्मभिरजितो भवति । अनेन संबन्धेन आयातस्य अजितदेवस्य स्तुतिः प्रारभ्यते । तमजितमिति । अहं तं अजितं-अजिताभिधानं तीर्थंकरं [ अभिनौमि ] । 'अभिनौमि' इति क्रियापदम् । कः कर्ता ? । 'अहम्' मल्लक्षणः । अभि-त्रिकरण-शुद्ध्या स्तवीमि । कं कर्मतापन्नम् ? । अजितम् । किंविशिष्टं अजितम् । ' तं ' प्रसिद्धम् । तं कम् ? । यो भगवान् निजं-स्वकीयं यत् जननं-जन्म तस्य महोत्सवः तस्मिन् निजजननमहोत्सवे विराजन्ति-शोभमानानि यानि वनानि भद्रशाल-सौमनस-नन्दन-पाण्डुकप्रभृतीनि तैः घनः-निचितः एतादृशो यो मेरुः परः-प्रकृष्टो यः अगः--पर्वतः तस्य मस्तकं-शिखरं तस्य अन्तः-अग्रभागः शिखराग्रं अधितष्ठौ इत्यन्वयः । ' अधितष्ठौ ' इति क्रियापदम् । कः कर्ता ? । ' यः ' भगवान् । 'अधितष्ठौ' अधिष्ठितवान् । कं कर्मतापन्नम् ? । विराजद्वनघनमेरुपरागमस्तकान्तम् । कस्मिन् ? । 'निजजननमहोत्सवे' स्वकीयजन्मक्षणे । किंविशिष्टं विराज०मस्तकान्तम् ? । अनघा-निरवद्या-निष्पापा नमेरवः-कल्पतरवः शालवृक्षा वा तेषां परागो-मकरन्दो यस्मिन् स अनघनमेरुपरा०, तं अनघनमेरुपरागम् । किंविशिष्टं अजितम् ? । अस्ता-उज्झिताः त्यक्ताः कान्ताः-स्त्रियो येन सः अस्तकान्तः, त ' अस्तकान्तं', पक्षे विर जद्वनाः-शोभमाना-म्भसो घनाः-मेघा यत्र एतादृशो मेरुः तस्य शिखरं इति छायार्थः । इति पदार्थः ।

अथ समासः—न जितः अजितः, तं अजितम् । गर्भस्थे भगवति राज्ञा अक्षक्रीडायां मातुः अजितत्वात् अजित इति नामाजनि । विराजन्ति च तानि वनानि विराजद्वनानि, विराजद्वनैः घनः विराजद्वनघनः, विराजद्वनघनश्चासौ मेरुश्च विराजद्वनघनमेरुः, विराजद्वनघनमेरुश्चासौ परागश्च विराजद्वनघनमेरुपरागः, विरा०परागस्य मस्तकं विरा०परागमस्तकं, विराज०मस्तकस्य अन्तः विरा०मस्तकान्तः, तं विरा० मस्तकान्तम् । निजस्य जननं निजजननम्, महांश्चासौ उत्सवश्च महोत्सवः, निजजननस्य महोत्सवो निजजननमहोत्सवः, तस्मिन् निजजननमहोत्सवे । अनघाश्च ते मेरवश्च अनघमेरवः, अनघनमेरूणां परागो यस्मिन् सः अनघनमेरुपरागः, तं अनघनमेरुपरागम् । अस्ता कान्ता येन सः अस्तकान्तः, तं अस्तकान्तं अथवा अस्तं-स्वर्णं तद्वत् कान्तो-रम्यः तं अस्तकान्तम् । " अस्तं स्वर्णसुमाम्भसः " इत्यनेकार्थः । 'अस्तं सुवर्णे वनोपान्ते' इति व्याडिः । अत्रोपजातौ मत्तमयूर( पुष्पिताग्रा? ) च्छन्दसा प्रथमवृत्तार्थः ॥ द्वितीयान्तपदयोः यमकालङ्कारः ॥ १ ॥

दे० व्या०-तमजितमिति । तं अजितं-अजितनाथं अहं नौमि-स्तवीमि इत्यन्वयः । ' णु स्तुतौ ' धातुः । 'अभिनौमि' इति क्रियापदम् । कः कर्ता ? । अहम् । कं कर्मतापन्नम् ? । अजितम् । यत्तदोर्नित्याभिसम्बन्धात् यः अजितः निजजननमहोत्सवे विराजद्वनघनमेरुपरागमस्तकान्तं अधितष्ठौ-स्थितवान् । ' ष्ठा गतिनिवृत्तौ' धातुः । ' अधितष्ठौ ' इति क्रियापदम् । कः कर्ता ? । अजितः । कं कर्मतापन्नम् ? । 'विराजद्वनघनमेरुपरागमस्तकान्तम् ' विराजन्ति च तानि वनानि चेति 'कर्मधारयः' । तैः घनो-निबिडः, यद्वा विराजन्तः-शोभमाना वनघनाः-सजला मेघा यत्र, स चासौ मेरुपरागः-मेरुनामा प्रकृष्टपर्वतः तस्य मस्तकान्तं-शिखराग्रप्रदेशम् । कस्मिन् ? । ' निजजननमहोत्सवे ' निजजननस्य-स्वकीयप्रसूतेः महान्-प्रकृष्टो यः उत्सवः-क्षणः तस्मिन् । किंविशिष्टं विराजद्वनघनमेरुपरागमस्तकान्तम् ? । ' अनघनमेरुपरागम् ' अनघाः-पवित्रा ये नमेरवो-देववृक्षास्तेषां परागः-पुष्परेणुः यत्र स तम् । पुनः किंविशिष्टम् ? । ' अस्तकान्तम् ' अस्तागिरिवत् कान्तं-कमनीयम्, अस्ता-त्यक्ता कान्ता-ललना येनेति जिनविशेषणं वा ॥ इति प्रथमवृत्तार्थः ॥ १ ॥

**जिनकदम्बकाभिनुतिः—**

स्तुत जिननिवहं तमार्तितप्ता–
　ध्वनदसुरामरवेण वस्तुवन्ति ।
यममरपतयः प्रगाय पार्श्वे–
　ध्वनदसुरामरवेणव स्तुवन्ति ॥ २ ॥

—पुष्पि०

ज० वि०—स्तुत जिननिवहमिति । भो भव्याः ! यूयं तं जिननिवहं–जिनसमूहं स्तुत–स्तवनविषयीकुरुतेति क्रियाकारकघटना । अत्र 'स्तुत' इति क्रियापदम् । के कर्तारः ? 'यूयम्' । कं कर्मतामापन्नम् ? 'जिननिवहम्' । यत्तदोः परस्परं सापेक्षत्वात् तं कम् ? यं अमरपतयः–इन्द्राः स्तुवन्ति–स्तुतिविषयीकुर्वन्ति । अत्र 'स्तुवन्ति' इति क्रियापदम् । के कर्तारः ? 'अमरपतयः' । कं कर्मतापन्नम् ? 'यम्' । कथंभूता अमरपतयः ? 'पार्श्वध्वनद-सुरामरवेणवः' पार्श्वेषु–पर्यन्तेषु ध्वनन्तः–शब्दायमानाः असुराणां अमराणां च वेणवो–वंशा येषां ते तथोक्ताः । अमरपतीनां पार्श्वेषु स्थिता असुरा अमराश्च वंशान् वादयन्तीत्यर्थः । किंकृत्वा स्तुवन्ति ? 'प्रगाय' प्रकर्षेण गीत्वा । कानि ? 'वस्तुवन्ति' छन्दोविशेषान् । केन कृत्वा ? 'अर्तितप्ताध्वनदसुरामरवेणव:' अर्तिः–पीडा तया तप्ताः–तापव्याकुलीभूताः पान्थादयस्तेषाम-ध्वनदो–मार्गह्रदतुल्यः शैत्याधायकत्वात् एतादृशो यः सुरामरवः–सुष्ठु रमणीयो ध्वनिस्तेन । इदं द्विपदं करणभूतं स्तुत प्रगायेत्युभयोः क्रिययोर्मध्ये यत्र योज्यते तत्र युक्तिमत् ॥

अथ समासः—जिनानां निवहो जिननिवहः 'तत्पुरुषः' । तं जिन० । अर्त्या तप्ताः अर्तितप्ताः 'तत्पुरुषः' । अध्वनो नदः अध्वनदः 'तत्पुरुषः' । अर्तितप्तानामध्वनदः अर्तितप्ता० 'तत्पुरुषः' । सुष्ठु रामः सुरामः 'तत्पुरुषः' । सुरामश्चासौ रवश्च सुरामरवः 'कर्मधारयः' । अर्तितप्ताध्वनदश्चासौ सुरामरवश्च अर्ति० 'कर्मधारयः' । तेन अर्ति० । अमराणां पतयः अमर-पतयः 'तत्पुरुषः' । असुराश्च अमराश्च असुरामराः 'इतरेतरद्वन्द्वः' । असुरामराणां वेणवः असुरा० 'तत्पुरुषः' । ध्वनन्तश्च तेऽसुरामरवेणवश्च ध्वनदसुरामरवेणवः 'कर्मधारयः' । पार्श्वे ध्वनदसुरामरवेणवो येषां ते पार्श्वध्व० 'बहुव्रीहिः' ॥ इति काव्यार्थः ॥ २ ॥

सि० वृ०—स्तुत जिननिवहमिति । भो भव्याः ! यूयं तं जिननिवहं–जिनसमूहं स्तुत-स्तुतिविषयी-कुरुतेत्यर्थः । 'ष्टुञ् स्तुतौ' इति धातोः 'आशीः प्रेरणयोः ( सा० स० १०१ )' कर्तरि परस्मैपदे मध्यम-

पुरुषबहुवचनम् । ष्टुञ् अग्रे अप् 'अदादेर्लुक्' (सा० सू० ८८०) । 'आदेः ष्णः स्नः' (सा० सू० ७४८) इति षकारस्य सकारः । 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति टकारस्य तकारः । तथा च 'स्तुत' इति सिद्धम् । अत्र 'स्तुत' इति क्रियापदम् । के कर्तारः ? । यूयम् । कं कर्मतापन्नम् ? । जिननिवहम् । जिनानां निवहः—समूहो जिननिवहः, तं जिननिवहम् । "समूहो निवहव्यूह—सन्दोहविसरव्रजाः" इत्यमरः ( श्लो० १०६९ ) । यत्तदोः परस्परं सापेक्षत्वात् तं कम् ? । यं जिननिवहं अमरपतयः—इन्द्राः स्तुवन्ति-स्तुतिविषयीकुर्वन्ति । 'ष्टुञ् स्तुतौ' अग्रे वर्तमाने अन्ति । 'आदेः ष्णः स्नः' ( सा० सू० ७४८ ) इति षकारस्य सकारः, ततः अप् 'अदादेर्लुक् (सा० सू० ८८०) 'नु धातोः' इत्युव् 'स्वरहीनम्' ( सा० सू० ३६ ) । तथा च 'स्तुवन्ति' इति सिद्धम् । अत्र 'स्तुवन्ति' इति क्रियापदम् । के कर्तारः ? । 'अमरपतयः' अमरा—देवाः तेषां पतयः—स्वामिनः अमरपतयः । कं कर्मतापन्नम् ? । यम् । कथंभूता अमरपतयः ? । 'पार्श्वध्वनदसुरामरवेणवः' पार्श्वेषु—पर्यन्तेषु ध्वनन्तः—शब्दायमानाः असुरामराणां, असुराश्च अमराश्चेति 'द्वन्द्वः,' तेषां वेणवो—वंशाः येषां ते तथोक्ताः, अमरपतीनां पार्श्वेषु स्थिताः असुरा अमराश्च वंशान् वादयन्तीत्यर्थः । "वेणुर्वंशे नृपान्तरे" इति विश्वः । किं कृत्वा स्तुवन्ति ? । प्रगाय प्रकर्षेण गात्वा । कानि ? । वस्तुवन्ति—छन्दोविशेषाणि । केन कृत्वा ? । 'अर्तितप्ताध्वनदसुरामरवेण' अर्तिः—पीडा तया तप्ताः—तापव्याकुलीभूताः पान्थादयः तेषां अध्वनदो—मार्गह्रदतुल्यः शैत्याधायकत्वात् एतादृशो यः सुरामरवः—सुष्ठु रामो—मनोज्ञः रवः—ध्वनिः तेन ।

"रामः पशुविशेषे स्यात्, जामदग्न्ये हलायुधे ।
राघवे चासितश्वेत—मनोज्ञेषु च वाच्यवत् ॥"

इति विश्वः । इदं हि पदं करणभूतं स्तुत प्रगायेत्युभयोः क्रिययोर्मध्ये यत्र योज्यते तत्र युक्तिमत्, अथवा आर्तितप्ताः इति संबोधनम् हे अर्तितप्ताः ! स्तुत इति संबन्धः । ध्वनन्—नानार्थान् ध्वनितान् कुर्वन् असून्—प्राणान् रामयति असुरामः तादृशो यो रवः स ध्वनदसुरामरवः तेन स्तुवन्ति अर्थवन्ति प्रगाय इति व्याख्येयम् ॥ २ ॥

**सौ० वृ०—स्तुत इति । यूयं तं जिननिवहं स्तुत इत्यन्वयः । 'स्तुत' इति क्रियापदम् । के कर्तारः ? । यूयम् । 'स्तुत' प्रणुत । कं कर्मतापन्नम् ? । 'जिननिवहं' तीर्थकरवृन्दम् । किं कृत्वा ? । 'प्रगाय' प्रकर्षेण गात्वा । कानि कर्मतापन्नानि ? । वस्तु-छन्दोविशेषः तद्वन्ति गीतानि 'वस्तुवन्ति' । केन ? । अर्तितप्ता अर्त्या-पीडया तप्ता-बाधिता ये प्राणिनः तेषां सुखदायकत्वात् अध्वनद इव-मार्गह्रद इव सुष्ठु-शोभनः रामः-रमणीयः रवः-शब्दः तेन 'अर्तितप्ताध्वनदसुरामरवेण' । किंविशिष्टं जिननिवहम् ? । 'तं' प्रसिद्धम् । तं कम् ? । अमरपतयः-सुरेन्द्रा यं जिननिवहं स्तुवन्ति इत्यन्वयः । 'स्तुवन्ति' इति क्रियापदम् । के कर्तारः ? । अमरपतयः । 'स्तुवन्ति' वन्दन्ते । कं कर्मतापन्नम् ? । 'यं जिननिवहम् ।' किंविशिष्टा अमरपतयः ? । पार्श्वे-समीपे ध्वनन्तः-शब्दायमानाः असुरा-भुवनपत्यादयः अमराः-वैमानिकादयः तेषां वेणवो-वंशाः येषां ते 'पार्श्वध्वनदसुरामरवेणवः' । तथा 'व्यत्यये लुग् वा रेफस्य लुक्' ( सि० अ० १, पा० ३, सू० ५६ ) इति सूत्रेण विसर्गलोपः । इति पदार्थः ।**

अथ समासः-जिनानां निवहः जिननिवहः, तं जिननिवहम् । अर्त्या तप्ताः अर्तितप्ताः, अध्वनि नदः अध्वनदः, अर्तितप्तानां अध्वनदः अर्तितप्ताध्वनदः, रमते असौ रामः, सु-शोभनो रामः सुरामः, अर्तितप्ताध्वनदवत् सुरामः अर्तितप्ताध्वनदसुरामः, अर्तितप्ताध्वनदसुरामश्चासौ रवश्च अर्तितप्ताध्वनदसुरामरवः, तेन अर्तितप्ताध्वनदसुरामरवेण । वस्तूनि विद्यन्ते येषु तानि वस्तुवन्ति । अमराणां पतयः अमरपतयः । गीयते इति गायः, प्रकर्षेण गीयते इति प्रगायः । असुराश्च अमराश्च असुरामराः, असुरामराणां वेणवः असुरामरवेणवः, पार्श्वे ध्वनन्तः पार्श्वध्वनन्तः, पार्श्वध्वनन्तः असुरामरवेणवो येषां ते पार्श्वध्वनदसुरामरवेणवः ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥

दे० व्या०-स्तुत जिननिवहमिति । तं जिननिवहं-तीर्थंकरसमूहं यूयं स्तुत-स्तुतिगोचरीकुरुतेत्यन्वयः । 'स्तुञ् स्तुतौ' धातुः । 'स्तुत' इति क्रियापदम् । लोट् परस्मैपदमध्यमपुरुषबहुवचनान्तम् । के कर्तारः ? । यूयम् । कं कर्मतापन्नम् ? । 'जिननिवहं' जिनानां निवहं जिननिवहम् इति समासः । यत्तदोर्नित्याभिसम्बन्धात् यं जिननिवहं अमरपतयः-सुरेन्द्राः स्तुवन्ति-स्तुतिविषयीकुर्वन्ति इत्यन्वयः । 'स्तुवन्ति' इति क्रियापदम् । के कर्तारः ? । 'अमरपतयः' अमराणां पतयः अमरपतयः इति विग्रहः । कं कर्मतापन्नम् ? । जिननिवहम् । किं कृत्वा ? । प्रगाय-प्रकर्षेण गात्वा । प्रशब्देनात्र भक्तिश्रद्धातिशयलक्षणः प्रकर्षो द्योत्यते । कानि ? । वस्तुवन्ति-छन्दोविशेषणानि । केन ? । 'अर्तितप्ताध्वनदसुरामरवेण' अर्त्या-पीडया तप्तानां शैत्याधायकत्वेन अध्वनद इव यः सुतरां रमणीयो रवो-ध्वनिविशेषः तेन, अथवा अर्तितप्ता इति सम्बोधनम् हे अर्तितप्ताः ! । स्तुत इति सम्बन्धः । ध्वनन्-नानार्थान् ध्वनितान् कुर्वन्, असून्-प्राणान् रमयति इति असुरामः, तादृशो यो रवः स ध्वनदसुरामरवः, तेन वस्तुवन्ति-अर्थवन्ति प्रगाय इति व्याख्येयम् । किंविशिष्टा अमरपतयः? । 'पार्श्वध्वनदसुरामरवेणवः' असुराश्च अमराश्चेति पूर्वं 'द्वन्द्वः' । ततः पार्श्वे-समीपे ध्वनन्तो-वाद्यमाना असुरामराणां वेणवो-वंशा येषां ते तथा ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥



जिनमतविचारः—

प्रवितर वसतिं त्रिलोकबन्धो !
गमनययोगततान्तिमे पदे हे ।
जिनमत ! विततापवर्गवीथी–
गमनययो ! गततान्ति मेऽपदेहे ॥ ३ ॥

—पुष्पि०

ज० वि०—प्रवितरेति । हे जिनमत !–तीर्थकरागम ! त्वं मे–मम अन्तिमे पदे-चतुर्दशरज्जुप्रमाणस्य लोकस्यान्त्ये स्थाने मोक्ष इत्यर्थः, अपदेहे–अपगतशरीरे तत्र प्राप्तानां सिद्धानां देहपञ्चकस्यापगमेनोपचारात् तत्पदमप्यपदेहमेवोच्यते, तत्र वसतिं–वासं गततान्ति–अपगतग्लानि यथा स्यात् तथा, क्रियाविशेषणमेतत्, प्रवितर–प्रकर्षेण देहीति क्रियाकारकान्वयः । अत्र 'प्रवितर' इति क्रियापदम् । किं कर्तृ ? 'त्वम्' । कां कर्मतापन्नाम् ? 'वसतिम्' । कस्मिन् ? 'पदे' । कथंभूते ? 'अन्तिमे' । पुनः कथंभूते ? 'अपदेहे' । कस्य ? 'मे' ।

१ 'गम ! नययोग०' इत्यपि पदच्छेदः ।

कथम् ? 'गततान्ति'। अपराणि सर्वाणि जिनमतस्य सम्बोधनानि। तेषां व्याख्या यथा— 'हे त्रिलोकबन्धो'! त्रयो लोकाः स्वर्ग-मर्त्य-पाताललक्षणास्तेषां बन्धुरिव बन्धुः, त्राणैकचिन्तापरत्वात्। तस्य सम्बोधनं हे त्रिलो०। हे 'गमनययोगतत'! गमाः—सदृशपाठाः नयाः—नैगमसंग्रहादयस्तैर्योगः—सम्बन्धस्तेन ततं—विस्तीर्णं—विशालं, तत्सम्बो० हे गम०। हे 'विततापवर्गवीथिगमनययो'! वितता—विस्तृता याऽपवर्गवीथी—मोक्षपदवी तत्र गमनं—यानं तत्र ययुः—तुरङ्गमः तत्र सुखेन प्रापकत्वात्, तत्सम्बो० हे वित०। अत्र गततान्तीति यत् क्रियाविशेषणत्वेनाभिहितं तत् जिनमतस्य सम्बोधनं विशेषणं वाऽपि युज्यत एव। तथा द्वितीयपदस्यान्तर्वर्ती हेशब्दस्त्वाभिमुख्याभिव्यक्तये सर्वेषां सम्बोधनानामादौ योज्यते॥

अथ समासः—त्रयश्च ते लोकाश्च त्रिलोकाः 'कर्मधारयः'। त्रिलोकानां बन्धुस्त्रिलोकबन्धुः 'तत्पुरुषः'। तत्सम्बो० हे त्रिलो०। गमाश्च नयाश्च गमनयाः 'इतरेतरद्वन्द्वः'। गमनयानां योगो गमन० 'तत्पुरुषः'। गमनययोगेन ततं गमन० 'तत्पुरुषः'। तत्सम्बो० हे गमन०। जिनानां मतं जिनमतम् 'तत्पुरुषः'। तत्सम्बो० हे जिन०। अपवर्गस्य वीथी अपवर्गवी० 'तत्पुरुषः'। वितता चासावपवर्गवीथी च वितता० 'कर्मधारयः'। विततापवर्गवीथ्यां गमनं विततापव० 'तत्पुरुषः'। विततापवर्गवीथीगमने ययुः विततापव० 'तत्पुरुषः'। तत्सम्बो० हे विततापव०। गता तान्तिर्यस्मात् तत् गततान्ति 'बहुव्रीहिः'। अपगतो देहो यस्मात् तत् अपदेहम् 'बहुव्रीहिः'। तस्मिन्नपदेहे॥ इति काव्यार्थः॥ २॥

सि० वृ०—प्रवितरेति। हे जिनमत!—तीर्थंकरागम! त्वं मे—मम अन्तिमे पदे—चतुर्दशरज्जुप्रमाणस्य लोकस्यान्ते स्थाने—मोक्षे इत्यर्थः, गततान्ति—अपगतग्लानि यथा स्यात् तथा वसतिं—वासं प्रवितर—प्रकर्षेणार्पयेत्यर्थः। प्रपूर्वक 'तॄ प्लवनतरणयोः' इति धातोः 'आशीःप्रेरणयोः (सा० सू० ७०३), कर्तरि परस्मैपदे मध्यमपुरुषैकवचनम्। तॄ अग्रे हिः 'अप्' 'गुणः' (सा० सू० ६९१-६९२), 'अतः' (सा० सू० ७०५) इति हेर्लुक्, 'स्वरहीनम्०' (सा० सू० ३६)। तथाच प्रवितर इति क्रिया निष्पन्ना। अत्र 'प्रवितर' इति क्रियापदम्। कः कर्ता?। त्वम्। कां कर्मतापन्नाम्?। वसतिम्। "वसतिः स्थानवेश्मनोः" (वसती रात्रिवेश्मनोः?) इत्यमरः (श्लो० २४६८)। कस्मिन्?। पदे—स्थाने। "पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु" इत्यमरः (श्लो० २९२१)। कस्य?। मे—मम। कथम्?। गततान्ति। कीदृशे पदे?। 'अपदेहे' अपगतो देहः—कायो यस्मिन् स तथा तस्मिन् इति 'बहुव्रीहिः'। देहस्यापि दुःखान्तर्भूतत्वेन मोक्षे तदभावादिति भावः। "नित्यानन्दसुखाभिव्यक्तिः" इति श्रुतेः। अपराणि सर्वाणि जिनमतस्य सम्बोधनानि। तेषां व्याख्या त्वेवम्—'हे त्रिलोकबन्धो'! त्रयश्च ते लोकाश्च—स्वर्गमृत्यु (मर्त्य?) पाताललक्षणाः तेषां बन्धुरिव बन्धुस्त्रिलोकबन्धुः, तस्य सम्बो० हे त्रिलोकबन्धो!। हे 'गमनययोगतत'! गमाः—सदृशपाठाः, नया—नैगमसंग्रहादयः, गमाश्च ते नयाश्च गम-

नयाः ‘ इतरेतरद्वन्द्वः ’, तेषां योगः–सम्बन्धः, तेन ततो–विस्तीर्णः, तस्य सम्बोधनं हे गमनययोगतत ! । “ गमः सदृशपाठे स्याद्, गमस्तु गमने स्मृतः ” इति **नानार्थः** । हे ‘ विततापवर्गवीथीगमनययो ’ वितता–विस्तृता या अपवर्गवीथी अपवर्गस्य–मोक्षस्य वीथी–वर्त्म तत्र गमनं–यानं तत्र ययुरिव ययुः–अश्वः, तस्य सं० हे विततापवर्ग० । “ ययुरश्वोऽश्वमेधीयः ” इति **हैमः** ( का० ४, श्लो० १०९ ) । यथा ययुना स्वस्वामी समीहितं पदं नीयते तथा जिनागमेनापि श्रद्धाध्ययनाध्यापनश्रवणाशक्तो जनो मोक्षं प्राप्यत इति भावः । “ वीथी वर्त्मनि पंक्तौ च, गृहाङ्गे नाट्यरूपके ” इति **हैमानेकार्थः** ॥ ३ ॥

सौ० वृ०—प्रवितरेति । ‘ हे त्रिलोकबन्धो ’ !–हे जगद्भ्रातः ! । गमाः–सदृशपाठाः–सिद्धान्तालापकाः नया नैगमादयः तेषां योगाः सम्बन्धाः तैः ततं–विस्तीर्णं हे ‘गमनययोगतत’ !। हे ‘जिनमत’ ! जिनप्रवचन !। वितता–विस्तीर्णा अपवर्गो–मोक्षः तस्य वीथी–मार्गः तत्र गमनं–प्रापणं तत्र ययुरिव ययुः–अश्वमेधीयः–तुरगः शीघ्रप्रापकत्वात् हे ‘विततापवर्गवीथीगमनययो’ ! । गततान्ति–गतक्लमं यथा स्यात् तथा मे–मह्यं त्वं अन्तिमे पदे–मोक्षे–लोकाग्रे वसतिं–वासं प्रवितरेति अन्वयः । ‘प्रवितर ’ इति क्रियापदम् । कः कर्ता ? । त्वम् । ‘ प्रवितर ’ प्रकर्षेण दद्द । कां कर्मतापन्नाम् ? । ‘ वसतिं ’ स्थानम् । कस्मिन् ? । ‘ अन्तिमे पदे ’ मोक्षस्थाने । कस्मै ? । ‘ मे ’ मह्यम् । कथंभूते अन्तिमे पदे ? । ‘ अपदेहे ’ गतशरीरे ॥ इति पदार्थः ॥

अथ समासः—त्रयाणां लोकानां समाहारस्त्रिलोकं, त्रिलोकस्य बन्धुः त्रिलोकबन्धुः, तस्य सं० हे त्रिलोकबन्धो ! । गमाश्च नयाश्च गमनयाः, गमनयानां योगाः गमनययोगाः, गमनययोगैः ततं गमनययोगततं, तस्य सं० हे गमनययोगतत ! । अन्ते भवः अन्तिमः, तस्मिन् अन्तिमे । जिनानां मतं जिनमतं, तस्य सं० हे जिनमत ! । अपवर्गवीथी अपवर्गस्य वीथी, वितता चासौ अपवर्गवीथी च विततापवर्गवीथी, विततापवर्गवीथ्यां गमनं विततापवर्गवीथीगमनं, विततापवर्गवीथीगमने ययुरिव ययुः विततापर्गवीथीगमनययुः, तस्य सं० हे विततापवर्गवीथीगमनययो ! । गता तान्तिर्यस्मात् तत् गततान्ति यथा स्यात् तथा । अपगता देहाः कार्मणादयो यस्मिन् तत् अपदेहं, तस्मिन् अपदेहे । “ ययुरश्वोऽश्वमेधीयः ” इति हैमः ( का० ४, श्लो० ३०९ ) ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या०–प्रवितरेति । हे जिनमत ! त्वं मे–मम अन्तिमे–सर्वोत्कृष्टे पदे–स्थाने वसतिं–निवासं प्रवितर–प्रकर्षेण देहीत्यन्वयः । ‘ तॄ प्लवनतरणयोः ’ इति धातुः । ‘प्रवितर’ इति क्रियापदम् । कः कर्ता ? । त्वम् । कां कर्मतापन्नाम् ? । वसतिम् । कस्मिन् ? । पदे । किंविशिष्टे ? । ‘ अन्तिमे ’ मोक्षे इति निष्कर्षः । पुनः किंविशिष्टे ? । ‘ अपदेहे ’ अपगतो देहः–शरीरं यत्र तत् तस्मिन्, मोक्षे शरीराभावात् । ‘त्रिलोकबन्धो !’ इति । त्रिलोकस्य बन्धुरिव बन्धुः यः स तस्यामन्त्रणम्, हितोपदेशकत्वात् । ‘गमनययोगतत!’ इति । गमाः–सदृशपाठाः, नयाः–नैगमादयः पूर्वं ‘द्वन्द्वः’, तेषां योगः–सम्बन्धः, तेन ततो–विस्तीर्णो यः स तस्यामन्त्रणम् । ‘ विततापवर्गवीथीगमनययो !’ इति । वितता–विस्तीर्णा या अपवर्गवीथी–मोक्षमार्गस्तत्र गमने ययुरिव ययुर्यः स तस्यामन्त्रणम् “ ययुरश्वोऽश्वमेधीयः ” इत्यभिधानचिन्तामणिः का० ४, श्लो० ३०९ ) । यथा तुरङ्गमः स्वस्वामिनः समीहितपदं नयति तथाऽयं सिद्धान्तोऽपि स्वाध्येतुः मोक्षं प्रापयतीत्यभिप्रायः । एतानि सर्वाण्यपि जिनमतस्य सम्बोधनपदानि । ‘ गततान्ति’ इति ‘तमुच ग्लानौ’ इति धातोर्गततान्तीति अपेतग्लानिर्यथा स्यात् तथेति क्रियाविशेषणम् ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

---

१ अस्योल्लेखोऽमरेऽपि ( श्लो० १५५८ ) ।

**मानसीदेव्याः प्रार्थना—**

सितशकुनिगताऽऽशु मानसीद्धा-
त्ततातिमिरम्मदभासुराजिताशम् ।
वितरतु दधती पविं क्षतोद्यत्-
ततितिमिरं मदभासुरैरजिता शम् ॥ ४ ॥ २ ॥

—पुष्पि०

ज० वि०—सितशकुनीति । मानसी–मानस्याख्या देवी शं–सुखं वितरतु–सम्पादयंतु इति क्रियाकारकसम्बन्धघटना । तत्र 'वितरतु' इति क्रियापदम् । का कर्त्री ? 'मानसी' । किं कर्मतापन्नम् ? 'शं' सुखम् । कथम्? 'आशु' शीघ्रम् । अत्र केषामित्याकाङ्क्षायां तु भव्यानां युष्माकं वाऽस्माकं वेत्यादिकमध्याहृत्य ज्ञेयम् । मानसी किं कुर्वती ? 'दधती' धारयन्ती । किं कर्मतापन्नम् ? 'पविं' वज्रम् । कथंभूतं पविम् ? 'क्षतोद्यत्ततितिमिरम्' क्षतं–ध्वंसितं उद्यत्–उद्गच्छत् ततं–विस्तीर्णं तिमिरं–अन्धकारो येन स तथा तम् । अत एव पुनः कथंभूतम् ? 'सुराजिताशम्' सुष्ठु राजिताः–शोभिता आशा–दिशो येन स तथा तम् । पुनः कथं० ? 'इद्धात्ततितिम्' इद्धा–दीप्ता आत्ता–गृहीता ततिः–विस्तारो येन स तथा तम् । मानसी कथंभूता ? 'सितशकुनिगता' सितः–श्वेतः शकुनिः–पक्षी हंसः, न बकादिः, तत्रैवास्य शब्दस्य रूढेः, तत्र गता–प्राप्ता, हंसारूढेति हृदयम् । पुनः कथंभूता ? 'इरम्मदभा' । इरम्मदो–जलदाग्निः । "मेघवह्निरिरम्मदः" इत्यभिधानचिन्तामणिवचनात् ( का० ४, श्लो० १६७) । तद्वत् भा–दीप्तिर्यस्याः सा तथा । पुनः कथं० ? 'मदभासुराजिता' मदेन–दर्पेण भासुरा–रुद्रास्तैरजिता–अनभिभूता ॥

**अथ समासः**—सितश्चासौ शकुनिश्च सित० 'कर्मधारयः' । सितशकुनौ गता सित० 'तत्पुरुषः' । इद्धा चासौ आत्ता च इद्धात्ता 'कर्मधारयः' । इद्धात्ता ततिर्येन स इद्धा० 'तत्पुरुषः' । तमिद्धात्त० । इरम्मदवद् भा यस्याः सा इरम्मदभा 'बहुव्रीहिः' । सुष्ठु राजिता सुराजिता 'तत्पुरुषः' । सुराजिता आशा येन स सुरा० 'बहुव्रीहिः' । तं सुरा० । ततं च तत् तिमिरं च तत० 'कर्मधारयः' । उद्यच्च तत् ततितिमिरं च उद्य० 'कर्मधारयः' । क्षतं उद्यत्ततिमिरं येन स क्षतोद्य० 'बहुव्रीहिः' । तं क्षतोद्य० । मदेन भासुरा मदभासुरा 'तत्पुरुषः' । न जिता अजिता 'तत्पुरुषः' । मदभासुरैरजिता मदभा० 'तत्पुरुषः' ॥ इति काव्यार्थः ॥ ४ ॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीअजितजिनस्तुतिवृत्तिः ॥ २ ॥

१ '०मदभा सुराजिताशम्' इत्यपि पदच्छेदः । २ '०भासुराऽजिता०' इत्यपि पाठः ।

सि० वृ०—सितशकुनीति । मानसी—मानसीदेवी शं—सुखं आशु—शीघ्रं वितरतु—ददातु इत्यर्थः । विपूर्वक ‘ तॄ प्लवनतरणयोः ’ इति धातोः ‘ आशीःप्रेरणयोः ’ ( सा० सू० ७०३ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनम् । तॄ अग्रे तुप् ‘ अप् कर्तरि ’ ( सा० सू० ६९१ ) इत्यप्, ‘ गुणः ’ ( सा० सू० ६९२ ) इति गुणः । ‘ स्वरहीनम्० ’ ( सा० सू० ३६ ) इति क्रियानिष्पत्तिप्रकारः । अत्र ‘ वितरतु ’ इति क्रियापदम् । का कर्त्री ? । मानसी । किं कर्मतापन्नम् ? । शम् । कथम् ? । आशु । केषाम् ? इत्याकाङ्क्षायां तु भव्यानां युष्माकं अस्माकं वा इत्यादिकमध्याहृत्य ज्ञेयम् । मानसी किं कुर्वती ? । दधती—धारयन्ती । किं कर्म ? । पविं—वज्रम् । “ वज्रं त्वशनिर्ह्लादिनी स्वरुः । शतकोटिः पविः शंबः ” ( का० २, श्लो० ९४ ) इति हैमः । “ दम्भोलिः ( ह्रादिनी ? ) वज्रमस्त्री स्यात्, कुलिशं भिदुरं पविः ” इत्यमरः ( श्लो० ९३ ) । कीदृशं पविम् ? । ‘ क्षतोद्यत्ततिमिरम् ’ क्षतं—ध्वस्तं उद्यत्—उद्गच्छत् तच्च ततं—विस्तीर्णं तिमिरं—अन्धकारो येन स तथा तम् । अत एव पुनः कीदृशम् ? । ‘ सुराजिताशम् ’ सुष्ठु राजिताः—शोभिताः प्रकाशिता वा आशा—दिशो येन स तथा तम् । “ काष्ठाऽऽशा दिक् हरित् ककुप् ” इति हैमः ( का० २, श्लो० ८० ) । आशाशब्दस्य ‘ स्त्रियाः पुंवद्भाषितपुंस्कत्वात् ’ ( पा० अ० ६, पा० ३, सू० ३४ ) पुंवद्भावेन च स्त्रीप्रत्ययलोपः । पुनः कथंभूतम् ? । ‘ इद्धात्तततिम् ’ इद्धा—दीप्ता आत्ता—गृहीता ततिः—विस्तारो येन स तथा तम् । मानसी कीदृशी ? । ‘ सितशकुनिगता ’ सितः—श्वेतः यः शकुनिः—पक्षी, “ विहगो विहंगम-खगौ पतगो विहंगः, शकुनिः शकुन्ति-शकुनौ वि-वयः-शकुन्तः ” इति हैमः ( का० ४, श्लो० ३८२ ), अर्थात् हंसः, न बकादिः तत्रैवास्य शब्दस्य रूढत्वात् तत्र गता—प्राप्ता, हंसारूढेत्यर्थः । पुनः कथंभूता ? । ‘ इरम्मदभा ’ इरम्मदो—वर्षाग्निः तद्वत् भा—दीप्तिः यस्याः सा इरम्मदभा । “ मेघवह्निरिरम्मदः ” इति हैमः ( का० ४, श्लो० १६७ ) । ‘ उग्रंपश्येरम्मद[ पाणिन्धमाश्च ]’( पा० अ० ३, पा० २, सू० ३७ ) इति निपातः । “ इरा भूवाक्सुराप्सु स्यात् ” इत्यमरः ( श्लो० २६८७ ) । पुनः कीदृशी ? । ‘ मदभासुराजिता ’ मदेन—दर्पेण भासुरा—रुद्राः तैः न जिता अजिता—अनभिभूतेत्यर्थः । अथवा मदेन—अहंकारेण भासुरा—शोभनशीला, मानिनीनां प्रायो मानस्यापि रम्यत्वादिति भावः । पुष्पिताग्राच्छन्दः । ‘ अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ’ इति तल्लक्षणम् ॥ ४ ॥

इति पादसाहश्रीअकब्बरसूर्यसहस्रनामाध्यापकश्रीशत्रुञ्जयतीर्थकरमोचनाद्यनेकसुकृतविधायकमहामहोपाध्यायश्रीभानुचन्द्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदितपादसाहश्रीअकब्बरप्रदत्तखुस्फुहमापराभिधानमहोपाध्यायश्रीसिद्धिचन्द्रगणिविरचितायां शोभनस्तुतिवृत्तौ श्रीअजितस्तुतिवृत्तिः ॥ २ ॥

सौ० वृ०—सितशकुनीति । मानसी शं—सुखं वितरतु इत्यन्वयः । ‘ वितरतु ’ इति क्रियापदम् । का कर्त्री ? । ‘ मानसी ’ देवी । ‘ वितरतु ’ । किं कर्मतापन्नम् ? । ‘ शं ’ सुखम् । कथम् ? । ‘ आशु ’ शीघ्रम् । किंविशिष्टा मानसी ? । सितो-धवलः शकुनिः पक्षी राजहंस इत्यर्थः, तत्र गता-स्थिता(‘सितशकुनिगता’) । पुनः किंविशिष्टा मानसी ? । ‘ इद्धा ’ दीप्ता । पुनः किंविशिष्टा मानसी ? । इरम्मदो मेघवन्हिः तद्वद्

भा-कान्तिर्यस्याः सा 'इरम्मदभा'। पुनः किंविशिष्टा मानसी ?। मदेन-दर्पेण भासुराः-दीप्ता ये देवाः तैः अजिता-अनभिभूता 'मदभासुराजिता'। मानसी किं कुर्वती ?। 'दधती' धारयन्ती। किं कर्मतापन्नम् ?। 'पविं' वज्रम्। किंविशिष्टं पविम् ?। आत्ता-गृहीता ततिः-विस्तारो येन स आत्ततति: तं 'आत्ततति म्'। पुनः किंविशिष्टं पविम् ?। सुष्टु-शोभनं यथा स्यात् तथा राजिताः-भ्राजिताः आशा-दिशो येन स सुरा जिताशः तं 'सुराजिताशम्'। पुनः किं० पविम् ?। क्षतं-गतं उद्यत्-उद्गच्छत् ततं-विस्तीर्णं तिमिरं-ध्वान्तं-तमो येन स क्षतोद्यत्तततिमिरः तं 'क्षतो०तिमिरम्'। "मेघवन्हिहरिरम्मदः" इति हैमः (का० ४, श्लो० १६७)। "शं सुखे बलवत् सुष्टु" इति हैमः (का० ६, श्लो० १७१)॥ इति पदार्थः॥

अथ समासः—सितश्चासौ शकुनिश्च सितशकुनिः, सितशकुनौ गता सितशकुनिगता। आत्ता ततिर्येन स आत्ततति:, तं आत्तततिम्। इरम्मदवद् भा यस्याः सा इरम्मदभा। सुष्टु राजिता आशा-दिशो येन स सुराजिताशः, तं सुराजिताशम्। ततं च तत् तिमिरं च तततिमिरं, उद्यत् च तत् तततिमिरं च उद्यत्तततिमिरं, क्षतं उद्यत्तततिमिरं येन स क्षतोद्यत्तततिमिरः, तं क्षतोद्यत्तततिमिरम्। मदेन भासुरा मदभासुरा, न जिता अजिता, मदभासुरैः अजिता मदभासुराजिता। यमकालङ्कारः॥ इति चतुर्थवृत्तार्थः॥४॥

वैजये जयिनेशस्य, स्तुतेरर्थो लिवीकृतः।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना॥
॥ इति अजितजिनस्तुतिः॥ २॥

दे० व्या०-सितशकुनीति। मानसी देवी शं-सुखं आशु-शीघ्रं यथा स्यात् तथा वितरतु-ददातु इत्यन्वयः। 'तॄ प्लवनतरणयोः' इति धातुः। 'वितरतु' इति क्रियापदम्। का कर्त्री?। मानसी। किं कर्मतापन्नम् ?। शम्। किंविशिष्टा मानसी ?। 'सितशकुनिगता' सितः-शुक्लो यः शकुनिः-पतत्री तस्मिन् गता आरूढा। "श्वेतः श्येतः सितः शुक्लः" इत्यभिधानचिन्तामणिः (का० ६, श्लो० २८)। पुनः किंविशिष्टा ?। इद्धा-दीप्ता। पुनः किं०?। 'इरम्मदभा' इरम्मदो-मेघवन्हिः तद्वद् भा-कान्तिर्यस्याः सा तथा। "मेघवन्हिहरिरम्मदः" इत्यभिधानचिन्तामणिः (का० ४, श्लो० १६७)। पुनः किंविशिष्टा ?। 'मदभासुरा' मदो-मुन्मोहसंभेदस्तेन भासुरा-शोभमाना। "मदो मुन्मोहसंभेदः" इत्यभिधानचिन्तामणिः (का० २, श्लो० २२६)। पुनः किंविशिष्टा ?। 'अजिता' अपराजिता न जिता अजिता इति 'नञ् समासः'। अन्यैरिति शेषः। यद्वा मदेन भासुरा ये ते तथा तैः अजिता-अनभिभूतेत्येकमेव पदम्। एतेन शौर्यातिशयः सूचितः। मानसी किं कुर्वती ?। दधती। कम् ?। पविं-वज्रम्। "स्याद् वज्रं कुलिशं पविः" इत्यमरः (श्लो० ९३)। पुनः किंविशिष्टं पविम् ?। 'आत्तततिम्' आत्ता-गृहीता ततिः-विस्तारो येन स तम्। पुनः किंविशिष्टम् ?। 'सुराजिताशम्' सुष्टु राजिताः-शोभिता आशा-दिशो येन स तम्। पुनः किंविशिष्टम् ?। 'क्षतोद्यत्तततिमिरम्' क्षतं-ध्वस्तं उद्यत्-उद्गच्छत् ततं-विस्तृतं तिमिरं-ध्वान्तं येन स तम्॥ इति चतुर्थवृत्तार्थः॥ ४॥



## ३ श्रीशम्भवजिनस्तुतयः

**अथ श्रीशम्भवस्याभ्यर्थना—**

निर्भिन्नशत्रुभवभय !

शं भवकान्तारतार ! तार ! ममारम् ।

वितर त्रातजगत्त्रय !

शम्भव ! कान्तारतारतारममारम् ॥ १ ॥

—आर्यागीतिः[1]

ज० वि०—निर्भिन्नेति । हे शम्भव ! शम्भवाख्यतीर्थपते ! त्वं मम—अरं—शीघ्रं शं—सुखं वितर—देहि इति क्रियाकारकयोजना । अत्र ' वितर ' इति क्रियापदम् । कः कर्ता ? ' त्वम् ' । किं कर्मतापन्नम् ? ' शम् ' । कस्य ? ' मम ' । कथम् ? ' अरम् ' । शं कथंभूतम् ? ' अरममारम् ' न रमते इत्यरमः, अरमो मारः-कामो यस्मिन् तत् तथा, अविषयद्वारकं अपवर्गसम्बन्धीतियावत् । अपराणि सर्वाणि शम्भवस्वामिनः सम्बोधनानि । तेषां व्याख्या यथा– हे ' निर्भिन्नशत्रुभवभय ' ! निर्भिन्नं-निःशेषेण छिन्नं शत्रुभ्यः-वैरिभ्यो भवं-समुत्पन्नं भयं—भीतिर्येन, यद्वा शत्रवो—वैरिणो भवः—संसारो भयं च भीतिर्येन । यद्वा निर्भिन्नं शत्रुरूपस्य भवस्य भयं येन । शत्रुरूपत्वं च भवस्य दुःखदायित्वेन यौक्तिकमेव । यद्वा निर्भिन्नं शत्रुभ्यो भवाच्च सकाशात् भयं येन स तथा । तत्सम्बो० हे निर्भिन्न० । हे ' भवकान्तारतार ' ! भवः—संसारः स एव रुद्रत्वात् दुरवगाहत्वाच्च कान्तारं—अरण्यं तस्मात् तारयति—उद्धरति स तथा । तत्सम्बोधनं हे भव० । हे ' तार ' ! सकलकालुष्यराहित्येन निर्मल ! । तत्सम्बो० हे तार ! । हे ' त्रातजगत्त्रय ' ! त्रातं—रक्षितं जगत्त्रयं-त्रिभुवनं येन स तथा । तत्सम्बो० हे त्रात० । हे ' कान्तारतारत ' ! कान्ता—योषितः तासु रतं—कामक्रीडा तस्मिन् अरतः—अनासक्तः । तत्सम्बो० हे कान्ता० ॥

अथ समासः—शत्रुभ्यो भवं शत्रुभवं ' तत्पुरुषः ' । शत्रुभवं च तद् भयं च शत्रु० ' कर्मधारयः ' । निर्भिन्नं शत्रुभवं भयं येन ' बहुव्रीहिः ' । यद्वा शत्रवश्च भवश्च भयं च शत्रुभवभयानि ' इतरेतरद्वन्द्वः ' । निर्भिन्नानि शत्रुभवभयानि येन । यद्वा शत्रुश्चासौ भवश्च शत्रुभवः ' कर्मधारयः ' । शत्रुभवस्य भयं शत्रुभ० ' तत्पुरुषः ' । निर्भिन्नं शत्रुभवभयं येन । यद्वा शत्रवश्च भवाश्च शत्रुभवाः ' इतरेतरद्वन्द्वः ' । शत्रुभवेभ्यो भयं शत्रु० ' तत्पुरुषः ' । निर्भिन्नं शत्रुभवभयं येन स तथा । पक्षचतुष्टयेऽपि ' कर्मधारयः ' एव । तत्सम्बो० हे निर्भि० । हे भवकान्तारतार !

---

१ ' आर्योपगीतिजात्याच्छन्दः ' इति श्रीसौभाग्यसागराः, ' स्कन्धकं ' इति तु श्रीसिद्धिचन्द्रगणयः ।

भवश्चासौ कान्तारं च भव० । भव एव कान्तारं भव० इति वा, उभयथाऽपि 'कर्मधारयः'। भवकान्तारात् तारयतीति भव० 'तत्पुरुषः'। तत्सम्बो० हे भव० । जगतां त्रयं जगत्त्रयम् । त्रातं जगत्त्रयं येन स त्रात० 'बहुव्रीहिः'। तत्सम्बो० हे त्रात० । कान्तासु रतं कान्ता० 'तत्पुरुषः'। न रतः अरतः 'तत्पुरुषः'। कान्तारतेऽरतः कान्ता० 'तत्पुरुषः'। तत्सम्बो० हे कान्ता० । अरमो मारो यस्मिन् तत् अरममारम् 'बहुव्रीहिः'। तत् अरममारम् ॥ इति काव्यार्थः ॥ १ ॥

सि० वृ०--निर्भिन्नेति । हे शम्भव ! शं--सुखं भवत्यस्मिन् स्तुते इति शम्भवः । 'शमिधातोः संज्ञायाम्' ( पा० अ० ३, पा० २, सू० १४ ) इत्यच् । शं--सुखं भवत्यस्मादिति योगेन यद्यप्यायाति तथापि रूढिसहकृतेन योगेन शम्भवनाथ एव प्राप्यते । त्वं मम अरं--शीघ्रं शं--सुखं वितर--देहीत्यर्थः । विपूर्वक 'तॄ प्लवनतरणयोः' इति धातोः 'आशीःप्रेरणयोः' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनम्, तॄ अग्रे हिः 'अप् [ कर्तरि ]' ( सा० सू० ६९१ ), 'गुणः' ( सा०सू०६९२ ), 'अतः' ( सा० सू० ७०९ ) इति हेर्लुक् । तथाच ( 'वितर' इति सिद्धम् ) 'अत्र 'वितर' इति क्रियापदम् । कः कर्ता ? । त्वम् । कं कर्मतापन्नम् ? । शम् । शम् इत्यव्ययम् । "शं कल्याणे सुखेऽपि च" इति विश्वः । कस्य ? । मम । अस्मच्छब्दस्य षष्ठ्येकवचने 'तवमम ङसा' ( सा० सू० ३३७ ) इति ममादेशः । कथम् ? । अरम् । शं कीदृशम् ? । अरममारम् । न रमत इत्यरमः, अरमः--अक्रीडन् मारो--मदनो यस्मिन् तत् तथा । "मदनो मन्मथो मारः" इत्यमरः ( श्लो० ४९ ) । "मदनो जराभीरुरनङ्गमन्मथौ" इति हैमः ( का० २, श्लो० १४१ ) । अपराणि सर्वाणि शम्भवनाथस्य सम्बोधनानि । तेषां व्याख्या यथा--हे 'निर्भिन्नशत्रुभवभय' ! निर्भिन्नं--स्फेटितं शत्रुभ्यो--वैरिभ्यो भवं--समुत्पन्नं भयं--भीतिर्येन । यद्वा निर्भिन्नाः शत्रवो--वैरिणो भवश्च--संसारो भयं--भीतिर्येन । यद्वा निर्भिन्नं शत्रुरूपस्य भवस्य भयं येन, शत्रुरूपत्वं च भवस्य दुःखदायित्वेन यौक्तिकमेव । यद्वा निर्भिन्नं शत्रुभ्यो भवाच्च सकाशात् भयं येन स तथा तस्य सम्बोधनं हे निर्भिन्नशत्रुभवभय ! । "भयं भीर्भीतिरातङ्कः" इति हैमः ( का० २, श्लो० २१९ ) । हे 'भवकान्तारतार' ! । भवः--संसारः स एव रुद्रत्वात् दुरवगाहत्वाच्च कान्तारं--अरण्यं तस्मात् तारयति--समुद्धरति स तथा तस्य सम्बोधनं हे भवकान्तारतार ! "महारण्ये पुण्यपथे, कान्तारे पुंनपुंसकम्" इत्यमरः ॥ "वार्क्षं च गहनं झषः । कान्तारं विपिनं कक्षः" इति हैमः ( का० ४, श्लो० १७६ ) । हे 'तार' ! सकलकालुष्यराहित्येन निर्मलः, तस्य सम्बोधनं हे तार ! । यद्वा तारयति संसारमिति तारः, तस्य सम्बोधनं हे तार ! । "तारो मुक्तादिसंशुद्धौ, तरणे शुद्धमौक्तिके" इति विश्वः । हे 'त्रातजगत्त्रय' ! त्रातं--रक्षितं जगतां त्रयं येन स तथा तस्य सम्बोधनं हे त्रातजगत्त्रय ! । हे 'कान्तारतारत' ! कान्तायाः--कामिन्याः रतं--सुरतं कामक्रीडेत्यर्थः, तस्मिन् अरतः--अनासक्तः तस्य सम्बोधनं हे कान्तारतारत ! । "रतं सुरतगुह्ययोः" इति विश्वः ॥ १ ॥

सौ० वृ०-यः कर्मभिरजितो भवति स समग्रसुखप्रभुर्भवति । अनेन सम्बन्धेन आयातस्य तृतीयस्य श्रीशम्भवजिनस्य स्तुतिव्याख्यानं पट्टक्रियते । निर्भिन्नेति ।

निर्भिन्नं-भेदितं शत्रुभ्यो-रागादिभ्यो भवं-उत्पन्नं भयं-भीतिर्येन स निर्भिन्नशत्रुभवभयः, तस्य सं० हे 'निर्भिन्नशत्रुभवभय'! । भवः-संसारः तदेव कान्तारं-वनं तं प्रति तरति तारयति-पारं प्राप्नोति यः स भवकान्तारतारः, तस्य सं० हे 'भवकान्तारतार'! । हे 'तार'! उज्ज्वल ! निरुपाधिकस्वभावत्वात् । त्रातं-रक्षितं योगक्षेमकरत्वात् जगत्त्रयं-विश्वत्रयं येन स तस्य सं० हे 'त्रातजगत्त्रय'! । शं-सुखं भवति अस्मात् इति शंभवः, तस्य सं० हे 'शंभव'! । कान्ताः-स्त्रियः तासां रतं-मैथुनं-संभोगः तस्मिन् अरतः-अनासक्तः, तस्य सं० हे 'कान्तारतारत'! । मम अरं-अत्यर्थं त्वं सुखं अरमः-अरमणीयः मारः-इन्द्रियजनितः कामः-पञ्चेन्द्रियविषयसुखाभिलाषः यस्मिन् तत् अरममारं एतावता अतीन्द्रियं निरुपाधिकं अक्षयं सुखं देहि इति तात्पर्यार्थः । इति पदार्थः ॥

अथ समासः—शत्रुभ्यो भवं शत्रुभवं, शत्रुभवं च तत् भयं च शत्रुभवभयं, निर्भिन्नं शत्रुभवभयं येन स निर्भिन्नशत्रुभवभयः, तस्य सं० हे निर्भिन्नशत्रुभवभय ! । भव एव कान्तारं भवकान्तारं, भवकान्तारं तारयतीति भवकान्तारतारः, तस्य सं० भवकान्तारतार ! । जगतां त्रयं जगत्त्रयं, त्रातं जगत्त्रयं येन स त्रातजगत्त्रयः, तत्सं० हे त्रातजगत्त्रय ! । कान्तानां रतानि कान्तारतानि, कान्तारतेषु अरतः कान्तारतः, तस्य सं० हे कान्तारतारत ! । रमते इति रमः, न रमः अरमः, अरमो मारो यस्मिन् तत् अरममारम् । अस्यां स्तुतौ आर्योपगीतिजात्याच्छन्दः ।। इति प्रथमवृत्तार्थः ॥ १ ॥

दे० व्या०-निर्भिन्नेति । हे शम्भव ! त्वं मम शं-सुखं अरं-अत्यर्थं यथा स्यात् तथा वितर-देहीत्यन्वयः । 'तॄ प्लवनतरणयोः' इति धातुः । 'वितर' इति क्रियापदम् । कः कर्ता ? । त्वम् । किं कर्मतापन्नम् ? । शम् । किंविशिष्टम् ? । 'अरममारं' न रमते इति अरमः 'रमु क्रीडायाम्' धातुः, तेन अरममाणः मारः-कंदर्पो यत्र तत् । "मदनो मन्मथो मारः" इत्यमरः ( श्लो० ४९ ) । 'निर्भिन्नशत्रुभवभय !' इति । निः-नितरां भिन्नं-भेदितं शत्रुभ्यो भवं-उत्पन्नं भयं-दरो येन स तस्यामन्त्रणम् । 'भवकान्तारतार !' इति । भवः-संसारः स एव यत् कान्तारं-दुर्गमं तत् तारयति यः स तस्यामन्त्रणम् । 'तार !' इति । तारो-निर्मलमानसत्वात् उज्ज्वलो यः स तस्यामन्त्रणम् । 'त्रातजगत्त्रय !' इति । त्रातं-रक्षितं जगत्त्रयं-त्रिभुवनं येन स तस्यामन्त्रणम् । 'कान्तारतारत !' इति । कान्तायाः-स्त्रियः रतं-मैथुनसुखं तस्मिन् अरतः-अनासक्तः तस्यामन्त्रणम् । "सुरतं मोहनं रतम्" इत्यभिधानचिन्तामणिः ( का० ३, श्लो० २०० ) । एतानि सर्वाणि भगवतः सम्बोधनपदानि ।। इति प्रथमवृत्तार्थः ॥ १ ॥



**जिनवराणामाश्रयाल्लक्ष्मीः—**

आश्रयतु तव प्रणतं
विभया परमा रमाऽरमानमदमरैः ।
स्तुत ! रहित ! जिनकम्बक !
विभयापरमार ! मारमानमदमरैः ॥ २ ॥

—आर्या

ज० वि०—आश्रयत्विति । हे जिनकदम्बक !—जिनसमूह ! तव प्रणतं—भवतो विनतं नरं रमा—लक्ष्मीः अर—शीघ्रं आश्रयतु—आ—समन्तात् श्रयतु निजास्पदत्वेनाङ्गीकरोत्विति हृदयम् इति क्रियाकारकसंटङ्कः । अत्र 'आश्रयतु' इति क्रियापदम् । का कर्त्री ? 'रमा' । कं कर्मतापन्नम् ? 'प्रणतम्' । कस्य ? 'तव' । कथंभूता रमा ? 'परमा' उत्कृष्टा । कया ? 'विभया' प्रभया दीप्त्येतियावत् । अपराणि सर्वाणि जिनस्य सम्बोधनानि । तेषां व्याख्या त्वेवम्—हे 'स्तुत' ! वन्दित ! । कैः ? 'आनमदमरैः' आनमन्तः—प्रणमन्तो ये अमराः—देवास्तैः । हे 'रहित' ! त्यक्त ! । कैः ? 'मारमानमदमरैः' मारः—कन्दर्पः, मानः—अभिमानः, मदः—जात्याद्यष्टविधः, मरो—मारी तैः । हे 'विभय' ! विगतभीते ! । न परान् प्राणिनो मारयतीति अथ तत्सम्बो० हे 'अपरमार' ! ॥

अथ समासः—प्रकर्षेण नतः प्रणतः 'तत्पुरुषः' । विगतं भयं यस्मात् तत् विभयम् 'बहुव्रीहिः' । आनमन्तश्च तेऽमराश्च आनम० 'कर्मधारयः' । तैः आनम० । परान् मारयतीति परमारम् 'तत्पुरुषः' । न परमारं अपरमारम् । तत्सम्बो० हे अपर० । मारश्च मानश्च मदश्च मरश्च मार० 'इतरेतरद्वन्द्वः' । तैर्मार० ॥ इति काव्यार्थः ॥ २ ॥

सि० वृ०—आश्रयत्विति । हे 'जिनकदम्बक' ! जिनानां कदम्ब एव—समूह एव कदम्बकः । स्वार्थे कः । तस्य सम्बोधनं हे जिनकदम्बक ! । "कदम्बमाहुः सिद्धार्थे, नीपेऽपि निकुरम्बके" इति विश्वः । "हलिप्रियः नीपः कदम्बः" इति हैमः ( का० ४, श्लो० २०४ ) । तव प्रणतं—भवतो विनतं रमा-लक्ष्मीः अरं—शीघ्रं आ—समन्तात् आश्रयतु—भजतु । निजास्पदत्वेनाङ्गीकरोत्वित्यर्थः । 'श्रिञ् सेवायाम्' धातोः कर्तरि 'आशीःप्रेरणयोः' ( सा० सू० ७०१ ) परस्मैपदे प्रथमपुरुषैकवचनम् । तुप् । 'अप् कर्तरि' ( सा० सू० ६९१ ) इत्यप् । 'गुणः' ( सा० सू० ६९२ ) इति गुणः । अत्र 'आश्रयतु' इति क्रियापदम् । का कर्त्री ? । रमा । कं कर्मतापन्नम् ? । प्रणतम् । कस्य ? । तव । युष्मच्छब्दस्य षष्ठ्येकवचने "तव मम ङसा" ( सा० सू० ३३७ ) इति तवादेशः । कीदृशी रमा ? । परमा—उत्कृष्टा । कया ? । विभया—प्रभया—दीप्त्या इतियावत् । अपराणि सर्वाणि जिनस्य सम्बोधनानि । तेषां व्याख्या त्वेवम्—हे 'स्तुत' ! स्तुतिविषयीकृत ! । कैः ? । 'आनमदमरैः' आनमन्तः—प्रणमन्तो ये अमरा—देवाः ते आनमदमराः, तैः आनमदमरैः । हे 'रहित' ! त्यक्त ! । कैः ? । 'मारमानमदमरैः' मारः—कामः मानः—अभिमानः मदः—मुन्मोहसम्भेदः जात्याद्यष्टविधो वा मरो-मरणं तैः । मारश्च मानश्च मदश्च मरश्च इति 'द्वन्द्वः' । हे 'विभय' ! विगतं भयं यस्मात् स विभयः, तस्य सम्बोधनं हे विभय ! । हे 'अपरमार' ! परान् प्राणिनः शत्रून् वा मारयतीति परमारः, न परमारः अपरमारः, तस्य संबोधनं हे अपरमार ! । "शत्रौ प्रतिपक्षः परो रिपुः । शात्रवः प्रत्यवस्थाता" इति हैमः ( का० ३, श्लो० ३९२ ) । समशत्रुत्वादिति भावः ॥ २ ॥

सौ० वृ०—आश्रयत्विति । हे 'जिनकदम्बक'! तीर्थंकरसमूह! । आनमन्तः प्रणमन्तः ये अमरा--देवाः तैः 'आनमदमरैः'। हे 'स्तुत'! हे वन्द्य! । मारः-कामः मानो दर्पः मदश्च अष्टविधो जात्याद्यवलेपः मरः-मारी तैः मारमानमदमरैः कृत्वा हे 'रहित'! त्यक्त! । हे 'विभय'! त्यक्त-भय! । परान्-परजनान् मारयतीति परमारः, न परमार अपरमारः, तस्य सं० हे 'अपर-मार'! सर्वजीवरक्षक! इत्यर्थः । रमा-लक्ष्मीः तव प्रणतं-तीर्थंकरवन्दनशीलं जनं अरं अत्यर्थं आश्रयतु इत्यन्वयः । 'आश्रयतु' इति क्रियापदम् । का कर्त्री ? । रमा । 'आश्रयतु' आलिङ्गतु । कं कर्मतापन्नम् ? । 'प्रणतं' नतं जनम् । कस्य ? । 'तव' भवतः । कथम् ? । 'अरं' अत्यर्थम् । किंविशिष्टा रमा? । 'परमा' प्रकृष्टा । कया ? । विशिष्टशोभया कृत्वा । इति पदार्थः ॥

अथ समासः—प्रकर्षेण नतः प्रणतः, तं प्रणतम् । विशिष्टा भा-कान्तिः यस्याः सा विभा, तया विभया । परैः-योगिभिः मीयते-ज्ञायते इति परमा । आङ् मर्यादया । विधिपूर्वकं नमन्त आनमन्तः, आनमन्तश्च ते अमराश्च आनमदमराः, तैः आनमदमरैः । जिनानां कदम्बकं जिनकदम्बकं, तस्य सं० हे जिनकदम्बक! । विगतं भयं यस्मात् स विभयः, तस्य सं० हे विभय! । न परान् मारयतीति अपरमारः, तस्य सं० हे अपरमार! । मारश्च मानश्च मदश्च मरश्च मारमानमदमराः, तैः मारमानमद-मरैः ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥

दे० व्या०—आश्रयत्विति । जिनानां-तीर्थंकराणां कदम्ब एव कदम्बकः-समूहः तस्यामन्त्रणम् हे जिनक-दम्बक! । रमा-लक्ष्मीः ते-तव प्रणतं-प्रह्वीभूतं जनमिति शेषः, आश्रयतु-भजतु इत्यन्वयः । 'श्रिञ् सेवा-याम्' धातुः । 'आश्रयतु' इति क्रियापदम् । का कर्त्री ? । रमा । "लक्ष्मीः पद्मा रमा" इत्यभिधानचिन्तामणिः ( का० २, श्लो० १४० ) । कं कर्मतापन्नम् ? । जनम् । किंविशिष्टं जनम् ? । प्रणतम् । कस्य ? । तव । किंवि-शिष्टा रमा ? । 'विभया' विगतं भयं यस्याः सा तया । पुनः किंविशिष्टा ? । परमा-सर्वोत्कृष्टा । तत्रैव सर्वेषामुत्कृष्टत्वेन दर्शनात् । विभया-रोचिषा परमा-प्रकृष्टेत्यर्थो वा । हे 'स्तुत'! स्तुतिगोचरीकृत! । कैः ? । 'आनमदमरैः' आ-समन्तात् नमन्तः-प्रणामं कुर्वन्तः ये अमराः-देवाः तैः । कथम् ? । अरं-अत्यर्थं यथा स्यात् तथेति क्रियाविशेषणम् । हे 'रहित'! हे विमुक्त! । कैः ? । 'मारमानमदमरैः' मारः-कामः, मानः-स्मयः, मदो-मुन्मोहसंभेदः, मरो-मरणं एतेषां द्वन्द्वः तैः । हे 'विभय'! विगतं भयं यस्य, यस्मात् वा स तस्याम-न्त्रणम् । हे 'अपरमार'! परान्-शत्रून् मारयतीति परमारः, न परमारः अपरमारः तस्यामन्त्रणम् । "प्रतिपक्षः परो रिपुः" इत्यभिधानचिन्तामणिः ( का० ३, श्लो० ३९२ ) ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥



जिनमतस्य प्राधान्यम्—

जिनराज्या रचितं स्ता—
दसमाननयानया नयायतमानम् ।
शिवशर्मणे मतं दध—
दसमाननयानयानयो यतमानम् ॥ ३ ॥

—आर्या०

ज० वि०—जिनराज्येति । जिनराज्या-तीर्थंकरपङ्क्त्या रचितं-कृतं प्रणीतमि-तियावत् मतं-दर्शनं नः-अस्माकं शिवशर्मणे-मोक्षसुखाय स्तात्-भवत्विति क्रियाकारक-

१ 'नयाऽऽयतमानम्' इत्यपि पाठः । २ 'नयायतमानम्' इत्यपि पाठः ।

योजना। अत्र 'नः' इति पदं अस्मच्छब्दस्य षष्ठीबहुवचनम्। तच्च द्वितीयपदान्ते वर्तमानात् नया यतमानमित्यस्मात् पदात् 'स्वरे यत्वं वा' ( सा० सू० ११२ ) इतिसूत्रेण कृतं सन्धिं विश्लिष्य ज्ञेयम्। तथाऽत्र 'स्तात्' इति क्रियापदम्। किं कर्तृ? 'जिनमतम्'। कस्मै? 'शिवशर्मणे'। केषाम्? 'नः'। मतं कथंभूतम्? 'रचितम्'। कया? 'जिन-राज्या'। मतं किं कुर्वत्? 'दधत्' धारयत्। कान् कर्मतापन्नान्? 'असमाननयान्' अस-माना-असाधारणा ये नया-नैगमसंग्रहप्रभृतयः तान्। जिनमतं पुनः कथंभूतम्? 'आयत-मानं' आयतं-अलघु मानं-प्रमाणं यस्य तत् तथा। पुनः कथंभूतम्? 'यतमानम्' यत्नं कुर्वाणम्। जिनराज्या कथंभूतया? 'असमाननयानया' आननं-मुखं यानं-गमनं गतिरि-तियावत्, ते असमे-असाधारणे यस्याः सा तथा तया। पुनः कथंभूतया? 'अयानया' यानं-वाहनं तत् न विद्यते यस्याः सा तथा तया। अवाहनत्वं चास्याः सर्वपरिग्रहपरित्या-गादुचितमेव॥

**अथ समासः**—जिनानां राजी जिनराजी 'तत्पुरुषः'। तया जिन०। आननं च यानं च आननयाने 'इतरेतरद्वन्द्वः'। असमे आननयाने यस्याः सा असमा० 'बहुव्रीहिः'। तया असमा०। आयतं मानं यस्य तत् आयतमानम् 'बहुव्रीहिः'। शिवस्य शर्म शिवशर्म 'तत्पुरुषः'। तस्मै शिव०। असमानाश्च ते नयाश्च असमा० 'कर्मधारयः'। तान् असमा०। न विद्यते यानं यस्याः सा अयाना 'बहुव्रीहिः'। तया अयानया॥ इति काव्यार्थः॥ ३॥

सि० वृ०—जिनराज्येति। जिनानां राजिः जिनराजिः, तया जिनराज्या-जिनपङ्क्त्या रचितं- प्रणीतं मतं-दर्शनं नः-अस्माकं शिवशर्मणे-मोक्षसुखाय स्तात्-भवतु इत्यर्थः। "शिवं निःश्रेयसं श्रेयो, निर्वाणं ब्रह्म निर्वृतिः" इति हैमः। 'अस् भुवि' धातोः 'आशीःप्रेरणयोः' ( सा० सू० ७०१ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनम् तुप्। 'तुह्योस्तातङ्' ( सा० सू० ७०४ ) इति तुह्योस्तातङ्, 'नमसोऽस्य' ( सा० सू० ८९९ ) इत्यकारलोपः। तथाच 'स्तात्' इति सिद्धम्। अत्र 'स्तात्' इति क्रियापदम्। किं कर्तृ?। जिनमतम्। कस्मै?। 'शिवशर्मणे' शिवस्य-मोक्षस्य शर्म शिवशर्म, तस्मै शिवशर्मणे। केषाम्?। नः। अत्र नः इति पदम् अस्मच्छब्दस्य षष्ठीबहु-वचनस्य अस्माकं इत्यस्य विशेषादेशः। तच्च द्वितीयपदान्ते वर्तमानात् नयायतमानं इत्यस्मात् पदात् 'स्वरे यत्वं वा' ( सा० सू० ११२ ) इति सूत्रेण कृतसंधि विश्लिष्य ज्ञेयम्। कीदृशं मतम्?। रचितम्। कया?। जिनराज्या। मतं किं कुर्वत्?। दधत्-धारयत्। कान्?। 'असमाननयान्' असमाना-असाधारणा ये नया-नैगमसंग्रहप्रभृतयः तान्। पुनः कीदृशं जिनम्?। 'आयतमानम्' आयतं-अलघु मानं-प्रमाणं पूजा वा यस्य तत् तथा। "मानं प्रमाणे पूजादौ, मानश्चित्तोन्नतौ गृहे"

इति विश्वः । पुनः कीदृशम् ? । यतमानम्–यत्नं कुर्वाणम् । कीदृश्या जिनराज्या ? । 'असमानन यानया' आननं–मुखं यानं–गमनं, आननं च यानं च आननयाने 'इतरेतरद्वन्द्वः' ततः असमे आननयाने यस्याः सा तथा तया असमाननयानया इति 'बहुव्रीहिः' । पुनः कथंभूतया ? । 'अयानया' यानं–वाहनं तन्न विद्यते यस्याः सा अयाना, तया अयानया । अवाहनत्वं चास्याः सर्वपरिग्रहत्यागादुचितमेव । "यानं गतौ वाहनेऽपि" इति विश्वः ॥ ३ ॥

सौ० वृ०—जिनराज्येति । जिनराज्या-जिनश्रेण्या रचितं-अर्थापगतं मतं-प्रवचनं नः-अस्माकं शिवशर्मणे-मोक्षसुखाय स्तात् इत्यन्वयः । 'स्तात्' इति क्रियापदम् । किं कर्तृ ? । मतम् । 'स्तात्' भूयात् । कस्मै ? । शिवशर्मणे । केषाम् ? । 'नः' अस्माकम् । कथंभूतं मतम् ? । रचितम् । कया ? । जिनराज्या । किंविशिष्टया जिनराज्या ? । असमाने-निरुपमे आननं-मुखं यानं-गमनं मोक्षप्राप्तिलक्षणं यस्याः सा असमाननयाना, तया 'असमाननयानया' । पुनः किंविशिष्टं मतम् ? । आयतः-विस्तीर्णः मानः-प्रमाणः पूजाविधिर्वा यत्र तत् 'आयतमानम्' । मतं किं कुर्वत् ? । 'दधत्' धारयत् । कान् कर्मतापन्नान् ? । असमानाः-असदृशाः अतिगहनत्वात् नया-नैगमाद्याः द्रव्यास्तिकपर्यायास्तिकभेदाः, तान् 'असमाननयान्' । किंविशिष्टया जिनराज्या ? । 'अयानया' अवाहनया । मतं किं कुर्वाणम् ? । 'यतमानं' यत्नं कुर्वाणम् । नः इत्यत्र विसर्जनीयस्य 'स्वरे (परे) यत्वं वा' (सा० सू० ११९) इत्यनुभूतिः, 'रोर्यः' (सि० अ० १, पा० ३, सू० २६) इति रस्य यः, 'स्वरे वा' इति हैमः (सि० अ० १, पा० ३, सू० २४) । इति पदार्थः ॥

अथ समासः–जिनानां राजिः जिनराजिः, तया जिनराज्या । आननं च यानं च आननयाने, न समाने असमाने, असमाने आननयाने यस्याः सा असमाननयाना, तया असमाननयानया । आयतो मानो यस्मिन् तत् आयतमानम् । शिवस्य शर्म शिवशर्म, तस्मै शिवशर्मणे । दधातीति दधत् । न समानाः असमानाः, असमानाश्च ते नयाश्च असमाननयाः, तान् असमाननयान् । नास्ति यानं यस्याः सा अयाना, तया अयानया । यतते तत् यतमानम् ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या०—जिनराज्येति । मतं-गणिपिटकलक्षणं नः-अस्माकं इत्यध्याहारः, शिवशर्मणे मुक्तिसुखाय स्तात्-भूयादित्यन्वयः । 'अस् भुवि' धातुः । 'स्तात्' इति क्रियापदम् । किं कर्तृ ? । मतम् । कस्मै ? । शिवशर्मणे । शिवस्य शर्म शिवशर्म इति 'षष्ठीतत्पुरुषः' तस्मै । केषाम् ? । नः । किंविशिष्टं मतम् ? । 'आयतमानम्' आयतो-विपुलो मानः-पूजा परिमाणं वा यस्य तत् । पुनः किंविशिष्टम् ? । यतमानं-प्रयत्नं कुर्वाणम् । पुनः किंविशिष्टम् ? । रचितं-प्रथितम् । कया ? । 'जिनराज्या' जिनानां-तीर्थंकराणां राजिः-श्रेणिः तया अर्थतस्तद्भाषित्वात् । किंविशिष्टया जिनराज्या ? । 'असमाननयानया' आननं-मुखं यानं-गमनं अनयोः पूर्वं 'द्वन्द्वः', ततः असमे-अनन्यकल्पे आननयाने यस्याः सा तया । किंविशिष्टया ? । अनया-प्रत्यक्षोपलक्ष्यमाणया । अत्र 'रोर्यः' (सि० अ० १, पा० ३, सू०२६) इतिसूत्रेण इकारस्य यकारादेशः । पुनः किंविशिष्टया? । 'अयानया' नास्ति यानं-वाहनं यस्याः सा तया । पूर्वपदे यानपदेन गमनमेव व्याख्येयम् । अन्यथा अनेन सह विरोधः स्यात् । मतं किं कुर्वत् ? । दधत् । कान् ? । 'असमाननयान्' असमाना-अनन्यकल्पा ये नयानैगमादयः तान् ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥



**वज्रशृङ्खलायै प्रणामः—**

शृङ्खलभृत् कनकनिभा
या तामसमानमानमानवमहिताम् ।
श्रीवज्रशृङ्खलां कज–
याताममसमानमानमानवमहिताम् ॥ ४ ॥ ३ ॥

—आर्या

ज० वि०—शृङ्खलभृदिति। भो भव्य!–प्राणिन्! त्वं तां श्रीवज्रशृङ्खलां–श्रीवज्रशृङ्खलाभिधां देवतां, श्रीशब्दो महत्त्वप्रतिपादकः पूज्यनामादौ लोके प्रयुज्यते, आनम–प्रणम प्रणामं कुरुष्वेत्यर्थः। कथम् ? 'असमानं' असाहङ्कारं यथा स्यात् तथा। अथवा असमानं–अनन्यसदृशं यथा स्यात् तथेति आनम। अत्र 'आनम' इति क्रियापदम्। कः कर्ता ? 'त्वम्'। कां कर्मतापन्नाम् ? 'श्रीवज्रशृङ्खलाम्'। कथम् ? 'असमानम्'। तामिति तच्छब्दसाचिव्याद् यच्छब्दघटनामाह–या वज्रशृङ्खला। 'शृङ्खलभृत्' शृङ्खलं बिभर्तीति शृङ्खलभृत्। 'कनकनिभा' कनकस्य–सुवर्णस्येव निभा–सादृश्यं यस्याः सा तथा। कान्तिकमनीयत्वसाम्यात्। अत्र वाक्येऽस्तीति क्रियाऽध्याह्रियते।

"अह्ना विना न सूर्यः, सूर्यविहीनश्च वासरो नास्ति।
कर्तृक्रिये तथैव हि, सम्पृक्ते सर्वदा भवतः॥"—आर्या

इतिवचनात्। ततश्च 'अस्ति' इति क्रियापदम्। का कर्त्री ? 'या'। कथंभूता ? 'शृङ्खलभृत्'। पुनः कथंभूता ? 'कनकनिभा'। तां वज्रशृङ्खलां कथंभूताम् ? 'असमानमानमानवमहिताम्' असमानः–असाधारणो मानः–पूजा बोधो वा येषां ते तथा, तादृशैर्मानवैः–नरैः, तेषां उपलक्षणत्वादन्यैर्देवादिभिरपि महितां–पूजिताम्। पुनः कथंभूताम् ? 'कजयाताम्' कजं–कमलं तत्र यातां–प्राप्ताम्। पङ्कजाधिरूढामित्यर्थः। पुनः कथंभूताम् ? 'अनवमहिताम्' अवमं–पापं न विद्यते येषां तेऽनवमास्तेभ्यो हितां–हितकारिणीम्। यद्वा असमौ–असाधारणौ आनमानौ–प्राणाहङ्कारौ येषां ते तथा तादृशैर्मानवैर्महितां–पूजिताम्। आस्तां तावदन्ये प्राणाहङ्कारवर्जिता नराः, बहुप्राणाहङ्कारवद्भिरपि महितामित्यर्थः॥

अथ समासः—शृङ्खलं बिभर्तीति शृङ्खलभृत् 'तत्पुरुषः'। कनकस्येव निभा यस्याः सा कन० 'बहुव्रीहिः'। न विद्यते समानं यस्य सोऽसमानः 'बहुव्रीहिः'। असमानं मानं येषां ते असमा० 'बहुव्रीहिः'। असमानमानाश्च ते मानवाश्च असमा० 'कर्मधारयः'। असमानमानमानवैर्महिता असमा० 'तत्पुरुषः'। तां असमा०। कजे याता कजयाता 'तत्पुरुषः'।

तां कज० । सह मानेन वर्तते यत् तत् समानम् ‘ तत्पुरुषः ’। न समानं असमानम् ‘ तत्पुरुषः ’। यद्वा न विद्यते समानं यस्य तत् असमानम् ‘ बहुव्रीहिः ’ । न विद्यते अवमं येषां तेऽनवमाः ‘ बहुव्रीहिः ’ । अनवमानां हिता अनव० ‘ तत्पुरुषः ’ । तां अनव० । यद्वा आनश्च मानश्च आनमानौ ‘ इतरेतरद्वन्द्वः ’ । असमौ आनमानौ येषां ते असमानमानाः ‘ बहुव्रीहिः ’ । असमानमानाश्च ते मानवाश्च असमा० ‘ कर्मधारयः ’ । असमानमानमानवैर्महिता असमा० ‘ तत्पुरुषः ’ । तां असमा० ॥ इति काव्यार्थः ॥ ४ ॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीशम्भवजिनस्तुतिवृत्तिः ॥ ३ ॥

सि० वृ०—शृङ्खलभृदिति । भो भव्य ! प्राणिन् ! त्वं श्रीवज्रशृङ्खलां—वज्रशृङ्खलाभिधां देवतां, श्रीशब्दो महत्त्वप्रतिपादकः पूज्यनामादौ लोके प्रयुज्यते, असमानं—अनन्यसदृशं यथा स्यात् तथा आनम—प्रणामं कुरु इत्यर्थः । आङ्पूर्वक ‘ णम प्रह्वीभावे ’ धातोः ‘ आशीःप्रेरणयोः ’ (सा० सू० ७०३ ) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनम् । हिः । ‘ अप् कर्तरि ’ ( सा० सू० ६९१ ) अप् । ‘ आदेः ष्णः स्नः ’ ( सा० सू० ७४८ ) इति णकारस्य नकारः । ‘ अतः ’ ( सा० सू० ७०९ ) इति हेर्लुक् । तथाच ‘ आनम ’ इति सिद्धम् । लोट् इति संज्ञा पाणिनीयानाम् त्रयोदश स्वरमध्यः ( ? ) । अत्र ‘ आनम ’ इति क्रियापदम् । कः कर्ता ? । त्वम् । कां कर्मतापन्नाम् ? । वज्रशृङ्खलाम् । कथम् ? । असमानाम् । तामिति तच्छब्दस्याभिव्याप्य यच्छब्दघटनामाह—या वज्रशृङ्खला शृङ्खलभृत्—शृङ्खलं बिभर्तीति शृङ्खलभृत्, कनकनिभा—कनकस्य—सुवर्णस्येव निभा—सादृश्यं यस्याः सा तथा । कान्तिकमनीयत्वसाम्यात् । “ कल्याणं कनकं महारजतरैगांगेयरुक्माण्यपि ” इति हैमः ( का० ४, श्लो० १०९ ) । अत्र वाक्ये अस्तीति क्रियाऽध्याह्रियते ।

“ अह्ना विना न सूर्यः, सूर्यविहीनश्च वासरो नास्ति ।
कर्तृक्रिये तथैव हि, संपृक्ते सर्वदा भवतः ” ॥—आर्या

इतिवचनात् । ततश्च ‘ अस्ति ’ इति क्रियापदम् । का कर्त्री ? । या । कथंभूता ? । शृङ्खलभृत् । पुनः कथंभूता ? । कनकनिभा । तां वज्रशृङ्खलां कथंभूताम् ? । ‘ असमानमानमानवमहिताम् ’ असमानः—असाधारणो मानः पूजा बोधो वा येषां ते असमानमानाः, तादृशैः मानवैः—मनुष्यैः तेषामुपलक्षणत्वादन्यैर्देवादिभिरपि महिता—पूजिता ताम् । यद्वा असमौ—असाधारणौ आनमानौ—प्राणाहङ्कारौ येषां ते तथोक्ताः, तादृशैः मानवैः महिता—पूजिताम् । आस्तां तावदन्ये प्राणाहङ्कारवर्जिता नराः बहुप्राणाहङ्कारवद्भिरपि मानवैः पूजितामित्यर्थः । पुनः कथंभूताम् ? । ‘कजयातां’ कजं—कमलं तत्र यातां—प्राप्तां, पङ्कजस्थितामित्यर्थः। पुनः कथंभूताम् ? । ‘अनवमहिताम्’ अवमं—पापं न विद्यते येषां ते अनवमाः—अनघाः तेभ्यो हितां—हितकारिणीम् । “ अपकृष्टं प्रतिकृष्टं याप्यं रेफोऽवमं ब्रुवम् ” इति हैमः ( का० ६, श्लो० ७८ ) । स्कन्धकं छन्दः ॥ ४ ॥

॥ इति शम्भवजिनस्तुतिवृत्तिः ॥

सौ० वृ०—शृङ्खलभृदिति । हे भव्य ! त्वं तां वज्रशृङ्खलाभिधानां देवीं असमानं-गताहङ्कारं यथा स्यात् तथा आनम इत्यन्वयः । 'आनम' इति क्रियापदम् । कः कर्ता ? । त्वम् । 'आनम' प्रणम । कां कर्मतापन्नाम् ? । श्रीवज्रशृङ्खलाम् । श्रीशब्दो महत्त्वप्रतिपादकः पूज्यनाम्नां आदौ लोके प्रयुज्यते । कथम् ? । असमानं यथा स्यात् तथा । किंविशिष्टां वज्रशृङ्खलाम् ? । असमानः-असदृशः मानो-गर्वो येषां ते तादृशाः मानवा-मनुष्याः तैः महिता-पूजिता असमानमानमानवमहिता, तां 'असमानमानमानवमहिताम्' । पुनः किंविशिष्टां श्रीवज्रशृङ्खलाम् ? । 'कजयातां' पद्मासनाम् । पुनः कथंभूतां श्रीवज्रशृङ्खलाम् ? । 'तां' प्रसिद्धाम् । तां काम् ? । या देवी 'शृङ्खलभृत्' शृङ्खलाभरणधारिणी । पुनः कथं० ? । 'कनकनिभा' सुवर्णच्छविः । पुनः किंविशिष्टां श्रीवज्रशृङ्खलाम् ? । अवमं-पापं तन्नास्ति येषां ते अनवमाः-निरवद्याः तादृशा ये मानवाः तेभ्यो हिता-हितकारिणी, अनवमहिता तां 'अनवमहिताम्' । अथवा इदं व्याख्यानम्, असमौ-असदृशौ आनमानौ-प्राणाहङ्कारौ येषां ते तादृशा मानवाः तैः महिता ताम् । इति वृत्तार्थः ॥

अथ समासः—शृङ्खलं बिभर्तीति शृङ्खलभृत् । कनकवत् निश्चिता भा-कान्तिः यस्याः सा । अथवा कनकवत् निभा-सदृशा । न समानः असमानः, असमानो मानो येषां ते असमानमानाः, असमानमानाश्च ते मानवाश्च असमानमानमानवाः, असमानमानमानवैः महिता असमानमानमानवमहिता, तां असमानमानमानवमहिताम् । श्रिया युक्ता वज्रशृङ्खला श्रीवज्रशृङ्खला, तां श्रीवज्रशृङ्खलाम् । कजेन यातं-गमनं यस्याः सा कजयाता, तां कजयाताम् । मानेन सहितः समानः, स न विद्यते यत्र तत् असमानं, असमानं यथा स्यात् तथा । न विद्यते अवमं पापं येषां ते अनवमाः । अनवमाश्च ते मानवाश्च अनवममानवाः, अनवममानवेभ्यः हिता अनवममानवहिता, तां अनवममानवहिताम्[1] । अथवा असमानौ-असदृशौ आनौ-प्राणौ येषां ते तादृशाः मानवाः तैर्महिता इत्यपि समासः ॥ इति चतुर्थवृत्तार्थः ॥ ४ ॥

श्रीशम्भवजिनेशस्य, स्तुतेरर्थः स्फुटीकृतः ।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना ॥ १ ॥

दे० व्या०-शृङ्खलभृदिति । तां श्रीवज्रशृङ्खलां देवीं असमानं-निरहङ्कारं यथा स्यात् तथा त्वं आनम-नमस्कुरु इत्यन्वयः । 'णम प्रह्वीभावे' धातुः । 'आनम' इति क्रियापदम् । कः कर्ता ? । त्वम् । कां कर्मतापन्नाम् ? । श्रीवज्रशृङ्खलाम् । श्रीशब्दोऽत्र महत्त्वख्यापकः । यत्तदोर्नित्याभिसंबन्धात् या वज्रशृङ्खला शृङ्खलाभरणभृत् कनकनिभा च । अस्तीत्यध्याहारः। 'अस्ति' इति क्रियापदम् । का कर्त्री ? । वज्रशृङ्खला । किंविशिष्टा वज्रशृङ्खला ? । 'शृङ्खलाभरणभृत्'[2] शृङ्खला-आभरणविशेषः तां बिभर्तीति शृङ्खलाभृत् । क्विप्प्रत्ययान्तो निर्देशः । 'कनकनिभा' सुवर्णसदृशा, कनकेन निभा कनकनिभा इति समासः । पुनः किंविशिष्टाम् ? । 'असमानमानमानवमहिताम्' असमानः-असाधारणः मानः-पूजा बोधः स्मयो वा येषां एवंविधा ये मानवाः-मर्त्यास्तैः पूजितां-महिताम् । पुनः किंविशिष्टाम् ? । 'कजयातां' कजे-कमले यातां-प्राप्ताम्, उपविष्टामितियावत् । पुनः किंविशिष्टाम् ? । 'अनवमहितां' अवमं-पापं न विद्यते येषां ते अनवमा-निष्पापाः, तेषां हितां-वत्सलाम् ॥ इति चतुर्थवृत्तार्थः ॥ आर्यावृत्तम् ॥

"लक्ष्मैतत् सप्तगणा, गोपेता भवति नेह विषमे यः ( जः ? ) ।
षष्ठोऽयं च न लघु वा, प्रथमेऽर्धे नियतमार्यायाः ॥"

इति तल्लक्षणम् ( वृत्तरत्नाकरे ) ॥ ४ ॥

---

१ न चैतादृशं पदमस्मिन् पद्ये, तस्मात् 'अनवमानां हिता अनवम०, तां अनवम०' इति प्रतिभाति

२ 'शृङ्खलभृत्' इति प्रतिभाति ।

# ४ श्रीअभिनन्दनजिनस्तुतयः

अथ अभिनन्दनस्य प्रार्थना—

त्वमशुभान्यभिनन्दन ! नन्दिता-
ऽसुरवधूनयनः परमोदरः।
स्मरकरीन्द्रविदारणकेसरिन् !
सुरव ! धूनय नः परमोऽदरः ॥ १ ॥

—द्रुतविलम्बितम्

ज० वि०—त्वमशुभेति। हे अभिनन्दन !–अभिनन्दननामन् ! त्वं–भवान् नः–अस्माकं अशुभानि–असुकृतानि पापानीतियावत् धूनय–कम्पय, लक्षणया दूरीकुरुष्वेत्यर्थः, इति क्रियाकारकप्रयोगः। अत्र 'धूनय' इति क्रियापदम्। कः कर्ता ? 'त्वम्'। कानि कर्मतापन्नानि ? 'अशुभानि'। केषाम् ? 'नः'। त्वं कथंभूतः ? 'नन्दितासुरवधूनयनः' नन्दितानि–प्रमोदितानि असुरवधूनां–देवविशेषसम्बन्धिनीनां स्त्रीणां नयनानि–लोचनानि येन स तथा। यद्वा नन्दितासुः अवधूनयनश्चेति पृथगेव द्वे विशेषणे। तयोश्चायमर्थः—नन्दिता असवो येन स तथा। अत्र यद्यपि असुशब्देन प्राणा एव प्रतिपाद्यन्ते, आनन्दस्य त्वात्मधर्मत्वेन तेष्वसम्भवः, तथापि धर्मधर्मिणोः कथंचिदभेदप्रतिपादनात् असुशब्देनासुमन्तोऽप्युच्यन्ते इत्युपपन्नमेवेदम्। तथा न विद्येते वधूषु–स्त्रीषु विषयेषु नयने यस्य स तथा। ब्रह्मचारित्वेन स्त्रीणां निभालने पराङ्मुखत्वात्। पुनः कथंभूतः ? 'परमोदरः' परेभ्यः–आत्मनोऽन्येभ्यः प्राणिभ्यः मोदं–हर्षं राति–ददाति इति परमोदरः। पुनः कथं० ? 'परमः' उत्कृष्टः। पुनः कथं० ? 'अदरः' न विद्यते दरो–भयं यस्य यस्माद् वा स तथा। यद्वा परमोदर इत्येकमेवेदं विशेषणम्। तथा चायमर्थः–परमं–उत्कृष्टं महदितियावत् उदरं–कुक्षिर्यस्य स तथा। भूयसां परमर्मभिदां रहस्यानां ज्ञातृत्वेऽप्यन्यत्राप्रकटनाद् गम्भीर इति भावार्थः। अवशिष्टे च द्वे सम्बोधने तयोश्चायमर्थः–हे 'स्मरकरीन्द्रविदारणकेसरिन्'! स्मरः–कन्दर्पः स एव दुर्धरत्वात् करीन्द्रो–गजेन्द्रः तस्य यद् विदारणं–छेदनं तत्र केसरीव–सिंह इव केसरी तत्सम्बोधनं हे स्मर०। हे 'सुरव !' सुष्ठु रवः–शब्दो यस्य स तथा तत्सम्बो० हे सुरव !॥

अथ समासः—न शुभानि अशुभानि 'तत्पुरुषः'। असुराणां वध्वः असुरवध्वः 'तत्पुरुषः'। असुरवधूनां नयनानि असुर० 'तत्पुरुषः'। नन्दितानि असुरवधूनयनानि

येन स नन्दिता० ‘ बहुव्रीहिः ’ । पृथग् विशेषणपक्षे त्वेवम्—नन्दिता असवो येन स नन्दितासु ‘ बहुव्रीहिः ’ । वधूषु नयने यस्य स वधूनयनः ‘ बहुव्रीहिः ’ । न वधूनयनोऽवधूनयनः ‘ तत्पुरुषः ’ । मोदं रातीति मोदरः ‘ तत्पुरुषः ’ । परेभ्यो मोदरः परमोदरः ‘ तत्पुरुषः ’ । करिणामिन्द्रः करीन्द्रः ‘ तत्पुरुषः ’ । स्मर एव करीन्द्रः स्मरकरीन्द्रः । स्मरश्चासौ करीन्द्रश्च स्मरकरीन्द्र इति वा । उभयथाऽपि ‘ कर्मधारयः ’ । स्मरकरीन्द्रस्य विदारणं स्मरकरीन्द्रवि० ‘ तत्पुरुषः ’ । स्मरकरीन्द्रविदारणे केसरी स्मरकरीन्द्रविदारणके० ‘तत्पुरुषः’ । तत्सम्बो० हे स्मरक० । शोभनो रवो यस्य स सुरवः ‘ बहुव्रीहिः ’ । न विद्यते दरो यस्य सोऽदरः ‘ बहुव्रीहिः ’ । एकविशेषणपक्षे त्वेवम्—परमं उदरं यस्य स परमोदरः ‘ बहुव्रीहिः ’ ॥ इति काव्यार्थः ॥ १ ॥

सि० वृ०—त्वमशुभेति । हे अभिनन्दन ! । अभिनन्द्यते—स्तूयते देवेन्द्राद्यैः इत्यभिनन्दनः । नन्द्यादेर्युः । योश्चानादेशः । तस्य सम्बोधनं हे अभिनन्दन ! । इत्यत्र ‘ हैहयोः स्वरे सन्धिर्न वक्तव्यः ’ ( सा० सू० ७० ) । अभिनन्दननामजिन ! त्वं नः—अस्माकं अशुभानि—असुकृतानि पापानि इतियावत् धूनय—कम्पय लक्षणया दूरीकुरुष्वेत्यर्थः । ण्यन्त ‘ धूञ् कम्पने ’ धातोः ‘ आशीःप्रेरणयोः ’ ( सा० सू० ७०१ ) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनम् । धूञ् अग्रे हिः ‘ चुरादेः ’ ( सा० सू० १०३१ ) इति ञि । ‘प्रीञ्धूञोर्नुक्’ (सा०सू० १०५९), धूञ् हे जाते सति ‘अप् कर्तरि’ (सा० सू० ६९१ , ‘गुणः’ ( सा० सू० ६९२ ),‘ए अय’ ( सा० सू० ४१ )‘अतः’ ( सा० सू० ७०९ ) इति हेर्लुक्, ‘स्वरहीनं०’ ( सा० सू० ३६ ) । तथाच ‘ धूनय ’ इति सिद्धम् । अत्र ‘धूनय’ इति क्रियापदम् । कः कर्ता ? । त्वम् । कानि कर्मतापन्नानि ? । अशुभानि । केषाम् ? । नः । अस्मच्छब्दस्य षष्ठीबहुवचने अस्माकमित्यस्य नसादेशः । कथंभूतस्त्वम् ? । ‘ नन्दितासुरवधूनयनः ’ नन्दितानि—प्रमोदितानि असुरवधूनां—देवविशेषसम्बन्धिनीनां स्त्रीणां नयनानि—लोचनानि येन स तथा । यद्वा नन्दितासुः अवधूनयनश्चेति पृथगत्र द्वे विशेषणे । ततश्चायमर्थः—नन्दिताः असवः—प्राणिनो येन स तथा । यद्यपि असुशब्देन प्राणा एवोच्यन्ते आनन्दस्य चात्मधर्मत्वात् तेष्वसम्भवः, तथापि धर्मधर्मिणोः कथंचिदभेदादसुशब्देनामुमन्त एवोच्यन्त इत्युपपन्नमेवैतत् । तथा न विद्यते वधूषु-स्त्रीषु विषयेषु नयनं यस्य स तथा । ब्रह्मचारित्वेन स्त्रीणां निभालने पराङ्मुखत्वादिति भावः । पुनः कथंभूतः ? । ‘ परमोदरः ’ परेभ्यः—आत्मनोऽन्येभ्यः प्राणिभ्यः मोदं—हर्षं राति—ददातीति परमोदरः । ‘ क्वचित् ’ ( सि०अ०१,पा०१, सू० १७१ ) इति डः । पुनः कथंभूतः ? । ‘अदरः’ नास्ति दरः—भयं यस्माद् यस्य वा सः अदरः । “दरोऽस्त्रियां भये श्वभ्रे” इत्यमरः ( श्लो० २७०४ ) । यद्वा परमोदर इत्येकमेवेदं विशेषणम् । तथा चायमर्थः—परमं—उत्कृष्टं महदितियावत् उदरं-कुक्षिर्यस्य स तथा । भूयसां परमर्मभिदां—रहस्यानां ज्ञातृत्वेऽप्यन्यत्राप्रकाशनाद् गम्भीर इति हार्दम् । अवशिष्टे द्वे सम्बोधने । तयोश्चायमर्थः—हे ‘ स्मरकरीन्द्रविदारणकेसरिन् ’ । स्मरः-कामः स एव दुर्धरत्वात् करीन्द्रो—गजेन्द्रः तस्य यद् विदारणं—

---

१ परिभिनन्दिग्रहादेर्युणिनि ( सा० सू० ११२९ ) ।

पाटनं द्वैधीकरणमितियावत् तत्र केसरीव केसरी–सिंहः तस्य सं० हे स्मर०केसरिन् ! । 'उपमितं व्याघ्रा [ दिभिः सामान्याप्रयोगे ] ' ( पा० अ० २, पा० १, सू० ५६ ) इति समासः । हे 'सुरव' ! सुष्ठु–शोभनो रवो–देशनाध्वनिः यस्य स तथा तस्य सम्बोधनं हे सुरव ! ॥ १ ॥

सौ० वृ०–त्वमशुभेति । यः सकलसुखकृद् भवति स जिनः सर्वजनाभिनन्दनो भवति । अनेन सम्बन्धेन आयातस्य श्रीअभिनन्दनजिनस्य स्तुतिव्याख्यानं प्रारभ्यते । हे 'अभिनन्दन' ! जगदानन्दकारक ! । स्मरः–कामः स एव करीन्द्रः–हस्ती तस्य विदारणं–भेदनं तत्र केसरी सिंह इव सिंहः तस्य सम्बोधनं हे स्मरकरीन्द्रविदारणकेसरिन्' ! । सुष्ठु–शोभनो रवः–शब्दो यस्य स पञ्चत्रिंशद्वाग्गुणयुक्तत्वात् तस्य सं० 'सुरव' ! । त्वं नः–अस्माकं अशुभानि–अपुण्यानि धूनय–अवधूनय इत्यन्वयः । 'धूनय' इति क्रियापदम् । कः कर्ता ? । 'त्वं' भवान् । 'अवधूनय' स्फेटय–कम्पय । कानि कर्मतापन्नानि ? । 'अशुभानि' शुभेतराणि । केषाम् ? । 'नः' अस्माकम् । किंविशिष्टः त्वम् ? । नन्दिता–आनन्दिता असवः प्राणा यन स 'नन्दितासुः' । धर्मधर्मिणोरभेदोपचारात् असुशब्देन प्राणिन एव उच्यन्ते । पुनः किंविशिष्टः त्वम् ? । न रतः वधूषु नयने–लोचने यस्य सः 'अवधूनयनः' । यद्वा नन्दितानि–आनन्दितानि असुरवधूनां–देवस्त्रीणां नयनानि येन स 'नन्दितासुरवधूनयनः' । पुनः किंविशिष्टः त्वम् ? । परेभ्यः–अन्यभ्यः मोदं–हर्षं राति–ददाति इति 'परमोदरः' । पचादित्वादप्रत्ययः । पुनः किंविशिष्टः त्वम् ? । 'परमः' प्रकृष्टः–प्रधानः । पुनः किं० त्वम् ? । 'अदरः' निर्भयः । यद्वा परमं–प्रकृष्टं उदरं–जठरं सकलप्रवचनोक्तवाक्याधारत्वात् ॥ इति पदार्थः ॥

अथ समासः—अभि–सामस्त्येन सर्वप्रकारेण नन्दयतीति अभिनन्दनः, तस्य सं० हे अभिनन्दन! । नन्दिता असवः प्राणिनो येन स नन्दितासुः । नास्ति वधूषु नयनं यस्य सः अवधूनयनः । यद्वा एकत्र विशेषणे असुराणां वध्वः असुरवध्वः, असुरवधूनां नयनानि असुरवधूनयनानि, नन्दितानि असुरवधूनयनानि येन स नन्दितासुरवधूनयनः । परैः–योगिभिः मीयते–ज्ञायते इति परमः । यद्वा परान्–शत्रून् रागद्वेषादीन् मीनाति–हिनस्तीति परमः । अथवा परा–प्रकृष्टा मा–लक्ष्मीः यस्य स परमः । न विद्यते दरो–भयं यस्य सः अदरः । यद्वा एकत्र विशेषणे परमं उदरं यस्य स परमोदरः । करः एषां अस्तीति करिणः, करिणां इन्द्रः करीन्द्रः, स्मर एव करीन्द्रः स्मरकरीन्द्रः, स्मरकरीन्द्रस्य विदारणं स्मरकरीन्द्रविदारणं, स्मरकरीन्द्रविदारणे केसरीव केसरी स्मरकरीन्द्रविदारणकेसरी, तस्य सं० हे स्मरकरीन्द्रविदारणकेसरिन् ! । सुष्ठु रवो यस्य स सुरवः, तस्य सं० हे सुरव ! । परेभ्यो मोदं राति–ददाति इति परमोदरः । द्रुतविलम्बितच्छन्दसा स्तुतिरियम् ॥ इति प्रथमवृत्तार्थः ॥ १ ॥

दे० व्या० त्वमशुभेति । हे अभिनन्दन ! त्वं नः–अस्माकं अशुभानि–पापानि धूनय–विनाशय इत्यन्वयः 'धूञ् कम्पने' धातुः । 'धूनय' इति क्रियापदम् । कः कर्ता ? । त्वम् । कानि कर्मतापन्नानि ? । अशुभानि । "कर्णिका स्यादथाशुभम्" इत्यभिधानचिन्तामणिः ( का० ६, श्लो० १६ ) । केषाम् ? । नः । किंविशिष्टस्त्वम् ? । 'नन्दितासुः' नन्दिताः–आनन्दं प्रापिताः असवः–प्राणिनो येन स तथा । धर्मधर्मिणोः कथञ्चिदभेदादसुशब्देन असुमन्त एवोच्यन्ते । पुनः किंविशिष्टः ? । अवधूनयनः वधूषु–दारासु न विद्येते नयने–लोचने यस्य स तथा । प्रत्याहारत्वेन तत्संभवात् । "दाराः क्षेत्रं वधूर्भार्या" इत्यभिधानचिन्तामणिः ( का० ३, श्लो० १७७ ) यद्वा नन्दितानि–आनन्दं प्रापितानि असुरवधूनां–दानवस्त्रीणां नयनानि येन स तथेत्येकमेव पदम् । पुनः किंविशिष्टः ? । 'परमोदरः' परेभ्यो मोदं–हर्षं राति–ददाति 'क्वचित्' ( सि० अ० ५, पा० १, सू० १७१ ) इति डप्रत्यये परमोदरः । यद्वा परमं–परमगभीरत्वेन प्रकृष्टं उदरं यस्य स तथेत्यर्थः । पुनः किंविशिष्टः ? । 'परमोदरः'

परमः—प्रकृष्टः अदरो-निर्भयः विशेषणद्वयम्। 'स्मरकरीन्द्रविदारणकेसरिन्!' इति। स्मरः—कामः स एव करीन्द्रः—चतुर्दन्तः तस्य विदारणे-विस्फोटने केसरीव केसरी तस्यामन्त्रणम् ' सुरव!' इति। सुष्ठु-शोभनो जगदाल्हादकारित्वात् रवो—देशनाध्वनिः यस्य स तस्यामन्त्रणम्। भगवतः सम्बोधनपदद्वयम्॥ इति प्रथमवृत्तार्थः॥ १॥



समग्रजिनेश्वराणामभ्यर्थना—

जिनवराः! प्रयतध्वमितामया
मम तमोहरणाय महारिणः।
प्रदधतो भुवि विश्वजनीनता—
ममतमोहरणा यमहारिणः॥ २॥

—द्रुत०

ज० वि०—जिनवरा इति। हे जिनवराः! जिनाः—सामान्यकेवलिनः तेषु वराः—मुख्यास्तीर्थंकरास्तत्सम्बो० हे जिनवराः! भुवि—पृथिव्याम् यूयं मम तमोहरणाय तमः पापं अज्ञानं वा तस्य हरणं—अपहारस्तस्मै प्रयतध्वं—प्रयत्नं कुरुध्वम्। कस्याम्? 'भुवि' पृथिव्याम्। इदं पदं अग्रे वक्ष्यमाणया प्रदधत इत्यनयापि क्रियया योजयितुं युक्तमेवेति क्रियाकारकान्वयः। तत्र 'प्रयतध्वम्' इति क्रियापदम्। के कर्तारः? 'यूयम्'। कस्मै? 'तमोहरणाय'। कस्य? 'मम'। जिनवराः किं कुर्वन्तः? 'प्रदधतः' धारयतः धारयन्तो वा। कां कर्मतापन्नाम्? 'विश्वजनीनताम्' विश्वे—सर्वे जना—लोकाः विश्वजनानां हितो—विश्वजनीनस्तस्य भावो विश्वजनीनता ताम्। जिनवराः कथंभूताः? 'इतामयाः' इता—गता आमया—रोगा येभ्यस्ते तथा। पुनः कथंभूताः? 'महारिणः' महान्ति-महत्प्रमाणानि अरीणि—चक्राणि धर्मचक्राणि येषां ते तथा। पुनः कथं०? 'अमतमोहरणाः' अमतौ-अनभिप्रेतौ मोहरणौ—अज्ञानसंग्रामौ येषां ते तथा। अथवा मतानि—सांख्यादीनि तत्र यो मोहो—मूढत्वं तस्मात् यो रणः—कलहो वादलक्षणः ततो न मतोमोहरणो येषां ते तथा। पुनः कथं०? 'यमहारिणः' यमः—कृतान्तः मरणमितियावत् तं हरन्तीत्येवंशीला यमहारिणः। अथवा यमा-अहिंसादयः। "अहिंसासूनृतास्तेयब्रह्माकिञ्चनता यमाः" इत्यभिधानचिन्तामणिवचनात् (का० १ श्लो० ८१)। तैः हारिणः—मनोहराः। एतानि सर्वाण्यपि विशेषणानि चेत् सम्बोधनपुरस्कारेण व्याख्यायन्ते तथापि न्याय्यमेव।

**अथ समासः**—जिनानां जिनेषु वा वराः 'तत्पुरुषः'। इता आमया येभ्यस्ते इतामयाः 'बहुव्रीहिः'। तमसो हरणं तमोहरणं 'तत्पुरुषः'। तस्मै तमो०। महान्ति अरीणि येषां ते महारिणः 'बहुव्रीहिः'। विश्वे च ते जनाश्च विश्वजनाः 'कर्मधारयः'। विश्वजनानां हितो विश्वजनीनः। विश्वजनीनस्य भावो विश्व० 'तत्पुरुषः'। तां विश्व०। मोहश्च रणश्च मोहरणौ 'इतरेतरद्वन्द्वः'। न मतौ अमतौ 'तत्पुरुषः'। अमतौ मोहरणौ येषां ते अमतमोहरणाः 'बहुव्रीहिः'। यद्वा मतेषु मोहो मतमोहः 'तत्पुरुषः'। मतमोहात् रणो मतमोहरणः 'तत्पुरुषः'। न विद्यते मतमोहरणो येषां ते अमत० 'बहुव्रीहिः'। यमस्य हारिणो यमहारिणः। यमं हरन्तीति यमहारिण इति वा। उभयथाऽपि 'तत्पुरुषः'। अथवा यमैर्हारिणो यमहारिणः 'तत्पुरुषः'। इति काव्यार्थः॥ २॥

**सि० वृ०**—जिनवरा इति। जिनाः—सामान्यकेवलिनः तेषु वराः—प्रधानाः तीर्थङ्कराः तेषां सम्बोधनं हे जिनवराः!। यूयं मम तमोहरणाय तमः—पापं अज्ञानं वा तस्य हरणं—अपहारः तस्मै भुवि—पृथिव्यां प्रयतध्वं—प्रयत्नं कुरुध्वम् इत्यर्थः। 'यती प्रयत्ने' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०१) कर्तरि आत्मनेपदे मध्यमपुरुषबहुवचनम्। प्रपूर्वकः यत् अग्रे ध्वम्। 'अप्०' (सा० सू० १९१), 'स्वरहीनं०' (सा० सू० ३६)। तथाच प्रयतध्वमिति सिद्धम्। अत्र 'प्रयतध्वम्' इति क्रियापदम्। के कर्तारः?। यूयम्। कस्मै?। तमोहरणाय। कस्य?। मम। जिनवराः किं कुर्वन्तः?। प्रदधतः—धारयतः। कां कर्मतापन्नाम्?। 'विश्वजनीनतां' विश्वजनानां—सर्वलोकानां हितं विश्वजनीनम्, तस्य भावः तत्ता तां विश्वजनीनताम्। 'आत्मविश्वमातृभोगोत्तरपदात्' इति खः खस्य च इनादेशः। कस्याम्?। भुवि—पृथिव्याम्। कथंभूता जिनवराः?। 'महारिणः' महान्ति—तेजोवन्ति अरीणि—चक्राणि येषां ते महारिणः धर्मचक्रवर्तिनः, तेषां पुरो धर्मचक्रचालनादिति भावः। "अरं शीघ्रे च चक्राङ्गे शीघ्रगे पुनरन्यवत्" इति **विश्वः**। पुनः कथंभूताः?। 'अमतमोहरणाः' मोहश्च रणश्च मोहरणौ 'इतरेतरद्वन्द्वः'। अमतौ—अनभिप्रेतौ मोहरणौ—अज्ञानसङ्ग्रामौ येषां ते अमतमोहरणाः इति 'बहुव्रीहिः'। "अस्त्रियां समरानीकरणाः कलहविग्रहौ" इत्यमरः (श्लो० १९७६)। यद्वा मतानि साङ्ख्यादीनि चार्वाकादीनि वा तत्र यो मोहः—मूढत्वं स्वदर्शनपक्षपातित्वमिति वा तस्माद् यो रणः—कलहः वाग्वादरूपः, ततो न मतोमोहरणो येषां ते तथा। पुनः कीदृशाः?। 'यमहारिणः' यमः—कृतान्त इतियावत् तं हरतीत्येवंशीला यमहारिणः। "यमः कृतान्तः पितृदक्षिणाशा [ प्रेतात्पतिः ]" इति **हैमः** (का० २, श्लो० ९८)। अथवा यमाः—अहिंसादयः, "अहिंसासत्यमस्तेयब्रह्माकिञ्चनता यमाः" इति (अभि० का० १, श्लो० ८१) वचनात्। तैः यमैः हारिणो मनोहरा यमहारिणः—एतानि सर्वाण्यपि विशेषणानि चेत् सम्बोधनपुरस्कारेण व्याख्यायन्ते न्याय्यमेव तथापि॥ २॥

**सौ० वृ०**—जिनवरा इति। हे जिनवराः! यूयं मम तमोहरणाय-अज्ञानापनोदनाय प्रयतध्वं इत्यन्वयः। 'प्रयतध्वम्' इति क्रियापदम्। के कर्तारः?। यूयम्। 'प्रयतध्वं' प्रकर्षेण यत्नं-प्रयत्नं

कुरुध्वम् । कस्मै ? । तमोहरणाय । कस्य ? । मम । किंविशिष्टा जिनवराः ? । इता-गता आमया-रोगा येभ्यः ते 'इतामयाः'। पुनः किं० जिनवराः ? । महान्ति-प्रौढानि अरीणि-धर्मचक्रादीनि येषां ते 'महारिणः'। जिनवराः किं कुर्वन्तः ? । 'प्रदधतः प्रकर्षेण दधतः-धारयन्तः । कां कर्मतापन्नाम् ? । 'विश्वजनीनतां' सकलजनेषु मैत्रीभावम् । कस्याम् ? । 'भुवि' पृथिव्याम् । किंविशिष्टा जिनवराः ? । अमतौ-अमान्यौ मोहो-मोहनीयकर्म रणः-संग्रामः तौ द्वौ येषां ते 'अमतमोहरणाः'। पुनः किं० जिनवराः ? । 'यमहारिणः' मृत्युहरणशीलाः । अथवा मतमोहो-दर्शनमूढत्वं तस्मात् रणः-कलहो वादलक्षणो येषां ते 'अमतमोहरणाः'। तथा यमा-अहिंसासूनृतास्तेयब्रह्माकिञ्चनताः तैः हारिणो-मनोहराः 'यमहारिणः'। इति पदार्थः ॥

अथ समासः-जयन्ति रागादीन् शत्रून् इति जिनाः-सामान्यकेवलिनः, तेषु वरा जिनवराः-तीर्थकरनामकर्मोदयवर्तिनः । इताः-क्षयं गता आमया-रोगा येभ्यः ते इतामयाः । तमसां हरणं तमोहरणं, तस्मै तमोहरणाय । महान्ति अरीणि चक्राणि येषां ते महारिणः । विश्वजनेषु हितं इति विश्वजनीनं, विश्वजनीनस्य भावो विश्वजनीनता, तां विश्वजनीनताम् । हितवात्सल्यार्थे जनीनप्रत्ययः । मोहश्च रणश्च मोहरणौ, न मतौ अमतौ, अमतौ मोहरणौ येषां ते अमतमोहरणाः । यद्वा मतस्य मिथ्यादर्शनस्य मोहः मतमोहः, मतमोहात् रणः मतमोहरणः, न विद्यते मतमोहरणो येषां ते अमतमोहरणाः । यमं हारयन्तीति यमहारिणः, अथवा यमाः-पञ्च महाव्रतानि तैः कृत्वा हारिणः-शोभमानाः यमहारिणः ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥

दे० व्या०-जिनवरा इति । हे जिनवराः !-तीर्थंकराः ! यूयं मे-मम तमोहरणाय प्रयतध्वं-प्रकर्षेण यत्नं कुरुध्वम् इत्यन्वयः । 'यती प्रयत्ने' धातुः । 'प्रयतध्वम्' इति क्रियापदम् । के कर्तारः ? । यूयम् । कस्मै ? । 'तमोहरणाय' तमः-अज्ञानं पापं वा तस्य हरणं-अपनयनं तस्मै । कस्य ? । मम । किंविशिष्टा जिनवराः ? । 'इतामयाः' इता-गता आमया-रोगा येभ्यस्ते तथा । "आम आमय आकल्पः" इत्यभिधानचिन्तामणिः ( का० ३, श्लो० १२७ ) । पुनः किंविशिष्टाः ? । 'महारिणः' महान्ति-प्रकृष्टानि अरीणि-चक्राणि येषां ते तथा धर्मचक्रवर्तित्वात् । पुनः किंविशिष्टाः ? । 'अमतमोहरणाः' मोहो-भ्रमः रणः-संग्रामः अनयोः पूर्वं द्वन्द्वः, ततः अमतौ-अनभिप्रेतौ मोहरणौ येषां ते तथेति समासः । अमो-रोगः तमः-अज्ञानम् ते हरन्ति-नाशयन्ति इति अमतमोहरणाः इत्यर्थो वा । पुनः किंविशिष्टाः ? । 'यमहारिणः' यमाः महाव्रतानि तैः हारिणः-मनोहराः- 'अहिंसासत्यमस्तेयब्रह्माकिंचनता यमाः" इत्यभिधानचिन्तामणिः ( का० १, श्लो० ८१ ) । यमा एव हारः कण्ठभूषणं येषां ते तथा । यमं-मृत्युं हरन्तीत्येवंशीला यमहारिणः इति प्राञ्चः । जिनवराः किं कुर्वन्तः ? । प्रदधतः । काम् ? । 'विश्वजनीनतां' विश्वस्य-जगतः जनीनतां-हितकारिताम् । कस्याम् ? । भुवि ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥



आगम-स्तुतिः—

असुमतां मृतिजात्यहिताय यो
जिनवरागम ! नो भवमायतम् ।
प्रलघुतां नय निर्मथितोद्धता-
ऽजिनवरागमनोभवमाये ! तम् ॥ ३ ॥

—द्रुत०

१ '०मायतम्' इत्येकं पदं वा ।

ज० वि०—असुमतामिति । हे जिनवरागम !—हे तीर्थंकरसिद्धान्त ! त्वं नः—अर तं भवं-संसारं मलघुतां-ह्रसीयस्त्वं नय—प्रापय इति क्रियाकारकसम्बन्धः । अत्र ' इति क्रियापदम् । कः कर्ता ? ' त्वम् ' । कं कर्मतापन्नम् ? ' भवम् ' । नीधातोर्द्विकर्मक द्वितीयं कर्म आह—कां कर्मतापन्नाम् ? ' प्रलघुताम् ' । केषाम् ? ' नः ' । यत्तदोरभिसम्ब तं कम् ? यो भवः असुमतां—प्राणि । मृतिजात्यहिताय—मृतिः-मरणं जातिः-जन्म तद्रूपं अहितं—अपथ्यं तस्मै भवतीति क्रियाध्याहारः । चतुर्थी चेयं तादर्थ्ये ज्ञेया । अत्र ' भवति ' क्रियापदम् । कः कर्ता ? ' यः ' । कस्मै ? ' मृतिजात्यहिताय ' । केषाम् ? ' असुमताम् ' इति शब्दोऽस्मच्छब्दस्य षष्ठीबहुवचनान्तत्वेन व्याख्यातः स निषेधार्थत्वेनापि व्याख्ये तथाहि—यो भवः असुमतां मृतिजात्यहिताय नो भवति—प्राणिसम्बन्धिन्यौ ये मृतिजाती राहिताय न भवति, किन्तु तयोरुपचयहेतुत्वात् द्वितीय एव भवतीति भावः । अवशिष्टं जिनवरागमस्य सम्बोधनम् । तस्य चायमर्थः—हे ' निर्मथितोद्धताजिनवरागमनोभवमाय उद्धतः-उद्दामः आजिः-संग्रामः नवो-नूतनो रागो-द्रव्यादावभिलाषः मनोभवः—का माया—वञ्चनिका एतानि निर्मथितानि अर्थात् निरस्तानि येन । अथवा उद्धताजौ नवराग यन्मनः—चित्तं तत्र भवा—संजाता या माया सा निर्मथिता येन । यद्वा ' उद्धताजिनः ' उ चर्मा, ' वरागमनाः ' वरागः-प्रधानशैलः अर्थात् कैलासस्तत्र मनो यस्य, एतादृशो भवः शंकरः तस्य माया—संसारलक्षणा सा निर्मथिता येन तत्सम्बो० हे निर्म० । तृतीयपक्षे भवस्तु सत्यकिनामा पुरुषविशेषो ज्ञेयः । तस्य संसारनिर्मथनं तु भगवदागमप्र महिम्ना भविष्यति । भाविनि च भूतोपचाराद् भूतमेवेति युक्तमेवेदमागमस्य सम्बोधनम् । उ जिनवरागमनोरूपं भवस्य विशेषणद्वयं तु लोकयुक्त्यनुसारेण घटत एव ॥

अथ समासः—मृतिश्च जातिश्च मृतिजाती इतरेतरद्वन्द्व । न हितं अहितं ' तत्पुरुष मृतिजाती एवाहितं मृति० ' कर्मधारयः ' । यद्वा मृतिश्च जातिश्च मृतिजाति ' समाहारद्वन्द्व मृतिजाति एवाहितं मृति० ' कर्मधारयः ' । तस्मै मृति० । यद्वा मृतिजात्योर्मृतिजातिनो वा मृतिजा० ' तत्पुरुषः ' । तस्मै मृतिजा० । जिनानां जिनेषु वा वरा जिनवराः ' तत्पुरुष जिनवराणामागमः जिनवरा० ' तत्पुरुषः ' । तत्सम्बो० हे जिनवरा० । प्रकर्षेण लघुता मल ' तत्पुरुषः ' । तां प्रलघुताम् । उद्धतश्चासावाजिश्च उद्धताजि० ' कर्मधारयः ' । नवश्चासौ र नवरागः ' कर्मधारयः ' । उद्धताजिश्च नवरागश्च मनोभवश्च माया च उद्धताजिनवरागम वमायाः ' इतरेतरद्वन्द्वः ' । निर्मथिता उद्धताजि० येन स निर्मथितोद्धताजिनवरागमनोभव ' बहुव्रीहिः ' । अथवा उद्धताजौ नवरागो यस्य तत् उद्धता० ' बहुव्रीहिः ' । उद्धताजिन च तन्मनश्च उद्धताजि० ' कर्मधारयः ' । उद्धताजिनवरागमनसि भवा उद्धताजि० ' तत्पुरुष

उद्धताजिनवरागमनोभवा चासौ माया च उद्धताजि० ' कर्मधारयः ' । निर्मथिता उद्धताजिनवरागमनोभवमाया येन स निर्मथितोद्धता० ' बहुव्रीहिः ' । यद्वा उद्धतं आजिनं यस्य उद्धताजिनः ' बहुव्रीहिः ' । वरश्चासावगश्च वरागः ' कर्मधारयः ' । वरागे मनो यस्य स वरागमनाः ' बहुव्रीहिः ' । उद्धताजिनश्चासौ वरागमनाश्च उद्धता० ' कर्मधारयः ' । उद्धताजिनवरागमनाश्चासौ भवश्च उद्धता० ' कर्मधारयः ' । उद्धताजिनवरागमनोभवस्य माया उद्धता० ' तत्पुरुषः ' । निर्मथिता उद्धताजिनवरागमनोभवमाया येन स निर्मथितो० ' बहुव्रीहिः ' । तत्सम्बो० हे निर्मथितो० ॥ इति काव्यार्थः ॥ २ ॥

सि० वृ०—असुमतामिति । जिनेषु वराः जिनवराः, तेषां आगमः—सिद्धान्तः तस्य सम्बोधनं हे जिनवरागम !—तीर्थङ्करसिद्धान्त ! त्वं नः—अस्माकं तं भवं—संसारं आयतं दीर्घत्वं स च ( दीर्घं सन्तं ? ) प्रलघुतां—ह्रस्वीयत्वं ( ह्रसीयस्त्वं ? ) नय—प्रापयेत्यर्थः।'णीञ् प्रापणे' धातोः 'आशीःप्रेरणयोः' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनम् । णीञ् अग्रे हिः । ' आदेः ष्णः स्नः ' (सा० सू० ७४८) इति णकारस्य नकारः, ' अप्० ' ( सा० सू० ६९१ ), ' गुणः ' ( सा० सू० ६९२ ), ' ए अय् ' ( सा० सू० ४१ ), ' अतः ' ( सा० सू० ७०९ ) इति हेर्लुक्, 'स्वरहीनं०' ( सा० सू० ३६ )। तथाच ' नय ' इति निष्पन्नम् । अत्र ' नय ' इति क्रियापदम् । कः कर्ता ? । त्वम् । कं कर्मतापन्नम् ? । भवम् । ' भुवश्च वाच्यः ' इति णत्वाभावपक्षे अच् । " भवः संसारसत्ताप्ति—श्रेयःशंकरजन्मसु " इति विश्वः । नीधातोर्द्विकर्मकत्वाद् द्वितीयं कर्माह—कां कर्मतापन्नाम् ? । ' प्रलघुतां ' प्रकर्षेण लघुता प्रलघुता तां प्रलघुताम् । केषाम् ? । नः । यत्तदोरभिसम्बन्धात् तं कम् ? । यो भवः असुमतां—प्राणिनां मृतिजात्यहिताय—मृतिः—मरणं जातिः—जन्म मृतिश्च जातिश्च मृतिजाती ' इतरेतरद्वन्द्वः ', तद्रूपं यन् अहितं—अपथ्यं तस्मै भवतीति क्रियाध्याहारः ।

" कर्तृकर्मक्रियादीनामवकाशो न चेद् यदि ।
अध्याहारस्तदा कार्यो, मुख्यार्थप्रतिपत्तये ॥ "

इति प्राञ्चः । चतुर्थी चेयं तादर्थ्ये ज्ञेया । ' भू सत्तायाम् ' धातुः । अकर्मकोऽयम् । अग्रे परस्मैपदे प्रथमपुरुषैकवचनं तिप् । ' अप् कर्तरि ' ( सा० सू० ६९१ ) इत्यप् । ' गुणः ' ( सा० सू० ६९२ ) इति गुणः । अवादेशः । 'स्वरहीनं०' ( सा० सू० ३६ ) । तथाच भवतीति सिद्धम् । अत्र ' भवति ' इति क्रियापदम् । कः कर्ता ? । यः । कस्मै ? । मृतिजात्यहिताय । केषाम् ? । असुमताम् । नोशब्दः अस्मच्छब्दस्य षष्ठीबहुवचनान्तत्वेन व्याख्यातः स निषेधार्थत्वेनापि व्याख्येयः । तथाहि—यो भवः असुमतां मृतिजात्यहिताय नो भवति प्राणिसम्बन्धिन्यौ ये मृतिजाती तयोः अहिताय न भवति । अवशिष्टं त्वेकं जिनवरागमसम्बोधनम् । तस्य चायमर्थः—हे ' निर्मथितोद्धताजिनवरागमनोभवमाय ' । उद्धतः—उद्दामः आजिः—

संग्रामः नवः—नूतनः रागः—द्रव्यादावभिलाषः मनोभवः—कन्दर्पः माया-वञ्च ( वञ्च ? )निका उद्धताजिश्च नवरागश्च मनोभवश्च माया च उद्धताजिनवरागमनोभवमाया ' इतरेतरद्वन्द्वः ' । निर्मथिता उद्धताजिनवरागमनोभवमाया येन स निर्मथितोद्धताजिनवरागमनोभवमायः, तस्य सम्बोधनम् । अथवा उद्धताजौ नवरागो यस्य तत् उद्धताजिनवरागं, उद्धताजिनवरागं च तन्मनश्च उद्धताजिनवरागमनः, उद्धताजिनवरागमनसि भवा उद्धता-जिनवरागमनोभवा, उद्धताजिनवरागमनोभवा चासौ माया चेति ' कर्मधारयः ', ततो निर्मथिता उद्धता-जिनवरागमनोभवमाया येन स तथा । " आजिः स्त्री समभूमौ च सङ्ग्रामे " इति मेदिनिः ॥ ३ ॥

सौ० वृ०—असुमतामिति । हे जिनवरागम !—तीर्थकरप्रवचन ! नः—अस्माकं आयतं-विस्तीर्णं भवं-संसारं ( त्वं ) प्रलघुतां—प्रकर्षेण लघुतां-अल्पीयस्त्वं नय इत्यन्वयः । ' नय ' इति क्रियापदम् । कः कर्ता ? । त्वम् । 'नय' प्रापय । कं कर्मतापन्नम् ? । ' भवं ' संसारम् । कां कर्मतापन्नाम् ? । 'प्रलघुतां' प्रकर्षेण ह्रस्वत्वम् । अत्र ' णीञ् प्रापणे ' इत्यस्य धातोर्द्विकर्मकत्वम् । केषाम् ? । ' नः ' अस्माकम् । किंविशिष्टं भवम् ? । 'आयतं' विस्तीर्णम् । पुनः किंविशिष्टम् ? । तम् । तं कम् । यो भवः—संसारः असुमतां—प्राणिनां मृतिः—मरणं जातिः—जन्म ते एव अहितं-अपथ्यं तस्मै मृतिजात्यहिताय अस्तीत्यन्वयः । 'अस्ति' इति क्रियापदम् । कः कर्ता ? । यो भवः । 'अस्ति' विद्यते । किमर्थं-कस्मै ? । ' मृतिजात्यहिताय ' मरणजन्माकुशलाय । केषाम् ? । ' असुमतां ' प्राणिनाम् । पुनः किंविशिष्टं भवम् ? । निर्मथिता—उन्मूलिता उद्धता आजिः—संग्रामः नवरागो—द्रव्याभिलाषो मनोभवः-कामः मायता—वञ्चनात्मिका यस्मिन् स ' निर्मथितोद्धताजिनवरागमनोभवमायतम् ' । यद्वा निर्मथितः उद्धत आजौ-संग्रामे नवो—नूतनो यो रागः एतादृशं यन्मनः—चित्तं तस्माद् भवा—उत्पन्ना या मायता—वञ्चनिका यस्मिन् तत् ' निर्मथितोद्धताजिनवरागमनोभवमायतम् । पक्षे भवः—शिवः तस्य मायता—वञ्चनिका तस्याः प्रलघुतां—ह्रस्वत्वं त्वं नय । लोकोक्त्या ईश्वरस्य जगत्कर्तृत्वं प्रतीयते । " शिवेन निर्मिता माया, मायया निर्मितं जगत् " इति तद्विदः । तत्पक्षे इदमपि वक्ष्यमाणं युक्तम्—निर्मथितं उद्धतं-उत्पाटितं अजिनं—चर्म तद्वत् वरः अगः—पर्वतः कैलासः तादृशं मनो यस्य स तादृशो यो भवः—शिवः तस्य माया—वञ्चना तस्या लघुतां नय इत्यपि छायार्थेन आगतम् । यो भवः—शिवः प्राणिनां जन्ममृत्यहितहेतुः इति माया अस्ति लोके । हे जिनवरागम ! नः भवं प्रलघुतां प्रापय । इति पदार्थः ॥

अथ समासः—असवः—प्राणा विद्यन्ते येषां ते असुमन्तः, तेषां असुमताम् । मृतिश्च जातिश्च मृतिजाती, मृतिजाती एव अहितं मृतिजात्यहितं, तस्मै मृतिजात्यहिताय । जिनवराणां आगमः जिनवरागमः, तस्य सं० हे जिनवरागम ! । लघोर्भावो लघुता, प्रकर्षेण लघुता प्रलघुता, तां प्रलघु-ताम् । आजिश्च नवरागश्च मनोभवश्च मायता च आजिनवरागमनोभवमायताः, निर्मथिता उद्धता आजिनवरागमनोभवमायता यस्मिन् तत् निर्मथितोद्धताजिनवरागमनोभवमायतम् । यद्वा निर्मथितः—उन्मूलितः उद्धतः आजौ—संग्रामे नवरागो—द्रव्याभिलाषः मनोभवः—कामः मायता—कपटता निर्मथिता—उन्मूलिता उत्कटतानवरागमनोभवमायता यस्मिन् तत् निर्मथितोद्धताजिनवरागमनोभवमायतम् ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या०—असुमतामिति । हे ' जिनवरागम ! ' जिनवराणां आगमः जिनवरागमः तस्यामन्त्रणम्, त्वं नः—अस्माकं तं भवं-संसारं प्रलघुतां—प्रकर्षेण ह्रस्वतां नय—प्रापयेत्यन्वयः । ' णीञ् प्रापणे ' धातुः । ' नय ' इति क्रियापदम् । कः कर्ता ? । त्वम् । कं कर्मतापन्नम् ? । भवम् । आयतं-प्रबलम् । यत्तदोर्नित्याभिसम्बन्धात् यो भवः असुमतां—प्राणिनां मृतिजात्यहिताय स्यात् इत्यध्याहारः । ' स्यात् ' इति क्रियापदम् । कः कर्ता ? । भवः । कस्मै ? 'मृतिजात्यहिताय' मृतिः—मरणं जातिः—जननम् अनयोर्द्वन्द्वः तयोः अहितं अपथ्यम् (तस्मै) । केषाम् ? । असुमताम् । यथा कुपथ्यकरणाद् रोगिणां रोगवृद्धिः तथा भवकारणात् प्राणिनां मरणजननवृद्धि-

रिति भावः । ' निर्मथितोद्धताजिनवरागमनोभवमाय ' ! इति । आजिः-संग्रामः नवरागः-नूतनोऽभिलाषः मनोभवः-कामः माया-कैतवम् एतेषां पूर्वं ' द्वन्द्वः, ' ततः उद्धतपदेन ' कर्मधारयः', ततो निर्मथिता-निर्दलिता उद्धता आजिनवरागमनोभवमाया येन इति ' बहुव्रीहिः ' । आगमसम्बोधनमेतत् । निर्मथितोद्धताजौ-उत्कटसंग्रामे नवरागो यस्य एतादृशं यन्मनस्तत्र भवा माया-निकृतिर्येनेत्यर्थो वा । प्रतिपदं उद्धतपदस्य सम्बन्धः इत्यपि कश्चित् ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥



श्रीरोहिण्यै नमः—

विशिखशङ्खजुषा धनुषाऽस्तसत्-
सुरभिया ततनुन्नमहारिणा ।
परिगतां विशदामिह रोहिणीं
सुरभियाततनुं नम हारिणा ॥ ४ ॥

— द्रुत०

ज० वि०—विशिखशङ्खेति । भो भव्य ! प्राणिन् ! त्वं इह-अस्मिन् जगति रोहिणीं-रोहिण्याख्यां देवीं नम-प्रणिपातविषयीकुरु । अत्र ' नम ' इति क्रियापदम् । कः कर्ता ? ' त्वम् ' । कां कर्मतापन्नाम् ? ' रोहिणीम् ' । कुत्र ? ' इह ' । कथंभूताम् ? ' परिगतां ' परिवारिताम्, समन्वितामितियावत् । केन ? ' धनुषा ' कार्मुकेण । कथंभूतेन धनुषा ? ' विशिखशङ्खजुषा ' विशिखो-बाणः शङ्खः-कम्बुः तौ जोषते इति विशिखशङ्खजुट् तेन विशिखशङ्खजुषा । तथा तेन पुनः कथंभूतेन ? ' अस्तसत्सुरभिया ' अस्ता-निरस्ता सतां-उत्कृष्टानां सुराणां-देवानां भीः-भयं येन तत् तथा तेन । पुनः कथं० ? ' ततनुन्नमहारिणा ' ताः-प्रसृताः नुन्नाः-प्रेरिताः-निर्जिता महान्तोऽरयो-वैरिणो येन तत् तथा तेन । पुनः कथं० ? ' हारिणा ' मनोहरेण । रोहिणीं पुनः कथंभूताम् ? ' विशदां ' शुक्लवर्णाम् । पुनः कथं० ? ' सुरभियाततनुं ' सुरभिः-धेनुः तस्यां याता-प्राप्ता-स्थिता तनुः-शरीरं यस्याः सा तथा ताम्, धेनुसमाधिरूढामित्यर्थः ॥

अथ समासः—विशिखश्च शङ्खश्च विशिखशङ्खौ ' इतरेतरद्वन्द्वः ' । विशिखशङ्खौ जोषते इति विशिखशङ्खजुट् ' तत्पुरुषः ' । तेन विशि० । सन्तश्च ते सुराश्च सत्सुराः ' कर्मधारयः ' । सत्सुराणां भीः सत्सुरभीः ' तत्पुरुषः ' । अस्ता सत्सुरभीः येन तत् अस्तसत्० ' बहुव्रीहिः ' । तेन अस्तसत्० । ताश्च ते नुन्नाश्च ततनुन्नाः ' कर्मधारयः ' । महान्तश्च तेऽरयश्च महारयः ' कर्मधारयः ' । ततनुन्ना महारयो येन तत् ततनुन्न० ' बहुव्रीहिः ' । तेन ततनुन्नमहारिणा । सुरभौ याता सुरभियाता ' तत्पुरुषः ' । सुरभियाता तनुर्यस्याः सा सुरभि० ' बहुव्रीहिः ' । तां सुरभि० ॥ इति काव्यार्थः ॥ ४ ॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीअभिनन्दनजिनस्तुतिवृत्तिः ॥ ४ ॥

सि० वृ०—विशिखशङ्खेति । भो भव्य प्राणिन् ! त्वं इह—अस्मिञ्जगति रोहिणीं—रोहिणीनाम्नीं देवीं नम—प्रणामविषयीकुरुष्वेत्यर्थः । 'णम प्रह्वीभावे' धातोः 'आशीःप्रेरणयोः' ( सा० सू० ७०१ ) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनम् । णम् अग्रे हिः । 'आदेः ष्णः स्नः' ( सा० सू० ७४८ ) इति णस्य नः । 'अप्' ( अतः ) हेर्लुक् । तथाच 'नम' इति सिद्धम् । अत्र 'नम' इति क्रियापदम् । कः कर्ता ? । त्वम् । कां कर्मतापन्नाम् ? । 'रोहिणीं' रोहयत्यवश्यं रोहिणी, तां रोहिणीम् । कुत्र ? । इह । कथंभूतां रोहिणीम् ? । परिगतां—परिवारितां समन्वितामितियावत् । केन ? । धनुषा—चापेन । 'धनार्तिचक्षिकृषुभसितपिजनियजिभ्य उस् प्रत्ययो भवति' ( सा० सू० १३९७ ) । कीदृशेन धनुषा ? । 'विशिखशङ्खजुषा' विशिखः—शरः शङ्खः—कम्बुः विशिखश्च शङ्खश्च विशिखशङ्खौ 'इतरेतरद्वन्द्वः', विशिखशङ्खौ जोषते इति विशिखशङ्खजुट्, तेन विशिखशङ्खजुषा । 'जुषी प्रीतिसेवनयोः' । 'अस्तसत्सुरभिया' अस्ताः—निरस्ता सत्सुराणां—प्रकृष्टदेवानां भीः—भयं येन तत् तथा । तेन भीशब्दोऽत्र स्त्रियां संपदादिक्विबन्तः । 'क्विबन्ता धातुत्वं नो जहत'[1] इति 'ग्योर्धातोः [ इयु गै स्वरे ]' ( सा० सू० १८० ) इति इयङ् । पुनः कथंभूतेन ? । 'ततनुन्नमहारिणा' ततः—प्रसृताः ते च ते नुन्नाः—प्रेरिताः—निर्जिताः महान्तः अरयो—वैरिणो येन तत् तथा तेन । पुनः कथंभूतेन ? । हारिणा—मनोहरेण । पुनः कथंभूतां रोहिणीम् ? । विशदां—निर्मलां, शरीरमनसोर्निर्मलत्वादिति भावः । पुनः कथंभूताम् ? । 'सुरभियाततनुं' सुरभिः—धेनुः तस्यां याता—प्राप्ता तनुः—शरीरं यस्याः सा तथा तां, धेनुसमधिरूढामित्यर्थः । 'सुरभिर्गवि च स्त्रियां' इत्यमरः ( श्लो० २६०८ ) । द्रुतविलम्बितं छन्दः । 'द्रुतविलम्बितमाह नभौ भरौ' इति तल्लक्षणम् ॥ ४ ॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीअभिनन्दनस्तुतिवृत्तिः ॥ ४ ॥

**सौ० वृ०-विशिखशङ्खेति । रोहिणीं देवीं इह-संसारे त्वं नम । 'नम' इति क्रियापदम् । कः कर्ता ? । त्वम् । 'नम' प्रणम । कां कर्मतापन्नाम् ? । 'रोहिणीं' रोहिणीनाम्नीं देवीम् । किंविशिष्टां रोहिणीम् ? । 'परिगतां' परिमण्डितां-व्याप्ताम् । केन ? । 'धनुषा' कार्मुकेण । किंविशिष्टेन धनुषा ? । विशिखः-शरः शङ्खः-कम्बुः ताभ्यां जुष्-सहितं तेन 'विशिखशङ्खजुषा' । पुनः किंविशिष्टेन धनुषा ? । अस्ता-ध्वस्ता-निराकृता सत्सुराणां-शोभनदेवानां भीः-भयं येन सः अस्तसत्सुरभीः तेन 'अस्तसत्सुरभिया' । पुनः किं० धनुषा ? । तता-विस्तृता नुन्ना-प्रेरिता महान्तो रयाः-वेगाः तथा अरयः-शत्रवो वा येन तत् ततनुन्नमहारि, तेन 'ततनुन्नमहारिणा' । पुनः किंविशिष्टां रोहिणीम् ? । 'विशदां निर्मलाम्' गौरवर्णामित्यर्थः । पुनः किं० रोहिणीम् ? । सुरभिणा-गवा याता-उत्पाटिता तनुः-शरीरं यस्याः सा सुरभियाततनुः, तां 'सुरभियाततनुम्' । पुनः किंविशिष्टेन धनुषा ? । 'हारिणा' मनोहरेण-मनोज्ञेन । इति पदार्थः ॥**

**अथ समासः-विशिखश्च शङ्खश्च विशिखशङ्खौ, विशिखशङ्खौ जुषति-योजयतीति विशिखशङ्खजुट्, तेन विशिखशङ्खजुषा । सन्तश्च ते सुराश्च सत्सुराः, सत्सुराणां भीः सत्सुरभीः, अस्ता सत्सुरभीर्येन सः अस्तसत्सुरभीः, तेन अस्तसत्सुरभिया । महान्तश्च ते रयाश्च महारयाः तता-नुन्ना महारया येन स**

---

१ 'क्विबन्तं धातुत्वं न जहाति' इति प्रतिभाति ।

ततनुन्नमहारिः, तेन ततनुन्नमहारिणा । सुरभिणा याता तनुः यस्याः सा सुरभियाततनुः, तां सुरभियाततनुम् । हराति चित्तं इति हारि, तेन हारिणा ॥ इति चतुर्थवृत्तार्थः ॥ ४ ॥

अभिनन्दनदेवस्य, स्तुतेरर्थो लिवीकृतः ।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना ॥ १ ॥

॥ इति अभिनन्दनजिनस्तुतिवृत्तिः ॥ ४ ॥

दे०व्या०-विशिखशङ्क्विति । इह-अस्मिन् लोके रोहिणीं देवीं त्वं नम-नमस्कुरु इत्यन्वयः । 'णम प्रह्वीभावे ' धातुः । 'नम ' इति क्रियापदम् । कः कर्ता ? । त्वम् । कां कर्मतापन्नाम् ? । रोहिणीम् । किंविशिष्टाम् ? । विशदाम्- निर्मलाम् शरीरेण मनसा वा । पुनः किंविशिष्टाम् ? । 'सुरभियाततनुम् ' सुरभौ-गवि याता-प्राप्ता तनुः-शरीरं यस्याः सा ताम् । " माहा सुरभिरर्जुनी " इत्यभिधानचिन्तामणिः ( का० ४, श्लो० ३३ ) गवि आरूढामिति निष्कर्षः । अत्र ' वोर्गुणात् ' इति पाक्षिक ईभावः । पुनः किंविशिष्टाम् ? । परिगतां-सहिताम् । केन ? । धनुषा-चापेन । किंविशिष्टेन धनुषा ? । 'विशिखशङ्कुजुषा ' विशिखो-बाणः शङ्कुः प्रसिद्धः अनयोः 'द्वन्द्वः' ताभ्यां जुषतीति तेन विशिखशङ्कुजुषा । " बाणे प्रकर्षविशिखौ " इत्यमरः । पुनः किंविशिष्टेन ? । 'अस्तसत्सुरभिया ' अस्ता-ध्वस्ता सत्सुराणां-प्रकृष्टदेवानां भीः-भयं येन तत् तेन । पुनः किंविशिष्टेन ? । 'ततनुन्नमहारिणा ' ततः-प्रसृताः नुन्नाः-प्रेरिताः महान्तः-प्रकृष्टा अरयः-शत्रवो येन तत् तथा तेन । पुनः किंविशिष्टेन ? । हारिणा-मनोहरेण । इति चतुर्थवृत्तार्थः । द्रुतविलम्बितं छन्दः । 'द्रुतविलम्बितमाह नभौ भरौ ' इति तल्लक्षणम् ॥ ४ ॥



## ५ श्रीसुमतिजिनस्तुतयः

**अथ श्रीसुमतिनाथस्य स्तुतिः—**

मदमदनरहित ! नरहित !
सुमते ! सुमतेन ! कनकतारेतारे ! ।
दमदमपालय ! पालय
दरादरातिक्षतिक्षपातः पातः ! ॥ १ ॥

—आर्यागीतिः

ज० वि०—मदमदनेति । हे सुमते !—सुमतितीर्थपते ! त्वं दमदं—प्रशमदायिनं, अर्थात् श्रमणश्रमणीनां बहुत्वेऽपि जातिमपेक्ष्यैकवचनप्रयोगः, दरात्—त्रासात् पालय—रक्षेतिक्रियाकारकसम्बन्धः । अत्र 'पालय' इति क्रियापदम् । कः कर्ता ? 'त्वम्' । कं कर्मतापन्नम् ? 'दमदम्' । कस्मात् ? 'दरात्' । अपराणि सर्वाण्यपि सुमतितीर्थपतेः सम्बोधनानि । तेषां व्याख्या त्वेवम्—हे 'मदमदनरहित !' । मदः-जात्यादिभेदादष्टविधः मदनः—कन्दर्पः ताभ्यां रहितः—त्यक्तः तत्सम्बो० हे मद० । हे 'नरहित !' नरेभ्यो हितो—हितकारी तत्सम्बो० हे नर० । हे 'सुमतेन !' सुमतं—शोभनागमः तस्य इनः—प्रभुः तस्य स्वातन्त्र्येण प्रणेतृत्वात् तत्सम्बो० हे सुमतेन ! । हे 'कनकतार !' कनकं—सुवर्णं तद्वत् तार !—उज्ज्वल ! ! यद्वा सुमतेन कनकतार इत्येकमेव सम्बोधनम् । तथा चैवं व्याख्यानम्—सुमतेन करणभूतेन कृत्वा कनकतार ! । हे 'इतारे !' इताः—गताः अरयो—वैरिणो यस्मात् स तथा तत्सम्बो० हे इतारे ! । हे 'अपालय !' अपगत आलयो यस्मात् स तथा तत्सम्बो० हे अपालय ! । हे 'पातः !' पातीति पाता-रक्षकः तत्सम्बो० हे पातः ! । कस्मात् ? 'अरातिक्षतिक्षपातः' अरातयो—वैरिणः तेभ्यः समुत्पन्ना या क्षतिः—उपमर्दः सैव रौद्रात्मकत्वात् क्षपा—रात्रिस्तस्याः सकाशात् ॥

अथ समासः—मदश्च मदनश्च मदमदनौ 'इतरेतरद्वन्द्वः' । मदमदनाभ्यां रहितः मद० 'तत्पुरुषः' । तत्सम्बो० हे मद० । नरेभ्यो हितो नरहितः 'तत्पुरुषः' । तत्सम्बो० हे नरहित ! । शोभना मतिर्यस्य स सुमतिः 'बहुव्रीहिः' । तत्सम्बो० हे सुमते ! । शोभनं मतं सुमतं 'तत्पुरुषः' । सुमतस्य इनः सुमतेनः 'तत्पुरुषः' । तत्सम्बो० हे सुमतेन ! । यद्वा शोभनं मतं सुमतं 'तत्पुरुषः' । तेन सुमतेन । कनकवत् तारः कनकतारः 'तत्पुरुषः' । तत्सम्बोधनं हे कनक० । इता अरयो यस्मात् स इतारिः 'बहुव्रीहिः' । तत्सम्बोधनं हे इतारे ! । दमं ददातीति दमदः 'तत्पुरुषः' । तं दमदम् । अपगतः आलयो यस्मात् सोऽपालयः 'बहुव्रीहिः' । तत्सम्बो०

हे अपालय ! । अरातिभ्यः क्षतिः अरातिक्षतिः ' तत्पुरुषः ' । अरातिक्षतिरेव क्षपा अराति० ' कर्मधारयः ' । तस्याः अराति० ॥ इति काव्यार्थः ॥ १ ॥

सि० वृ०—मदमदनेति । शोभना मतिरस्येति सुमतिः, तस्य सम्बोधनं हे सुमते !—सुमतितीर्थपते ! त्वं दमदं—प्रशमदायिनं अर्थान्मुनिमेव श्रमणम्, बहुत्वेऽपि जातिमपेक्ष्यैकवचनप्रयोगः, " दमस्तु दमथे दण्डे, कर्दमे दमनेऽपि च " इति विश्वः, दरात्—त्रासात् पालय—रक्षेत्यर्थः । ' पाल पालने ' धातोः ' आशीःप्रेरणयोः ' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनं हिः । ' चुरादेः ' ( सा० सू० १०३१ ) ञिः, 'अप्०' ( सा० सू० ६९१ ), ' गुणः ' ( सा० सू० ६९२ ) ' ए अय् ' ( सा० सू० ४१ ), ' अतः ' ( सा० सू० ७०९ ) इति हेर्लुक् । तथाच ' पालय ' इति सिद्धम् । अत्र ' पालय ' इति क्रियापदम् । कः कर्ता ? । त्वम् । किं कर्मतापन्नम् ? । दमदम् । कस्मात् ? । दरात् अर्थात् संसारभयात् । " आतङ्कस्तु दरत्रासौ, भीतिर्भीः साध्वसं भयम् " इति वैजयन्ती । अन्यानि सर्वाण्यपि सुमतिजिनस्य सम्बोधनानि । तेषां व्याख्या त्वेवम्—हे ' मदमदनरहित ! ' मदः—जात्यादिभेदादष्टविधः, मदनः—कन्दर्पः, मदश्च मदनश्च मदमदनौ ' इतरेतरद्वन्द्वः ' ! ताभ्यां रहितो मदमदनरहितः, तस्य सम्बोधनं हे मदमदनरहित ! । हे ' नरहित ! ' नरेभ्यो हितः—हितकारी, तस्य सम्बोधनं हे नरहित ! । हे ' सुमतेन ! ' सुमतं—शोभनं मतं, तस्य इनः—प्रभुः स्वातन्त्र्येण प्रणेतृत्वात्, तस्य सम्बोधनं हे सुमतेन ! । " इनः सूर्ये नृपे पत्यौ " इति विश्वः । कनकं—सुवर्णं तद्वत् तारः—उज्ज्वलः, तस्य सम्बोधनं हे कनकतार ! । इता—गता अरयो—वैरिणो यस्मात् स तथा, तस्य सम्बोधनं हे इतारे ! । अपगतः आलयो—गृहं यस्मात् सः अपालयः, तस्य सम्बोधनं हे 'अपालय !' । पातीति पाता—रक्षकः, तस्य सं० हे ' पातः ! ' । कस्मात् ? । ' अरातिक्षतिक्षपातः ' अरातयो—वैरिणः तेभ्यः समुत्पन्ना या क्षतिः—उपमर्दः सैव रौद्रात्मकत्वात् क्षपा—रात्रिः तस्याः सकाशात् । सार्वविभक्तिकस्तस् । " निशा निशीथिनी रात्रिः, शर्वरी क्षणदा क्षपा " इति हैमः ( का० २, श्लो० ५५ ) ॥ १ ॥

सौ० वृ०-यः अभिनन्दनो भवति स सुमतिरेव भवति । अनेन सम्बन्धेनायातस्य श्रीसुमतिनाथपञ्चमजिनस्य स्तुतिव्याख्यानं लिख्यते । मदमदनेति ।

मदो-मानः जात्याद्यष्टविधो वा, मदनः-कामः ताभ्यां रहितो-वियुक्तः तस्य सं० हे 'मदमदनरहित !' । नरा-मनुष्याः तेषां हितः-सुखकृत् तस्य सं० हे ' नरहित ! ' । सु-शोभना मतिः यस्य स सुमतिः, तस्य सं० हे ' सुमते ! ' । भगवति गर्भस्थे सति एकसुतसपत्नीद्वयस्य कलहभञ्जनात् । सुमतं-सम्यक् दर्शनं स्याद्वादमयं तस्य इनः-स्वामी सुमतेनः, तस्य सं० ' सुमतेन ! ' । कनकं-स्वर्णं तद्वत् तारः-उज्ज्वलः-गौरः कनकतारः, तस्य सं० हे ' कनकतार ! ' । इताः-क्षयं गताः अरयो यस्य स इतारिः, तस्य सं० हे इतारे ! ' । अपगतः-उज्झितः आलयो-गृहं येन सः अपालयः तस्य सं० हे ' अपालय ! ' । त्वं दमदं-प्रशमदं पुरुषं दरात्-बाह्याभ्यन्तरभयात् सुमतेन-करणभूतेन प्राकृत इत्यन्वयः । ' पालय ' इति क्रियापदम् । कः कर्ता ? । त्वम् । ' पालय ' रक्ष । कं कर्मतापन्नम् ? । दमदम् । कस्मात् ? । दरात् । हे ' पातः ! ' हे रक्षक ! । कस्मात् ? । अरातिः-शत्रुः तदेव क्षतिः-प्राणानर्थकारित्वात् प्रहरणं सैव क्षपा-रात्रिः तस्याः अरातिक्षतिक्षपातः सर्वविशेषणात्मकः । इति काव्यार्थः ॥

अथ समासः–मदश्च मदनश्च मदमदनौ, मदमदनाभ्यां रहितः मदमदनरहितः, तस्य सं० हे मदमदनरहित ! । नराणां नरेभ्यो वा हितः नरहितः, तस्य सं० हे नरहित ! । सु–शोभना मतिर्यस्य स सुमतिः, तस्य सं० हे सुमते ! । सुष्ठु मतं सुमतं, तस्य इनः सुमतेनः, तस्य सं० हे सुमतेन ! । कनकवत् तारः कनकतारः, तस्य सं० हे कनकतार ! । इता–गता अरयो यस्मात् यस्य वा इतारिः, तस्य सं० हे इतारे ! । दमं–इन्द्रियनोइन्द्रियविषयप्रशमरूपं ददातीति दमदः, तं दमदम् । अपगतः आलयो यस्मात् यस्य वा अपालयः, तस्य सं० हे अपालय ! । अरातय एव क्षतिः अरातिक्षतिः, अरातिक्षतिरेव क्षपा अरातिक्षतिक्षपा, तस्याः अरातिक्षतिक्षपातः, पातीति पाता । तस्य सं० हे पातः ! । अस्यां स्तुतौ आर्याछन्दः । सर्वेष्वपि पादेषु यमकालंकारः ॥ इति प्रथमवृत्तार्थः ॥ १ ॥

दे० व्या०–मदमदनेति । हे सुमते !–सुमतिनाथ ! त्वं दमदं–प्रशमदम्, जनमितिशेषः, दरात्–इहलोकादिसप्तभयसाध्वसात् पालय–रक्षेत्यन्वयः । अत्र ‘ पालय ’ इति क्रियापदम् । कः कर्ता ? । त्वम् । कं कर्मतापन्नम् ? । दमदं जनम् । कस्मात् ? । दरात् । ‘ मदमदनरहित ’ ! इति । मदः पूर्वोक्तः मदनः–कामः अनयोः ‘ द्वन्द्वः ’ ताभ्यां रहितो–विमुक्तः तस्यामन्त्रणम् हे मदमदनरहित ! । ‘ नरहित ! ’ इति । नराणां–मनुष्याणां हितो–हितकारकः तस्यामन्त्रणम् हे नरहित ! । ‘ सुमतेन ! ’ इति । सुष्ठु–शोभनं मतं–प्रवचनं येषां ते सुमताः–मुनयः तेषाम् । यद्वा सुष्ठु–शोभनं यन्मतं–राद्धान्तः तस्य इनः–प्रभुः तस्यामन्त्रणम् । यद्वा सुमतेन करणभूतेन । ‘ कनकतार ! ’ इति । कनकं–सुवर्णं तद्वत् तारः–उज्ज्वलः तस्यामन्त्रणम् । ‘ इतारे ! ’ इति इता–गता अरयः–शत्रवः यस्य स तस्यामन्त्रणम् । ‘ अपालय ! ’ इति । अपगतः आलयो–गृहं यस्य स तस्यामन्त्रणम् । ‘ पातः ! ’ । इति । पाति–रक्षति इति पाता तस्यामन्त्रणम् । कस्मात् ? । ‘ अरातिक्षतिक्षपातः ’ अरातिभ्यः–शत्रुभ्यः क्षतिः–उपमर्दः सैव रौद्रात्मकत्वात् क्षपा–रात्रिः तस्याः सकाशात् । “ शर्वरी क्षणदा क्षपा ” इत्यभिधानचिन्तामणिः ( का० २, श्लो० ५५ ) । एतानि सर्वाणि भगवतः सम्बोधनपदानि ॥ इति प्रथमवृत्तार्थः ॥ १ ॥



समग्रजिनेश्वराणां विज्ञप्तिः—

विधुतारा ! त्रिधुताराः !
सदा सदाना ! जिना ! जिताघाताघाः ! ।
तनुतापातनुतापा !
हितमाहितमानवनवविभवा ! विभवाः ! ॥ २ ॥

आर्या०

ज० वि०—विधुतेति । हे जिनाः !–तीर्थकराः ! यूयं हितं–पथ्यं सदा–नित्यं तनुत–विस्तारयत । अत्र ‘ तनुत ’ इति क्रियापदम् । के कर्तारः ? ‘ यूयम् ’ । किं कर्मतापन्नम् ? ‘ हितम् ’ । कथम् ? ‘सदा’ नित्यम् । कथंभूता जिनाः ? ‘त्रिधुताराः’ विधुतं–निरस्तं आरं–अरीणां समूहो यैस्ते तथा । यद्वा अरणं–आरो–भ्रमणं अर्थात् संसारः स विधुतो यैस्ते तथा । पुनः कथं० ? ‘ विधुताराः ’ विधुवत्–चन्द्रवत् तारा–उज्ज्वलाः । पुनः कथं० ? ‘ सदानाः ’ सह दानेन वर्त-

मानाः । पुनः कथं० ? ' जिताघाताघाः ' अघातं-घातवर्जितम्, केनापि हन्तुमशक्यमित्यर्थः, एतादृशं यत् अघं-पापं तत् जितं यैस्ते तथा । पुनः कथं० ? ' अपातनुतापाः ' अतनुः-महान् तापः-सन्तापः, अतनुतापः सोऽपगतो येभ्यस्ते तथा । पुनः कथं० ? ' आहितमानवनवविभवाः ' आहितो-जनितो मानवानां-नराणां नवः-प्रत्यग्रः विभवः-ऐश्वर्यं यैस्ते तथा । पुनः कथं० ? 'विभवाः' विगतो भवः-संसारो येभ्यस्ते तथा । एतानि सर्वाण्यपि जिनानां विशेषणानि सम्बोधनपुरस्कारेणापि व्याख्यातुं घटन्ते ॥

अथ समासः—विधुतं आरं आरो वा यैस्ते विधु० 'बहुव्रीहिः' । विधुवत् तारा विधु० ' तत्पुरुषः ' । सह दानेन वर्तन्ते ये ते सदानाः ' बहुव्रीहिः ' । न विद्यते घातो यस्य तत् अघातं ' बहुव्रीहिः ' । अघातं च तत् अघं च अघाताघं ' कर्मधारयः ' । जितं अघाताघं यैस्ते जिताघाताघाः ' बहुव्रीहिः ' । न तनुः अतनुः ' तत्पुरुषः ' । अतनुश्चासौ तापश्च अतनुतापः ' कर्मधारयः ' । अपगतः अतनुतापो येभ्यस्ते अपा० ' बहुव्रीहिः ' । नवश्चासौ विभवश्च नवविभवः ' कर्मधारयः ' । मानवानां नवविभवो मानव० ' तत्पुरुषः ' । आहितो मानवनवविभवो यैस्ते आहि० ' बहुव्रीहिः ' । विगतो भवो येभ्यस्ते विभवाः ' बहुव्रीहिः ' ॥ इति काव्यार्थः ॥ २॥

सि० वृ०— विधुतेति । हे जिनाः ! जयन्ति रागद्वेषानिति जिनाः-तीर्थङ्कराः ! यूयं हितं-पथ्यं सदा-नित्यं तनुत-विस्तारयतेत्यर्थः । ' तनु विस्तारे ' ' आशीःप्रेरणयोः ' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे मध्यमपुरुषबहुवचनम् । ' तनादेरुप् ' ( सा० सू० ९९७ ) । तथाच ' तनुत ' इति सिद्धम् । अत्र ' तनुत ' इति क्रियापदम् । के कर्तारः ? । यूयम् । किं कर्मतापन्नम् ? । हितम् । कथम् ? । सदा इति क्रियाविशेषणम् । कथंभूता जिनाः ? । ' विधुताराः ' विधुतं-निरस्तं अरीणां समूहः आरम्, समूहार्थे अण् यैस्ते तथा । अत्रारपदेन इन्द्रियरूपा एव शत्रवो ग्राह्याः, तेषामेवालयत्वात् । तथाचेति । विधुताः-स्ववशे कृताः यैरिति भावः । यद्वा विधुतं ' ऋ गतौ ' इति धातोः अरणं आरः-भ्रमणं अर्थात् सांसारिकं यैस्ते विधुतारा इत्यर्थः । पुनः किंविशिष्टा विधुताराः ? । ' विधुताराः ' विधुः-चन्द्रः तद्वत् तारा विधुताराः चन्द्रवन्निर्मला इत्यर्थः । पुनः कथंभूताः ? । ' सदानाः ' सह दानेन वर्तमानाः सदानाः । पुनः कथंभूताः ? । ' जिताघाताघाः ' न विद्यते घातो यस्य तत् अघातं-घातवर्जितं केनापि हन्तुमशक्यमित्यर्थः, एतादृशं यत् अघं-पापं तत् जितं यैस्ते तथा । अघातं च तत् अघं चेति ' कर्मधारयः ' । अन्यागमोक्तहिंसाप्रधानकर्मसु पापत्वप्रदर्शनेन दयाया एव सर्वोत्कृष्टत्वप्रदर्शनमुखेन च हिंसाजन्यसकलपापविध्वंसका इत्यर्थः । पुनः कथंभूताः ? । ' अपातनुतापाः ' अतनुः-महान् चासौ तापः-सन्तापः अतनुताप सोऽपगतो येभ्यः ते तथा । पुनः कथंभूताः ? । ' आहितमानवनवविभवाः ' आहितो-जनितो मानवानां-मनुष्याणां नवः-प्रत्यग्रः स चासौ विभवः-ऐश्वर्यं यैस्ते तथा । पुनः कथंभूताः ? । 'विभवाः ' विगतो भवः-संसारो येभ्यस्ते विभवाः । एतानि सर्वाण्यपि विशेषणानि सम्बोधनपुरस्कारेणापि व्याख्यातुं घटन्ते ॥ २ ॥

सौ० वृ०-विधुतारा इति । जिनाः !-तीर्थंकराः ! हितं-पथ्यं तनुत-विस्तारयत इत्यन्वयः । 'तनुत' इति क्रियापदम् । के कर्तारः ? । जिनवराः । किं कर्मतापन्नम् ? । 'हितं' पथ्यम् । किंविशिष्टा जिनाः ? । विधुतं-त्यक्तं अरीणां समूहः आरं, अथवा अरणं भ्रमणं आरं चतुर्गतिलक्षणं यैस्ते 'विधुताराः' । पुनः किंवि० जिनाः ? । विधुः-चन्द्रः तद्वत् तारा-उज्ज्वलाः 'विधुताराः' । पुनः किंवि० जिनाः ? । 'सदानाः' सत्यागाः । कथम् ? । 'सदा' नित्यम् । पुनः किंवि० जिनाः ? । जितं अघातं-न घातयोग्यं अघं-पापं यैस्ते 'जिताघाताघाः' । पुनः किंवि० जिनाः ? । अपगतः अतनुः-महान् तापो येषां ते 'अपातनुतापाः' । पुनः किंवि० जिनाः ? । आहितः-स्थापितः दत्तो वा मानवानां-मनुष्याणां नवः-प्रत्यग्रो विभवः-ऐश्वर्यं यैः ते 'आहितमानवनवविभवाः' । पुनः किंवि० जिनाः ? । विगतः-विशेषेण गतो भवः-संसारो येषां ते 'विभवाः' । एवंविधा जिनाः ! हितं विस्तारयत । इति पदार्थः ॥

अथ समासः-अरीणां समूहो आरम्, अथवा अरणं-भ्रमणं आरं, विधुतं आरं यैस्ते विधुताराः । विधुवत् ताराः विधुताराः । दानेन सहिताः सदानाः । घात्यते इति घातं, न घातं अघातं, अघातं च तत् अघं च अघाताघं, जितं अघाताघं यैस्ते जिताघाताघाः । न तनुः अतनुः, अतनुश्चासौ तापश्च अतनुतापः, अपगतः अतनुतापो येभ्यः ते अपातनुतापाः । नवश्चासौ विभवश्च नवविभवः, मानवानां नवविभवः मानवनवविभवः, आहितः मानवनवविभवो यैस्ते आहितमानवनवविभवाः । विगतो भवः संसारो येषां ते विभवाः ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥

दे० व्या०—विधुतारा इति । हे जिनाः-तीर्थंकराः ! यूयं हितं-पथ्यं सदा-निरन्तरं यथा स्यात् तथा तनुत-विस्तारयत इत्यन्वयः ! 'तनु विस्तारे' इति धातुः । 'तनुत' इति क्रियापदम् । के कर्तारः ? । यूयम् । किं कर्मतापन्नम् ? । हितम् । किंविशिष्टा यूयम् ? । 'विधुताराः' अरीणां-शत्रूणां समूहः आरम्, विशेषेण धुतं-कम्पितं आरं यैः ते तथा । अत्र आरपदेन इन्द्रियरूपा एव शत्रवो ग्राह्याः, तेषामेवाजेयत्वात् । तथा च ते विधुताः-स्ववशे कृताः यैरिति भावः । पुनः किंविशिष्टाः ? । 'विधुताराः' विधुः-चन्द्रः तद्वत् ताराः-उज्ज्वलाः निखिलकर्ममलापगमात् सर्वदा मलोज्झितशरीरत्वाच्चेति भावः । पुनः किंविशिष्टाः ? । 'सदानाः' दानं-वितरणं तेन सह वर्तमानाः सांवत्सरिकदानदायकत्वात् । पुनः किंविशिष्टा जिनाः ? । 'जिताघाताघाः' जितं-पराजितं अघातं-घातरहितं अघं-पापं यैः ते तथा । हिंसाप्रधानस्याघस्य सर्वदैव निरस्तत्वात् तद्भिन्नमप्यघं यैर्हरातापास्तमिति भावः। वस्तुतस्तु जितं आघाताघं आघातः-प्राणिवधः तत्संबन्धि अघं-पापं यैस्ते तथा। अन्यागमोक्तहिंसाप्रधानमुपायत्वप्रदर्शनेन दयाया एव सर्वोत्कृष्टत्वप्रदर्शनमुखेन च हिंसाजन्यसकलपापविध्वंसका इत्यर्थः । पुनः किंविशिष्टाः ? । 'अपातनुतापाः' अपगतः अतनुः-प्रचुरः तापः-सन्तापो येभ्यस्ते तथा । तदनु क्रोधादीनां मूलतः छिन्नत्वात् । पुनः किंविशिष्टाः ? । 'आहितमानवनवविभवाः' आहितः-पूरितो मानवानां-मनुष्याणां नवः-प्रत्यग्रः अपूर्व इतियावत् विभवः-ऐश्वर्यं यैस्ते तथा । पुनः किंविशिष्टाः ? । 'विभवाः' विगतो भवः-संसारो येषां ते तथा ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥



सर्वज्ञस्य सिद्धान्तस्य स्मरणम्—

मतिमति जिनराजि नरा-
ऽऽहितेहिते रुचितरुचि तमोहेऽमोहे ।
मतमतनूनं नूनं
स्मरास्मराधीरधीरसुमतः सुमतः ॥ ३ ॥

—आर्या०

ज० वि०—मतिमतीति । अत्र यत्तदोरध्याहारं विधाय व्याख्यानं कार्यम् । भो भव्यात्मन् ! यत् मतं-दर्शनं जिनराजि-जिनेन्द्रविषयेऽस्ति तत् त्वं नूनं-निश्चितं स्मर-ध्यायेति क्रियाकारकयोजना । अत्र ' स्मर ' इति क्रियापदम् । कः कर्ता ? ' त्वम् ' । किं कर्मतापन्नम् ? 'मतम्' । कथं ? ' नूनम् ' । मतं कथंभूतं ? 'तत्' । तत् किम् ? । यज्जिनराजि अस्ति । अत्रापि ' अस्ति ' इति क्रियापदम् । किं कर्तृ ? ' यत् ' । कस्मिन् ? ' जिनराजि ' । मतं पुनः कथंभूतं ? 'अतनूनम्' तनु च ऊनं च यन्न भवति तत् तथा। जिनराजि कथंभूते ? 'मतिमति' गर्भवासादिष्वप्यवस्थासु सातिशयमतियुक्ते । नित्ययोगादावयं मतुप्प्रत्ययः । पुनः कथं० ? ' नराहितेहिते ' नराणां आहितं-कृतं ईहितं-वाञ्छितं येन स तथा तस्मिन् । पुनः कथं० ? ' रुचितरुचि ' रुचिता-अभीष्टा रुक्-दीप्तिर्यस्य स तथा तस्मिन् । पुनः कथं० ? ' तमोहे ' तमः-अज्ञानं हन्ति जहाति वा स तमोहस्तस्मिन् । पुनः कथं० ? ' अमोहे ' मोहरहिते । त्वं कथंभूतः सन्नित्याह । ' अस्मराधीरधीः ' न स्मरेण अधीरा धीर्यस्य स तथा । तादृशस्यैव स्मरणोचितत्वात् । पुनः कथं० ' सुमतः ' प्राणिरक्षादिक्रियया सुष्ठु अभिमेतः संमत इत्यर्थः । कस्य ? ' असुमतः ' प्राणिनः । अत्रैकवचनस्य तु जात्यपेक्षया प्रयोगः ॥

अथ समासः—जिनेषु राजत इति जिनराट् ' तत्पुरुषः '। यद्वा जिनानां जिनेषु वा राट् ' तत्पुरुषः ' । आहितं ईहितं येन स आहितेहितः ' बहुव्रीहिः ' । नराणां आहितेहितः नराहि० ' तत्पुरुषः ' । तस्मिन् नराहि० । रुचिता रुक् यस्य स रुचितरुक् 'बहुव्रीहिः' । तस्मिन् रुचि० । तमो हन्ति जहाति वा तमोहः ' तत्पुरुषः ' । तस्मिन् तमोहे । न विद्यते मोहो यस्य सोऽमोहः ' तत्पुरुषः ' । तस्मिन्नमोहे । तनु च तत् ऊनं च तनूनं ' कर्मधारयः ' । न तनूनं अतनूनं ' तत्पुरुषः । न धीरा अधीरा ' तत्पुरुषः '। स्मरेण अधीरा स्मराधीरा 'तत्पुरुषः ' । स्मराधीरा धीर्यस्य स स्मराधीरधीः ' बहुव्रीहिः ' । न स्मराधीरधीः अस्मरा० ' तत्पुरुषः ' । सुष्ठु मतः सुमतः ' तत्पुरुषः ' ॥ इति काव्यार्थः ॥ ३ ॥

सि० वृ०—मतिमतीति । अत्र यत्तदोरध्याहारं विधाय व्याख्यानं कार्यम् । भो भव्यात्मन्! यन्मतं-दर्शनं जिनानां जिनेषु वा राजते इति जिनराट्, तस्मिन् जिनराजि, जिनेन्द्रविषयेऽस्ति तत् त्वं नूनं—निश्चितं स्मर—ध्यायेत्यर्थः । 'स्मृ चिन्तायाम्' इति धातोः 'आशीःप्रेरणयोः' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनम् । अत्र 'स्मर' इति क्रियापदम् । कः कर्ता ? । त्वम् । किं कर्मतापन्नम् ? । मतम् । कथम् ? । नूनम् । कीदृशं मतम् ? । तत् । तत् किम् ? । यत् जिनराजि अस्ति । अत्रापि 'अस्ति' इति क्रियापदम् । किं कर्तृ ? । यत् । कस्मिन् ? । जिनराजि । मतं पुनः कथंभूतम् ? । 'अतनूनं' तनु च ऊनं च यत्र भवति तथा । यद्वा परैर्दूषयितुं शक्यं ऊनं परमतापेक्षया सकलार्थाप्रकाशं तादृशं न किन्तु परैर्दूषयितुमशक्यं यावदर्थप्रकाशकं चेत्यर्थान्तरम् । जिनराजि कथंभूते ? । 'मतिमति' गर्भवासादिष्ववस्थासु सातिशयमतियुक्ते । नित्ययोगादावयं मतुप् । पुनः कथंभूते ? । 'नराहितेहिते' नराणां आहितं-परितं ईहितं—वाञ्छितं येन स तथा तस्मिन् । पुनः कथंभूते ? । 'रुचितरुचि' रुचिता—अभीष्टा रुक्—दीप्तिर्यस्य स तथा तस्मिन् । पुनः कथंभूते ? । 'तमोहे' तमः—अज्ञानं हन्ति जहाति वा स तमोहः, 'क्वचित्' ( सि० अ० ५, पा० १, सू० १७१ ) इति डः, तस्मिन् । पुनः कथंभूते ? । 'अमोहे' न विद्यते मोहो यस्य सः अमोहः तस्मिन् । त्वं कथंभूतः सन् इत्याह—'अस्मराधीरधीः' न स्मरेण—कामेन अधीरा—विह्वला धीः—मतिर्यस्य स तथा । तादृशस्यैव स्मरणोचितत्वात् । पुनः कीदृशः ? । असुमतः—प्राणिनः । जातावत्रैकवचनम् । रक्षादिक्रियायां सुमतः । सुतरामभिप्रेत इत्यर्थः ॥ ३ ॥

सौ० वृ०—मतिमतीति । त्वं जिनराजि सर्वज्ञमतं शासनं दर्शनं वा नूनं-निश्चितं स्मर इत्यन्वयः । 'स्मर' इति क्रियापदम् । कः कर्ता ? । 'त्वम्' । 'स्मर' ध्याय । किं कर्मतापन्नम् ? । 'मतं' प्रवचनम् । कस्मिन् ? । 'जिनराजि' जिनाः—सामान्यकेवलिनः तेषु राजते इत्येवंशीलो यः स जिनराट् तस्मिन् जिनराजि । कथम् ? । 'नूनं' इति निश्चितम् । किंविशिष्टस्त्वम् ? । 'सुमतः' शोभनः मतः सुमतः-रक्षकः । कस्य ? । 'असुमतः' प्राणिनः । जातावेकवचनम् । पुनः किंविशिष्टस्त्वम् ? । अस्मरा-अस्मरणशीला धीरा-निश्चला धीः-बुद्धिः यस्य सः 'अस्मराधीरधीः' । किंविशिष्टं मतम् ? । तनु-कृशं ऊनं-असंपूर्णं ते द्वे यत्र न स्तः तत् 'अतनूनं' महत्, संपूर्णं इत्यर्थः । किंविशिष्टे जिनराजि ? । 'मतिमति' गर्भवासादारभ्य संपूर्णबुद्धिमति । पुनः किंविशिष्टे जिनराजि ? । नराणां-मनुष्याणां आहितं-स्थापितं दत्तं वा ईहितं-वाञ्छितं येन स नराहितेहितः तस्मिन् 'नराहितेहिते' । पुनः किंविशिष्टे जिनराजि ? । रुचिता-सर्वजनानां अभीष्टा रुक् कान्तिर्वा यस्य स रुचितरुक् तस्मिन् 'रुचितरुचि' । पुनः किंविशिष्टे जिनराजि ? । तमः-अज्ञानं हन्तीति तमोहः तस्मिन् 'तमोहे' । पुनः किंविशिष्टे जिनराजि ? । न विद्यते मोहो-मूर्च्छा भ्रान्तिर्वा यस्य सः अमोहः तस्मिन् 'अमोहे' । इति पदार्थः ॥

अथ समासः—मतिः विद्यते यस्य स मतिमान्, तस्मिन् मतिमति । अत्र 'अस्त्यर्थे मतुः' इत्यनुभूतिः ( सा० सू० ६०६ ) । जिनेषु राजते इति जिनराट्, तस्मिन् जिनराजि । नराणां नरेषु वा आहितं ईहितं येन स नराहितेहितः, तस्मिन् नराहितेहिते । रुचिता रुग् यस्य स रुचितरुक्, तस्मिन् रुचितरुचि । तमो हन्तीति तमोहः, तस्मिन् तमोहे । न मोहः अमोहः, तस्मिन् अमोहे । तनु च ऊनं चतनूने, न विद्येते तनूने यस्मिन् तत् अतनूनम् । न धीरा अधीरा, अधीरा चासौ धीश्च अधीरधीः, न विद्यते स्मरे-स्मरणे अधीरधीः यस्य असौ अस्मराधीरधीः । असवः-प्राणा विद्यन्ते यस्य असौ असुमान्, तस्य असुमतः । सुष्ठु मतं यस्य स सुमतः ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

हे० व्या०-मतिमतीति । हे जन ! हे लोक ! त्वं जिनराजि-सार्वविषये मतं-प्रवचनं नूनं-निश्चितं स्मर-स्मृतिगोचरीकुरु इत्यन्वयः । 'स्मृ चिन्तायाम्' इति धातुः । 'स्मर' इति क्रियापदम् । कः कर्ता ? । त्वम् । किं कर्मतापन्नम् ? । मतम् । कस्मिन् ? । 'जिनराजि' जिनेषु-तीर्थंकरेषु राजते इति जिनराट् तस्मिन् । किंविशिष्टे जिनराजि ? । 'मतिमति' मतिः-बुद्धिः सा विद्यते यस्मिन् स तस्मिन् । पुनः किंविशिष्टे ? । 'नराहितेहिते' नराणां-मनुष्याणां आहितं-पूरितं हितं-वाञ्छितं येन स तस्मिन् । पुनः किंविशिष्टे ? । 'रुचितरुचि' रुचिता सर्वेषामाल्हादकत्वेन रुक्-कान्तिर्यस्य स तस्मिन् । पुनः किंविशिष्टे ? । तमोहे-अज्ञाननाशके । पुनः किंविशिष्टे ? । 'अमोहे' मोहो-मौढ्यं तेन रहिते । " मोहो मौढ्यं चिन्ता ध्यानं " इत्यभिधानचिन्तामणिः ( का० २, श्लो० २३४ ) । किंवि० मतम् ? । 'अतनूनम्' तनु-परैः हापयितुं शक्यम् ऊनं-परमतापेक्षया सकलार्थप्रकाशकं तादृशं न किन्तु परैर्हापयितुं अशक्यम् । यावदर्थप्रकाशकं चेति भावः । किंविशिष्टस्त्वम् ? । 'अस्मराधीरधीः' नास्ति स्मरेण-कन्दर्पेण अधीरा-चञ्चला धीः-बुद्धिः यस्य स तथा । पुनः किंविशिष्टः ? । सुमतः-सुन्दराभिप्रेतः । कस्य ? । असुमतः-प्राणिनः । असवो विद्यन्ते यस्यासौ असुमान् तस्य इति व्युत्पत्तिः । जातावेकवचनम् ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥



कालीदेव्यै प्रार्थना—

नगदामानगदा मा-
महो ! महोराजिराजितरसा तरसा ।
घनघनकाली काली
बतावतादूनदूनसत्रासत्रा ॥ ४ ॥ ५ ॥

—आर्या०

ज० वि०—नगदामेति । 'अहो' इत्यामन्त्रणे विस्मये वा, बतेति विस्मये, काली-काल्य-भिधाना देवी मां तरसा-वेगेन बलेन वा अवतात्-रक्षतात् इति क्रियाकारकप्रयोगः । अत्र 'अवतात्' इति क्रियापदम् । का कर्त्री ? 'काली' । कं कर्मतापन्नम् ? 'माम्' । केन ? 'तरसा' । अवतादित्यत्र बवयोरैक्यं तु यमकवशादवसेयम् । "यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित्" इतिवचनात् । काली कथंभूता ? 'नगदामानगदा' नगान् द्यति-खण्डयतीति नगदा, अमाना-अप्रमाणा महतीत्यर्थः, एतादृशी गदा-प्रहरणविशेषो यस्याः सा तथा । पुनः कथं-भूता ? 'महोराजिराजितरसा' महांसि-तेजांसि तेषां राजिः-ततिः तया राजिता-शोभिता रसा-पृथिवी यया सा तथा । पुनः कथंभूता देवी ? 'घनघनकाली' घनाः-सान्द्राः घनाः-मेघास्तद्वत् काली-श्यामा । पुनः कथं० ? 'ऊनदूनसत्रासत्रा' ऊनाः-स्तोकाः-परिवाररहितत्वे-नाल्पाः दूनाः-उपतप्ताः-संतापवन्तः सत्रासाः-सभयाः तान् त्रायत इति ऊनदूनसत्रासत्रा ॥

१ '०दाऽमा०' इत्यपि पाठः । २ 'सत्रा' इति पृथक् पदं वा ।

अथ समासः—नगान् द्यतीति नगदा 'तत्पुरुषः'। न विद्यते मानं यस्याः सा अमाना 'बहुव्रीहिः'। अमाना चासौ गदा च अमानगदा 'कर्मधारयः'। नगदा अमानगदा यस्याः सा नगदा० 'बहुव्रीहिः'। महसां राजिर्महोराजिः 'तत्पुरुषः'। महोराज्या राजिता महोरा० 'तत्पुरुषः'। महोराजिराजिता रसा यया सा महोरा० 'बहुव्रीहिः'। घनाश्च ते घनाश्च घनघनाः 'कर्मधारयः'। घनघनवत् काली घन० 'तत्पुरुषः'। ऊनाश्च दूनाश्च सत्रासाश्च ऊनदूनसत्रासाः 'इतरेतरद्वन्द्वः'। ऊनदूनसत्रासान् त्रायते इत्यूनदूनसत्रासत्रा 'तत्पुरुषः'॥ इति काव्यार्थः॥ ४॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीसुमतिजिनस्तुतिवृत्तिः॥ ५॥

सि० वृ०—नगदामेति। अहो इत्यामन्त्रणे। "अहो बतानुकम्पायां, खेदे सम्बोधनेऽपि च" इति विश्वः। बतेति विस्मये। "खेदानुकम्पासन्तोष–विस्मयामन्त्रणे बत" इत्यमरः (श्लो० २८२१)। काली–काल्यभिधाना देवी मां तरसा–वेगेन बलेन वा अवतात्–रक्षतादित्यर्थः। 'अव रक्षणे' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०१) कर्तरि परस्मैपदे तातङि प्रथमपुरुषैकवचनम्। अवतादित्यत्र बवयोरैक्यं तु यमकवशादवसेयम्, "यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित्" इतिवचनात्। काली कथंभूता?। 'नगदामानगदा' नगान्–पर्वतान् द्यति–खण्डयतीति नगदा सा चासावमाना–अप्रमाणा महतीत्यर्थः गदा–प्रहरणविशेषो यस्याः सा तथा। पुनः कथंभूता?। 'महोराजराजितरसा' महांसि–तेजांसि तेषां राजिः–ततिः तया राजिता–शोभिता रसा–पृथिवी यया सा तथा। "राजिर्लेखा ततिर्वीथी, मालाल्यावलिपङ्क्तयः" इति हैमः (का० ६, श्लो० ५९)। "सर्वसहा रत्नगर्भा, जगती मेदिनी रसा" इति हैमः (का० ४, श्लो० ३)। पुनः कथंभूता?। 'घनघनकाली' घनाः–सान्द्राः ते च ते घना–मेघाः तद्वत् काली-श्यामा। पुनः कथंभूता?। 'ऊनदूनसत्रासत्रा' ऊनाः-स्तोकाः परिवाररहित्येनाल्पाः, दूनाः–उपतप्ताः–सन्तापवन्तः, सत्रासाः–सभयाः, ऊनाश्च दूनाश्च सत्रासाश्च ऊनदूनसत्रासाः 'इतरेतरद्वन्द्वः' तान् ऊनदूनसत्रासान् त्रायते इत्यूनदूनसत्रासत्रा 'तत्पुरुषः'। 'स्कन्धकं' छन्दः॥ ४॥

॥ इति महोपाध्यायश्रीभानुचन्द्रगणिशिष्यमहोपाध्यायश्रीसिद्धिचन्द्रगणिविरचितायां श्रीशोभनस्तुतिवृत्तौ श्रीसुमतिजिनस्तुतिवृत्तिः॥ ५॥

सौ० वृ०-नगदामेति। 'अहो' इति आश्चर्ये कोमलामन्त्रणे वा। कालीनाम्नी देवी मां अवतात् इत्यन्वयः। 'अवतात्' इति क्रियापदम्। का कर्त्री?। 'काली'। 'अवतात्' रक्षतु। कं कर्मतापन्नम्?। 'माम्।' कथम्?। 'तरसा' वेगेन। कथम्?। 'बत' इति खेदे। किंविशिष्टा काली?। नगान्–पर्वतान् द्यति–खण्डयति इति 'नगदा'। पुनः किंविशिष्टा काली?। 'अमाना' अप्रमाणा। गदा–प्रहरणविशेषो यस्याः सा 'अमानगदा'। पुनः किंविशिष्टा काली?। महोभिः-तेजोभिः राजिता–शोभिता रसा–पृथ्वी यया सा 'महोराजितरसा'। पुनः किं० काली?। घनो-निचितः जलेन पूर्णः एतादृशो यो घनः-मेघः तद्वत्

काली-वर्णेन श्यामा 'घनघनकाली'। पुनः किं० काली ?। ऊना-हीनाः सौभाग्यादिना दूना-दुःखिताः सत्रासाः-सभयाः तान् प्रति त्रायते-रक्षतीति 'ऊनदूनसत्रासत्रा'। एतादृशी काली विद्या-देवी मां अवतात्। इति पदार्थः ॥

अथ समासः--नगान् द्यति-खण्डयति इति नगदा। अमाना गदा यस्याः सा अमानगदा। यद्वा माने-साहंकारे जने गदा इव गदा मानगदा। महोभिः राजिता रसा यया सा महोराजितरसा। घनश्चासौ घनश्च घनघनः, यद्वा घनेन-जलेन घनः घनघनः, घनघनवत् काली घनघनकाली। त्रासेन सहिताः सत्रासाः, ऊनाश्च दूनाश्च सत्रासाश्च ऊनदूनसत्रासाः, ऊनदूनसत्रासा त्रायते इति ऊनदूनसत्रासत्रा। "तरसा बलवेगयोः" इति महीपः। "कीलालं भुवनं वनं घनरसः" इति हैमः (का० ४, श्लो० १३५)। "त्रासस्त्वाकस्मिकं भयं" इति हैमः (का० १, श्लो० १३५)। अस्यां स्तुतौ औपच्छन्द-सिकजात्या द्वित्र्यक्षरैः यमकालंकारः॥ इति चतुर्थवृत्तार्थः॥ ४॥

श्रीपञ्चमजिनेशस्य, स्तुतेरर्थो लिवीकृतः।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना ॥

॥ इति सुमतिजिनस्तुतिवृत्तिः॥ ५॥

दे०व्या०-नगदामेति। 'अहो' इत्याश्चर्ये। 'बत' इति विस्मये। काली देवी मां तरसा-शीघ्रं अवतात्-रक्षतात् इत्यन्वयः। 'अव रक्षणे' इति धातुः। 'अवतात्' इति क्रियापदम्। का कर्त्री ?। 'काली' देवी। कं कर्मतापन्नम् ?। माम्। अवतादित्यत्र बवयोरैक्यात् वकारस्थाने बकारग्रहणम्। किंविशिष्टा काली ?। 'नग-दामानगदा' नगं-पर्वतं द्यति-खण्डयतीति नगदा एवंविधा अमाना-अप्रमाणा विपुलत्वात् गदा-प्रहरणविशेषो यस्याः सा तथा। पुनः किंविशिष्टा ?। 'महोराजिराजितरसा' महसः-प्रभायाः राजिः-पंक्तिः तया राजिता-शोभिता रसा-पृथिवी यया सा तथा। "जगती मेदिनी रसा" इत्यभिधानचिन्तामणिः (का० ४, श्लो० ३)। पुनः किंविशिष्टा ?। 'घनघनकाली' घनो-निबिडो यो घनो-मेघः तद्वत् काली-कृष्णवर्णा। पुनः किंविशिष्टा ?। 'ऊनदूनसत्रा' ऊना-अपूर्णा धनैरिति शेषः, अत एव दूनाः-दुःखिताः तेषां सत्रं-धनं यस्याः सा तथा। पुनः किंविशिष्टा ?। सत्रा-सुशीला।

" सत्रं गृहं धनं सत्रं, सत्रं दानमिहेरितम्।
सत्रं नाम वनं सत्रं, सत्रं सच्चरितं मतम् ॥ "

इत्यनेकार्थः। अथवा ऊना धनादिना दूना रोगादिना सत्रासाः-सभयाः विपक्षादिना तान् त्रायते-रक्षती-त्येकमेव पदम्॥ इति चतुर्थवृत्तार्थः॥ ४॥



## ६ श्रीपद्मप्रभजिनस्तुतयः

अथ श्रीपद्मप्रभाय विनतिः--

पादद्वयी दलितपद्ममृदुः प्रमोद-
मुन्मुद्रतामरसदामलतान्तपात्री ।
पाद्मप्रभी प्रविदधातु सतां वितीर्ण-
मुन्मुद्रतामरसदा मलतान्तपात्री ॥ १ ॥

—वसन्ततिलका ( ८, ६ )

ज० वि०—पादद्वयीति । 'पाद्मप्रभी' पद्मप्रभस्येयं पाद्मप्रभीति व्युत्पत्तेः पद्मप्रभ-तीर्थकरसम्बन्धिनी पादद्वयी-चरणद्वितयी प्रमोदं-आनन्दं प्रविदधातु-प्रकर्षेण विदधातु-करोत्विति क्रियाकारकान्वयः । अत्र 'प्रविदधातु' इति क्रियापदम् । का कर्त्री ? 'पादद्वयी' । कं कर्मतापन्नम् ? 'प्रमोदम्' । पादद्वयी किंसम्बन्धिनी ? 'पाद्मप्रभी' । पादद्वयी कथंभूता ? 'दलितपद्ममृदुः' दलानि जातान्यस्येति दलितं-विकसितं यत् पद्मं-कमलं तद्वन्मृदुः-कोमला । पुनः कथं० ? 'उन्मुद्रतामरसदामलतान्तपात्री' उन्मुद्राणि-विकसितानि, उद्गता मुद्रा-मुद्रणं येभ्यः इति व्युत्पत्तेः, उन्मुद्राणि यानि तामरसानि-महोत्पलानि तत्सम्बन्धीनि यानि दामानि लतानामन्तानि-प्रान्तानि कुसुमानीत्यर्थः तेषां पात्री-भाजनम्-आधार इत्यर्थः । सुरासुरादिभिः कमलकुसुमादिभिः कृत्वा पूजितत्वेन भगवत्पादद्वय्यां तामरसानां कुसुमानां च सत्त्वात् । अथवा उन्मुद्रतामरसदामान्येव प्रलम्बत्वात् लता-वल्ल्यः तासामन्तपात्री-समीपभाजनम् । यदिवा उन्मुद्रतामरसदा आमलतान्तपात्री चेतिविशेषणद्वयमेव । तथा चायमर्थः-उन्मुद्राणि-अपर्यन्तानि तामरसानि-कमलानि दयत इत्युन्मुद्रतामरसदा । यद्वा उन्मुत्-उद्गतहर्षं यत् रतं-सुरतं तत्र आमः-प्रत्यग्रो यो रसः-अभिलाषः तं द्यति-खण्डयतीति उन्मुद्रतामरसदा । तथा 'आमलतान्तपात्री' आमलता-रोगवल्ली तस्या अन्तो-विनाशस्तस्य पात्री-भाजनम् । पुनः कथंभूता पादद्वयी ? 'वितीर्णमुत्' वितीर्णा-दत्ता मुत्-प्रीतिर्यया सा तथा । केषाम् ? 'सतां' सत्पुरुषाणाम् । पुनः कथं० ? 'मुद्रतामरसदा' मुदा-हर्षेण रता अमरसदः-सुरसभा यस्याः सा मुद्रतामरसदा । पुनः कथं० ? 'मलतान्तपात्री' मलेन-कर्मलक्षणेन तान्तान्-ग्लानान् पाति-रक्षतीत्येवंशीला मलतान्तपात्री ॥

अथ समासः—पादयोर्द्वयी पादद्वयी 'तत्पुरुषः' । दलितं च तत् पद्मं च दलितपद्मं 'कर्मधारयः' । दलितपद्मवन्मृदुः दलितपद्ममृदुः 'तत्पुरुषः' । उद्गता मुद्रा येभ्यस्तान्युन्मु-

द्राणि ' बहुव्रीहिः ' । उन्मुद्राणि च तानि तामरसानि च उन्मुद्र० ' कर्मधारयः ' । उन्मुद्रतामरसाना दामानि उन्मुद्र० ' तत्पुरुषः ' । लतानामन्तानि लतान्तानि ' तत्पुरुषः ' । उन्मुद्रतामरसदामानि च लतान्तानि च उन्मुद्र० ' इतरेतरद्वन्द्वः ' । उन्मुद्रतामरसदामलतान्तानां पात्री उन्मुद्र० ' तत्पुरुषः ' । यद्वा उन्मुद्रतामरसदामान्येव लता उन्मुद्र० ' कर्मधारयः ' । उन्मुद्रतामरसदामलतानामन्तः उन्मुद्र० ' तत्पुरुषः ' । उन्मुद्रतामरसदामलतान्तस्य पात्री उन्मुद्र० ' तत्पुरुषः ' । विशेषणद्वयपक्षे त्वेवं समासः । उन्मुद्रतामरसानि दयत इति उन्मुद्रतामरसदा ' तत्पुरुषः ' । यद्वा उद्गता मुद् यस्मात् तत् उन्मुत् ' बहुव्रीहिः ' । उन्मुत् च तत् रतं च उन्मुद्रतं ' कर्मधारयः ' । आमश्चासौ रसश्च आमरसः ' कर्मधारयः ' । उन्मुद्रते आमरसः उन्मुद्रतामरसः ' तत्पुरुषः ' । उन्मुद्रतामरसं द्यतीति उन्मुद्रतामरसदा ' तत्पुरुषः ' । मलेन तान्ता मलतान्ताः ' तत्पुरुषः ' । मलतान्तान् पातीत्येवंशीला मलतान्तपात्री ' तत्पुरुषः ' । यद्वा पातीति पात्री मलतान्तानां पात्री मल० ' तत्पुरुषः ' ॥ इति काव्यार्थः ॥ १ ॥

सि० वृ०—पादद्वयीति । पद्मप्रभस्येयं पाद्मप्रभी—पद्मप्रभतीर्थंकरसम्बन्धिनी पादयोर्द्वयी पादद्वयी—चरणद्वितयी प्रमोदं—आनन्दं प्रविदधातु—प्रकर्षेण करोत्वित्यर्थः । प्रविपूर्वक ' डुधाञ् धारणपोषणयोः ' इति धातोः ' आशीःप्रेरणयोः ' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप् । ' अप्० ' ( सा० सू० ६९१ ), ' द्विश्च ' ( सा० सू० ७१० ) इति धकारस्य द्वित्वम्, ' ह्रस्वः ' ( सा० सू० ७१३ ) इति पूर्वधकारस्य ह्रस्वत्वम्, 'झपानां जबचपाः' ( सा० सू० ७१४ ) इति पूर्वधकारस्य दकारः । अत्र ' प्रविदधातु ' इति क्रियापदम् । का कर्त्री ? । पादद्वयी । कं कर्मतापन्नम् ? । प्रमोदम् । पादद्वयी किंसम्बन्धिनी ? । पाद्मप्रभी । कथंभूता पादद्वयी ? । 'दलितपद्ममृदुः' दलानि जातान्यस्येति दलितं विकसितं वा यत् पद्मं—कमलं तदिव मृदुः—सुकुमारा कोमलेतियावत् । ' वोतो गुणवचनात् ' ( पा० अ० ४, पा० १, सू० ४४) इति पाक्षिक ईप्भावे मृदुरिति मन्तव्यम् । पुनः कथंभूता ? । ' उन्मुद्रतामरसदामलतान्तपात्री ' उन्मुद्राणि—विकसितानि, उद्गता मुद्रा—मुद्रणं येभ्य इति व्युत्पत्तेः, उन्मुद्राणि यानि तामरसानि—महोत्पलानि तत्सम्बन्धीनि यानि दामानि लतानामन्तानि प्रान्तानि च कुसुमानीत्यर्थः, तेषां पात्री-भाजनं आधारेत्यर्थः । " योग्यभाजनयोः पात्रं " इत्यमरः । सुरासुरादिभिः कमलकुसुमादिभिः कृत्वा पूजितत्वेन भगवत्पादद्वय्यां तामरसानां कुसुमानां च सदा सत्त्वादिति भावः । अथवा उन्मुद्रतामरसदामान्येव प्रलम्बत्वाद् लता—वल्ल्यस्तासामन्तपात्री—समीपभाजनम् । यदिवा उन्मुद्रतामरसदा आमलतान्तपात्री चेति विशेषणद्वयमेव । तथा चायमर्थः—उन्मुद्राणि—अपर्यन्तानि सुरासुरनिर्मितानि रेखात्मकानीव तामरसानि दयत इत्युन्मुद्रतामरसदा । यद्वा उद्गता मुद् यस्मात् तत् उन्मुत् उन्मुत्—हर्षदं यत् रतं—सुरतं तस्मिन् आमः—प्रत्यग्रो यो रसः—अभिलाषस्तं द्यति—खण्डयतीति उन्मुद्रतामरसदा । उन्मुच्च तद् रतं च उन्मुद्रतं 'कर्मधारयः', आमश्चासौ रसश्च आमरसः ' कर्मधारयः ' । तथा ' आमलतान्तपात्री ' आमो—रोगः तल्लक्षणा लता—वल्ली

तस्या अन्तः–विनाशस्तस्य पात्री–भाजनं योग्या चेत्यर्थः । पुनः कथंभूता ? । 'वितीर्णमुत्' वितीर्णा–दत्ता मुत्–प्रीतिर्यया सा तथा । केषाम् ? । सतां–सत्पुरुषाणाम् । पुनः कथंभूता ? । 'मुद्रतामरसदा' मुदा–हर्षेण रता–आसक्ता अमराणां–देवानां सत्–सभा यस्याः सा तथा । "समाजः परिषत् सदः" इति हैमः ( का० ३, श्लो० १४९ ) । पुनः कथंभूता ? । 'मलतान्तपात्री' मलेन–पापलक्षणेन तान्तान्–म्लानान् पाति–रक्षतीत्येवंशीला मलतान्तपात्री । शीलार्थेऽञ् । यद्वा पातीति पात्री मलतान्तानां पात्री मलतान्तपात्रीत्यर्थः । "मलोऽस्त्रियाम( स्त्री पाप ? ) विट्किट्टा" इत्यमरः ( श्लो० २७२९ ) ॥ १ ॥

सौ० वृ०—यः सुमतिः भवति तस्य विकसितपद्मवत् मुखप्रभा भवति । अनेन सम्बन्धेन आयातस्य षष्ठस्य पद्मप्रभजिनस्य स्तुतिव्याख्यानं लिख्यते । पादद्वयीति ।

पादद्वयी–चरणद्वितयी सतां–सज्जनानां प्रमोदं–हर्षं प्रविदधातु इत्यन्वयः । 'प्रविदधातु' इति क्रियापदम् । का कर्त्री ? । 'पादद्वयी' । 'प्रविदधातु' करोतु । कं कर्मतापन्नम् ? । 'प्रमोदं' प्रकर्षेण हर्षम् । केषाम् ? । 'सताम्' । किंविशिष्टा पादद्वयी ? । दलितं–विकसितं यत् पद्मं–कमलं तद्वन्मृदुः–कोमला 'दलितपद्ममृदुः' । पुनः किंविशिष्टा पादद्वयी ? । उन्मुद्राणि–स्मेराणि यानि तामरसानि–कमलानि तेषां दामानि–मालाः सैव[1] लम्बायमानत्वात् लता–वल्ली तासां अन्तः–स्वरूपं निकटं वा तेषां पात्रीव पात्री–भाजनं 'उन्मुद्रतामरसदामलतान्तपात्री' । पुनः किंविशिष्टा पादद्वयी ? । 'पाद्मप्रभी' पद्मप्रभजिनसंबन्धिनी । पुनः किंविशिष्टा पादद्वयी ? । वितीर्णा–दत्ता मुत्–आह्लादो यया सा 'वितीर्णमुद्' । पुनः किं० पादद्वयी ? । उद्रतं यद् रतं–सुरतं तथा रागता तदेव आमरसः–अपक्वो यो रसः तं प्रति द्यति–खण्डयतीति 'उद्रतामरसदा' । यद्वा उत्–प्राबल्येन रतो–रागो उद्रतः, उद्रता अमरसदः–सुरसभा यस्यां सा 'उद्रतामरसदा' । यद्वा उन्मुद्राणि–विकस्वराणि तामरसानि–कमलानि सुरैर्निर्मितानि रेखात्मकानि वा दयते–प्रापयते इति 'उन्मुद्रतामरसदा' । पुनः किंविशिष्टा पादद्वयी ? । मलः–कर्मजनितमलः तस्य भावः मलता ( न मलता अमलता ) तस्याः अन्तो–नाशः तस्य पात्री–स्थानं '( अ ) मलतान्तपात्री' कर्मनाशकृदित्यर्थः । यद्वा मलेन–कर्मरजसा तान्ताः–श्रान्ताः तान् पात्री–रक्षणशीला । यद्वा आमो–रोगः स एव लता–वल्ली तस्या अन्तो–नाशः तस्य पात्री–स्थानम् । इति पदार्थः ॥

अथ समासः—द्वयोः समाहारो द्वयी, पादयोर्द्वयी पादद्वयी । दलितं च तत् पद्मं च दलितपद्मम्, दलितपद्मवत् मृदुः दलितपद्ममृदुः । प्रकृष्टश्चासौ मोदश्च प्रमोदः, तं प्रमोदम् । उन्मुद्राणि च तानि तामरसानि च उन्मुद्रतामरसानि, उन्मुद्रतामरसानां दामानि उन्मुद्रतामरसदामानि, उन्मुद्रतामरसदामान्येव लता उन्मुद्रतामरसदामलताः, उन्मुद्रतामरसदामलतानां अन्तः उन्मुद्रतामरसदामलतान्तः उन्मु०लतान्तस्य पात्री उन्मु०लतान्तपात्री । यद्वा उन्मुद्रतामरसानि दयते इति उन्मुद्रतामरसदा । पद्मप्रभस्य इयं पाद्मप्रभी । वितीर्णा मुद् यया सा वितीर्णमुद् । उत्–प्राबल्येन रत उद्रतः, आमश्चासौ रसश्च आमरसः, उद्रत एव आमरसः उद्रतामरसः, उद्रतामरसं द्यति–खण्डयति इति उद्रतामरसदा । मलेन तान्ता मलतान्ताः, मलतान्तान् पातीति मलतान्तपात्री । यद्वा आमो–रोगः स एव लता आमलता, आमलताया अन्तो–नाशः आमलतान्तः, आमलतान्तस्य पात्री आमलतान्तपात्री । द्वितीयचतुर्थपादेषु यमकालङ्कारः । वसन्ततिलकाच्छन्दसा वृत्तमिदम् ॥ इति प्रथमवृत्तार्थः ॥ १ ॥

---

१ 'ता एव लम्बायमानत्वात् लता- वल्ल्यस्तासां अन्तः-स्वरूपं निकटं वा तस्य' इति प्रतिभाति ।

वृ० व्या०-पादद्वयीति । पाद्मप्रभी पादद्वयी प्रमोदं प्रविदधातु-करोतु इत्यन्वयः । 'डु धाञ् धारणपोषणयोः' इति धातुः । 'प्रविदधातु' इति क्रियापदम् । का कर्त्री ? । पादद्वयी । कं कर्मतापन्नम् ? । प्रमोदम् । किंविशिष्टा पादद्वयी ? । पाद्मप्रभी-पद्मप्रभसम्बन्धिनी । पुनः किंविशिष्टा ? । 'दलितपद्ममृदुः' दलितं-विकसितं यत् पद्मं-कमलं तद्वत् मृदुः-कोमला । "दलितं स्फुटितं स्फुटं" इत्यभिधानचिन्तामणिः ( का० ४, श्लो० १९४ ) । 'वोर्गुणात्' ( सा० सू० ४०४ ) इति सूत्रस्य विकल्पितत्वेनात्र ईबभावः । पुनः किंविशिष्टा ? । 'उन्मुद्रतामरसदामलतान्तपात्री' उन्मुद्राणि-विकसितानि यानि तामरसदामानि-कमलमालाः लतान्ताः-पल्लवाः तेषां पात्रीव पात्री-भाजनम् । "पात्रामत्रे तु भाजनम्" इत्यभिधानचिन्तामणिः ( का० ४, श्लो० ९२ ) । पुनः किंविशिष्टा ? । 'वितीर्णमुद्' वितीर्णा-दत्ता मुद्-आनन्दो यया सा तथा । केषाम् ? । सतां-सज्जनानाम्, दुर्जनानां तदसम्भवात् । पुनः किंविशिष्टा ? । 'मुद्रतामरसदा' मुदा-हर्षेण रता—आसक्ता अमरसदो-देवसभा यस्याः सा तथा । पुनः किंविशिष्टा ? । 'मलतान्तपात्री' मलेन-कर्मणा तान्तान्-ग्लानान् पाति-रक्षतीत्येवंशीला ॥ इति प्रथमवृत्तार्थः ॥ १ ॥



**समग्रजिनेश्वराणां स्तुतिः—**

सा मे मतिं वितनुताज्जिनपङ्क्तिरस्त-
मुद्राऽऽगताऽमरसभाऽसुरमध्यगाऽऽद्याम् ।
रत्नांशुभिर्विदधती गगनान्तराल-
मुद्रागतामरसभासुरमध्यगाद् याम् ॥ २ ॥[1]

—वसन्त०

ज० वि०—सा मे मतिमिति । सा जिनपङ्क्तिः-अर्हतां श्रेणी मे-मम मतिं-प्रज्ञां वितनुतात्-विस्तारयतात् इति क्रियाकारकयोजना । अत्र 'वितनुतात्' इति क्रियापदम् । का कर्त्री ? 'जिनपङ्क्तिः' । कां कर्मतापन्नाम् ? 'मतिम्' । यत्तदोः परस्परमभिसम्बन्धात् सा का ? यां जिनपङ्क्तिं सुरसभा-देवपर्षत् अध्यगात्-प्राप्तवती । अत्रापि 'अध्यगात्' इति क्रियापदम् । का कर्त्री ? 'सुरसभा' । कां कर्मतापन्नाम् ? 'याम्' । यां कथंभूताम् ? आद्याम् । सुरसभा कथंभूता ? 'अस्तमुद्रा' अस्ता-क्षिप्ता मुद्रा-पर्यन्तो यया सा तथा । अप्रमाणेत्यर्थः । पुनः कथंभूता ? 'आगता' आयाता । अर्थात् स्वर्गत इति ज्ञेयम् । अनेन विशेषणेन ननु सुरसभायाः सुरलोके सद्भावः जिनपङ्क्तिस्त्विहेति कथं जिनपङ्क्तिं प्रति सुरसभाया अधिगमनं सम्भवेत् ? इति शङ्का व्युदस्ता । पुनः कथंभूता ? 'असुरमध्यगा' असुराणां-भवनवासिदेवविशेषाणां मध्यगा-मध्यवर्तिनी । मुक्तवैरेत्यर्थः । अथवा असुरमध्यगाद्यामिति जिनपङ्क्तेरेव विशेषणम् । तथाचैवं व्याख्या—असुरमध्यगानामाद्यां-प्रथमाम् । प्रथमं पूज्यतयाऽसुरमध्ये

१ 'मुद्रा गताऽमरसभा सुरमध्यगाद्याम्' इत्यपि पाठः ।

जिनपङ्क्तिरेव गच्छति, ततोऽन्ये गणधरादय इति । अत्र यदि अकारप्रश्लेषो न विधीयते तदा सुरमध्यगाद्यामिति विशेषणं भवति तदपि यौक्तिकमेव । अमरसभा किं कुर्वती ? ' विदधती ' कुर्वाणा । किं कर्मतापन्नम् ? ' गगनान्तरालं ' अन्तरिक्षोदरम् । कथंभूतम् ? ' उद्रागतामरसभासुरम् ' उद्रागं—उद्गतरागं यत् तामरसं—महोत्पलं तद्वद् भासुरं—दीप्तम् । रक्तच्छायमित्यर्थः । कैः कृत्वा ? ' रत्नांशुभिः ' रत्नानां—मुकुटाद्याभरणस्थितानां मणीनां ये अंशवः—किरणास्तैः । इयं विदधतीति क्रिया आगतेत्यनया क्रियया योज्यते । तथाचायं फलितार्थः—मणिमयूखैः अन्तरिक्षोदरं रक्तच्छायं कुर्वन्ती आगता सती यामध्यगादिति ॥

अथ समासः—जिनानां पङ्क्तिः जिनपङ्क्तिः ' तत्पुरुषः ' । अस्ता मुद्रा यया सा अस्तमुद्रा ' बहुव्रीहिः ' । अमराणां सभा अमरसभा ' तत्पुरुषः ' । मध्ये गच्छतीति मध्यगा ' तत्पुरुषः ' । असुराणां मध्यगा असुरमध्यगा, यद्वा असुराणां मध्यं असुरमध्यं ' तत्पुरुषः ' । असुरमध्यं गच्छतीति असुर० ' तत्पुरुषः' । जिनपङ्क्तिपक्षे तु असुरमध्यगानां सुरमध्यगानां वा आद्या असुरमध्यगाद्या, सुर० वा 'तत्पुरुषः' । तां असुर०, सुर० वा । रत्नानामंशवो रत्नांशवः 'तत्पुरुषः' । तैः रत्नांशुभिः । गगनस्यान्तरालं गगनान्तरालं 'तत्पुरुषः ' । तत् गग० । उद्गतो रागो यस्मात् तत् उद्रागं ' बहुव्रीहिः ' । उद्रागं च तत् तामरसं च उद्राग० ' कर्मधारयः ' । उद्रागतामरसवद् भासुरं उद्राग० ' तत्पुरुषः ' । तत् उद्राग० ॥ इति काव्यार्थः ॥ २ ॥

सि० वृ०—सा मे मतिमिति । सा जिनपङ्क्तिः—अर्हतां श्रेणिः मे—मम मतिं—प्रज्ञां वितनुतात्—विस्तारयतादित्यर्थः । विपूर्वक ' तनु विस्तारे ' धातोः ' आशीःप्रेरणयोः ' ( सा० सू० ७०१ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनम् । अत्र ' वितनुतात् ' इति क्रियापदम् । का कर्त्री ? । ' जिनपङ्क्तिः ' जिनानां पङ्क्तिः जिनपङ्क्तिः इति ' तत्पुरुषः ' । कां कर्मतापन्नाम् ? । मतिम् । कस्य ? । मम । यत्तदोः परस्परमभिसम्बन्धात् सा का ? । यां जिनपङ्क्तिं अमरसभा—देवपर्षत् अध्यगात्—प्राप्तवतीत्यर्थः । अधिपूर्वक 'इण् गतौ' इति धातोः भूते सौ कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं दिप् । 'दादेः पे' ( सा० सू० ७२९ ) इति सिलोपे, 'इणः ( णिकोः ) सिलोपे गा वक्तव्यः' ( सा० सू० ८९९ ) इति गादेशः । ' दिबादावट् ' ( सा० सू० ७०७ ), ' इ यं स्वरे ' ( सा० सू० ११ ), ' स्वरहीनं०' ( सा० सू० १६ ) । तथाच 'अध्यगात्' इति सिद्धम् । अत्र ' अध्यगात् ' इति क्रियापदम् । का कर्त्री ? । 'अमरसभा' अमराणां सभा अमरसभा ' तत्पुरुषः ' " स्त्रियां सामाजिके गोष्ठ्यां द्युतिमन्दरयोः सभा " इति रभसः । कां कर्मतापन्नाम् ? । याम् । कथंभूतां याम् ? । आदौ भवा आद्या तां आद्यां, आद्यां पूज्यतया प्रथमां इति वा । कथंभूता अमरसभा ? । ' अस्तमुद्रा ' अस्ता—अस्तंगता मुद्रा—मानं —इयत्ता यस्याः सा तथा ।

" मुद्रा स्यादाकृतौ मुद्रा, मुद्रा मानेऽङ्गुलीयके ।
पिधानेऽपि भवेन्मुद्रा, मुद्रा कर्णविभूषणे ॥ "

इति नानार्थः। पुनः कथंभूता ?। 'आगता' आयाता अर्थात् स्वर्त इति ज्ञेयम् । पुनः कथंभूता ?। 'असुरमध्यगा' असुराणां—भवनपतिविशेषाणां मध्ये—विचाले गच्छतीति मध्यगा—मध्यवर्तिनी, मुक्तवैरिणीत्यर्थः। प्राञ्चस्तु असुरमध्यगाद्यामिति जिनपङ्क्तेरेव विशेषणं वदन्ति। तथाच असुरमध्यगानां आद्यां—प्रथमां, प्रथमं पूज्यतया असुरमध्ये जिनपङ्क्तिरेव गच्छति, ततोऽन्ये गणधराद्य इत्यर्थः। अत्र यद्यकारप्रश्लेषः न क्रियते तदा सुरमध्यगाद्यामितिविशेषणमपि भवति तदपि यौक्तिकमेव। अमरसभा किं कुर्वती ?। विदधती—प्रकुर्वती। किम् ?। 'गगनान्तरालं' गगनस्य—आकाशस्य अन्तरालं—मध्यम्। "व्योमान्तरिक्षं गगनं घनाश्रयः" इति हैमः ( का० २, श्लो० ७७ )। "अभ्यन्तरमन्तरालं, विचालं मध्यमन्तरे" इति हैमः ( का० ६, श्लो० ९६ )। कीदृशम् ?। 'उद्रागतामरसभासुरं' उद्रागं—उद्गतरागं यत् तामरसं—महोत्पलं तद्वत् भासुरं—दीप्तं रक्तच्छायमित्यर्थः। उद्गतो रागो यस्मात् तदुद्रागं 'तत्पुरुषः', उद्रागं च तत् तामरसं च इति 'कर्मधारयः'। कैः कृत्वा ?। 'रत्नांशुभिः' रत्नानां—मुकुटाद्याभरणास्थितानां मणीनां ये अंशवः—किरणास्तैः। "किरणोस्रमयूखांशु—गभस्तिघृणिधृश्नयः" इत्यमरः ( श्लो० २१० )। "रोचिरुस्ररुचिशोचिरंशुगोज्योतिरर्चिरुपधृत्यभीशवः" इत्यभिधानचिन्तामणौ ( का० २, श्लो० १३ )। इयं विदधतीति क्रिया आगतेत्यनया योज्यते। तथाच मणिमयूखैर्गगनोदरं रक्तच्छायं कुर्वन्ती आगता सती यामध्यगादिति फलितार्थः॥ २॥

सौ० वृ०—सा मे मतिमिति। सा जिनपंक्तिः—तीर्थकरपरम्परा मम मतिं वितनुतात् इत्यन्वयः। 'वितनुतात्' इति क्रियापदम्। का कर्त्री ?। 'जिनपंक्तिः' जिनश्रेणिः। 'वितनुतात्' विस्तारयतु। कां कर्मतापन्नाम् ?। 'मतिं' बुद्धिम्। कस्य ?। 'मम'। किंविशिष्टा जिनपंक्तिः ?। अस्ता—गता मुद्रा—प्रमाणं यस्याः सा 'अस्तमुद्रा'। अप्रमाणा इत्यर्थः। पुनः कथंभूता जिनपंक्तिः ?। 'गता' प्राप्ता। 'अमरसभा' देवपर्षत्। किंविशिष्टा अमरसभा ?। असुराणां मध्ये गच्छतीति असुरमध्यगा। मुक्तवैरत्यर्थः। ( पुनः कथंभूता जिनपंक्तिः ?। 'आद्या' प्रथमा। ) पुनः किंविशिष्टा जिनपंक्तिः ?। 'सा' प्रसिद्धा। सा का ?। या जिनपंक्तिः यां आद्यां पर्षदं अध्यगात् इत्यन्वयः। 'अध्यगात्' इति क्रियापदम्। का कर्त्री ?। जिनपंक्तिः। 'अध्यगात्' आश्रितवती। कां कर्मतापन्नाम् ?। यां गणधरपर्षदम्। अमरसभा किं कुर्वती ?। 'विदधती' निष्पादयती। किं कर्मतापन्नम् ?। 'गगनान्तरालं' अन्तरिक्षोदरम्। किंविशिष्टं गगनान्तरालम् ?। उत्—प्राबल्येन रागो यस्मिन् तत् उद्रागं, तादृशं यत् तामरसं—कमलं तद्वत् भासुरम्। कैः कृत्वा ?। रत्नानां—पद्मरागादीनां अंशवः—किरणाः तैः 'रत्नांशुभिः'। इति पदार्थः॥

अथ समासः—जिनानां पंक्तिः जिनपंक्तिः। अस्ता मुद्रा यस्याः सा अस्तमुद्रा। अमराणां सभा अमरसभा। असुराणां मध्यं असुरमध्यम्, असुरमध्ये गच्छतीति असुरमध्यगा। आदौ भवा आद्या, तां आद्याम्। रत्नानां अंशवः रत्नांशवः, तैः रत्नांशुभिः। विशेषेण दधती या सा विदधती। गगनस्य अन्तरालं गगनान्तरालम्। उत्—प्राबल्येन रागो यस्मिन् तत् उद्रागम्, उद्रागं च तत् तामरसं च उद्रागतामरसं, उद्रागतामरसवत् भासुरं उद्रागतामरसभासुरम्, तत् उद्रागतामरसभासुरम् ॥ इति द्वितीयवृत्तार्थः॥ २॥

दे० व्या०-सा मे मतिमिति । सा जिनपङ्क्तिः-तीर्थकरश्रेणिः मे-मम मतिं-बुद्धिं वितनुतात्-दद्यात् इत्यन्वयः । 'तनु विस्तारे' धातुः । 'वितनुतात्' इति क्रियापदम् । का कर्त्री ? । 'जिनपंक्तिः' जिनानां पंक्तिः जिनपंक्तिः इति विग्रहः । कां कर्मतापन्नाम् ? । मतिम् । कस्य ? । मे-मम । यत्तदोर्नित्याभिसम्बन्धात् यां जिनपंक्तिं अमरसभा-देवपर्षत् अध्यगात्-प्राप्तवतीत्यन्वयः । 'इण् गतौ' इति धातुः । 'अध्यगात्' इति क्रियापदम् । का कर्त्री ? । 'अमरसभा' अमराणां सभा अमरसभा इति विग्रहः । कां कर्मतापन्नाम् ? । जिनपंक्तिम् । किंविशिष्टां जिनपंक्तिम् ? । आद्याम्-आदिकालभवाम् । अथवा आद्यां पूज्यतया प्रथमाम् । किंविशिष्टा अमरसभा ? । 'अस्तमुद्रा' अस्ता-अस्तंगता मुद्रा-प्रमाणं यस्याः सा तथा अस्तमुद्रा चासौ आगता चेति विग्रहः । पुनः किंविशिष्टा ? । 'असुरमध्यगा' असुराणां-देवानां मध्ये गच्छतीति असुरमध्यगा । एतेनासुरदेवनयोः निसर्गवैरत्वात् तत्क्षणे परस्परं निर्वैरत्वं ध्वन्यते । किं कुर्वती अमरसभा ? । विदधती-प्रकुर्वती । किम् ? । 'गगनान्तरालम्' गगनस्य-नभसः अन्तरालं-अभ्यन्तरम् । "अभ्यन्तरमन्तरालम्" इत्यभिधानचिन्तामणिः ( का० ६, श्लो० ९६ ) । किंविशिष्टं गगनान्तरालम् ? । 'उद्रागतामरसभासुरम्' उत्-प्राबल्येन रागो-रक्तिमा यस्मिन् तत् उद्रागम्, तच्च यत् तामरसं-कमलं तद्वत् भासुरं-दीप्तम् । कैः ? । 'रत्नांशुभिः' रत्नानां-हीरकाणां अंशवः-किरणाः तैः ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥



**श्रीसिद्धान्तस्वरूपम्—**

> भ्रान्तिच्छिदं जिनवरागममाश्रयार्थ-
> मारामम्मानम लसन्तमसङ्गमानाम् ।
> धामाग्रिमं भवसरित्पतिसेतुमस्त-
> माराममानमलसन्तमसं गमानाम् ॥ ३ ॥

—वसन्त०

ज० वि०—भ्रान्तिच्छिदमिति । भो भव्य ! प्राणिन् ! त्वं जिनवरागमं-भगवत्सिद्धान्तं आनम-प्रणमेति क्रियाकारकसंटङ्कः । अत्र 'आनम' इति क्रियापदम् । कः कर्ता ? 'त्वम्' । कं कर्मतापन्नम् ? 'जिनवरागमम्' । कथंभूतं जिनवरागमम् ? 'भ्रान्तिच्छिदं' भ्रान्तिः-भ्रमः तं छिनत्तीति तथा तम् । पुनः कथं० ? 'आरामम्' आराममिवारामम्, उद्यानमित्यर्थः । 'आश्रयार्थं' संश्रयणार्थम्, संश्रयणहेतोरित्यर्थः । केषाम् ? 'असङ्गमानां' निःसङ्गानां मुनीनामित्यर्थः । पुनः कथं० ? 'लसन्तं' शोभमानम् । पुनः कथं० ? 'धाम' स्थानम् । केषाम् ? 'गमानां' सदृशपाठानाम् । पुनः कथं० ? 'अग्रिमं' प्रधानम् । पुनः कथं० ? 'भवसरित्पतिसेतुं' भवरूपो यः सरित्पतिः-समुद्रः तत्र सेतुः-तारणबन्धः 'पाजि' इति प्रसिद्धस्तम् । पुनः कथं० ? 'अस्तमाराममानमलसन्तमसं' मारः-कामः आमः-रोगः मानः-अभिमानः मलः-कालुष्यं एते एव मलीमसात्मकत्वात् सन्तमसं-तमिस्रं तत् अस्तं येन स तथा तम् ॥

अथ समासः—श्रान्तिं छिनत्तीति श्रान्तिच्छित् 'तत्पुरुषः' तं श्रान्तिच्छिदम्। जिनानां जिनेषु वा वराः जिनवराः 'तत्पुरुषः'। जिनवराणामागमः जिनवरा० 'तत्पुरुषः'। तं जिन०। आश्रय एव अर्थो यस्य तत् आश्रयार्थम् 'बहुव्रीहिः'। न विद्यते सङ्क्रमो येषां ते असङ्क्रमाः 'तत्पुरुषः'। तेषामसङ्क्रमानाम्। सरितां पतिः सरित्पतिः 'तत्पुरुषः'। भव एव सरित्पतिर्भवस० 'कर्मधारयः'। भवसरित्पतौ सेतुर्भवस० 'तत्पुरुषः'। तं भवस०। मारश्च आमश्च मानश्च मलश्च मारामानमलाः 'इतरेतरद्वन्द्वः'। मारामानमला एव सन्तमसं मारा० 'कर्मधारयः'। अस्तं मारामानमलसन्तमसं येन सः अस्तमारा० 'बहुव्रीहिः'। तं अस्तमारा०॥ इति काव्यार्थः॥ २॥

सि० वृ०—श्रान्तिच्छिदमिति। हे भव्य! प्राणिन्! त्वं जिनवरागमं—परमेष्ठिसिद्धान्तं आनम-प्रणमेत्यर्थः। आङ्पूर्वक 'णम प्रह्वीभावे' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनं हिः। 'अप् कर्तरि' (सा० सू० ६९१) इत्यप्। 'अतः' (सा० सू० ७०९) इति हेर्लुक्। तथाच 'आनम' इति सिद्धम्। अत्र 'आनम' इति क्रियापदम्। कः कर्ता?। त्वम्। कं कर्मतापन्नम्?। 'जिनवरागमं' जिनेषु जिनाना वा वराः—श्रेष्ठाः तेषा आगमः—सिद्धान्तस्तं जिनवरागमम्। कथंभूतं जिनवरागमम्?। 'श्रान्तिच्छिदं' श्रान्तिं अर्थात् संसारखेदं छिनत्तीति श्रान्तिच्छित्, तं श्रान्तिच्छिदम्। पुनः कथंभूतम्?। 'आरामं' आराममिव आरामं उपवनमित्यर्थः। "आरामः स्यादुपवनं, कृत्रिमं वनमेव यत्" इत्यमरः (श्लो० ६९२)। किमर्थम्?। आश्रियते इत्याश्रयः आश्रय एव अर्थः—प्रयोजनं यस्य तत् आश्रयार्थम्। केषाम्?। 'असङ्क्रमाना' नास्ति सङ्क्रमः—संसारसम्बन्धो येषा ते असङ्क्रमा—मुनयः तेषां असङ्क्रमानाम्। पुनः कथंभूतम्?। लसन्तं—शोभमानम्। पुनः कथंभूतम्?। 'धाम' स्थानं गृहं वा। "धामागारं निशान्तं च" इति हैमः (का० ४, श्लो० ५८)। केषाम्?। 'गमानां' गमाः—सदृशपाठास्तेषाम्। पुनः कथंभूतम्?। 'अग्रिम' प्रधानं सर्वोत्कृष्टत्वादिति भावः। पुनः कथं०?। 'भवसरित्पतिसेतुं' भवः-संसारः स एव सरित्पतिः—समुद्रः तत्र सेतुः—तारणार्थं बन्धविशेषः 'पाजि' इति प्रसिद्धस्तद्रूपमित्यर्थः। "सेतौ पाल्यालिसंवराः" इति हैमः (का० ४, श्लो० ११)। पुनः कथं०?। 'अस्तमारामानमलसन्तमसं' मारः—स्मरः आमः—रोगः मानः—गर्वः मलः—पापं मारश्च आमश्च मानश्च मलश्च मारामानमलाः 'इतरेतरद्वन्द्वः'। "मदनो मन्मथो मारः, प्रद्युम्नो मीनकेतनः" इत्यमरसिंहः (श्लो० ४९), "मधुदीपमारौ मधुसारथिः स्मरः" इति हैमः (का० २, १४१) "आम आमय आकल्यः" इति हैमः (का० ३, श्लो० १२७)। एत एव मलीमसत्वात् सन्तमसं-अन्धकारं तत् अस्तं—निराकृतं येन स तथा तम्॥ २॥

सौ० वृ०—श्रान्तिच्छिदमिति। भो भव्य! जिनवरागमं—तीर्थकरप्रवचनं आनम इत्यन्वयः। 'आनम' इति क्रियापदम्। कः कर्ता?। 'त्वम्'। 'आनम' प्रणम। कं कर्मतापन्नम्?। 'जिनवरागमम्'। किंविशिष्टं जिनवरागमम्?। श्रान्तिः—श्रमः तं छिनत्तीति श्रान्तिच्छित् (तं 'श्रान्ति०')। पुनः किंविशिष्टं जिनवरागमम्?।

'आरामं' उद्यानम्। किमर्थम्?। 'आश्रयार्थं' सकलसुखनिवासार्थम्। केषाम्?। 'असङ्गमानां' जितेन्द्रियाणां-साधूनाम्। किंविशिष्टं आरामम्?। 'लसन्तं' देदीप्यमानम्। किंवि० जिनवरागमम्?। 'धाम' गृहम्?। केषाम्?। 'गमानां' सदृशपाठानाम्। किंवि० धाम?। 'अग्रिमं' प्रधानम्। पुनः किंवि० जिनवरागमम्?। भवः-संसारः चतुर्गतिलक्षणः स एव सरित्पतिः-समुद्रः तस्य सेतुः-पालिरिव पालिः भवसरित्पतिसेतुः तं 'भवसरित्पतिसेतुम्'। पुनः किंवि० जिनवरागमम्?। अस्ता-गता मारः-कामः आमाः-रोगाः मानः-अहङ्कारः मलः-कर्ममलः सन्तमसं-अज्ञानं, एतानि गतानि यस्मात् सः अस्तमाराममानमलसन्तमसः तं 'अस्तमाराममानमलसन्तमसम्'। एतादृशं जिनवरागमं प्रणम। इति पदार्थः॥

अथ समासः—श्रान्तिं छिनत्तीति श्रान्तिच्छित्, तं श्रान्तिच्छिदम्। जिनेषु वराः जिनवराः, जिनवराणां आगमः जिनवरागमः, तं जिनवरागमम्। आश्रीयते इत्याश्रयः, आश्रयाय इति आश्रयार्थम्। न विद्यते सङ्गमः-भवाभिष्वङ्गो येषां ते असङ्गमाः, तेषां असङ्गमानाम्। अग्रे भवं अग्रिमम्, तत् अग्रिमम्। सरितां पतिः सरित्पतिः, भव एव सरित्पतिः भवसरित्पतिः, भवसरित्पतौ सेतुरिव सेतुः भवसरित्पतिसेतुः, तं भवसरित्पतिसेतुम्। मारश्च आमश्च मानश्च मलश्च सन्तमसं च माराममानमलसन्तमसानि, अस्तानि माराममानमलसन्तमसानि यस्मिन् अस्तमाराममानमलसंतमसम्। गम्यन्ते-प्राप्यन्ते अर्था एभिः इति गमाः॥ इति तृतीयवृत्तार्थः॥ ३॥

वृ० व्या०-श्रान्तिच्छिदमिति। जिनवरागमं-जिनवराणां-तीर्थंकराणां आगमं-सिद्धान्तं त्वं आनम-नमस्कुरु इत्यन्वयः। 'णम प्रह्वीभावे' धातुः।'आनम' इति क्रियापदम्। कः कर्ता?। त्वम्। कं कर्मतापन्नम्?। जिनवरागमम्। किंविशिष्टं जिनवरागमम्?। आरामं-कृत्रिमं वनम्।"आरामः कृत्रिमे वने" इत्यभिधानचिन्तामणिः (का० ४, श्लो० १७७)। केषाम्?। 'असङ्गमानां' नास्ति सङ्गमः-सम्बन्धो येषां ते असङ्गमाः-मुनयः तेषाम्। किमर्थम्?। आश्रयार्थं-आश्रयकृते। पुनः किंविशिष्टम्?। 'श्रान्तिच्छिदम्' श्रान्तिं-परिश्रमं छिनत्तीति श्रान्तिच्छित् तम्। पुनः किंविशिष्टम्?। लसन्तं-शोभमानम्। आगमविशेषणद्वयमेतदिति प्राञ्चः। पुनः किंविशिष्टम्?। अग्रिमं-प्रधानम्। पुनः किंविशिष्टम्?। धाम-गृहम्।" धामागारं निशान्तं च" इत्यभिधानचिन्तामणिः (का० ४, श्लो० ५८)। केषाम्?। 'गमानाम्' गमाः-सदृशपाठाः तेषाम्। केचित् तु अग्रिममिति पदं धाम्नो विशेषणं वदन्ति। पुनः किंविशिष्टम्?। 'भवसरित्पतिसेतुम्' भवः-संसारः स एव सरित्पतिः-समुद्रः तत्र सेतु-तरणबन्धम्। पुनः किंविशिष्टम्?। 'अस्तमाराममानमलसन्तमसम्' मारः-कामः अमो-रोगः मानः-अहङ्कृतिः मलः-पापं कर्म वा सन्तमसं-अज्ञानम्, एतेषां पूर्वं 'द्वन्द्वः' पश्चात् अस्तं-ध्वस्तं माराममानमलसन्तमसं येनेति 'तृतीयाबहुव्रीहिः'॥ इति तृतीयवृत्तार्थः॥ ३॥



गान्धारीदेवीस्तुतिः—

गान्धारि! वज्रमुसले जयतः समीर-
पातालसत्कुवलयावलिनीलभे! ते।
कीर्तीः करप्रणयिनी तव ये निरुद्ध-
पातालसत्कुवलया बलिनी लभेते॥ ४॥ ६॥

—वसन्त०

ज० वि०—गान्धारीति । हे गान्धारि !–गान्धारिनामिके (?) ! तव करप्रणयिनी–हस्तसङ्गते ते वज्रमुसले–प्रहरणजाती जयतः–जयमनुभवतः इति क्रियाकारकसम्बन्धः । अत्र 'जयतः' इति क्रियापदम् । के कर्तृणी ? 'वज्रमुसले' । कथंभूते ? 'करप्रणयिनी' । कस्याः ? 'तव' । पुनः कथं० ? 'बलिनी' पराक्रमयुक्ते । बवयोरैक्यं तु यमकवशात् । यत्तदोर्नित्याभिसम्बन्धात् यच्छब्दघटनामाह–ये वज्रमुसले कीर्तीः–साधुवादरूपा लभेते–प्राप्नुतः । अत्रापि 'लभेते' इति क्रियापदम् । के कर्तृणी ? 'ये' । काः कर्मतापन्नाः ? 'कीर्तीः' । कथंभूताः कीर्तीः ? 'निरुद्धपातालसत्कुवलयाः' निरुद्धं–आवृतं पातालसदां–रसातलवासिनां कुवलयं–पृथ्वीमण्डलं याभिः । यदिवा पातालं सत्–शोभनं कुवलयं ते निरुद्धे याभिस्तास्तथा ताः । अवशिष्टं त्वेकं गान्धार्या देव्याः सम्बोधनम् । तस्य व्याख्या यथा—हे 'समीरपातालसत्कुवलयावलिनीलभे !' समीरपातेन–वातप्रेङ्खोलनेन आलसन्ती–दोलायमाना या कुवलयावलिः–कुमुदश्रेणिः तद्वन्नीला भा–दीप्तिर्यस्याः सा तथा तस्याः सम्बो० हे समीर० ॥

अथ समासः—वज्रं च मुसलं च वज्रमुसले 'इतरेतरद्वन्द्वः' । समीरस्य पातः समीरपातः 'तत्पुरुषः' । समीरपातेन आलसन्ती समीरपातालसन्ती 'तत्पुरुषः' । कुवलयानामावलिः कुवल० 'तत्पुरुषः ।' समीरपातालसन्ती चासौ कुवलयावलिश्च समीर० 'कर्मधारयः' । समीरपातालसत्कुवलयावलिवन्नीला समीर० 'तत्पुरुषः' । समीरपातालसत्कुवलयावलिनीला भा यस्याः सा समीर० 'बहुव्रीहिः' । तत्सम्बो० हे समीर० । करयोः प्रणयिनी कर० 'तत्पुरुषः' । पाताले सीदन्तीति पातालसदः 'तत्पुरुषः' । कोः वलयं कुवलयं 'तत्पुरुषः' । पातालसदां कुवलयं पाताल० 'तत्पुरुषः' । निरुद्धं पातालसत्कुवलयं याभिस्ताः निरुद्ध० 'बहुव्रीहिः' । यद्वा सच्च तत् कुवलयं च सत्कुवलयं 'कर्मधारयः' । पातालं च सत्कुवलयं च पातालसत्कुवलये 'इतरेतरद्वन्द्वः' । निरुद्धे पातालसत्कुवलये याभिस्ताः निरुद्धपा० 'बहुव्रीहिः' । ताः निरुद्धपाता० ॥ इति काव्यार्थः ॥ ४ ॥

॥ इति श्रीमद्वृद्धपण्डितश्रीदेवविजयगणिशिष्यपण्डितजयविजयगणिविरचितायां श्रीशोभनस्तुतिवृत्तौ श्रीपद्मप्रभजिनस्तुतेर्व्याख्या ॥ ६ ॥

॥ प्रथमांशः समाप्तः ॥

सि० वृ०—गान्धारीति । गां–पृथ्वीं धारयतीति गान्धारी पृषोदरादिः, तस्याः सम्बोधनं हे गान्धारि ! । "गौर्गोत्रा भूतधात्री क्षमा, गन्धमाताऽचलाऽवनी" इति हैमः ( का० ४, श्लो० २ ) । गान्धारीनामके ! तव करप्रणयिनी–हस्तसङ्गते ते वज्रमुसले–आयुधविशेषौ जयतः–सर्वोत्कर्षेण जयमनुभवत इत्यर्थः । 'जि जये' धातोः कर्तरि वर्तमाने परस्मैपदे प्रथमपुरुषद्विवचनं तस् । 'अप् कर्तरि'

( सा० सू० ६९१ ) इत्यप्, 'गुणः' ( सा० सू० ६९२ ), 'ए अय्' ( सा० सू० ४१ ), 'स्वरहीनं०' ( सा० सू० ३६ ), 'स्रोर्विसर्गः' ( सा० सू० १२४ ) । तथाच 'जयतः' इति सिद्धम् । अत्र 'जयतः' इति क्रियापदम् । के कर्तृणी ? । 'वज्रमुसले' वज्रं–कुलिशं मुसलं–शस्त्रविशेषः, वज्रं च मुसलं च वज्रमुसले 'इतरेतरद्वन्द्वः' । मुसलशब्दोऽदन्त्योऽप्यस्ति । कथंभूते वज्रमुसले ? । 'करप्रणयिनी' करे–हस्ते प्रणयः–सौहार्दं परिचयो वा विद्यते ययोस्ते करप्रणयिनी । "प्रणयः स्यात् परिचये याच्ञायां सौहृदेऽपि च" इति शाश्वतः । कस्याः ? । तव–भवत्याः । पुनः कथंभूते ? । 'बलिनी' बलः–पराक्रमः सामर्थ्यमितियावत् विद्यते ययोस्ते बलिनी, पराक्रमयुक्ते इत्यर्थः । "स्थौल्यसामर्थ्यसैन्येषु बलम्" इत्यमरः ( श्लो० २७२६ ) । बवयोरैक्यं तु यमकवशात् । यत्तदोः सापेक्षत्वात् सा का ? । ये वज्रमुसले कीर्तीः–साधुवादरूपाः लभेते–प्राप्नुतः । 'लभ लाभे' वर्तमाने कर्तरि आत्मनेपदे प्रथमपुरुषद्विवचनम् । अत्रापि 'लभेते' इति क्रियापदम् । के कर्तृणी ? । ये । काः कर्मतापन्नाः ? । कीर्तीः । "कीर्तिः प्रसादयशसो–र्विस्तारे कर्दमेऽपि च" इति विश्वः । कथंभूताः कीर्तीः ? । 'निरुद्धपातालसत्कुवलयाः' निरुद्धं–आवृतं पातालसदां–पाताले–पृथिव्या अधोभागे सदांसि–गृहाणि येषां ते पातालसदः–रसातलवासिनः तेषां कुवलयं–कोः-पृथिव्याः वलयं कुवलयं याभिः । यद्वा पातालं सत्–शोभनं कुवलयं च याभिस्तास्तथा । "स्यादुत्पलं कुवलय–मथ नीलाम्बुजन्म च । इन्दीवरं च नीलेऽस्मिन्" इत्यमरः ( श्लो० ९४०–४१ ) । "ज्या कुर्वसुमती मही" इति हैमः ( का० ४, श्लो० २ ) । अवशिष्टं त्वेकं गान्धार्या देव्याः सम्बोधनम् । तस्य व्याख्या त्वेवम्—हे 'समीरपातालसत्कुवलयावलिनीलभे !' समीरस्य–वायोः पातेन–प्रेङ्खोलनेन आलसन्ती–दोलायमाना या कुवलयानां–कैरवाणां आवलिः–पङ्क्तिः तद्वन्नीला–हरिता भा–दीप्तिर्यस्याः सा तथा तस्याः सम्बोधनं हे समीर० । वसन्ततिलकाच्छन्दः । "ख्याता वसन्ततिलका तभजा जगौ गः" इति च तल्लक्षणम् ॥ ४ ॥

**सौ० वृ०—गान्धारीति । हे गान्धारिनाम्नि देवि ! ते वज्रमुशले जयतः इत्यन्वयः । 'जयतः' इति क्रियापदम् । के कर्तृणी ? । वज्रमुशले । 'जयतः' जयं प्राप्नुतः । किंविशिष्टे वज्रमुशले ? । समीरः–पवनः तस्य पातः–प्रेङ्खोलनं तेन आ–ईषत् मर्यादया लसन्ती–देदीप्यमाना या कुवलयानां–कमलानां आवलिः–श्रेणिः तद्वत् नीला भा–प्रभा ययोः ते 'समीरपातालसत्कुवलयावलिनीलभे' । पुनः किंविशिष्टे वज्रमुशले ? । ते । ते के ? । ये वज्रमुशले कीर्तीः लभेते इत्यन्वयः । 'जयतः' इति क्रियापदम् । के कर्तृणी ? । ये वज्रमुशले । 'लभेते' प्राप्नुतः । काः कर्मापन्नाः ? । 'कीर्तीः' सर्वदिग्वर्तिनीः श्लाघाः । पुनः किंविशिष्टे वज्रमुशले ? । 'करप्रणयिनी' करस्नेहवती । करस्थे इत्यर्थः । कस्याः ? । 'तव' भवत्याः । निरुद्धपातालसत्कुवलयास्ता निरुद्धपातालसत्कुवलयाः । पुनः किंविशिष्टे वज्रमुशले ? । 'बलिनी' बलयुक्ते । एवंविधे वज्रमुशले जयतः । इति पदार्थः ॥**

**अथ समासः—पूर्वभवापेक्षया गान्धारदेशोत्पन्नत्वात् गान्धारी, तस्याः सं० हे गान्धारि ! । वज्रं च मुशलं च वज्रमुशले । समीरस्य पातः समीरपातः, समीरपातेन आ–ईषत् लसन्ती समीरपातालसन्ती, कुवलयानां आवलिः कुवलयावलिः, समीरपातालसन्ती चासौ कुवलयावलिश्च समीरपातालसत्कुवलयावलिः, समीरपातालसत्कुवलयावलिवत् नीला भा ययोः ते समीरपातालसत्कुवलयावलिनी-**

लभे। करे प्रणयः-स्नेहोऽस्ति ययोः ते करप्रणयिनी। सत् च तत् कुवलयं च सत्कुवलयं, पातालं च सत्कुवलयं च पातालसत्कुवलयं, निरुद्धं पातालसत्कुवलयं याभिस्ता निरुद्धपातालसत्कुवलयाः। बलं विद्यते ययोस्ते बलिनी ॥ इति तुर्यवृत्तार्थः ॥ ४ ॥

श्रीपद्मप्रभदेवस्य, स्तुतेरर्थो लिखीकृतः।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना ॥

॥ इति पद्मप्रभजिनस्तुतिवृत्तिः ॥ ६ ॥

दे० व्या०-गान्धारीति। हे गान्धारि ! देवि ! ते-तव वज्रमुसले-आयुधे जयतः-सर्वोत्कर्षेण वर्तेते इत्यन्वयः। 'जि जये' धातुः। 'जयतः' इति क्रियापदम्। के कर्तृणी?। 'वज्रमुसले' वज्रं-कुलिशं मुसलं-शस्त्रविशेषः अनयोर्द्वन्द्वः। किंविशिष्टे वज्रमुसले?। 'समीरपातालसत्कुवलयावलिनीलभे' समीरस्य-वायोः पातः-पतनं तेन आ-समन्तात् लसन्ती-शोभायमाना या कुवलयमाला-कमलश्रेणिः तद्वत् नीला-हरिता भा-कान्तिर्ययोस्ते तथोक्ते। पुनः किंविशिष्टे?। 'बलिनी' बलं-सारं विद्यते ययोस्ते तथोक्ते। पुनः किंविशिष्टे?। 'करप्रणयिनी' करे-हस्ते प्रणयः-स्नेहो विद्यते ययोः ते तथोक्ते, अनवरतं तयोर्हस्ते एव ध्रियमाणत्वात्। कस्याः?। तव-भवत्याः। यत्तदोर्नित्याभिसम्बन्धात् ये वज्रमुसले कीर्तीः-यशांसि लभेते-प्राप्नुतः। 'लभ लाभे' धातुः। किंविशिष्टाः कीर्तीः?। 'निरुद्धपातालसत्कुवलयाः' निरुद्धं-आवृतं पाता-लसदां-पातालवासिनां कुवलयं-पृथ्वीवलयं आभिः तास्तथोक्ताः। निरुद्धं पातालं सत्-शोभनं कुवलयं-पृथ्वीवलयं च याभिः तास्तथोक्ताः इत्यर्थो वा ॥ इति चतुर्थवृत्तार्थः ॥ वसन्ततिलकाच्छन्दः। "स्याता वसन्ततिलका तभजा जगौ गः" इति तल्लक्षणम् ॥ ४ ॥



## ७ श्रीसुपार्श्वजिनस्तुतयः

अथ श्रीसुपार्श्वजिनस्मरणम्—

कृतनति कृतवान् यो जन्तुजातं निरस्त—
स्मरपरमदमायामानबाधायशस्तम् ।
सुचिरमविचलत्वं चित्तवृत्तेः सुपार्श्वं
स्मर परमदमाया मानवाधाय शस्तम् ॥ १ ॥

—मालिनी ( ८, ७ )

ज० वि०—कृतनतीति । हे मानव ! त्वं चित्तवृत्तेः—मनोव्यापारस्य अविचलत्वं-एकाग्रतां आधाय—कृत्वा तं सुपार्श्वं—सुपार्श्वनामानमर्हन्तं सुचिरं—प्रभूतकालं स्मर—ध्यायेति क्रियाकारकसम्बन्धः । मानवेत्यत्र बवयोरैक्यं तु यमकवशादेव । अत्र 'स्मर' इति क्रियापदम् । कः कर्ता ? 'त्वम्' । कं कर्मतापन्नम् ? 'सुपार्श्वम्' । कथम् ? 'सुचिरम्' । सुपार्श्वं कथंभूतम् ? 'शस्तं' शोभनम् । किं कृत्वा ? 'आधाय' । किं कर्मतापन्नम् ? अविचलत्वम् । कस्याः ? 'चित्तवृत्तेः' । कथंभूतायाः ? 'परमदमायाः' परम—उत्कृष्टो दम—उपशमो यस्याः सा तथा तस्याः । यत्तदोरभिसम्बन्धात् तं कम् ? यः सुपार्श्वः कृतनाति—कृतप्रणामं जन्तुजातं—प्राणिसमूहं 'निरस्तस्मरपरमदमायामानबाधायशः' स्मरः—कामः परे—शत्रवः मदो—जात्याद्यष्टविधः माया—कपटात्मिका मानः—अभिमानः बाधा—पीडा अयशः—अकीर्तिः एतानि निरस्तानि—अपनीतानि येन तत् तथा, एतादृशं कृतवान्—चक्रे इति क्रियाकारकान्वयः । अत्रापि 'कृतवान्' इति क्रियापदम् । कः कर्ता ? 'यः' । किं कर्मतापन्नम् ? 'जन्तुजातम्' । कथंभूतं कृतवान् ? 'निरस्तस्मरपरमदमायामानबाधायशः' । कथंभूतं सत् ? 'कृतनाति' ॥

अथ समासः—कृता नतिर्येन तत् कृतनति 'बहुव्रीहिः' । तत् कृत० । जन्तूनां जातं जन्तुजातं 'तत्पुरुषः' । तज्जन्तुजातम् । स्मरश्च परे च मदश्च माया च मानश्च बाधा च अयशश्च स्मरपरमदमायामानबाधायशांसि 'इतरेतरद्वन्द्वः' । निरस्तानि स्मरपरमदमायामानबाधायशांसि येन तत् निरस्तस्मरपर० 'बहुव्रीहिः' । तन्निरस्तस्मर० । न विचलत्वं अविचलत्वं 'तत्पुरुषः' । तत् अविचलत्वम् । चित्तस्य वृत्तिः चित्तवृत्तिः 'तत्पुरुषः' । तस्याः चित्तवृत्तेः । शोभनानि पार्श्वानि यस्य स सुपार्श्वः 'तत्पुरुषः' । परमो दमो यस्याः सा परमदमा 'बहुव्रीहिः' । तस्याः परमदमायाः ॥ इति काव्यार्थः ॥ १ ॥

सि० वृ०—कृतनतीति। मनोः अपत्यं मानवस्तस्य सम्बोधनं हे मानव! त्वं चित्तवृत्तेः–चित्तव्यापारस्य अविचलत्वं–एकाग्रतां आधाय–कृत्वा तं सुपार्श्वं–सुपार्श्वनामानमर्हन्तं सुचिरं–प्रभूतकालं स्मर–ध्यायेत्यर्थः। मानवेत्यत्र बवयोरैक्यं तु यमकवशादेव। 'स्मृ चिन्तायां' 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनं हिः। 'अप् कर्तरि' (सा० सू० ६९१) इत्यप्, 'गुणः' (सा० सू० ६९२) इति सूत्रेण गुणः, 'अतः' (सा० सू० ७०५) इति हेर्लुक्, 'स्वरहीनं०' (सा० सू० ३६)। तथाच 'स्मर' इति सिद्धम्। अत्र 'स्मर' इति क्रियापदम्। कः कर्ता?। त्वम्। कं कर्मतापन्नम्?। सुपार्श्वम्। कथम्?। सुचिरम्। कथंभूतं सुपार्श्वम्?। शस्तं–शोभनम्। किं कृत्वा?। आधाय। 'समानकर्तृकयोः [पूर्वकाले]' (पा० अ० ३, पा० ४, सू० २१) इति क्त्वाप्रत्ययः। क्त्वो ल्यप् अव्ययत्वाच्च विभक्तिलोपः। किम्?। अविचलत्वम्। कस्याः?। 'चित्तवृत्तेः' चित्तस्य–मनसः वृत्तिः–व्यापारः इतस्ततो भ्रमणरूपः तस्याः। कथंभूतायाः चित्तवृत्तेः?। 'परमदमायाः' परमः–प्रकृष्टः दमः–दमनं यस्याः सा तथा तस्याः। यत्तदोरभिसम्बन्धात् तं कम्?। यः सुपार्श्वः 'कृतनति' कृता नतिः–प्रणामः येन तत् कृतनति जन्तोः–प्राणिनः जातं–समूहं 'जन्तुजातं' 'निरस्तस्मरपरमदमायामानबाधायशः' स्मरः–कामः परे–शत्रवः मदो–जात्याद्यष्टविधः माया–कपटात्मिका मानः–अभिमानः बाधा–पीडा अयशः–दुर्वादः एतानि निरस्तानि–अपनीतानि येन तत् तथा एतादृशं चक्रे–कृतवानित्यर्थः। 'डुकृञ् करणे' धातोः परोक्षायां कर्तरि आत्मनेपदे प्रथमपुरुषैकवचनम्। कृ ए इति स्थिते, 'द्विश्च' (सा० सू० ७१०) द्वित्वम्, 'रः' (सा० सू० ७९८?) इति पूर्वसम्बन्धिनः [ ऋकारस्याकारो भवति], 'कुहोश्चुः' (सा० सू० ७४६), 'ऋ रं' (सा० सू० ३९), 'स्वरहीनं०' (सा० सू० ३६)। तथाच 'चक्रे' इति सिद्धम्। स्मरश्च परे च मदश्च माया च मानश्च बाधश्च अयशश्च स्मरपरमदमायामानबाधायशांसि 'इतरेतरद्वन्द्वः', ततः निरस्तानि स्मरपरमदमायामानबाधायशांसि येन इति 'बहुव्रीहिः'॥ १॥

सौ० वृ०—यः पद्मप्रभुः–पद्मभासुरः तस्य पार्श्वं–समीपं शोभनमेव भवति। अनेन सम्बन्धेनायातस्य सप्तमश्रीसुपार्श्वजिनस्य स्तुतिव्याख्यानं लिख्यते। कृतनतीति।

हे मानव! त्वं सुपार्श्वजिनं स्मर इत्यन्वयः। 'स्मर' इति क्रियापदम्। कः कर्ता?। त्वम्। 'स्मर' ध्याय। कं कर्मतापन्नम्?। 'सुपार्श्वं' शोभनपार्श्वं, सुपार्श्वनामानं जिनम्। किंविशिष्टं सुपार्श्वम्?। 'शस्तं' प्रशस्तम्। किं कृत्वा?। 'आधाय' स्थाप्य। किं कर्मतापन्नम्?। 'अविचलत्वं' स्थिरत्वम्। कथम्?। 'सुचिरं' शोभनं चिरकालं यथा स्यात् तथा। कस्याः?। 'चित्तवृत्तेः' मनोव्यापारस्य। किंविशिष्टायाश्चित्तवृत्तेः?। परमः–प्रकृष्टो दमो–वशीकृतेन्द्रियव्यापारो यस्याः सा यया वा परमदमा तस्याः 'परमदमायाः'। पुनः किंविशिष्टं सुपार्श्वम्?। 'तं' प्रसिद्धम्। तं कम्?। यो जिनः जन्तुजातं–प्राणिसमूहं कृतनति–कृतप्रणामं कृतवान् इत्यन्वयः। 'कृतवान्' इति क्रियापदम्। कः कर्ता?। 'यः' भगवान्। 'कृतवान्' विहितवान्। किं कर्मतापन्नम्?। जन्तुजातम्। किंविशिष्टं जन्तुजातम्?। कृता नतिः–प्रणामो येन तत् 'कृतनति'। पुनः किं० जन्तुजातम्?। निरस्ता–निराकृताः स्मरः–कामः परे–शत्रवः मदो–दर्पः माया–वञ्चनात्मिका मानः–अहङ्कारः बाधा–पीडा अयशः–अकीर्तिः निरस्तस्मरपरमदमायामानबाधा-

ऽयशः (?) तत् निरस्तस्मरपरमदमायामानबाधायशः, तत् निरस्तस्मरपरमदमायामानबाधायशः । एवंविधं जन्तुजातं यो जिनः कृतवान् तं सुपार्श्वं स्मर इति पदार्थः ॥

अथ समासः—कृता नतिर्येन तत् कृतनति । चकार इति कृतवान् । जन्तूनां जातं जन्तुजातम्, तत् जन्तुजातम् । स्मरश्च परे च मदश्च माया च मानश्च बाधा च अयशश्च स्मरपरमदमायामानबाधायशांसि, निरस्तानि स्मरपरमदमायामानबाधायशांसि येन तत् निरस्तस्मरपरमदमायामानबाधायशः । सुष्ठु-शोभनं चिरं यथा स्यात् तथा सुचिरम् । अविचलस्य भावः अविचलत्वम् । चित्तस्य वृत्तिः चित्तवृत्तिः, तस्याः चित्तवृत्तेः । सु-शोभनं पार्श्वं यस्य स सुपार्श्वः, तं सुपार्श्वम् । परमो दमो यस्याः सा परमदमा, तस्याः परमदमायाः । मनोः अपत्यं मानवः, तस्य संबो० हे मानव ! । इति मालिनी-छन्दसा प्रथमवृत्तार्थः ॥ १ ॥

दे० व्या०—कृतनतीति । हे मानव ! त्वं तं सुपार्श्वं सुचिरं-प्रभूतकालं यथा स्यात् तथा स्मर-स्मृतिगोचरीकुरु इत्यन्वयः । 'स्मृ चिन्तायाम्' धातुः । 'स्मर' इति क्रियापदम् । कः कर्ता ? । त्वम् । कं कर्मतापन्नम् ? । सुपार्श्वम् । किंविशिष्टं सुपार्श्वम् ? । शस्तं-श्लाघनीयम् । किं कृत्वा ? । आधाय-विधाय । किम् ? । अविचलत्वम्-स्थिरत्वम् । कस्याः ? । 'चित्तवृत्तेः' चित्तस्य वृत्तिः-व्यापारः तस्याः । किंविशिष्टायाः चित्तवृत्तेः ? । 'परमदमायाः' परमः-प्रकृष्टो दमः-इन्द्रियनियन्त्रणाध्यवसायो यस्याः सा तथा । यत्तदोर्नित्याभिसम्बन्धात् यः सुपार्श्वः जन्तुजातं-प्राणिसमूहं कृतवान्-निष्पादयामासेत्यन्वयः । 'डुकृञ् करणे' धातुः । 'कृतवान्' इति क्रियापदम् । कः कर्ता ? । सुपार्श्वः । किं कर्मतापन्नम् ? । 'जन्तुजातम्' जन्तूनां जातं जन्तुजातमिति विग्रहः । किंविशिष्टं जन्तुजातम् ? । 'निरस्तस्मरपरमदमायामानबाधायशः' स्मरः-कामः परे-शत्रवः मदो-मुद् मोहसंभेदः माया-कपटं मानः अहङ्कृतिः बाधा-पीडा अयशः-अपकीर्तिः, एतेषां पूर्वं 'द्वन्द्वः' । ततो निरस्तानि-ध्वस्तानि स्मरपरमदमायामानबाधायशांसि येन इति तृतीयाबहुव्रीहिः । पुनः किंविशिष्टम् ? । 'कृतनति' कृता-विहिता नतिः-नमस्कारो येन तत् । यद्वा कृता नतिः-प्रणामो यस्मै तत् । परैः इति शेषः ॥ इति प्रथमवृत्तार्थः ॥ १ ॥



जिनराज्या ध्यानम्--

व्रजतु जिनततिः सा गोचरे चित्तवृत्तेः
सदमरसहिताया वोऽधिका मानवानाम् ।
पदमुपरि दधाना वारिजानां व्यहार्षीत्
सदमरसहिता या बोधिकामा नवानाम् ॥ २ ॥

--मालिनी

ज० वि०—व्रजत्विति । भो भव्याः ! वो-युष्माकं चित्तवृत्तेः-स्मृतेः गोचरे-विषये सा जिनततिः-तीर्थकृतां श्रेणी व्रजतु-गच्छतु इति क्रियाकारकप्रयोगः । अत्र 'व्रजतु' इति क्रियापदम् । का कर्त्री ? 'जिनततिः' । कस्मिन् ? 'गोचरे' । कस्याः ? 'चित्तवृत्तेः' । केषाम् ? 'वः' । नवयोरैक्यं तु प्राग्वत् । कथंभूतायाश्चित्तवृत्तेः ? 'सदमरसहितायाः' सह

दमरसेन–प्रशमरसेन वर्तन्ते ये तेषां हितायाः–हितकारिण्याः । जिनततिः कथंभूता ? ‘ अधिका ’ उत्कृष्टा । केषाम् ? ‘ मानवानां ’ नराणाम् । अत्र निर्धारणे षष्ठी । यत्तदोरभिसम्बन्धात् सा का ? या जिनततिः व्यहार्षीत्–विचचार । अत्रापि ‘ व्यहार्षीत् ’ इति क्रियापदम् । का कर्त्री ? ‘या’। किं कुर्वाणा सती ? ‘दधाना’ सती धारयन्ती सती । किं कर्मतापन्नम् ? ‘पदं’ चरणन्यासम् । कस्मिन् ? ‘ उपरि ’ अग्रभागे । केषाम् ? ‘ वारिजानां ’ सुरनिर्मितानां स्वर्णमयानां पङ्कजानाम् । कथंभूतानाम् ? ‘ नवानां ’ नवसंख्याकानां नूतनानां वा । पुनर्या कथंभूता ? ‘ सदमरसहिता ’ सद्भिः–शोभनैः अमरैः–देवैः सहिता–समन्विता । पुनः कथंभूता ? ‘ बोधिकामा ’ बोधिः–धर्मावाप्तिः तत्र कामः–इच्छा यस्याः सा तथा । स्वयमवाप्तबोधित्वादन्येषामिति गम्यते । बोधिकामेत्यनेन विशेषणेन व्यहार्षीदिति क्रियायां प्रयोजनं प्रतिपादितम् ॥

अथ समासः—जिनानां ततिर्जिनततिः ‘ तत्पुरुषः ’ । चित्तस्य वृत्तिः चित्तवृत्तिः ‘ तत्पुरुषः ’ । तस्याः चित्तवृत्तेः । दमस्य रसो दमरसः ‘ तत्पुरुषः ’ । सह दमरसेन वर्तते या सा सदमरसा ‘ तत्पुरुषः ’ । सदमरसानां हिता सदमरसहिता ‘ तत्पुरुषः ’ । तस्याः सदमरस० । सन्तश्च ते अमराश्च सदमराः ‘ कर्मधारयः ’ । सदमरैः सहिता सदमरसहिता ‘ तत्पुरुषः ’ । तस्याः सदमरसहितायाः । बोधौ कामो यस्याः सा बोधिकामा ‘ बहुव्रीहिः ’ ॥ इति काव्यार्थः ॥ २ ॥

सि० वृ०—व्रजत्विति । भो भव्याः ! वः युष्माकं ‘ चित्तवृत्तेः ’ चित्तस्य वृत्तिः स्मरणरूपा तस्याः चित्तवृत्तेरित्यर्थः, गोचरे–विषये सा ‘ जिनततिः ’ जिनानां–तीर्थकृतां ततिः–श्रेणिः व्रजतु–गच्छत्वित्यर्थः । ‘ व्रज गतौ ’ धातोः कर्तरि ‘ आशीःप्रेरणयोः ’ ( सा० सू० ७०१ ) लोटि परस्मैपदे प्रथमपुरुषैकवचनं तुप् । ‘ अप्० ’ ( सा० सू० १९१ ), ‘ स्वरहीनं ’ ( सा० सू० ३१ ) । तथाच ‘ व्रजतु ’ इति सिद्धम् । अत्र ‘ व्रजतु ’ इति क्रियापदम् । का कर्त्री ? । जिनततिः । कस्मिन् ? । गोचरे । कस्याः ? । चित्तवृत्तेः । केषाम् ? । वः । युष्मदः षष्ठीबहुवचने युष्माकमित्यस्य वसादेशः । वयो-रैक्यं तु प्राग्वत् । कथंभूतायाश्चित्तवृत्तेः ? । ‘ सदमरसहितायाः ’ सह दमरसेन–इन्द्रियनियन्त्रणाध्यवसायेन विद्यन्ते ये ते सदमरसाः अर्थान्मुनयस्तेषां हिताया–हितकारिण्याः । कथंभूता जिनततिः ? । अधिका–उत्कृष्टा । केषाम् ? । मानवानां–मनुष्याणाम् । अत्र निर्धारणे षष्ठी । यत्तदोरभिसम्बन्धात् सा का ? । या जिनततिः व्यहार्षीत्–विहारं कृतवतीत्यर्थः । ‘ हृञ् हरणे ’ धातोः कर्तरि सामान्ये परस्मैपदे प्रथमपुरुषैकवचनम् । ‘ भूते सिः ’ ( सा० सू० ७२४ ), ‘ दिबादावट् ’ (सा० सू०७०७), ‘ णितृपे ’ (सा० सू० ७९९ ) सेर्णित्वं णित्वाद् वृद्धिः । ‘ सेः ’ (सा० सू० ७३१) इत्यनेन ईडागमः । ‘ क्लिलात्व सः कृतस्य ’ ( सा० सू० १४१ ) । तथाच ‘ व्यहार्षीत् ’ इति सिद्धम् । अत्रापि ‘ व्यवहार्षीत् ’ इति क्रियापदम् । का कर्त्री ? । या । किं कुर्वाणा सती ? । दधाना सती–धारयन्ती सती । किं कर्मतापन्नम् ? । पदं–चरणन्यासम् । कस्मिन् ? ।

---

१ अयं पाठो निरर्थकः प्रतिभाति ।

उपरि—अग्रभागे । केषाम् । वारिजानां—सुरनिर्मितकमलानाम् । कथंभूतानाम् ? । नवानां—नवसंख्याकानां नवीनानां वा । उक्तं च—

" व्यन्तरा ब्रह्मगुप्तीना—मास्यानीव नव ध्रुवम् ।
विकासिहैमपद्मानि, स्वामिनोऽग्रे विचक्रिरे ॥
द्वयोर्द्वयोर्न्यधात् पादौ, चलंस्तेषु जगत्पतिः ।
सुराः संचारयामासुः, सप्तान्यानि पुरः पुरः ॥ "

इति शान्तिचरित्रे । पुनर्या कथंभूता ? । ' सदमरसहिता ' सद्भिः—शोभनैः अमरैः—देवैः सहिता—समन्विता ।

" अमरा निर्जरा देवा—स्त्रिदशा विबुधाः सुराः ।
सुपर्वाणः सुमनस—स्त्रिदिवेशा दिवौकसः ॥ "

इत्यमरसिंहः ( श्लो० १३,१४ ) । पुनः कथंभूता ? । ' बोधिकामा ' बोधिः—धर्मावाप्तिस्तत्र कामः—इच्छा यस्याः सा । तथा बोधिः ' इक्श्तिपौ धातुनिर्देशे ' ( सा० सू० १४७२ ) इति ' बुध ज्ञाने ' इति धातुस्तेन च तदर्थो लक्ष्यते । तथाच बोधं—ज्ञानं कामयते सा बोधिकामा इत्यर्थान्तरम् । स्वयमवाप्तबोधित्वादन्येषामिति गम्यते । बोधिकामेत्यनेन विशेषणेन व्यहार्षीदिति क्रियायां प्रयोजनं प्रतिपादितम् ॥ २ ॥

**सौ० वृ०—व्रजत्विति । सा-प्रसिद्धा जिनततिः-तीर्थकरराजिः वो-युष्माकं चित्तवृत्तेः-मनोव्यापारस्य गोचरे-विषये व्रजतु इत्यन्वयः । ' व्रजतु ' इति क्रियापदम् । का कर्त्री ? । ' जिनततिः ' । ' व्रजतु ' गच्छतु । ' गोचरे ' विषये । कस्याः ? । 'चित्तवृत्तेः ' । केषाम् ? । ' वः ' युष्माकम् । किंविशिष्टा जिनततिः ? । ' अधिका ' उत्कृष्टा । केषाम् ? । ' मानवानां ' मनुष्याणाम् । संसारिणां मध्ये इत्यर्थः । किंविशिष्टायाः चित्तवृत्तेः ? । दमरसः-इन्द्रियविषयदमनलक्षणो दमः तस्य रसो-हर्षः तेन सहिता ये प्राणिनः तेषां हिता-हितकर्त्री तस्याः ' सदमरसहितायाः ' । पुनः किंविशिष्टा जिनततिः ? । 'सा' । सा का ? । या जिनततिः व्यहार्षीत् इत्यन्वयः । ' व्यहार्षीत्' इति क्रियापदम् । का कर्त्री ? । 'या जिनततिः ' । ' व्यहार्षीत् ' विचरति स्म । जिनततिः किं कुर्वती ? । ' दधाना ' स्थापयन्ती । कं कर्मतापन्नम् ? । ' पदं ' चरणम् । कथम् ? । ' उपरिष्टात् ' । केषाम् ? । ' वारिजानां ' कमलानाम् । किंविशिष्टानां वारिजानाम् ? । 'नवानां' नवसंख्यानाम्, नवीनानां वा । पुनः किं० जिनततिः ? । सज्जनाः (?) शोभनाः ये अमरा-देवाः तैः सहिता-संयुक्ता । पुनः किं० जिनततिः ? । बोधिः-अर्हद्धर्मावाप्तिः तं कामयति ददाति वा बोधिकामा, ते स्वयं प्राप्ताः अन्यानपि प्रापयन्ति । इति क्रियापदार्थः ॥**

**अथ समासः—जिनानां ततिः जिनततिः । चित्तस्य-वृत्तिः चित्तवृत्तिः, तस्याः चित्तवृत्तेः । दमस्य रसः दमरसः, दमरसेन सहिताः सदमरसाः, सदमरसानां हितं यस्याः सा सदमरसहिता, तस्याः सदमरसहितायाः । अधिका एव अधिका । वारिणि जायन्ते इति वारिजानि, तेषां वारिजानाम् । सन्तश्च ते अमराश्च सदमराः, सदमरैः सहिता सदमरसहिता । बोधिं कामयते इति बोधिकामा ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥**

दे० व्या०-व्रजत्विति । सा जिनततिः-जिनपंक्तिः बवयोरैक्यात् वः-युष्माकं चित्तवृत्तेः-मानसव्यापारस्य गोचरे-विषये व्रजतु-गच्छतु इत्यन्वयः । ' व्रज गतौ ' इति धातुः । ' व्रजतु ' इति क्रियापदम् । का

कर्त्री ? । ' जिनततिः ' जिनानां ततिः जिनततिः इति समासः । कस्मिन् ? । गोचरे । कस्याः ? । चित्तवृत्तेः । केषाम् ? । वः । किंविशिष्टायाः चित्तवृत्तेः ? । ' सदमरसहितायाः ' दमस्य-उपशमस्य रसेन सह वर्तन्ते ये ते सदमरसाः अर्थात् मुनयः, तेषां हिता-हितकारिणी तस्याः । यत्तदोर्नित्याभिसम्बन्धात् या जिनततिः व्यहार्षीत्-विहारं कृतवतीति सम्बन्धः । ' हृञ् हरणे ' धातुः । ' व्यहार्षीत् ' इति क्रियापदम् । का कर्त्री ? । जिनततिः । किंविशिष्टा जिनततिः ? । अधिका-प्रकृष्टा । केषाम् ? । मानवानां-लोकानाम् । निर्धारणे षष्ठी । पुनः किंविशिष्टा ? । ' सदमरसहिता ' सन्तः-शोभमाना ये अमरा-देवाः तैः सहिता-संयुक्ता । तदुक्तम्—

" जघन्यतः कोटिसङ्ख्या-स्तां सेवन्ते सुरासुराः " ( वीतरागस्तोत्र प्र० ४, श्लो० १४ )

इति । पुनः किंविशिष्टा ? 'बोधिकामा' 'बुध ज्ञाने' तेन च तदर्थो लक्ष्यते । तथाच बोधं-ज्ञानं कामयते सा तथा । स्वयमवाप्तबोधित्वात् परेषां बोधिः-धर्मप्रदानं तत्र कामो-वाञ्छा यस्याः सा तथेति वा । किं कुर्वाणा जिनततिः ? । दधाना । कम् ? । पदम्-चलनम् । कस्मिन् ? । उपरि । केषाम् ? । वारिजानां-कमलानाम्, मार्गे सुवर्णकमलोपरि चरणधारणात् । किंविशिष्टानां वारिजानाम् ? । नवानाम्-नूतनानाम् । सद्योरचितानामितियावत् ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥



जिनमतप्रशंसा—

दिशदुपशमसौख्यं संयतानां सदैवो-
रु जिनमतमुदारं काममायामहारि !
जननमरणरीणान् वासयत् सिद्धिवासे-
ऽरुजि नमत मुदाऽरं काममायामहारि ॥ ३ ॥

—मालिनी

ज० वि०—दिशदिति । भो भव्याः ! यूयं जिनमतं-भगवच्छासनं मुदा-हर्षेण सदैव-निरंतरमेव अरं-शीघ्रं कामं-अत्यर्थं नमत-प्रणमत इति क्रियाकारकसंटङ्कः । अत्र ' नमत ' इति क्रियापदम् । के कर्तारः ? ' यूयम् ' । किं कर्मतापन्नम् ? ' जिनमतम् ' । कया ? ' मुदा ' । कथम् ? 'सदैव' । पुनः कथम् ? ' अरम् ' । पुनः कथम् ? ' कामं ' अत्यर्थम् । जिनमतं किं कुर्वत् ? ' दिशत् ' ददत् । किं कर्मतापन्नम् ? ' उपशमसौख्यं ' प्रशमसुखम् । केषाम् ? ' संयतानां ' साधूनाम् । पुनः कथंभूतं जिनमतम् ? ' उरु ' विशालम् । पुनः कथंभूतम् ? ' उदारं ' महाशयम् । पुनः कथंभूतम् ? ' आयामहारि ' आयामेन-दैर्घ्येण हारि-चारु । जिनमतं पुनः किं कुर्वत् ? ' वासयत् ' स्थापयत् । कान् ? ' जननमरणरीणान् ' जन्ममृत्युभिः श्रान्तान् । कस्मिन् ? ' सिद्धिवासे ' मोक्षसद्मनि । कथंभूते ? ' अरुजि ' नीरोगे । पुनः कथंभूतं जिनमतम् ? ' काममायामहारि ' कामः-कन्दर्पः माया-कषायविशेषः तयोर्महारि-बृहदमित्रभूतं, महाचक्रं वा । यद्वा कामश्च माया च आमो-रोगस्तान् हरतीत्येवंशीलम् । अत्र सदैव अरं काममिति क्रियाविशेषणानि दिशत् वासयदित्यादिष्वपि योज्यन्ते तथापि सम्मतमेव ॥

अथ समासः—उपशमस्य सौख्यं उपशमसौख्यं 'तत्पुरुषः'। जिनानां मतं जिनमतं 'तत्पुरुषः'। तज्जिन०। आयामेन हारि आयामहारि 'तत्पुरुषः'। तत् आयाम०। जननं च मरणं च जननमरणे 'इतरेतरद्वन्द्वः'। जननमरणाभ्यां रीणाः 'तत्पुरुषः'। तान् जनन०। सिद्धिरेव वासः सिद्धिवासः 'कर्मधारयः'। तस्मिन् सिद्धि०। कामश्च माया च काममाये 'इतरेतरद्वन्द्वः'। महांश्चासौ अरिश्च महारिः 'कर्मधारयः'। काममाययोर्महारिः काम० 'तत्पुरुषः'। तत् काम०। यदिवा कामश्च माया च आमश्च काममायामाः 'इतरेतरद्वन्द्वः।' काममायामान् हरतीति काम० 'तत्पुरुषः'। तत् काम०॥ इति काव्यार्थः ॥ ३॥

सि० वृ०—दिशादिति। भो भव्याः! यूयं जिनमत-भगवच्छासनं मुदा-हर्षेण सदा-निरन्तरमेव अरं-शीघ्रं कामं-अत्यर्थं नमत-प्रणमतेति क्रियाकारकसम्बन्धः। 'णम प्रह्वीभावे' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि परस्मैपदे मध्यमपुरुषबहुवचनं त। 'अप्०' (सा० सू० ६९१), 'स्वरहीनं०' (सा० सू० ३६), 'आदेः ष्णः स्नः' (सा० सू० ७४८) इति णकारस्य नकारः। तथाच 'नमत' इति सिद्धम्। अत्र 'नमत' इति क्रियापदम्। के कर्तारः?। यूयम्। किं कर्मतापन्नम्?। 'जिनमतं' जिनानां मतं जिनमतं इति 'तत्पुरुषः'। "मतं पूजितसंमते" इति विश्वः। कया?। मुदा। कथम्?। सदैव। पुनः कथम्?। अरम्। पुनः कथम्?। कामम्। "कामं प्रकामेऽनुमतावसूयानुगमेऽपि च" इति विश्वः। जिनमतं किं कुर्वत्?। 'दिशत्' दिशतीति दिशत् ददादित्यर्थः। किं कर्मतापन्नम्?। 'उपशमसौख्यम्' उपशमस्य सौख्यं उपशमसौख्यम् 'तत्पुरुषः' प्रशमसुखमित्यर्थः। केषाम्?। संयतानां-ऋषीणाम्। कथंभूतं जिनमतम्?। उरु-विशालम्। पुनः कथंभूतम्?। उदारं-महत्। "उदारो दातृमहतोः" इत्यमरः (श्लो० २७१९)। पुनः कथंभूतम्?। 'आयामहारि' आयामेन-दैर्घ्येण हारि-चारु। "दैर्घ्यमायाम आरोहः, परिणाहो विशालता" इत्यमरः (श्लो० १३०२)। हेमचन्द्रोऽप्येवमवोचत्। पुनः किं कुर्वत्?। वासयत्-स्थापयत्। कान्?। 'जननमरणरीणान्' जननं च मरणं च जननमरणे 'इतरेतरद्वन्द्वः', जननमरणाभ्यां-जन्ममृत्युभ्यां रीणान्-श्रान्तान् जननमरणरीणान् इति 'तत्पुरुषः'। "स्यन्ने रीणं स्नुतं स्रुतं" इति हैमः (का० ६, श्लो० १३२)। कस्मिन्?। सिद्धिवासे-मोक्षसद्मनि। सिद्धिरेव वासः सिद्धिवासः तस्मिन् सिद्धि०। कथंभूते?। 'अरुजि' नास्ति रुक्-रोगो यस्मिन् स तथा तस्मिन्। पुनः कथंभूतं जिनमतम्?। 'काममायामहारि' कामः-स्मरः माया-कषायविशेषः कामश्च माया च काममाये 'इतरेतरद्वन्द्वः' तयोः महांश्चासावरिश्च इति 'कर्मधारयः' तत् तथा, बृहद्मित्रभूतामित्यर्थः। महाचक्रं वा। यदिवा कामश्च माया च आमो-रोगश्च तान् हरतीत्येवंशीलम्। अत्र सदैव अरं कामं इति क्रियाविशेषणानि दिशत् वासयदित्यादिष्वपि योज्यन्ते तथापि संमतमेव॥ ३॥

सौ० वृ०—दिशादिति। भो भव्याः! जिनमतं-तीर्थकरप्रवचनं यूयं नमत इत्यन्वयः। 'नमत' इति क्रियापदम्। के कर्तारः?। 'यूयम्'। 'नमत' प्रणमत। किं कर्मतापन्नम्?। 'जिनमतम्'। कया?। 'मुदा' हर्षेण। कथम्?। 'अरं' अत्यर्थम्। जिनमतं किं कुर्वत्?। 'दिशत्' दर्शयत् वदत् वा।

१ अयं विग्रहश्चिन्तनीय इव प्रतिभाति।

किं कर्मतापन्नम् ? । ' उपशमसौख्यं ' शान्तरससुखभावम् । केषाम् ? । ' संयतानां ' सम्यक् यतनावतां साधूनाम् । कथम् ? । ' सदा ' सर्वकालम् । ' एव ' निश्चितम् । पुनः किंवि० जिनमतम् ? । आयामं-दैर्घ्यम् अर्थावबोधगहनरूपं तेन हारि-शोभमानम् 'आयामहारि' । पुनः जिनमतं किं कुर्वत् ? । ' वासयत् ' वासं ददत् । कस्मिन् ? । सिद्धिः अक्षयसुखप्राप्तिलक्षणा, सकलकर्माभावं मोक्षं तदेव वासं-वसतिस्थानं सिद्धिशिलानामकं तस्मिन् ' सिद्धिवासे ' । कान् प्रति ? । जननं-जन्म मरणं-मृत्युः ताभ्यां रीणाः-क्षीणाः जननमरणरीणाः तान् ' जननमरणरीणान् ' एवंविधान् जनान् । किंविशिष्टे सिद्धिवासे ? । ' अरुजि ' अरोगे इत्यर्थः । पुनः किंविशिष्टं जिनमतम् ? । कामः-स्मरः माया-कपटता तयोः महत् अरि-चक्रमिव चक्रम् । यद्वा महान् अरिः शत्रुरिव शत्रुः ' काममायामहारि ' । एवंविधं जिनमतं नमत इति पदार्थः ॥

अथ समासः— दिशतीति दिशत् । सुखस्य भावः सौख्यम्, उपशमस्य सौख्यं उपशमसौख्यम् । सम्यक् प्रकारेण यताः संयताः, तेषां संयतानाम् । जिनानां मतं जिनमतं, तत् जिनमतम् । आयामेन हारि आयामहारि । जननं च मरणं च जननमरणे, जननमरणाभ्यां रीणाः जननमरणरीणाः, तान् जननमरणरीणान् । वासयतीति वासयत् । सिद्धिरेव वासः सिद्धिवासः, तस्मिन् सिद्धिवासे । न विद्यन्ते रुजो-रोगा यस्मिन् तत् अरुक्, तस्मिन् अरुजि । कामश्च माया च काममाये, महत् च तत् अरि च महारि, काममाययोः महारि-चक्रमिव चक्रं काममायामहारि । यद्वा काममाययोः महान् अरिः-शत्रुरिव शत्रुः यत् तत् काममायामहारि ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या०-दिशदिति । हे जनाः ! यूयं जिनमतं-भगवत्सिद्धान्तं अरं-अत्यर्थं नमत-प्रणमतेत्यन्वयः । ' णम प्रह्वीभावे ' धातुः । ' नमत ' इति क्रियापदम् । के कर्तारः ? । यूयम् । किं कर्मतापन्नम् ? । ' जिनमतम् ' जिनानां मतं जिनमतमिति विग्रहः । किं कुर्वत् जिनमतम् ? । दिशत्-ददत् । किम् ? । ' उपशमसौख्यम् ' उपशमस्य-क्षमायाः सौख्यं-सुखम् । केषाम् ? । संयतानाम्-ऋषीणाम् । कथम् ? । सदैव-अनवरतम् । किंविशिष्टं जिनमतम् ? । उरु-प्रौढम् । पुनः किंविशिष्टम् ? । उदारं-स्फारम् । पुनः किंविशिष्टम् ? । ' काममायामहारि ' कामं-अत्यर्थं आयामेन-विस्तारेण हारि-मनोहरम् । " दैर्घ्यमायाम आनाहः " इत्यभिधानचिन्तामणिः ( का० ६, श्लो० ६७ ) । पुनः किंविशिष्टम् ? । ' काममायामहारि ' कामः-अनङ्गः माया-निकृतिः अनयोर्द्वन्द्वः, तयोः महा.रि-प्रकृष्टदुर्जेयम् । जिनमतं किं कुर्वत् ? । वासयत्-वासं कारयत् । कान् ? । ' जननमरणरीणान् ' जननं-जन्मग्रहणं मरणं-शरीरत्यागः अनयोर्द्वन्द्वः, ताभ्यां रीणान्-खिन्नान्, जनानिति शेषः । कस्मिन् ? । सिद्धिवासे-मुक्तिमन्दिरे । कया ? । मुदा-हर्षेण । इति तृतीयवृत्तार्थः ॥ ३ ॥



महामानस्याः स्तुतिः—

दधति ! रविसपत्नं रत्नमाभास्तभास्वन्-
नवघनतरवारिं वा रणारावरीणाम् ।
गतवति ! विकिरत्यालीं महामानसीष्टा-
नव घनतरवारिं वारणारावरीणाम् ॥ ४ ॥

—मालिनी

१ ' सकलकर्माभावो मोक्षः स एव वासः ' इति प्रतिभाति ।

ज० वि०—दधतीति । हे महामानसि !–महामानसीनामिक ! त्वं इष्टान्–जिनशासनैकाग्रचित्तवृत्तित्वेन पालनीयतयाऽभिमतान् अव–रक्षेति क्रियाकारकसम्बन्धः । अत्र 'अव' इति क्रियापदम् । का कर्त्री ? 'त्वम्' । कान् कर्मतापन्नान् ? 'इष्टान्' । अपराणि सर्वाण्यपि महामानस्या देवतायाः सम्बोधनानि । तेषां चैवं व्याख्या–हे 'दधति !' हे धारयमाणे । किं कर्मतापन्नम् ? 'रत्नं' माणिक्यम् । 'आभास्तभास्वन्नवघनतरवारिं वा' आभया–कान्त्या अस्तो–निराकृतो भास्वन्नवघनो–दीप्यमाननूतनमेघो येन एवंविधो यस्तरवारिः–खड्गः तम् । अत्र वाशब्दः समुच्चये । रत्नं आभास्तभास्वन्नवघनतरवारिं चेत्युभयमपि दधतीत्यर्थः । रत्नं कथंभूतम् ? 'रविसपत्नं' रवेः–सूर्यस्य सपत्नं–विपक्षभूतं प्रभाधिक्यात् । आभास्तभास्वन्नवघनतरवारिं कथंभूतम् ? 'घनतरवारिं' घनतरं–सान्द्रतरं वारि–पानीयं–तेजो यत्र स तथा तम् । हे 'गतवति !' आरूढे ! । कस्मिन् ? 'वारणारौ' गजवैरिणि केसरिणीत्यर्थः । वारणारौ किं कुर्वति ? 'विकिरति' विक्षिपति । कां कर्मतापन्नाम् ? 'आलीं' श्रेणीम् । केषां ? 'अरीणां' वैरिणाम् । आलीं कथंभूताम् ? 'रणारावरीणां' रणसम्बन्धिना रावेण–ध्वनिना रीणां–खिन्नाम् । यद्वा रणारावरीणां अरीणां आलीं विकिरतीति देव्याः सम्बोधनमपि ॥

अथ समासः—रवेः सपत्नं रविसपत्नम् 'तत्पुरुषः'।नवश्चासौ घनश्च नवघनः 'कर्मधारयः'। भास्वांश्चासौ नवघनश्च भास्व० 'कर्मधारयः' । आभया अस्तः आभास्तः 'तत्पुरुषः' । आभास्तः भास्वन्नवघनः येन स आभा० 'बहुव्रीहिः' । आभास्तभास्वन्नवघनश्चासौ तरवारिश्च आभास्त० 'कर्मधारयः' । तं आभास्त० । रणस्यारावो रणारावः 'तत्पुरुषः' । रणारावेण रीणा रणा० 'तत्पुरुषः' । अतिशयेन घनं घनतरम् । घनतरं वारि यत्र स घनतरवारिः 'बहुव्रीहिः' । तं घन० । वारणानां अरिः वारणारिः 'तत्पुरुषः' । तस्मिन् वारणारौ । इति काव्यार्थः ॥ ४ ॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीसुपार्श्वजिनस्तुतेर्व्याख्या ॥ ७ ॥

सि० वृ०—दधतीति । हे महामानसि !–महामानसीनामिके ! त्वं इष्टान्–अभिमतान् अव–रक्षेत्यर्थः । 'अव रक्षणे' धातोः 'आशीःप्रेरणयोः' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनं हिः । 'अप् कर्तरि' ( सा० सू० ६९१ ) इत्यप् । 'अतः' ( सा० सू० ७०५ ) इति हेर्लुक् । 'स्वरहीनं०' ( सा० सू० ३६ )। तथाच 'अव' इति सिद्धम् । अत्र 'अव' इति क्रियापदम् । का कर्त्री ? । त्वम् । कान् कर्मतापन्नान् ? । इष्टान् । अपराणि सर्वाणि महामानस्या देवतायाः सम्बोधनानि । तेषां चैवं व्याख्या–हे दधति !–धारयमाणे ! । किं कर्म ? । रत्नं–माणिक्यम् । "रत्नं स्वजातिश्रेष्ठेऽपि, मणावपि नपुंसकम्" इति मेदिनी । 'आभास्तभास्वन्नवघनतरवारिं वा' । अत्र वाशब्दः समुच्चये । तथाच रत्नं 'आभास्तभास्वन्नवघनतरवारिं' चेत्युभयमपि दधतीत्यर्थः । आभा–कान्तिः तया अस्तः–निराकृतः भास्वन्नवघनः–दीप्यमाननूतनमेघो येन स एतादृशो यस्तरवारिः–खड्गस्तम् । "तरवारिर्मतः खड्गः" इति धरणिः । नवश्चासौ घनश्च नवघनः, भास्वांश्चासौ नवघनश्च भास्वन्नवघनः इति पूर्वं 'कर्मधारयः' । रत्नं कीदृशम् ? । 'रविसपत्नम्' सूर्यस्य सपत्नं–विपक्षं रविसपत्नं, प्रभाधिक्यादितिभावः । आभास्त-

भास्वन्नवघनतरवारिं कथंभूतम् ? । ' घनतरवारिं ' अतिशयेन घनं घनतरं सान्द्रतरमित्यर्थः वारि—पानीयं तेजः—तीक्ष्णता वा यत्र तथा तम् । हे गतवति !—आरूढे ! । कस्मिन् ? । ' वारणारौ ' वारणाना—गजाना अरिः वारणारिः तस्मिन् वारणारौ । वारणारौ किं कुर्वति ? । विकिरति—विक्षिपति । का कर्मतापन्नाम् ? । आलीं—श्रेणिम् । " आलिः पंक्तौ च संख्यायां-सेतौ च परिकीर्तिता । विशदायेऽपि स्यादालिः " इति विश्वः । केषाम् ? । अरीणां—वैरिणाम् । कथंभूता आलीम् ? । ' रणारावरीणां ' रणारावेण—रणसम्बन्धिना आरावेण रीणां—खिन्नाम् । यद्वा रणारावरीणां अरीणां आलीं विकिरति इति देव्याः सम्बोधनमपि । मालिनीच्छन्दः " वसुयतिरियमुक्ता मालिनी नौ मयौ यः " इति च तल्लक्षणम् ॥ ४ ॥

॥ इति श्रीमहोपाध्यायश्रीभानु० श्रीसुपार्श्वजिनस्तुतिवृत्तिः समाप्ता ॥

सौ० वृ०—दधतीति । हे **महामानसि—महामानसीनाम्नि ! देवि ! त्वं इष्टान्—अभिमतान् जनान् अव** इत्यन्वयः । 'अव' इति क्रियापदम् । का कर्त्री ? । 'त्वम्' । 'अव' रक्षतात् । कान् कर्मतापन्नान् ? । 'इष्टान्' । हे 'दधति!' धारयति ! । किं कर्मतापन्नम् ? । 'रत्नं' माणिक्यम् । 'वा' समुच्चये । 'वा' अथवा । नवो—नवीनो यो घनो—मेघः तद्वत् घनतरं वारि—पानीयं यत्र तत् तादृशः घनः—निबिडः तरवारिः—करवालं ' घनतर-वारि (?)' । एकेन पाणिना रत्नं धारयति अपरेण पाणिना तरवारिं धारयतीति गम्यम् । कीदृशं रत्नम् ? । रविः—सूर्यः तस्य सपत्नं—प्रतिपक्षं प्रभाधिक्यत्वात् वृत्तत्वाद् वा । पुनः कीदृशं रत्नम् ? । आभा—कान्तिः तया अस्तो—निराकृतः भास्वान्—सूर्यो येन तत् ' आभास्तभास्वत् ' । पुनः हे महामानसि किं कुर्वति ? । ' विकिरति ! ' विक्षिपति ! । निराकृतवतीत्यर्थः । कां कर्मतापन्नाम् ? । ' आलीं ' श्रेणीम् । केषाम् ? । ' अरीणां ' शत्रूणाम् । कीदृशीं आलीम् ? । रणः—संग्रामः तस्य आरवः—शब्दः तेन रीणा—क्षीणा तां ' रणारावरीणां ' संग्रामे निःशब्दाम् । इति पदार्थः ॥

अथ समासः—दधातीति दधती, तस्याः सं० हे दधति ! । रवेः सपत्नं रविसपत्नम् । आभया अस्तो भास्वान् येन तत् आभास्तभास्वत् । नवश्चासौ घनश्च नवघनः, अतिशयेन नवघनं इति नवघनतरम्, नवघनतरं वारि यस्मिन् स नवघनतरवारिः, तं नवघनतरवारिम् । रणस्य आरावः रणारावः, रणारावेण रीणा रणारावरीणा, तां रणारावरीणाम् । विकिरतीति विकिरती, तस्याः सं०हे विकिरति ! महत् मानसं यस्याः सा महामानसी, तस्याः सं० हे महामानसि ! । घनश्चासौ तरवारिश्च घनतरवारिः, तं घनतरवारिम् । वारणस्य अरिः वारणारिः, तस्मिन् वारणारौ ॥ इति चतुर्थवृत्तार्थः ॥ ४ ॥

श्रीसुपार्श्वजिनेन्द्रस्य, स्तुतेरर्थो लिपीकृतः ।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना ॥
॥ इति सुपार्श्वजिनस्तुतिवृत्तिः ॥ ७ ॥

दे० व्या०—दधतीति । हे महामानसि ! देवि ! इष्टान्—अभिमतान्, जनानिति शेषः, त्वं अव—रक्ष इत्यन्वयः । ' अव रक्षणे ' इति धातुः । ' अव ' इति क्रियापदम् । का कर्त्री ? । त्वम् । कान् कर्मतापन्नान् ? । इष्टान् । हे गतवति !—प्राप्नुषि ! । कस्मिन् ? । ' वारणारौ' वारणानां—गजानां अरिः सिंहः तस्मिन्, सिंहवाहनत्वात् । हे दधति !—धारिके ! । किम् ? । रत्नं—मणिम् । ' आभास्तभास्वन्नवघनतरवारिम् ' आभा—कान्तिः तया अस्तः—तिरस्कृतो भास्वन्—दीप्यमानो नवः—प्रत्यग्रो घनो-मेघो येन एवंविधो यः तरवारिः—खड्गः तम् । किंविशिष्टं तरवारिम् ? । ' घनतरवारिम् ' अतिशयेन घनं घनतरं वारि—पानीयम् अर्थात् धारात्मकं यस्मिन् स तम् । किंविशिष्टं रत्नम् ? । ' रविसपत्नम् ' रवेः—सूर्यस्य सपत्नं—प्रतिपक्षम्, प्रभाधिक्यात् । किं कुर्वत् ? । ' वारणारौ विकिरति !—विक्षिपति ! । काम् ? । आलीं—श्रेणीम् । केषाम् ? । अरीणां—शत्रूणाम् । किंविशिष्टां आलीम् ? ' रणारावरीणाम् ' रणस्य-संग्रामस्य आरावेण-शब्देन रीणां—खिन्नाम् । इति चतुर्थवृत्तार्थः ॥ मालिनीच्छन्दः । " वसुयतिरियमुक्ता मालिनी नौ मयौ यः " इति तल्लक्षणम् ॥ ४ ॥

# ८ श्रीचन्द्रप्रभजिनस्तुतयः

अथ चन्द्रप्रभप्रभवे प्रणामः—

तुभ्यं चन्द्रप्रभ ! जिन ! नमस्तामसोज्जृम्भितानां
हाने कान्तानलसम ! दयावन् ! दितायासमान ! ।
विद्वत्पङ्क्त्या प्रकटितपृथुस्पष्टदृष्टान्तहेतू-
हानेकान्तानलसमदया वन्दितायासमान ! ॥१ ॥

—मन्दाक्रान्ता ( ४, ६, ७ )

ज० वि०—तुभ्यमिति । हे चन्द्रप्रभजिन !-चन्द्रप्रभाभिध ! तीर्थंकर ! तुभ्यं-भवते नमो-नमस्कारः, अस्त्विति क्रियाऽध्याह्रियते । ततश्च 'अस्तु' इति क्रियापदम् । किं कर्तृ ? 'नमः' । कस्मै ? 'तुभ्यम्' । कथंभूताय तुभ्यम् ? 'वन्दिताय' स्तुताय । कया ? 'विद्वत्पङ्क्त्या' पण्डितश्रेण्या । कथंभूतया ? 'अनलसमदया' न विद्येते अलसमदौ-तन्द्राहंकारौ यस्याः सा तथा तया । अत्र यद्यपि अलसशब्देन धर्मी आलस्यशब्देन च धर्मः, "आलस्यः शीतकोऽलसः" (अमर० श्लो० १९६९), तथा 'आलस्यं तन्द्रा कौसीद्यं' इत्यभिधानचिन्तामणिवचनात् ( का० २, श्लो० २२९ ) तथापि धर्मधर्मिणोः कथंचिदभेदादलसशब्देनाप्यालस्यं प्रतिपाद्यते । अपराणि सर्वाण्यपि श्रीचन्द्रप्रभस्य संबोधनानि । तेषां चैवं व्याख्या—हे 'कान्तानलसम !' कान्तः-कमनीयोऽनलो-वह्निः तेन सम !-सदृश ! । कस्मिन् ? 'हाने' अपगमे । केषाम् ? 'तामसोज्जृम्भितानां' तामसानि-तमःसंबन्धीनि यानि उज्जृम्भितानि-विस्फूर्जितानि तेषाम् । हे 'दयावन् !' कृपयान्वित ! । हे 'दितायासमान !' आयासः-खेदः मानो-गर्वः तौ दितौ-खण्डितौ येन स तथा तत्संबो० हे दिता० । हे 'प्रकटितपृथुस्पष्टदृष्टान्तहेतूहानेकान्त !' पृथवो-वितताः स्पष्टाः-स्फुटाः दृष्टान्ता-निदर्शनानि हेतवः-कारणानि ऊहाः-वितर्काः अनेकान्तः-स्याद्वादः, ततः पृथवः स्पष्टाः दृष्टान्तहेतूहा यस्मिन् स तादृशः अनेकान्तः स प्रकटितः-प्रकाशितो येन स तथा तत्संबोधनं हे प्रकटित० । हे 'असमान !' अनन्यसदृश ! । यद्वा मानः-पूजा तेन सह वर्तमान ! ।

अथ समासः—चन्द्रवत् प्रभा यस्य स चन्द्रप्रभः 'तत्पुरुषः' । चन्द्रप्रभश्चासौ जिनश्च चन्द्रप्रभजिनः 'कर्मधारयः' । तत्संबोधनं हे चन्द्रप्रभ० । तमस इमानि तामसानि । तामसानि च तानि उज्जृम्भितानि च तामसोज्जृम्भितानि 'कर्मधारयः' । तेषां तामसो० । कान्तश्चासावनलश्च कान्तानलः 'कर्मधारयः' । कान्तानलस्य समः कान्ता० 'तत्पुरुषः' । [ तत्सं० हे कान्ता० । ] हे दिता-

१ अयं पाठश्चिन्तनीयः ।

यासमान! आयासश्च मानश्च मानं च वा आयासमानौ आयासमाने वा 'इतरेतरद्वन्द्वः'। दितौ दिते वा आयासमानौ आयासमाने वा येन स दितायासमानः 'बहुव्रीहिः'। तत्संबो० हे दिता०। विदुषां पंक्तिर्विद्वत्पंक्तिः 'तत्पुरुषः'। तया विद्व०। पृथवश्च ते स्पष्टाश्च पृथुस्पष्टाः 'कर्मधारयः'। दृष्टान्ताश्च हेतवश्च ऊहाश्च दृष्टान्तहेतूहाः 'इतरेतरद्वन्द्वः'। पृथुस्पष्टा दृष्टान्तहेतूहा यस्मिन् (स) पृथुस्प० 'बहुव्रीहिः'। पृथुस्पष्टदृष्टान्तहेतूहश्चासावनेकान्तश्च पृथुस्पष्ट० 'कर्मधारयः'। प्रकटितः पृथुस्पष्टदृष्टान्तहेतूहानेकान्तो येन स प्रकटितपृथु० 'बहुव्रीहिः'। तत्संबोधनं हे प्रकटितपृथु०। अलसश्च मदश्च अलसमदौ 'इतरेतरद्वन्द्वः'। न विद्येते अलसमदौ यस्याः सा अनलसमदा 'बहुव्रीहिः'। तया अनलस०। न विद्यते समानो यस्य सोऽसमानः 'बहुव्रीहिः'। यद्वा सह मानेन वर्तते यः स समानः 'तत्पुरुषः'। तत्संबो० हे असमान (!)!॥ इति काव्यार्थः ॥ १ ॥

सि० वृ०—तुभ्यमिति। चन्द्रस्येव सौम्या प्रभा यस्येति चन्द्रप्रभः। गर्भस्थेऽस्मिन् मातुश्चन्द्रपानदोहदोऽभूदिति चन्द्रप्रभः, स चासौ जिनश्च तस्य सम्बोधनं हे चन्द्रप्रभजिन!। तुभ्यं—भवते नमः—नमस्कारः, अस्त्विति क्रियाध्याहारः। ततश्च 'अस्तु' इति क्रियापदम्। किं कर्तृ ?। नमः। नम इति नमस्कारार्थकमव्ययम्। कस्मै ?। तुभ्यम्। 'तुभ्यं मह्यं ङया' (सा० सू० ३३४) इति युष्मच्छब्दस्य चतुर्थ्येकवचने तुभ्यमित्यादेशः। कथंभूताय तुभ्यम् ?। वन्दिताय। 'वदि अभिवादनस्तुत्योः'। कया ?। 'विद्वत्पङ्क्त्या' विदुषां—धीमतां पंक्तिः—ततिः तया। कथंभूतया ?। 'अनलसमदया' अलसश्च मदश्च अलसमदौ 'इतरेतरद्वन्द्वः', न विद्येते अलसमदौ—तन्द्राहंकारौ यस्याः सा तथा तया। अत्र यद्यपि अलसशब्देन धर्मी आलस्यशब्देन च धर्मः, यदाह—"आलस्यः शीतकोऽलसः" (अमर० श्लो० १९६९) तथा "आलस्य तन्द्रा कौसीद्यं" (अभि० का० २, श्लो० २२९) इति दर्शनाच्च तथापि धर्मधर्मिणोः कथंचिदभेदादलसशब्देनाप्यालस्यमेव प्रतिपाद्यमिति सर्वं समञ्जसम्। अपराणि सर्वाण्यपि श्रीचन्द्रप्रभस्य सम्बोधनानि। तेषां त्वेवं व्याख्या—हे 'कान्तानलसम !' कान्तः—कमनीयः यः अनलः-वह्निः तेन समः—सदृशस्तस्य सम्बोधनं हे कान्ता०। कस्मिन् ?। हाने—विनाशने। केषाम् ?। 'तामसोज्जृम्भितानां' तामसानि—तमःसम्बन्धीनि यानि उज्जृम्भितानि-विस्फूर्जितानि तेषाम्। हे 'दयावन् !' दया-घृणा विद्यते यस्यासौ दयावान्, तस्य सम्बोधनं हे कृपयान्वित !। हे 'दितायासमान !' आयासः—खेदः मानः—गर्वः, आयासश्च मानश्च आयासमानौ 'इतरेतरद्वन्द्वः', [दितौ—खण्डितौ आयासमानौ येन तस्य सम्बोधनं हे दिता०। हे 'प्रकटितपृथुस्पष्टदृष्टान्तहेतू० !'] पृथवश्च ते स्पष्टाश्च पृथुस्पष्टाः 'कर्मधारयः', पृथुस्पष्टाश्च ते दृष्टान्तहेतूहाश्च पृथुस्पष्टदृष्टान्तहेतूहाः 'कर्मधारयः', ततः प्रकटिताः पृथुस्पष्टदृष्टान्तहेतूहाः येन इति 'बहुव्रीहिः'। पर्वतोऽयं वह्निमानिति प्रतिज्ञा। धूमादिति हेतुः। यो धूमवान् सोऽग्निमान् यथा महानसं इत्युदाहरणम्। अनेनैवंविधेनावश्यं भवितव्यमित्याकारक उत्कटकोटिकः संशय एव

ऊह इत्यन्यत्र विस्तरः। हे 'असमान!' न विद्यते समानो यस्य सः असमानः 'बहुव्रीहिः' तस्य सम्बोधनं हे असमान इत्यर्थः ॥ १ ॥

सौ० वृ०—यः शोभनपार्श्वो भवति तस्य चन्द्रवत् प्रभा भवति। अनेन संबन्धेन आयातस्य श्रीचन्द्रप्रभनामाष्टमजिनस्य स्तुतेरर्थो निर्णीयते। तुभ्यमिति।

हे चन्द्रप्रभ !–हे चन्द्रकान्ते ! धवलवर्णत्वात् सौम्यत्वाच्च । हे जिन ! ते–तुभ्यं नमः अस्तु इत्यन्वयः । 'अस्तु' इति क्रियापदम् । किं कर्तृ ? 'नमः' प्रणामः । 'अस्तु' भवतु । कस्मै ? । 'तुभ्यम्' । किंभूताय तुभ्यम् ? । 'वन्दिताय' स्तुताय प्रणमिताय । कया ? । 'विद्वत्पंक्त्या' पण्डितश्रेण्या । किंभूतया विद्वत्पंक्त्या ? । नास्ति अलसं–आलस्यम् मदो–दर्पः यस्याः सा अनलसमदा तया 'अनलसमदया'। हे 'दयावन् !' हे कृपायुक्त ! । हे 'असमान !' हे निरुपम ! । कान्तो–दीप्यमानः यः अनलो–वन्हिः तस्य समः–सदृक्षः कान्तानलसमः तस्य संबोधनं हे 'कान्तानलसम !' । कस्मिन् ? । 'हाने' अपगमे । केषाम् ? । 'तामसोज्जृम्भितानाम्' तामसानां–अज्ञानमिथ्यात्वतिमिराणां यानि उज्जृम्भितानि–प्रफुल्लितानि तामसोज्जृम्भितानि तेषां, तामसोज्जृम्भितानां हाने–अपगमे दीप्तवह्निकल्प ! इत्यर्थः । हे 'दितायासमान !' दितः—छेदितः आयासः–प्रयासः मानः–अहंकारो येन स दितायासमानः, तस्य सं० हे दितायासमान ! । प्रकटिता–स्पष्टीभूता पृथवः–विस्तीर्णाः स्पष्टाः–प्रकटाः दृष्टान्ताः–संबन्धा उपनया वा हेतवः–कारणानि ऊहा–वितर्काः यस्मिन् स तादृशो योऽनेकान्तः–स्याद्वादः–एकस्मिन् वस्तुनि अनेकधर्मप्रतिभासनं श्रद्धानं वदनं स्याद्वादः–अनेकान्तः प्रकटितपृथुस्पष्टदृष्टान्तहेतूहानेकान्तः तस्य सं० हे 'प्रकटितपृथुस्पष्टदृष्टान्तहेतूहानेकान्त !' । हे 'अनलस' हे सोद्यम ! । एतादृशाय चन्द्रप्रभाय जिनाय नमः । इति पदार्थः ॥

अथ समासः–चन्द्रवत् प्रभा यस्य स चन्द्रप्रभः, चन्द्रप्रभश्चासौ जिनश्च चन्द्रप्रभजिनः, तस्य सं० हे चन्द्रप्रभजिन ! । तमसः इमानि तामसानि, तामसानां उज्जृम्भितानि तामसोज्जृम्भितानि, तेषां तामसोज्जृम्भितानाम् । कान्तश्चासौ अनलश्च कान्तानलः, कान्तानलस्य समः कान्तानलसमः, तस्य सं० हे कान्तानलसम ! । दया विद्यते यस्य असौ दयावान्, तस्य सं० हे दयावन् ! । आयासश्च मानश्च आयासमानौ, दितौ आयासमानौ येन स दितायासमानः, तस्य सं० हे दितायासमान ! । विद् इति विद्वान्, विदुषां पंक्तिः विद्वत्पंक्तिः, तया विद्वत्पंक्त्या । दृष्टान्ताश्च हेतवश्च ऊहाश्च दृष्टान्तहेतूहाः, स्पष्टा दृष्टान्तहेतूहाः स्पष्टदृष्टान्तहेतूहाः, पृथवश्च ते स्पष्टदृष्टान्तहेतूहाश्च पृथुस्पष्टदृष्टान्तहेतूहाः, प्रकटिताः स्पष्टदृष्टान्तहेतूहाः यस्मिन् स प्रकटितस्पष्टदृष्टान्तहेतूहः, प्रकटितपृथुस्पष्टदृष्टान्तहेतूहश्चासौ अनेकान्तो यस्य [स] यस्मिन् वा (स) प्रकटितपृथुस्पष्टदृष्टान्तहेतूहानेकान्तः, तस्य सं० हे प्रकटितपृथुस्पष्टदृष्टान्त-हेतूहानेकान्त!। अलसश्च मदश्च अलसमदौ, न विद्येते अलसमदौ यस्याः सा अनलसमदा, तया अनलसमदया । नास्ति समानो यस्य सः असमानः, तस्य सं० हे असमान ! । यद्वा नास्ति अलसमदौ यस्य सः अनलसमदः, तस्य सं० हे अनलसमद ! 'यावन्दिताय' यया-लक्ष्म्या लक्ष्मणामात्रा वा वन्दितः, तस्मै यावन्दिताय । इत्यपि छायार्थः ॥ इति प्रथमवृत्तार्थः ॥ १ ॥ अस्मिन् वृत्ते मन्दाक्रान्ताच्छन्दः ॥

दे० व्या०–तुभ्यमिति । हे चन्द्रप्रभ ! जिन ! तुभ्यं नमः–नमस्कारः, अस्त्वित्यध्याहारः । किंविशिष्टाय तुभ्यम् ? । वन्दिताय–नमस्कृताय । कया ? । 'विद्वत्पङ्क्त्या' विदुषां–पण्डितानां पंक्तिः–श्रेणिः तया । किंविशिष्टया विद्वत्पङ्क्त्या ? । 'अनलसमदया' अलसः–आलस्यं मदो–मुद्मोहसंभेदः अनयोः पूर्वं 'द्वन्द्वः', ततो न स्तः अलसमदौ यस्याः सा तथेति समासः । 'दयावन् !' इति । दया–कृपा अस्त्यस्मिन्निति दयावान्, तस्यामन्त्रणम् । 'कान्तानलसम !' इति । कान्तः–कमनीयो जाज्वल्यमान इतियावत् यः अनलः–वह्निः तेन समः–तुल्यो यः स तस्यामन्त्रणम् । कस्मिन् ? । हाने–विनाशने । केषाम् ? । 'तामसोज्जृम्भितानाम्'

१ अयं पाठश्चिन्तनीयः ।

तमःसम्बन्धिविस्फूर्जितानाम्, तमःसम्बन्धीनि तामसानि तानि च तानि उज्जृम्भितानि चेति 'कर्मधारयः' तेषाम् । 'दितायासमान !' इति । आयासः-संसारखेदः मानः चित्तोन्नतिः अनयोः पूर्वं 'द्वन्द्वः', तेन दितौ-छिन्नौ आयासमानौ येन स तस्यामन्त्रणम् । "लूने छिन्नं छितं दितम्" इत्यभिधानचिन्तामणिः ( का० ६, श्लो० १२५ ) । 'प्रकटितपृथुस्पष्टदृष्टान्तहेतूहानेकान्त !' इति । पृथवो विततः स्पष्टाः-सम्यगवबोध्याः दृष्टान्ता-उदाहरणानि हेतवः-साध्यगमकाः ऊहा-वितर्काः यत्र स तथा, एवंविधः प्रकटितः-प्रकाशितः अर्थानां नित्यत्वात् ( ? ) अनेकान्तः-स्याद्वादो येन स तस्यामन्त्रणम् । 'असमान !' इति । नास्ति सर्वेभ्यः उत्कृष्टत्वात् समानः-सदृशो यस्य तस्यामन्त्रणम् । एतानि सर्वाणि भगवतः सम्बोधनपदानि । इति प्रथमवृत्तार्थः ॥ १ ॥



**जिनेश्वराणां नुतिः—**

जीयाद् राजी जनितजननज्यानिहानिर्जिनानां
सत्यागारं जयदमितरुक् सारविन्दाऽवतारम्[1] ।
भव्योद्धृत्या भुवि कृतवती याऽवहद् धर्मचक्रं
सत्यागा रञ्जयदमितरुक् सा रविं दावतारम् ॥ २ ॥

—मन्दा०

ज० वि०—जीयादिति । जिनानां—तीर्थकृतां सा राजी—श्रेणी जीयात्—जयत्विति क्रियाकारकसंयोगः । अत्र 'जीयाद्' इति क्रियापदम् । का कर्त्री ? 'राजी' । केषां ? 'जिनानाम्' । राजी कथंभूता ? 'जनितजननज्यानिहानिः' जनिता—कृता जननानां—लोकानां ज्यानेः—जरायाः हानिः—विनाशो यया सा तथा । पुनः कथं० ? 'सत्यागारं' सत्यस्यागारं—गृहम् । पुनः कथं० ? 'इतरुक्' इता—गताः रुजो—रोगाः यस्याः सा तथा । पुनः कथं० ? 'सारविन्दा' सह अरविन्दैः—सुरनिर्मितनवकनककमलैः वर्तते या सा तथा । पुनः कथं० ? 'कृतवती' विहितवती । कं कर्मतापन्नम् ? 'अवतारं' जन्मग्रहणम् । कस्यां ? 'भुवि' पृथिव्याम् । कया ? 'भव्योद्धृत्या' भव्यानां—भव्यप्राणिनां उद्धृतिः भवोत्तारणरूपा तया हेतुभूतया । पुनः कथं० ? 'सत्यागा' सह त्यागेन—दानेन वर्तते या सा तथा । सेति तच्छब्दसंबन्धी यच्छब्दघटनामाह—या जिनानां राजी 'धर्मचक्रं' धर्मसमयोत्पन्नं रथाङ्गम् अवहत्—बभारेति क्रियाकारकयोजना । अत्र 'अवहत्' इति क्रियापदम् । का कर्त्री ? 'या' । किं कर्मतापन्नम् ? 'धर्मचक्रम्' । कथंभूतम् धर्मचक्रम् ? 'जयदं' अभ्युदयदायि । इदमवतारस्यापि विशेषणं घटते । धर्मचक्रं किं कुर्वत् ? 'रञ्जयत्' रक्तीकुर्वत् । कं कर्मतापन्नम् ? 'रविं' सहस्रकिरणम् । पुनः कथंभूतं धर्मचक्रम् ?

१ 'सारविन्दा वतारम्' इत्यपि पदच्छेदः समीचीनः ।

'दावतारं' दावो–वनवह्निः "दवो दावो वनवह्निः" इत्यभिधानचिन्तामणिवचनात् ( का० ४, श्लो० १६७ ) तद्वत् तारं–उज्ज्वलम् । अत्रायं भावः–धर्मचक्रस्य रक्तप्रभा व्योम्नि प्रसरति, तस्याः संपर्कात् सहस्रकिरणोऽपि रक्तिमानं भजतीति । पुनः कथं० ? 'अमितरुक्' अमिता–अपरिमिता रुक्–द्युतिर्यस्य तत् तथा । अथवा 'रञ्जयदमितरुक्' इत्यक्षतमेव धर्मचक्रस्य विशेषणम् । सारविन्देति च जिनराज्या विशेषणम् । तदा चायमर्थः–रञ्जयन्ती–जनानां रागमुत्पादयन्ती अमिता रुक् यस्य तत् तथा । सारं–बलं विन्दते–लभत इति 'सारविन्दा' । बतेति विस्मये । 'अरं' शीघ्रम् । एतद्व्याख्यानपक्षे तु येति यच्छब्दस्य सहचारी सेति तच्छब्दोऽध्याहार्यः ॥

अथ समासः–जननं च ज्यानिश्च जननज्यानी 'इतरेतरद्वन्द्वः' । जननज्यान्योर्हानिर्जन० 'तत्पुरुषः' । जनिता जननज्यानिहानिर्यया सा जनितज० 'बहुव्रीहिः' । सत्यस्य अगारं सत्यागारं 'तत्पुरुषः' । जयं ददातीति जयदं 'तत्पुरुषः' । तज्जयदम् । इता रुजो यस्याः सा इतरुक् 'बहुव्रीहिः' । सह अरविन्दैर्वर्तते या सा सारविन्दा 'तत्पुरुषः' । भव्यानामुद्धृतिः भव्योद्धृतिः 'तत्पुरुषः' । तया भव्यो० । धर्मेणोपलक्षितं चक्रं धर्मचक्रं 'तत्पुरुषः' । सह त्यागेन वर्तते या सा सत्यागा 'तत्पुरुषः' । अमिता रुक् यस्य तत् अमितरुक् 'बहुव्रीहिः' । दाववत् तारं दावतारं 'तत्पुरुषः' । तद् दावतारम् । अथवा अमिता चासौ रुक् च अमितरुक् 'कर्मधारयः' । रञ्जयन्ती अमितरुक् यस्य तत् रञ्जयद० 'बहुव्रीहिः' । सारं विन्दतीति सारविन्दा 'तत्पुरुषः' ॥ इति काव्यार्थः ॥ २ ॥

सि० वृ०—जीयादिति । जिनानां–तीर्थकृतां सा राजी–श्रेणी जीयात्–जयत्वित्यर्थः । 'जि जये' धातोः 'आशीःप्रेरणयोः' ( सा० सू० ७०३ ) इत्याशिषि यादौ कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं यात् । 'ये' ( सा० सू० ७७९ ) इति सूत्रेण दीर्घः । तथाच 'जीयात्' इति सिद्धम् । अत्र 'जीयात्' इति क्रियापदम् । का कर्त्री ? । राजी । केषाम् ? । जिनानाम् । कथंभूता राजी ? । 'जनितजननज्यानिहानिः' जनिता–कृता जननानां–लोकानां ज्यानेः–जरायाः हानिः–विनाशो यया सा तथा । यद्वा जननं च ज्यानिश्च जननज्यानी–जन्मजरसी 'इतरेतरद्वन्द्वः', ततः जनिता–उत्पादिता जननज्यान्योर्हानिर्यया सा तथेत्यर्थः । पुनः कथंभूता ? । 'सत्यागारं' सत्यस्य–सूनृतस्य अगारं–गृहं, अजहल्लिङ्गोऽयम् । पुनः कथंभूता ? । 'इतरुक्' इता–गता रुजो–रोगा यस्याः सा इतरुक् । पुनः कथंभूता ? । 'सारविन्दा' अरविन्दैः–देवविरचितकनककमलैः सह वर्तते या सा सारविन्दा । पुनः कथंभूता ? । कृतवती–विहितवती । किं कर्म ? । अवतारं–जन्मग्रहणम् । कस्याम् ? । भुवि–पृथिव्याम् । कया ? । 'भव्योद्धृत्या' भव्यानां–मोक्षप्रापणयोग्यसत्त्वानां उद्धृतिः–उद्धरणं भवोद्धरणरूपा तया हेतुभूतया । पुनः कथंभूता ? । 'सत्यागा' सह त्यागेन–दानेन वर्तते या सा सत्यागा । सेति तच्छब्दसम्बन्धाद् यच्छब्दघटनामाह–या जिनानां राजी 'धर्मचक्रं' धर्मसमयोत्पन्नं रथाङ्गं अवहत्–बभारेत्यर्थः । 'वह प्रापणे' धातोरनद्यतने कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं दिप् । 'वावसाने' ( सा० सू० २४० )

दस्य तकारः । इकार उच्चारणार्थः । 'दिवादावट्' ( सा० सू० ७०७ ) इत्यट् । 'अप् कर्तरि' ( सा० सू० ६९१ ) इत्यप् । तथाच 'अवहत्' इति सिद्धम् । अत्र 'अवहत्' इति क्रियापदम् । का कर्त्री ? । या । किं कर्मतापन्नम् ? । धर्मचक्रम् । 'जयदं' जयं—अभ्युदयं ददाति तत् जयदम् । इदमवतारस्यापि विशेषणं घटते । धर्मचक्रं किं कुर्वत् ? । 'रञ्जयत्' रञ्जयतीति रञ्जयत्—रक्तीकुर्वत् । कं कर्मतापन्नम् ? । रविं—सूर्यम् । यतः कथंभूतं धर्मचक्रम् ? । 'दावतारं' दावः—वनवह्निः तद्वत् तारं-उज्ज्वलम् । "दवो दाव इवाख्यातो, वनाग्निवनयोरपि" इति **विश्वः** । "दवदावौ वनारण्यवह्नी" इत्यमरः ( श्लो० २७४७ ) । "दवो दावो वनवह्निः" इति **हैमः** ( का० ४, श्लो० १६७ ) । धर्मचक्रस्य रक्तप्रभासम्पर्कात् सहस्रकिरणोऽपि रक्तिमानं भजतीति भावः । पुनः कथंभूतम् ? । 'अमितरुक्' अमिता—इयत्तानवच्छिन्ना सा चासौ रुक्—द्युतिर्यस्य स तथा । अथवा रञ्जयदमितरुगित्यक्षतमेव धर्मचक्रस्य विशेषणम् । सारविन्देति च जिनराज्या विशेषणम् । तदा चायमर्थः—रञ्जयन्ती—जनानां रागमुत्पादयन्ती अमिता रुग् यस्य तत् तथा । सारं—बलं विन्दते—लभते इति सारविन्दा । बतेति विस्मये । "खेदानुकम्पासन्तोष-विस्मयामन्त्रणे बत" इत्यमरः ( श्लो० २८२३ ) । कथम् ? । अरं—शीघ्रम् । "अरं शीघ्रे च चक्राङ्गे, शीघ्रगे पुनरन्यवत्" इति **विश्वः** ॥ २ ॥

**सौ० वृ०—**जीयादिति । सा जिनानां—तीर्थकराणां राजिः—श्रेणी जीयात् इत्यन्वयः । 'जीयात्' इति क्रियापदम् । का कर्त्री? । 'राजिः' । 'जीयात्' जीव्यात् ? । केषाम् ? । 'जिनानाम्' । किंविशिष्टा जिनराजिः ? । अरविन्दैः—सुरनिर्मितकमलैः सहिता 'सारविन्दा' । पुनः किंवि० जिनराजिः ? । 'सत्यागा' त्यागो—दानं तेन सहिता सत्यागा । सदाना इत्यर्थः । पुनः किंवि० जिनराजिः ? । 'सा' प्रसिद्धा । सा का ? । या जिनराजिः अरं—अत्यर्थं धर्मचक्रं अवहत् इत्यन्वयः । 'अवहत्' इति क्रियापदम् । का कर्त्री ? । 'जिनराजिः' । 'अवहत्' वहति स्म । किं कर्मतापन्नम् ? । 'धर्मचक्रम्' । किंविशिष्टं धर्मचक्रम् ? । 'सत्यागारं' सत्यगृहम् । पुनः किंवि० धर्मचक्रम् ? । 'जयदं' जयप्रदम् । पुनः किंवि० धर्मचक्रम् ? । अमिता—अमाना रुक्—कान्तिः यस्य तत् 'अमितरुक्' । पुनः किंवि० धर्मचक्रम् ? । दावो—दववन्हिः तद्वत् तारं—उज्ज्वलं प्रभाभासुरत्वात् 'दावतारम्' । जिनराजिः किं कुर्वती ? । 'कृतवती' निष्पादयती । कं कर्मतापन्नम् ? । 'अवतारं' जन्म । कस्याम् ? । 'भुवि' पृथिव्याम् । कया ? । भव्याः—भविकाः तेषां उद्धृतिः—उद्धरणं भव्योद्धृतिः तया 'भव्योद्धृत्या' । धर्मचक्रं किं कुर्वत् ? । 'रञ्जयत्' अनुकुर्वत्—रागीकुर्वत् । कं कर्मतापन्नम् ? । 'रविं' सूर्यम् । पुनः किंविशिष्टं धर्मचक्रम् ? । इता—गता रोगा यस्मात् तत् 'इतरुग्' । अवतारधर्मचक्रयोः चत्वार्यपि विशेषणान्यवगम्यानि । इति पदार्थः ॥

अथ समासः—जननं च ज्यानिश्च जननज्यानी, जननज्यान्योर्हानिः जननज्यानिहानिः, जनिता जननज्यानिहानिर्यया सा जनितजननज्यानिहानिः । सद्भ्यो हितं सत्यं, सत्यस्य अगारं सत्यागारं, तत् सत्यागारम् । जयं ददातीति जयदः, तं जयदम् । इता—गता रुजः—रोगा यस्मात् तत् इतरुक् । अरविन्दैः सहिता सारविन्दा । अवतीर्यते इत्यवतारः, तं अवतारम् । भवाय योग्या भव्याः, भव्यानां उद्धृतिः (भव्योद्धृतिः) तया भव्योद्धृत्या । धर्मस्य धर्मार्थं वा चक्रं धर्मचक्रं, तत् धर्मचक्रम् । त्यागेन सहिता सत्यागा । रञ्जयतीति रञ्जयत् । न मिता अमिता, अमिता रुक्—कान्तिः यस्य स अमितरुक् । दाववत् तारं दावतारम् । आली—पाली—सखी—श्रेणी—राजी—पंक्ती—वीथी इत्यादयः शब्दा दीर्घईकारान्ताः [ इति ] शब्दार्णवे सन्ति ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥

दे० व्या०–जीयादिति । जिनानां–तीर्थंकराणां या राजी–परम्परा जीयात्–जयतात् इत्यन्वयः । ‘ जि जये ’ धातुः । ‘ जीयात् ’ इति क्रियापदम् । का कर्त्री ? । राजी । केषाम् ? । जिनानाम् । किंविशिष्टा राजी ? । ‘ जनितजननज्यानिहानिः ’ जननं–जनिः ज्यानिः–जरा अनयोः पूर्वं ‘ द्वन्द्वः ’, जनिता–उत्पादिता जननज्यान्योः हानिः–विनाशो यया सा तथेति समासः । पुनः किंविशिष्टा ? । ‘ इतरुक् ’ इता–गता रुक्–रोगो यस्याः सा तथा । पुनः किंविशिष्टा ? । ‘ सारविन्दा ’ अरविन्दं–कमलं तेन सह वर्तमाना, मार्गे देवनिर्मितसुवर्णाम्बुजे चरणस्थापनात् । पुनः किंविशिष्टा ? । ‘ सत्यागा ’ त्यागेन–दानेन सह वर्तमाना । “ दानमुत्सर्जनं त्यागः ” इत्यमरः ? । पुनः किंविशिष्टा ? । ‘ अमितरुक् ’ अमिता–अप्रमाणा रुक्–कान्तिः यस्याः सा । तथा राजी किं कुर्वती ? । कृतवती । कम् ? । अवतारं–जन्मग्रहणम् । कया ? । ‘ भव्योद्धृत्या ’ भव्यानां–भव्यजीवानां उद्धृतिः–उद्धारः तया हेतुभूतया । किंविशिष्टं अवतारम् ? । ‘ सत्यागारं ’ सत्यस्य–सूनृतस्य अगारं–गृहम् । पुनः किंविशिष्टम् ? । ‘ जयदम् ’ जयं–उत्कर्षं ददातीति तथा तत् । यत्तदोर्नित्याभिसम्बन्धाद् या जिनानां राजी धर्मचक्रम् अवहत्–उवाहेत्यन्वयः । ‘ वह प्रापणे ’ धातुः । ‘ अवहत् ’ इति क्रियापदम् । का कर्त्री ? । जिनानां राजी । किं कर्मतापन्नम् ? । धर्मचक्रम् । धर्म चक्रं किं कुर्वत् ? । रञ्जयत्–रक्तीकुर्वत् । कम् ? । रविं–सूर्यम् । किंविशिष्टं रविम् ? । ‘ दावतारम् ’ दावो–दावानलः तद्वत् तारं–दीप्तम् ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥

सिद्धान्त–स्तुतिः—

सिद्धान्तः स्तादहितहतयेऽख्यापयद् यं जिनेन्द्रः
सद्राजीवः स कविधिषणापादनेऽकोपमानः ।
दक्षः साक्षाच्छ्रवणचुलुकैर्यं च मोदाद् विहायः–
सद्राजी वः सकविधिषणाऽऽपादनेकोपमानः ॥ ३ ॥

—मन्दा०

ज० वि०–सिद्धान्त इति । स सिद्धान्तः–आगमः वो–युष्माकं ‘अहितहतये’ अहितं–अनिष्टं दुःखादि तस्य हतिः–विघातः तस्यै स्तात्–भवतु इति क्रियाकारकसण्टङ्कः । अत्र ‘स्तात्’ इति क्रियापदम् । कः कर्ता ? ‘ सिद्धान्तः ’ । कस्यै ? ‘ अहितहतये ’ । स इति तच्छब्दसाहचर्यात् यच्छब्दघटनामाह–यं सिद्धान्तं जिनेन्द्रः–तीर्थकृत् अख्यापयत्–ख्यापितवान् । अत्रापि ‘ अख्यापयत् ’ इति क्रियापदम् । कः कर्ता ? ‘ जिनेन्द्रः ’ । कं कर्मतापन्नम् ? ‘ यम् ’ । कथंभूतो जिनेन्द्रः ? ‘ सद्राजीवः ’ सन्ति–शोभनानि राजीवानि–सुरकृताब्जानि यस्य स तथा । पुनः कथंभूतः ? ‘ दक्षः ’ पटुः । कस्मिन् ? ‘ कविधिषणापादने ’ कवयः–शास्त्रकाराः तेषां धिषणापादने–प्रतिभाजनने । पुनः कथंभूतः ? ‘अकोपमानः’ न विद्येते कोपमानौ–क्रोधाहंकारौ यस्य स तथा । पुनः कथं० ? ‘ अनेकोपमानः ’ अनेकानि–अपरिमितानि उपमानानि–समुद्रचन्द्रादीनि यस्य स तथा। एतानि सर्वाण्यपि सद्राजीव इति वर्जितानि प्रथमान्तविशेषणानि सिद्धान्तस्यापि युज्यन्ते । ‘ च ’ पुनरर्थे । यं सिद्धान्तं ‘ विहायःसद्राजी ’ विहायःसदो–देवाः तेषां राजी–पङ्क्तिः मोदात्

हर्षात् अपात्—पीतवती। अत्यादरेण श्रवणं पानमुच्यत इति न्यायादश्रौषीदित्यर्थः। अत्रापि 'अपात्' इति क्रियापदम्। का कर्त्री? 'विहायःसद्राजी'। कं कर्मतापन्नम्? 'यम्'। कैः कृत्वा? 'श्रवणचुलुकैः' श्रवणरूपैः चुलुकैः अञ्जलिभिः। कथम्? 'साक्षात्' प्रत्यक्षम्। कथंभूता विहायःसद्राजी? 'सकविधिषणा' कविः—शुक्रः धिषणः—सुरगुरुः ताभ्यां सह वर्तते या सा तथा॥

अथ समासः—न हितं अहितं 'तत्पुरुषः'। अहितस्य हतिः अहितहतिः 'तत्पुरुषः'। तस्यै अहि०। जिनानामिन्द्रो जिनेन्द्रः 'तत्पुरुषः'। सन्ति राजीवानि यस्य स सद्राजीवः 'बहुव्रीहिः'। धिषणायाः आपादनं धिषणापादनं 'तत्पुरुषः। कवीनां धिषणापादनं कविधि० 'तत्पुरुषः'। तस्मिन् कविधि०। कोपश्च मानश्च कोपमानौ 'इतरेतरद्वन्द्वः'। न विद्येते कोपमानौ यस्य सः अको० 'बहुव्रीहिः'। श्रवणान्येव चुलुकाः श्रवण० 'कर्मधारयः'। तैः श्रवण०। विहायसि सीदन्तीति विहायःसदः 'तत्पुरुषः'। विहायःसदां राजी विहा० 'तत्पुरुषः'। कविश्च धिषणश्च कविधिषणौ 'इतरेतरद्वन्द्वः'। सह कविधिषणाभ्यां वर्तते या सा सकवि०। अनेकान्युपधानानि यस्य सः अनेको० 'बहुव्रीहिः'॥ इति काव्यार्थः॥ ३॥

सि० वृ०—सिद्धान्त इति। स सिद्धान्तः—राद्धान्तः वः—युष्माकं अहितहतये स्तात्—भवतित्यर्थः। 'अस भुवि' सत्तायां धातोः 'आशीःप्रेरणयोः' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप्। 'तुह्योः०' ( सा० सू० ७०४ ) इति तातङादेशो, 'नमसोऽस्य' ( सा० सू० ८९९ ) इत्यकारलोपे च 'स्तात्' इति सिद्धम्। अत्र 'स्तात्' इति क्रियापदम्। कः कर्ता?। सिद्धान्तः। "समौ सिद्धान्तराद्धान्तौ" इत्यमरः ( श्लो० २८९ )। कस्मै?। 'अहितहतये' अहितं—अनिष्टं दुःखादि तस्य हतिः—विनाशस्तस्यै अहितहतये। केषाम्?। वः—युष्माकम्। ( युष्मद् ) इत्यस्य षष्ठीबहुवचने वसादेशः। स इति तच्छब्दसाहचर्याद् यच्छब्दघटनामाह—यं सिद्धान्तं जिनानामिन्द्रो जिनेन्द्रः अख्यापयत्—ख्यापितवानित्यर्थः। 'ख्या प्रकथने' धातोरनद्यतने कर्तरि प्रथमपुरुषैकवचनं दिप्। 'धातोः प्रेरणे' ( सा० सू० १०४२ ) इति ञिः। 'दिबादावट्' ( सा० सू० ७०७ )। 'रातो ञौ पुक्' ( सा० सू० १०३७ ) इति पुगागमः। 'स धातुः' ( सा० सू० ४१ ) इति धातुसंज्ञा। 'अप् कर्तरि' ( सा० सू० ६९१ ) इत्यप्। 'गुणः' ( सा० सू० ६९२ ) इति गुणः। 'ए अय्' ( सा० सू० ७८२ )। 'स्वरहीनं०' ( सा० सू० ३६ )। तथा च 'अख्यापयत्' इति सिद्धम्। अत्र 'अख्यापयत्' इति क्रियापदम्। कः कर्ता?। जिनेन्द्रः। कं कर्मतापन्नम्?। यम्। कथंभूतो जिनेन्द्रः?। 'सद्राजीवः' सन्ति—शोभनानि राजीवानि—सुरकृतकमलानि यस्य स तथा। "बिसप्रसूनराजीव—पुष्कराम्भोरुहाणि च" इत्यमरः ( श्लो० ९४८ )। मार्गे देवविनिर्मितकनककमलोपरि चरणस्थापनादिति भावः। पुनः कथंभूतः?। 'दक्षः' कुशलः पटुरितियावत्। "निष्णातो निपुणो दक्षः" इति हैमः ( का० ३, श्लो० ६ )। कस्मिन्?। 'कविधिषणापादने' कवयः-शास्त्रकर्तारः तेषां धिषणा-सदसद्विवेकिताबुद्धिः तस्या आपादनं-जननं

तस्मिन् । पुनः कथंभूतः ? । ' अनेकोपमानः ' अनेकानि—असंख्यातानि उपमानानि—समुद्रचन्द्रादीनि यस्य स तथा । पुनः कथंभूतः ? । ' अकोपमानः ' कोपश्च मानश्च कोपमानौ ' इतरेतरद्वन्द्वः ', न विद्येते कोपमानौ—क्रोधाहङ्कारौ यस्य स तथा । एतानि सर्वाणि सद्राजीव इति मुक्त्वा प्रथमान्तविशेषणानि सिद्धान्तस्याऽपि युज्यन्ते । च पुनरर्थे । यं सिद्धान्तं विहायःसद्राजी—निर्जरश्रेणी मोदात्—हर्षात् अपात्-पीतवतीत्यर्थः । अत्यादरेण श्रवणं पानमुच्यते इति अत्यादरेणाश्रौषीदित्यर्थः । ' पा पाने ' धातोः कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं दिप् । ' दिव्रादावट् ' ( सा० सू० ७०७ ) । अत्र ' अपात् ' इति क्रियापदम् । का कर्त्री ? । ' विहायःसद्राजी ' विहायसि—व्योम्नि सदः-गृहाणि येषां ते विहायःसदः—देवाः तेषां राजिः—श्रेणी इति 'तत्पुरुषः'। "ततसदस्त्वमराः" इति (अभि०) चिन्तामणौ ( का० २, श्लो० १)। कं कर्मतापन्नम् ?। यम्। कस्मात् ?। मोदात्। कैः कृत्वा ?। 'श्रवणचुलुकैः' श्रवणाः कर्णाः त एव चुलुकाः—अञ्जलयः प्रसृतय इतियावत्, तैः कृत्वा । कथम् ?। साक्षात्-प्रत्यक्षम् । "साक्षात् प्रत्यक्षतुल्ययोः" इत्यमरः। (श्लो० २८२२)। कथंभूता विहायःसद्राजी ?। ' सकविधिषणा ' । कविः— शुक्रः । " कविः काव्यकरे सूरौ, पुंसि वाल्मीकिशुक्रयोः । खलीनेऽस्त्री कविर्ज्ञेयः " इति गौडः । " उशना भार्गवः कविः षोडशार्चिर्दैत्यगुरुः " इति हैमः ( का० २, श्लो० ३३ ) । धिषणः—बृहस्पतिः । कविश्च धिषणश्च कविधिषणौ ' इतरेतरद्वन्द्वः ', ताभ्यां सह वर्तते या सा तथा। "धिषणस्त्रिदशाचार्ये, धिषणा धियि संमता" इति विश्वः ॥३॥

सौ० वृ०-सिद्धान्त इति । सिद्धान्तः-आगमः वो-युष्माकम् अहितं-अनिष्टं तस्य हतिः-नाशः अहितहतिः तस्यै ' अहितहतये ' स्तात् इत्यन्वयः। 'स्तात्' इति क्रियापदम् । कः कर्ता ?। 'सिद्धान्तः'। ' स्तात् ' भूयात् । कस्यै ? । ' अहितहतये ' विघ्नविनाशाय । केषाम् ?। ' वः ' युष्माकम् । किंविशिष्टः सिद्धान्तः ?। ' सः ' प्रसिद्धः । सः कः ?। जिनेन्द्रः-तीर्थंकरो यं सिद्धान्तं अख्यापयत् इत्यन्वयः । ' अख्यापयत् ' इति क्रियापदम् । कः कर्ता ?। ' जिनेन्द्रः '। ' अख्यापयत् ' अकथयत् । कं कर्मतापन्नम् । ' यं ' सिद्धान्तम् । किंविशिष्टः सिद्धान्तः ? । सन्तः-साधवः सज्जना वा तेषां राजिः-श्रेणिः तस्याः ईः अघं-पापं तं प्रति वाति-क्षयं नयतीति ' सद्राजीवः '। जिनेन्द्रपक्षे सति-शोभनानि राजीवानि-कमलानि यस्य स सद्राजीवः । सुरनिर्मितस्वर्णपद्मोपरि संचरिष्णुत्वात् । पुनः किंवि० सिद्धान्तः ?। ' दक्षः ' प्रवीणः । कस्मिन् ?। कवयः-प्राज्ञाः तेषां धिषणा-बुद्धिः तस्याः आपादनं-निष्पादनं तस्मिन् ' कविधिषणापादने '। पुनः किंवि० सिद्धान्तः ?। न विद्यते कोपः-क्रोधः मानः-अहङ्कारो यस्य सः 'अकोपमानः'। जिनेन्द्रोऽप्येवंविधः । पुनः किंवि० सिद्धान्तः ?। 'विहायःसद्राजी' विहायः-आकाशं तस्मिन् सीदन्ति-तिष्ठन्तीति विहायःसदो-देवाः तेषां राजी-श्रेणिः देवपंक्तिः । विहायःसद्राजी यं सिद्धान्तं प्रति श्रवणचुलुकैः- कर्णगण्डूषैः कृत्वा साक्षात् यथा स्यात् तथा मोदात्-हर्षात् अपात् इत्यन्वयः । ' अपात् ' इति क्रियापदम् । का कर्त्री ?। ' विहायःसद्राजी ' देवपंक्तिः । ' अपात् ' पीतवती । कं कर्मतापन्नम् ?। ' यं ' सिद्धान्तम् । कैः ?। ' श्रवणचुलुकैः '। कस्मात् ?। ' मोदात् '। पुनः किंवि० सिद्धान्तः ?। अनेकानि-बहूनि उपमानानि-चन्द्रसूर्यचक्रादीनि यस्य सः ' अनेकोपमानः ' जिनेन्द्रोऽप्येवंविधः । ( किंविशिष्टा ) विहायःसद्राजी ? । कविः-शुक्रः धिषणः-बृहस्पतिः ताभ्यां सहिता सकविधिषणा । 'ईः स्मरेऽघेऽव्यये खेदे, कोपाक्ताबी भुवि श्रियाम्' इति महीपः। इति पदार्थः॥

अथ समासः-न हितं अहितं, अहितस्य हतिः अहितहतिः, तस्यै अहितहतये । जिनानां इन्द्रो जिनेन्द्रः । सतां राजिः सद्राजिः, सद्राज्या ईः सद्राजी, सद्राजीं वातीति सद्राजीवः । कवीनां धिषणा

कविधिषणा, कविधिषणानां आपादनं कविधिषणापादनम्, तस्मिन् कविधिषणापादने । कोपश्च मानश्च कोपमानौ, न विद्येते कोपमानौ यस्य सः अकोपमानः । श्रवणान्येव चुलुकाः श्रवणचुलकाः, तैः श्रवणचुलुकैः । विहायसि सीदन्ति इति विहायःसदः, विहायःसदां राजी विहायःसद्राजी । कविश्च धिषणश्च कविधिषणौ, कविधिषणाभ्यां सहिता सकविधिषणा । अनेकानि उपमानानि यस्य सः अनेकोपमानः ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या०-सिद्धान्त इति । स सिद्धान्तः-राद्धान्तः वः-युष्माकम् अहितहतये स्तात्-भूयादित्यन्वयः । 'अस् भुवि' धातुः । 'स्तात्' इति क्रियापदम् । कः कर्ता ? । सिद्धान्तः । 'कस्यै ? । 'अहितहतये' अहितस्य-सापराधस्य हतिः-हननं तस्यै । केषाम् ? । वः । यत्तदोर्नित्याभिसम्बन्धाद् यं सिद्धान्तं जिनेन्द्रः-तीर्थङ्करः अख्यापयत्-ऊचिवान् इति सम्बन्धः । 'ख्या प्रकथने' धातुः । 'अख्यापयत्' इति क्रियापदम् । कः कर्ता ? । जिनेन्द्रः । कं कर्मतापन्नम् ? । यं सिद्धान्तम् । किंविशिष्टो जिनेन्द्रः ? । 'सद्राजीवः' सन्ति-शोभनानि राजीवानि-कमलानि यस्य स तथा । पुनः किंविशिष्टः ? । दक्षः-कुशलः । कस्मिन् ? । 'कविधिषणापादने' कवीनां धिषणा-मनीषा तस्या आपादनं-जननं तस्मिन् । पुनः किंविशिष्टः ? । 'अकोपमानः' कोपः-क्रोधः मानः-स्मयः अनयो'र्द्वन्द्वः' ततो न स्तः कोपमानौ यस्य स तथेति विग्रहः । पुनः किंविशिष्टः ? । 'अनेकोपमानः' अनेकानि-समुद्रचन्द्रादीनि उपमानानि यस्य स तथा । अथवा सद्राजीव इति मुक्त्वा एतानि सर्वाण्यपि आगमस्य विशेषणानीति बोध्यम् । च पुनरर्थे । तेन च-पुनः यं सिद्धान्तं मोदाद् विहायःसद्राजी-अमरश्रेणिः अपात्-पीतवतीत्यन्वयः । 'पा पाने' धातुः । आदरेण श्रवणं पानमुच्यते । 'अपात्' इति क्रियापदम् । का कर्त्री ? । 'विहायःसद्राजी' विहायसि-आकाशे सदो-गृहाणि येषां ते विहायःसदः, तेषां राजी-परम्परेत्यर्थः । कं कर्मतापन्नम् ? । सिद्धान्तम् । कस्मात् ? । मोदात्-हर्षात् । कैः ? । 'श्रवणचुलुकैः' श्रवणाः-कर्णाः त एव चुलुकाः-गण्डूषाः तैः । "गण्डूषश्चुलुकश्चलुः" इत्यभिधानचिन्तामणिः ( का० ३, श्लो० २६२ ) । किंविशिष्टा विहायःसद्राजी ? । 'सकविधिषणा' कविः-शुक्रः धिषणो-बृहस्पतिः अनयो'र्द्वन्द्वः,' ताभ्यां सह वर्तमाना । "धिषणः फल्गुनीभवः" इत्यभिधानचिन्तामणिः ( का० २, श्लो० ३२ ) ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

वज्राङ्कुश्याः स्तुतिः—

वज्राङ्कुश्यङ्कुशकुलिशभृत् ! त्वं विधत्स्व प्रयत्नं
स्वायत्यागे ! तनुमदवने हेमताराऽतिमत्ते ।
अध्यारूढे ! शशधरकरश्वेतभासि द्विपेन्द्रे
स्वायत्याऽगेऽतनुमदवने हेऽमतारातिमत्ते ! ॥ ४ ॥

— मन्दा०

ज० वि०-वज्राङ्कुश्यङ्कुशेति । 'हे' इति आभिमुख्याभिव्यक्तये । वज्राङ्कुशि !-वज्राङ्कुशीसंज्ञिके ! त्वं-भवती तनुमदवने-प्राणिनां रक्षणे प्रयत्नं-आदरं विधत्स्व-कुरुष्वेति क्रियाकारकसम्बन्धः । अत्र 'विधत्स्व' इति क्रियापदम् । का कर्त्री ? 'त्वम्' । कं कर्मतापन्नम् ? 'प्रयत्नम्' । कस्मिन् ? 'तनुमदवने' । कथंभूता त्वम् ? 'हेमतारा' स्वर्णवदुज्ज्वला । अपराणि सर्वाण्यपि वज्राङ्कुश्या देव्याः संबोधनानि । तेषां व्याख्या यथा—हे 'अङ्कुशकुलिशभृत्' अङ्कुशः-सृणिः

कुलिशो-वज्रः तौ बिभर्तीति तथा तत्संबोधनं हे अङ्कु० । एतद् विशेषणमपि घटते । हे 'स्वायत्यागे!' आयः-अर्थस्य आगमः त्यागो-दानं शोभनौ आयत्यागौ यस्याः सा तथा तत्संबो० हे स्वाय० । हे 'अध्यारूढे'! आसीने! । कस्मिन्? 'द्विपेन्द्रे' गजेन्द्रे । द्विपेन्द्रे कथंभूते? 'अतिमत्ते' अतिशयेन मदवति । पुनः कथंभूते? 'शशधरकरश्वेतभासि' शशधरः-चन्द्रमाः तस्य करो-द्युतिः तद्वत् श्वेता-उज्ज्वला भाः-त्विट् यस्य स तथा तस्मिन् । पुनः कथंभूते? 'अगे' अग इव पर्वत इव अगस्तस्मिन् पर्वतप्राय इत्यर्थः । कया? 'स्वायत्या' स्वस्य-आत्मनो या आयतिः-आयामः दीर्घतेतियावत् तया हेतुभूतया । पुनः कथं०? 'अतनुमदवने' अतनु-प्रभूतं मदवनं-मदरूपं जलं यस्य स तथा तस्मिन् । अथवा अतनुमद एव श्यामत्वाद् वनं-काननं यस्य स तथा तस्मिन् । तथा चायमभिप्रायः-द्विपेन्द्रस्त्वगोपमो वर्णितः, अगे च वनं भवेत्, तेन अत्रापि अतनुमदरूपं वनमस्तीति । हे 'अमतारातिमत्ते' अरातयो-वैरिणो विद्यन्ते यस्य सोऽरातिमान्, तस्य भावोऽरातिमत्ता, न मता-नाभिमेता अरातिमत्ता यया सा तथा, विरोधानभिलाषिणीत्यर्थः ॥

अथ समासः—अङ्कुशश्च कुलिशश्च अङ्कुशकुलिशौ 'इतरेतरद्वन्द्वः' । अङ्कुशकुलिशौ बिभर्तीति अङ्कु० 'तत्पुरुषः' । तत्संबो० हे अङ्कुश० । आयश्च त्यागश्च आयत्यागौ 'इतरेतरद्वन्द्वः' । शोभनौ आयत्यागौ यस्याः सा स्वायत्यागा 'बहुव्रीहिः' । तत्संबोधनं हे स्वायत्यागे! । तनुमतामवनं तनुमदवनं 'तत्पुरुषः' । तस्मिन् तनु० । हेमवत् तारा हेमतारा 'तत्पुरुषः' । अतिशयेन मत्तोऽतिमत्तः 'तत्पुरुषः' । तस्मिन् अति० । शशं धरतीति शशधरः 'तत्पुरुषः' । शशधरस्य करः शशधर० 'तत्पुरुषः' । श्वेता चासौ भाश्च श्वेतभाः कर्मधारयः । शशधरकरवत् श्वेता भा यस्य स शशधर० 'बहुव्रीहिः' । तस्मिन् । द्विपानां द्विपेषु वा इन्द्रो द्विपेन्द्रः 'तत्पुरुषः' । तस्मिन् द्विपेन्द्रे । स्वस्य आयतिः स्वायतिः 'तत्पुरुषः' । तया स्वायत्या । न गच्छतीत्यगः 'तत्पुरुषः' । तस्मिन् अगे । न तनुः अतनुः 'तत्पुरुषः' । मद एव वनं मदवनं 'कर्मधारयः' । अतनु मदवनं यस्य सोऽतनुमदवनः 'बहुव्रीहिः' । यदिवा अतनुश्चासौ मदश्च अतनुमदः 'कर्मधारयः' । अतनुमद एव वनं यस्य सोऽतनु० 'बहुव्रीहिः' । तस्मिन् अतनु० । न मता अमता 'तत्पुरुषः' । अमता अरातिमत्ता यया सा अमतारातिमत्ता 'बहुव्रीहिः' । तत्संबोधनं हे अमतारा० ॥ इति काव्यार्थः ॥ ४ ॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीचन्द्रप्रभस्वामिनः स्तुतेर्व्याख्या ॥ ८ ॥

सि० वृ०—वज्राङ्कुश्यङ्कुशेति । हे इत्याभिमुख्याभिव्यक्तये । "हे है व्यस्तौ समस्तौ च, हूतिसम्बोधनार्थयोः" इति विश्वः । हे वज्राङ्कुशि!—वज्राङ्कुशीसंज्ञिके! त्वं—भवती तनुमदवने—प्राणिरक्षणे प्रयत्न—आदरं विधत्स्व—कुरुष्वेत्यर्थः । विपूर्वकः 'डुधाञ् धारणपोषणयोः' इति धातोः 'आशीःप्रेरणयोः' ( सा० सू० ७०३ ) कर्तरि आत्मनेपदे मध्यमपुरुषैकवचनं स्वः । 'अप् कर्तरि'

( सा० सू० १९१ ) । ‘ द्विश्च ’ ( सा० सू० ७१० ) इति धातोर्द्वित्वं च । ‘ ह्रस्वः ’ ( सा० सू० ७११ ) इति पूर्वस्य ह्रस्वत्वम् । ‘ झपानां जबचपाः ’ ( सा० सू० ७१४ ) इति दत्वम् । ‘ पूर्वस्य ङिति झसे धः ’ ( सा० सू० ९६० ) इति पूर्वपदस्य धत्वम् । ‘ दादेः ’ ( सा० सू० ९९७ ) इत्याकारलोपः । ‘ खसे चपा झसानां ’ ( सा० सू० ८९ ) इति धकारस्य तकारः । तथाच ‘ विधत्स्व ’ इति सिद्धम् । अत्र ‘ विधत्स्व ’ इति क्रियापदम् । का कर्त्री ? । त्वम् । कं कर्मतापन्नम् ? । प्रयत्नम् । कस्मिन् ? । ‘ तनुमदवने ’ तनुः—शरीरं विद्यते येषां ते तनुमन्तः तेषा अवनं—रक्षणं तस्मिन् । किंविशिष्टा त्वम् ? । ‘ हेमतारा ’ हेम—सुवर्णं तदिव तारा हेमतारा, स्वर्णदेहेत्यर्थः । अन्यानि सर्वाण्यपि वज्राङ्कुश्याः सम्बोधनानि । तेषां व्याख्या यथा—हे ‘ अङ्कुशकुलिशभृत् ! ’ । “ ह्रादिनी वज्रमस्त्री स्यात्, कुलिशं भिदुरं पविः ” इत्यमरः ( श्लो० ९३ ) । अङ्कुशः—सृणिः, कुलिशं—वज्रं, अङ्कुशश्च कुलिशं च अङ्कुशकुलिशे ‘ इतरेतरद्वन्द्वः ’, ते बिभर्तीति तथा, तस्याः सम्बोधनम् । हे ‘ स्वायत्यागे ! ’ सुष्ठु—शोभन आयो—लाभः अर्थागमरूपः त्यागो—दानं अस्ति यस्य तस्य सम्बोधनं हे स्वायत्यागे ! । हे अध्यारूढे !—आसीने ! । कस्मिन् ? । ‘ द्विपेन्द्रे ’ द्वाभ्यां शुण्डाग्राभ्यां पिबन्तीति द्विपाः—गजास्तेष्विन्द्र इवेन्द्रस्तस्मिन् द्विपेन्द्रे । कथंभूते ? । ‘ अतिमत्ते ’ अतिशयेन मत्तः—क्षीबस्तस्मिन् । ‘ मदी हर्षे ’ ‘ रदाभ्यां निष्ठातो नः [ पूर्वस्य च दः ] ’ ( पा० अ० ८, पा० २, सू० ४२ ) इति प्राप्तो निष्ठातस्य नकारः, ‘ न ध्याख्यापॄमूर्छिमदाम् ’ ( पा० अ० ८, पा० २, सू० ५७ ) इति सूत्रेण निषिद्धस्तेन ‘ मत्तः ’ इति निष्पन्नम् । अन्यथा मन्न इत्यनिष्टं स्यादिति ज्ञेयम् । पुनः कथंभूते ? । ‘ शशधरकरश्वेतभासि ’ शशधरः—चन्द्रमाः तस्य करः—कान्तिस्तद्वत् श्वेता—उज्ज्वला भाः—त्विट् यस्य तस्मिन् । “ बलिहस्तांशवः कराः ” इत्यमरः ( श्लो० २६६३ ) । पुनः कथंभूते ? । ‘ अगे ’ अग इव पर्वत इव अगस्तस्मिन् पर्वतप्राये इत्यर्थः । अत्राभेदरूपकम् । कया ? । ‘ स्वायत्या ’ स्वस्य—आत्मनः आयतिः—आयामः दीर्घता इतियावत् तया हेतुभूतया । “ दैर्घ्यमायाम आनाहः, परिणाहो विशालता आयतिश्च ” इति केशवः । पुनः कथंभूते ? । ‘ अतनुमदवने ’ न तनु अतनु प्रभूतमित्यर्थः मदवनं—मदरूपं जलं यस्य तथा तस्मिन् । “ जीवनं भुवनं वनं ” इत्यमरः । ( श्लो० ४७१ ), अतनुमद एव श्यामत्वात् वनं—काननं यस्येत्यर्थस्तथा च द्विपेन्द्रस्त्वगोपमो वर्णितः, अगे च वनं भवेत्, तेनात्रापि प्रचुरमदरूपं वनमस्तीत्यभिप्रायः । अथावशिष्टं देवीसम्बोधनं हे ‘ अमताराति-मत्ते ! ’ इति । अरातयः—शत्रवः विद्यन्ते यस्य सोऽरातिमान् तस्य भावः अरातिमत्ता, न मता—नाभिप्रेता अरातिमत्ता यया सा तथा तस्याः सम्बोधनं हे अमतारातिमत्ते ! विरोधानभिलाषिणीत्यर्थः । मन्दाक्रान्ताच्छन्दः “ मन्दाक्रान्ता मभनततगा गो यतिर्वेदषड्भिः ” इति च तल्लक्षणम् ॥ ४ ॥

॥ इति महोपाध्यायश्रीभानु० श्रीचन्द्रप्रभस्वामिस्तुतिवृत्तिः ॥ ८ ॥

सौ० वृ०—वज्राङ्कुश्यङ्कुशेति । हे वज्राङ्कुशि [ नाम्नि देवि ] !—वज्राङ्कुशाभिधाने ! देवि ! तनुमदवने—जन्तुरक्षणे त्वं प्रयत्नं—यत्नं विधत्स्व इत्यन्वयः। ‘ विधत्स्व ’ इति क्रियापदम् । का कर्त्री ? । ‘ त्वम् ’ । ‘विधत्स्व’ कुरु । कं कर्मतापन्नम् ? । ‘प्रयत्नं ’ यत्नम् । कस्मिन् ? । तनुः—शरीरं तद्वन्तः—देहिनः तेषां अवनं—रक्षणं

तस्मिन् 'तनुमदवने'। किंविशिष्टा त्वम्?। अङ्कुशं-सृणिं कुलिशं-वज्रं ते द्वे बिभर्तीति 'अङ्कुशकुलिशभृत्!'। हे 'स्वायत्यागे!' सु-शोभनः आयो-लाभः अर्थादिः त्यागो-दानं ते द्वे यस्याः सा स्वायत्यागा, तस्याः सं० हे स्वायत्यागे!। पुनः किंविशिष्टा त्वम्?। हेम-स्वर्णं तद्वत् तारा-उज्ज्वला 'हेमतारा'। हे 'अध्यारूढे!' आरूढे!। कस्मिन्?।'द्विपेन्द्रे' गजपतौ। किंविशिष्टे द्विपेन्द्रे?। ('अतिमत्ते') अति-अत्यर्थं मत्ते-मदवति-उद्धते। पुनः किं० द्विपेन्द्रे?। शशधरः-चन्द्रः तस्य कराः-किरणाः तद्वत् श्वेता-धवला भाः-कान्तिः यस्यासौ तस्मिन् 'शशधरकरश्वेतभासि'। पुनः कथंभूते?। हे 'अमतारातिमत्ते!' अमता-अनभिप्रेता अरातिमत्ता-विपक्षभावता यस्याः सा अमतारातिमत्ता, तस्याः सं० हे अम०!। पुनः किंवि० त्वम्?। [तारातिमत्ते त्वं]। स्वायत्या-निजाशयेन, स्वभावेन वा अगे-पर्वते अध्यारूढे!। किंविशिष्टे अगे?। अतनु-प्रचुरं मदवनं यस्य सः अतनुमदवनः, तस्मिन् अतनुमदवने, द्विपेन्द्रेऽप्येवंविधं अतनु-प्रचुरं मदवनं-मदवारि यस्य स तस्मिन् अत०वने। इति पदार्थः॥

अथ समासः-अङ्कुशश्च कुलिशं च अङ्कुशकुलिशे, अङ्कुशकुलिशे बिभर्ति सा अङ्कुशकुलिशभृत्। आयश्च त्यागश्च आयत्यागौ, सु-शोभनौ आयत्यागौ यस्याः सा स्वायत्यागा, तस्याः सं० हे स्वायत्यागे!। तनवो विद्यन्ते येषां ते तनुमन्तः, तनुमतां अवनं तनुमदवनं, तस्मिन् तनुमदवने। हेमवत् तारा हेमतारा। अतिशयेन मत्ता अतिमत्ता, तस्याः सं० हे अतिमत्ते!। द्विपेन्द्रेऽप्येवंविधः समासः। अतिशयेन मत्तो-मदवान् (अति०), तस्मिन् अतिमत्ते। शशं धराति इति शशधरः, शशधरस्य कराः शशधरकराः, शशधरकरा इव श्वेता भाः यस्यासौ शशधरकरश्वेतभाः, तस्मिन् शशधरकरश्वेतभासि। द्वाभ्यां-मुखशुण्डाभ्यां पिबतीति द्विपः, (तस्येन्द्रः) तस्मिन्। अगे (?)। न तनुः अतनुः, अतनुश्चासौ मदश्च अतनुमदः, (अतनु०) वनानि-काननानि यस्मिन् सः अतनुमदवनः, तस्मिन् अतनुमदवने। द्विपेन्द्रपक्षे अतनुः-प्रचुरः मदस्य-दानस्य वनं-पानीयं यस्य सः अतनुमदवनः, तस्मिन्। हे संबोधने पदे पृथक् ज्ञेयम्। अरातिर्विद्यते यस्यासौ अरातिमान्, अरातिमतो भावः अरातिमत्ता, न मता अमता, अमता अरातिमत्ता यस्याः (सा) अमतारातिमत्ता, तस्याः सं० हे अमतारातिमत्ते!॥ इति चतुर्थवृत्तार्थः॥ ४॥

श्रीचन्द्रप्रभदेवस्य, स्तुतेरर्थः स्फुटीकृतः।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना॥
॥ इति चन्द्रप्रभजिनस्तुतिः॥ ४। ८। ३२॥

दे० व्या०-वज्राङ्कुश्यङ्कुशेति। हे वज्राङ्कुशि! त्वं तनुमदवने-प्राणिरक्षणे प्रयत्नं-प्रकर्षेण यत्नं विधत्स्व-कुरु इत्यन्वयः। 'डुधाञ् धारणपोषणयोः' इति धातुः। 'विधत्स्व' इति क्रियापदम्। का कर्त्री?। त्वम्। कं कर्मतापन्नम्?। प्रयत्नम्। कस्मिन्?। 'तनुमदवने' तनुः-शरीरं विद्यते येषां ते तनुमन्तः, तेषां अवनं-रक्षणं तस्मिन्। किंविशिष्टा त्वम्?। 'हेमतारा' हेम-सुवर्णं तद्वत् तारा-विशदा। हे अध्यारूढे!-गतवति! कृतारोहणे इतियावत्। कस्मिन्?। द्विपेन्द्रे-ऐरावणे। किंविशिष्टे द्विपेन्द्रे?। 'अतिमत्ते' अतिशयेन मत्ते-मदोत्कटे। पुनः किंविशिष्टे?। 'शशधरकरश्वेतभासि' शशधरस्य-चन्द्रस्य कराः-पादाः तद्वत् श्वेता-उज्ज्वला भाः-कान्तिः यस्य स तस्मिन्। पुनः किंविशिष्टे?। 'स्वायत्यागे' स्वस्य आयतिः-विस्तारः तया अगे-पर्वतसदृशे। अत्राभेदरूपकालङ्कारः। पुनः किंविशिष्टे?। 'अतनुमदवने' अतनुः-प्रभूतो यो मदः-दानप्रवृत्तिः स एव वनं-जलं यस्मिन् स तस्मिन्। "जीवनं भुवनं वनम्" इत्यमरः (श्लो० ४७३)। 'अङ्कुशकुलिशभृत्!' इति। अङ्कुशः-सृणिः कुलिशं-वज्रम्, अनयो'र्द्वन्द्वः', ते बिभर्ति-धारयति या सा तस्या आमन्त्रणम्। 'स्वायत्यागे!' इति। आयः-अर्थप्राप्तिः त्यागः-दानम्, अनयो'र्द्वन्द्वः', ततः सुष्ठु आयत्यागौ यस्याः सा तस्या आमन्त्रणम्। 'अमतारातिमत्ते!' इति। अरातिः-शत्रुः विद्यते यस्याः सा अरातिमती, तस्याः भावः अरातिमत्ता। 'त्वतलोर्गुणवचनयोः(स्य?)' (पा० वार्तिके ३९२७) इति पुंवद्भावः। सा न मता-नाभिप्रेता यस्याः सा तस्या आमन्त्रणम्। सकलविपक्षपक्षोच्छेदनादिति भावः। एतानि सर्वाण्यपि देव्याः सम्बोधनपदानि॥ इति चतुर्थवृत्तार्थः॥ ४॥ मन्दाक्रान्ताच्छन्दः॥ "मन्दाक्रान्ता मभनततगा गो यतिर्वेदषड्भिः" इति च तल्लक्षणम्॥



## ९ श्रीसुविधिजिनस्तुतयः

**अथ श्रीसुविधिनाथाय प्रार्थना—**

**तवाभिवृद्धिं सुविधिर्विधेयात्**
**स भासुरालीनतपा दयावन् ! ।**
**यो योगिपङ्क्त्या प्रणतो नभःसत्-**
**सभासुरालीनतपादयाऽवन् ॥ १ ॥**

—उपजातिः

ज० वि०—तवाभिवृद्धिमिति । हे दयावन् !–दयासमन्वित ! प्राणिन् ! स सुविधिः–सुविधिर्नामा जिनः तव–भवतः अभिवृद्धिं–अभ्युदयं विधेयात् इति क्रियाकारकप्रयोगः । अत्र 'विधेयात्' इति क्रियापदम् । कः कर्ता ? 'सुविधिः' । कां कर्मतापन्नाम् ? 'अभिवृद्धिम्' । कस्य ? 'तव' । कथंभूतः सुविधिः ? 'भासुरालीनतपाः' भासुरं–घोरं आलीनं–आश्रितं तपः–अनशनः–अनौदर्यादिरूपं येन स तथा । किं कुर्वन् ? 'अवन्' रक्षन् । प्राणिगणानित्यध्याहृत्य गम्यते । यत्तदोरभिसंबन्धात् स कः ? यः सुविधिः योगिपङ्क्त्या–मुनिपरम्परया प्रणतः–प्रणिपतितः । अत्रापि 'प्रणतः' इति क्रियापदम् । कया कर्त्र्या ? 'योगिपङ्क्त्या' । कः कर्मतापन्नः ? 'यः' । कथंभूतया योगिपङ्क्त्या ? 'नभःसत्सभासुरालीनतपादया' नभःसदो–देवाः तेषां सभा–पर्षत् असुराली–दैत्यसन्ततिः ताभ्यां नतौ पादौ यस्याः सा तथा तया ॥

अथ समासः—शोभनो विधिर्यस्य स सुविधिः 'बहुव्रीहिः' । भासुरं च तदालीनं च भासुरालीनं 'कर्मधारयः' । भासुरालीनं तपो यस्य स भासु० 'बहुव्रीहिः' । योगिनां पङ्क्तिर्योगिपङ्क्तिः 'तत्पुरुषः' । तया योगि० । नभसि सीदन्तीति नभःसदः 'तत्पुरुषः' । नभःसदां सभा नभःस० 'तत्पुरुषः' । असुराणां आली असुराली 'तत्पुरुषः' । नभःसत्सभा च असुराली च तौ नभःसत्सभासुराल्यौ 'इतरेतरद्वन्द्वः' । नभःसत्सभासुरालीभ्यां नतौ नभःस० 'तत्पुरुषः' । नभःसत्सभासुरालीनतौ पादौ यस्याः सा नभःस० 'बहुव्रीहिः' ॥ इति काव्यार्थः ॥ १ ॥

सि० वृ०—तवाभिवृद्धिमिति । दया–कृपा करुणेतियावत् विद्यते यस्य स दयावान्, तस्य सम्बोधनं हे दयावन् !–दयायुक्त ! प्राणिन् ! स सुविधिः–सुविधिनामा जिनः तव–भवतः अभिवृद्धिं–अभ्युदयं विधेयात्–क्रियादित्यर्थः । विपूर्वक 'डुधाञ् धारणपोषणयोः' इति धातोः आशिषि कर्तरि

परस्मैपदे प्रथमपुरुषैकवचनं यात् । 'दादेः' ( सा० सू० ९९७ ) इत्यनेनाकारस्यैकारः । तथाच 'विधेयात्' इति सिद्धम् । अत्र 'विधेयात्' इति क्रियापदम् । कः कर्ता ? । 'सुविधिः' सुष्ठु-शोभनं विधानं-क्रियाचरणादिकं यस्य सः । कां कर्मतापन्नाम् ? । अभिवृद्धिम् । कस्य ? । तव । 'तव मम ङसा' ( सा० सू० ३३७ ) इति युष्मदः षष्ठ्येकवचने तवादेशः । कथंभूतः सुविधिः ? । 'भासुरालीनतपाः' भासुरं-अग्र्यं आलीनं-आदृतं तपः-अनशनादिकं येन स तथा । 'अत्वसोः सौ' ( सा० सू० २९४ ) इति दीर्घत्वम् । पुनः किं कुर्वन् ? । 'अवन्' अवति-रक्षतीत्यवन् । प्राणिगणानिति गम्यम् । षट्कायाभयदानदायकत्वादिति भावः । यत्तदोरभिसम्बन्धात् स कः ? । यः सुविधिः योगिपङ्क्त्या-मुनिपरम्परया प्रणतः-प्रणामविषयीकृतः । अत्रापि 'प्रणतः' इति क्रियापदम् । कया कर्त्र्या ? । 'योगिपङ्क्त्या' योगश्चित्तवृत्तिनिरोधलक्षणो विद्यते येषां ते योगिनस्तेषां पङ्क्तिः-परम्परा तया । "आपरमाणुदर्शिनो योगिनः" इति न्यायविदः । कः कर्मतापन्नः ?। यः। कथंभूतया योगिपङ्क्त्या ? । 'नमःसत्सभासुरालीनतपादया' नभसि सदो येषां ते नभःसदो-देवास्तेषां सभा-पर्षत् च असुराली च असुराणां-भवनपतिदेवविशेषाणां आली-श्रेणी च ताभ्यां नतौ पादौ यस्याः सा तथा तया, नभःसत्सभा च असुराली च नभःसत्सभासुराली 'इतरेतरद्वन्द्वः' । "वीथ्यालिरावलिः पङ्क्तिः, श्रेणी लेखास्तु राजयः" इत्यमरः ( श्लो० ९९६ ) ॥ १ ॥

**सौ० वृ०—यश्चन्द्रवत् सौम्यः स चन्द्रप्रभो भवति, स शोभनविधिरेव भवति । अनेन संबन्धेनायातस्य नवमश्रीसुविधिजिनेन्द्रस्य स्तुतिव्याख्यानमाख्यायते—तवाभिवृद्धिमिति ।**

हे दयावन् !-दयायुक्त ! सुविधिः जिनः तव-भवतः अभिवृद्धिं-समृद्धिं विधेयात् इत्यन्वयः । कः कर्ता ? । 'सुविधिः' पुष्पदन्तापरनामा । 'विधेयात्' कुर्यात् । कां कर्मतापन्नाम् ? । 'अभिवृद्धिम्' । कस्य ? । 'तव' । कथंभूतः सुविधिः ? । भासुरं-दीप्यमानं आलीनं-कृतं-आदृतं तपोऽनशनादिभेदेन यस्य स 'भासुरालीनतपाः' । भव्यैरिति शेषः । पुनः सुविधिः किं कुर्वन् ? । 'अवन्' षट्कायजन्तुं रक्षन् । पुनः किंवि० सुविधिः ? । 'सः' सः-प्रसिद्धः । सः कः ? । यः योगिपङ्क्त्या प्रणत इत्यन्वयः । 'प्रणतः' इति क्रियापदम् । कया कर्त्र्या ? । 'योगिपङ्क्त्या' योगिवृन्देन । ( 'प्रणतः' ) प्रकर्षेण नतो-नमितः । कः कर्मतापन्नः ? । 'यः' सुविधिः । कथंभूतया योगिपङ्क्त्या ? । नभःसदो-देवाः तेषां सभा-पर्षत्, असुरा-नागकुमारादयः तेषां आली-श्रेणिः तया नताः पादाः यस्याः सा नभःसत्सभासुरालीनतपादा, तया 'नभःसत्सभासुरालीनतपादया' । एतादृशः सुविधिः तव समृद्धिं करोतु । इति पदार्थः ॥

अथ समासः-अभि-सामस्त्येन-सर्वप्रकारेण वृद्धिः अभिवृद्धिः, तां अभिवृद्धिम् । सु-शोभनो विधिः-आचारो यस्य स सुविधिः । पुष्पवत् दन्ता यस्य स पुष्पदन्तः । अनुक्तोऽप्युक्तः । भासुरं-घोरं आलीनं तपो यस्य स येन वा भासुरालीनतपाः । दया अस्यास्तीति दयावान्, तस्य सं० हे दयावन् ! । प्रशस्ता मनोवाक्कायव्यापारा येषां सन्ति ते योगिनः, योगिनां पंक्तिः योगिपंक्तिः, तया योगिपङ्क्त्या, प्रकर्षेण नतः प्रणतः । नभसि सीदन्ति-तिष्ठन्ति ते नभःसदः, नभःसदां सभा नभःसत्सभा, असुराणां आली असुराली, नभःसत्सभा च असुराली च नभःसत्सभासुराल्यौ, नभःसत्सभासुरालीभ्यां नताः पादा यस्याः सा नभःसत्सभासुरालीनतपादा, तया नभःसत्सभासुरालीनतपादया । अवति-रक्षति इति अवन् । अस्यां स्तुतौ इन्द्रवज्रा (?) च्छन्दः ॥ इति प्रथमवृत्तार्थः ॥ १ ॥

**दे० व्या०**-तवाभिवृद्धिमिति । हे 'दयावन् !' दया विद्यते यस्यासौ दयावान्, तस्यामन्त्रणम् । ते-तव सुविधिः-सुविधिनाथः अभिवृद्धिं-समृद्धिं विधेयात्-क्रियात् इत्यन्वयः । 'डुधाञ् धारणपोषणयोः' इति धातुः ।

'विधेयात्' इति क्रियापदम्। कः कर्ता?। सुविधिः। कां कर्मतापन्नाम्?। अभिवृद्धिम्। कस्य?। तव। किंविशिष्टः सुविधिः। 'भासुरालीनतपाः' भासुरं-घोरम् आलीनं-आदृतम् अनशनादिरूपं तपो येन स तथा। पुनः किंविशिष्टः?। 'अवन्' अवति-रक्षति इत्यन्वयः, षट्कायाभयदानदायकत्वात्। यत्तदोर्नित्याभिसम्बन्धाद् यः सुविधि. 'योगिपङ्क्त्या' योगिनां-तपस्विनां पङ्क्तिः-श्रेणिः तया प्रणतः-नमस्कृतः अस्ति इत्यनुषङ्गः। 'अस्ति' इति क्रियापदम्। कः कर्ता?। सुविधिः। किंविशिष्टः सुविधिः?। प्रणतः। कया?। योगिपङ्क्त्या। "आपरसाणुदर्शिनो योगिनः" इति यौगिकार्थः। किंविशिष्टया योगिपङ्क्त्या?। 'नभःसत्सभासुरालीनतपादया' नभःसदां-देवानां सभा-पर्षत् असुराली-असुरश्रेणी ताभ्यां नतौ पादौ यस्याः सा तथा॥ इति प्रथमवृत्तार्थः॥ १॥



जिनेश्वरेभ्योऽभ्यर्थना—

या जन्तुजाताय हितानि राजी<br>
सारा जिनानामलपद् ममालम्।<br>
दिश्यान्मुदं पादयुगं दधाना<br>
सा राजिनानामलपद्ममालम्॥ २॥

—इन्द्रवज्रा

ज० वि०—या जन्तुजातायेति। सा जिनानां-तीर्थकृतां राजी-श्रेणी मम अलं-अत्यर्थं मुदं-हर्षं दिश्यात्-देयादिति क्रियाकारकसंयोजनम्। अत्र 'दिश्यात्' इति क्रियापदम्। का कर्त्री? 'राजी'। केषाम्? 'जिनानाम्'। कां कर्मतापन्नाम्? 'मुदम्'। कथम्? 'अलम्'। जिनानां राजी कथंभूता? 'सारा' श्रेष्ठा। किं कुर्वाणा? 'दधाना' बिभ्रती। किं कर्मतापन्नम्? 'पादयुगं' चरणयुगलम्। कथंभूतं पादयुगम्? 'राजिनानामलपद्ममालं' राजिनी-राजनशीला नाना-विविधप्रकारा अमला-निर्मला पद्ममाला-कमलस्रक् यस्य तत् तथा। यत्तदोरभिसम्बन्धात् सा का? या जिनानां राजी जन्तुजाताय-प्राणिसमूहाय हितानि-पथ्यानि अलपत्-पर्यभाषत। अत्रापि 'अलपत्' इति क्रियापदम्। का कर्त्री? 'या'। कानि कर्मतापन्नानि? 'हितानि'। कस्मै? 'जन्तुजाताय'॥

अथ समासः—जन्तूनां जातं जन्तुजातं 'तत्पुरुषः'। तस्मै जन्तुजाताय। पादयोर्युगं पादयुगं 'तत्पुरुषः'। पद्मानां माला पद्ममाला 'तत्पुरुषः'। न विद्यते मलो यस्याः सा अमला 'बहुव्रीहिः'। अमला चासौ पद्ममाला च अमलपद्ममाला 'कर्मधारयः'। नाना-विधा चासावमलपद्ममाला च नाना० 'कर्मधारयः'। राजिनी नानामलपद्ममाला यस्य तत् राजिनानाम० 'बहुव्रीहिः'॥ इति काव्यार्थः॥ २॥

सि० वृ०—या जन्तुजातायेति । सा जिनानां राजी–श्रेणी मम अलं–अत्यर्थं मुदं–हर्षं दिश्यात्–देयादित्यर्थः । 'दिश अतिसर्जने' धातोः कर्तरि आशिषि परस्मैपदे प्रथमपुरुषैकवचनं यात् । 'स्वरहीनं०' ( सा० सू० ३१ ) । तथाच 'दिश्यात्' इति सिद्धम् । अत्र 'दिश्यात्' इति क्रियापदम् । का कर्त्री ? । राजी । केषाम् ? । जिनानाम् । कां कर्मतापन्नाम् ? । मुदम् । "मुत्प्रीत्यामोदसम्मदाः" इति हैमः ( का० २, श्लो० २३० ) । कथम् ? । अलम् । "अलं भूषणपर्याप्तिवारणेषु निरर्थके । अलं शक्तौ च निर्दिष्टं" इति विश्वः । कस्य ? । मम । अस्मच्छब्दस्य षष्ठ्येकवचने ममादेशः । कथंभूता जिनानां राजी ? । सारा–श्रेष्ठा सर्वेभ्य उत्कृष्टत्वात् । सारः–बलं विद्यते यस्यां सा इति वा, अनन्तबलत्वात् । "सारो बले स्थिरांशे च, न्याय्ये क्लीबं वरे त्रिषु" इत्यमरः ( श्लो० २६७७ ) । किं कुर्वाणा ? । 'दधाना' धत्ते इति दधाना बिभ्रती । किं कर्मतापन्नम् ? । पादयोः–चरणयोर्युगं–युग्मम् । पादयुगमिति 'तत्पुरुषः' । "पादा रश्म्यङ्घ्रितुर्यांशाः" इत्यमरः । कथंभूतं पादयुगम् ? । 'राजिनानामलपद्ममालं' राजिनी–राजनशीला सा चासौ नाना–अनेकप्रकारा अमला–निर्मला सा चासौ पद्मानां कमलानां माला–स्रक् यस्य तत् तथा । यत्तदोरभिसम्बन्धात् सा का ? । या जिनानां राजी जन्तुजाताय–प्राणिसमूहाय हितानि–पथ्यानि अलपत्–पर्यभाषदित्यर्थः । 'लप लपने' धातोः अनद्यतने कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं दिप् । 'दिबादावट्' ( सा० सू० ७०७ ), 'अप्' (सा० सू० ९९१) । तथाच 'अलपत्' इति सिद्धम् । अत्र 'अलपत्' इति क्रियापदम् । का कर्त्री ? । या । कानि कर्मतापन्नानि ? । हितानि । "हितं पथ्ये गते धृते" इति विश्वः । कस्मै ? । 'जन्तुजाताय' जन्तवः–प्राणिनस्तेषां जातं–समूहः तस्मै जन्तुजाताय ॥२॥

**सौ० वृ०—या जन्तुजातायेति । या जिनानां–अर्हतां राजी–श्रेणिः जन्तुजाताय–प्राणिवृन्दाय हितानि–पथ्यानि अलपत् इत्यन्वयः । 'अलपत्' इति क्रियापदम् । का कर्त्री ? । 'राजी' । 'अलपत्' गदितवती । कानि कर्मतापन्नानि ? । 'हितानि' । कस्मै ? । 'जन्तुजाताय' । कथंभूता जिनानां राजी ? । 'सारा' श्रेष्ठा । सा जिनानां राजी ममापि अलं–अत्यर्थं मुदं–हर्षं दिश्यात् इत्यन्वयः । 'दिश्यात्' इति क्रियापदम् । का कर्त्री ? । 'राजी' । 'दिश्यात्' दद्यात् । कां कर्मतापन्नाम् ? । 'मुदम्' । कस्य ? । 'मम' । सा जिनराजी किं कुर्वाणा ? । 'दधाना' धारयन्ती । किं कर्मतापन्नम् ? । 'पादयुगं' चरणद्वयम् । कथंभूतं पादयुगम् ? । राजीनि–विराजन्ति यानि नाना–विधानि अमलानि–निर्मलानि पद्मानि–कमलानि तेषां माला–श्रेणिः यस्य तत् 'राजिनानामलपद्ममालम्' । इति पदार्थः ॥**

**अथ समासः—जन्तूनां जातं जन्तुजातं, तस्मै जन्तुजाताय । पादयोर्युगं पादयुगम् । दधातीति दधाना । पद्मानां माला पद्ममाला, अमला चासौ पद्ममाला च अमलपद्ममाला, राजिनी नाना-विचित्रा अमलपद्ममाला यस्य तत् राजिनानामलपद्ममालम् ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥**

दे०-व्या—या जन्तुजातायेति । सा जिनानां–तीर्थङ्कराणां राजी–पङ्क्तिः मम मुदं–हर्षं अलं–अत्यर्थं यथा स्यात् तथा दिश्यात्–दद्यात् इति सम्बन्धः । 'दिश अतिसर्जने' धातुः । 'दिश्यात्' इति क्रियापदम् । का कर्त्री ? । राजी । केषाम् ? । जिनानाम् ! कां कर्मतापन्नाम् ? । मुदम् । कस्य ? । मम । किंविशिष्टा राजी ? । 'सारा' सारं–बलं विद्यते यस्यां सा तथा, अनन्तबलत्वात् । अथवा सारा–श्रेष्ठा, सर्वेभ्यः उत्कृष्टत्वात् । यत्तदोर्नित्याभिसंबन्धाद् या जिनानां राजी जन्तुजाताय–प्राणिमात्राय हितानि पथ्यानि अलपत्–

गर्वितवतीत्यन्वयः । 'लप लपने' धातुः । 'अलपत्' इति क्रियापदम् । का कर्त्री ? । जिनानां राजी । कानि कर्मतापन्नानि ? । हितानि । कस्मै ? । जन्तुजाताय । किं कुर्वाणा जिनराजी ? । दधाना-धारयन्ती । किम् ? । पादयुगं-चरणयुगलम् । पादयोः युगं पादयुगं इति समासः । किंविशिष्टं पादयुगम् ? । 'राजिनानामलपद्ममालम्' राजिनी-राजनशीला नाना-बहुविधा अमला-निर्मला पद्ममाला-कमलस्रक् यस्य तत् । मालाशब्देन श्रेणिर्वा ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥



जिनवाणी—

जिनेन्द्र ! भङ्गैः प्रसभं गभीरा-
ऽऽशु भारती शस्यतमस्तवेन ।
निर्नाशयन्ती मम शर्म दिश्यात्
शुभाऽरतीशस्य तमस्तवेन ![1] ॥ ३ ॥

—उपजातिः

ज० वि०—जिनेन्द्र ! भङ्गैरिति । हे जिनेन्द्र !-जिनेश्वर ! हे इन !-प्रभो ! तव-भवतः भारती-वाणी आशु-शीघ्रं प्रसभं-प्रकटं शर्म-सुखं मम-मे दिश्यात्-देयादिति क्रियाकारकप्रयोगः । अत्र 'दिश्यात्' इति क्रियापदम् । का कर्त्री ? 'भारती' । किं कर्मतापन्नम् ? 'शर्म' । कस्य ? 'मम' । कस्य भारती ? 'तव' । कथम् ? 'आशु' । शर्म कथंभूतम् ? 'प्रसभम्' । भारती कथंभूता ? 'गभीरा' दुरवगाहा । कैः कृत्वा ? 'भङ्गैः' अर्थविकल्पैः । किं कुर्वन्ती ? 'निर्नाशयन्ती' अपनुदन्ती । किं कर्मतापन्नम् ? 'तमः' मोहम् । केन ? 'शस्यतमस्तवेन' अतिशयेन प्रशस्यस्तवनेन हेतुभूतेन । शस्यतमस्तवेन स्तुता सती तमो निर्नाशयतीति हार्दम् । पुनः कथं० ? 'शुभा' कल्याणी । तव कथंभूतस्य ? 'अरतीशस्य' रतीशः-कामः स न विद्यते यस्य स तथा तस्य । अथवा अकारमश्लेषमकृत्वा । तमः कस्य संबन्धि ? 'रतीशस्य' कामस्येति व्याख्येयम् ॥

अथ समासः—जिनानामिन्द्रो जिनेन्द्रः 'तत्पुरुषः' । तत्सम्बोधनं हे जिनेन्द्र ! । अतिशयेन शस्यः शस्यतमः । शस्यतमश्चासौ स्तवश्च शस्य० 'कर्मधारयः' । तेन शस्य० । रतेरीशो रतीशः 'तत्पुरुषः' । न विद्यते रतीशो यस्य सोऽरतीशः 'बहुव्रीहिः' । ( तस्य ) । इति काव्यार्थः ॥ ३ ॥

सि० वृ०—जिनेन्द्र ! भङ्गैरिति । जिनानामिन्द्रः जिनेन्द्रः तस्य सम्बोधनं क्रियते हे जिनेन्द्र !—हे प्रभो ! तव-भवतः भारती-वाणी आशु-शीघ्रं प्रसभं-प्रकटं शर्म-सुखं मे दिश्यात्-देयादित्यर्थः । 'दिश

1 'शुभा रती०' इत्यपि पाठः ।

अतिसर्जने ' आशिषि कर्तरि परस्मैपदे प्रथमपुरुषैकवचनम् । क्रियासाधनप्रकारस्तु पूर्वमेवोक्तः। अ
' दिश्यात् ' इति क्रियापदम् । का कर्त्री ? । भारती । " वाग् ब्राह्मी भारती गौर्गीर्वाणी भाषा सरस्वती
इति हैमः ( का० २, श्लो० १९९ ) । किं कर्मतापन्नम् ? । शर्म । " शर्मसातसुखानि च " इत्यम
( श्लो० २६४ ) । कस्य ? । मम । कस्य भारती ? । तव । कथम् ? । आशु । "आशुर्व्रीहौ च सत्वरे
इति विश्वः । शर्म कथंभूतम् ? । प्रसभम् । कथंभूता भारती ? । गभीरा-दुरवगाहा । कैः कृत्वा ?
भङ्गैः-अर्थविकल्पैः । किं कुर्वती ? । निर्नाशयन्ती-नाशं प्रापयन्ती । किम्? । तमः-मोहं शोकं वा । केन
'शस्यतमस्तवेन' अतिशयेन शस्यः शस्यतमः स चासौ स्तवः-स्तोत्रं तेन हेतुभूतेन । तथाच शस्यतमस्तवे
स्तुता सती तमो निर्नाशयतीति भावः । पुनः कथंभूता ? । शुभा-कल्याणी । कथंभूतस्य तव? । ' अरत
शस्य' रतेः ईशो रतीशः-कामः स न विद्यते यस्य स तथा तस्य । अथवा अकारप्रश्लेषमकृत्वा तमः क
सम्बन्धि ? । रतीशस्य-कामस्येति व्याख्येयम् । अन्ये तु कीदृशस्य तव ? रतीशस्य कामस्येत्यर्थः, अ
दरूपकम् । अपरे तु रतीशस्येत्यत्र रूपेणेति शेषः कर्तव्य इत्याहुः॥ ३ ॥

सौ० वृ०—जिनेन्द्र ! भङ्गैरिति । हे जिनेन्द्र !-हे सर्ववेदिन् ! तव-भवतः भारती-वाणी मम शर्म
सुखं आशु दिश्यात् इत्यन्वयः । ' दिश्यात् ' इति क्रियापदम् । का कर्त्री ? । ' भारती ' । ' दिश्यात
दद्यात् । किं कर्मतापन्नम् ? । ' शर्म ' सुखम् । भारती कस्य ? । ' तव ' । कथंभूता भारती ? । ' गभीरा
अस्ताघा (?) दुरवगाहा । कैः ? । ' भङ्गैः ' अर्थविकल्पैः । कथम् ? । ' प्रसभं ' बलात्कारेण । भार
किं कुर्वती ? । ' निर्नाशयन्ती ' क्षपयन्ती । किं कर्मतापन्नम् ? । ' तमः ' आन्ध्यं अज्ञानं वा । केन
शस्यतमः-अतिशयेन प्रशस्यतरः यः स्तवः-स्तोत्रं तेन ' शस्यतमस्तवेन ' । पुनः कथंभूता भारती ?
' शुभा ' भव्या । कस्य ? । रत्या ईशः रतीशः-कामः, न विद्यते रतीशो यस्य सः अरतीशः तस्य 'अरतीशस
एतावता साधोः । हे ' इन ! ' स्वामिन् ! । जातावेकवचनम् । यद्वा रतीशः-कामः तं प्रति स्यति
स्पर्धयतीति रतीशस्यः तस्य सं० हे रतीशस्य ! । अथवा रतीशस्य-कामस्य तमो-मोहः तं प्रति नाश
याति इति । हे जिनेन्द्र ! हे इन ! हे रतीशस्य तव ( भारती ) स्तवेन मम शर्म दद्यात् । इति पदार्थः ॥

अथ समासः—जिनानां इन्द्रः जिनेन्द्रः, तस्य सं० हे जिनेन्द्र ! । अतिशयेन शस्यः इति शस्यतम
शस्यतमश्चासौ स्तवश्च शस्यतमस्तवः, तेन शस्यतमस्तवेन निर्-निश्चयेन नाशयन्ती निर्नाशयन्ती
रत्या ईशः रतीशः, तस्य रतीशस्य । अथवा रतीशं स्यति-स्पर्धयतीति रतीशस्यः, तस्य सं०
रतीशस्य ! । स्तवः-स्तुतिः तस्य इनः-स्वामी स्तवेनः, तस्य सं० हे स्तवेन ! । सकलशब्दमात्रेण त
गुणान् वक्तुमशक्यत्वादिति ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या०-जिनेन्द्र ! भङ्गैरिति । हे जिनेन्द्र ! हे इन ! ते-तव भारती-वाणी आशु-शीघ्रं यथा स्या
तथा मे-मम शर्म दिश्यात्-देयादित्यन्वयः । ' दिश अतिसर्जने ' धातुः । ' दिश्यात् ' इति क्रियापदम् । क
कर्त्री ? । भारती । कस्य ? । तव । किं कर्मतापन्नम् ? । शर्म । कस्य ? । मम । किंविशिष्टा भारती ? । गभीर
अलब्धमध्या । कैः ? । भङ्गैः-अर्थविकल्पैः । पुनः किंविशिष्टा ? । शुभा-समीचीना । यदा तु शुभाप
मता इत्यर्थः तदा सर्वेषामिति शेषः । किं कुर्वती भारती ? । निर्नाशयन्ती-नाशं प्रापयन्ती । किम् ? । तम
अज्ञानम् । केन ? । ' शस्यतमस्तवेन ' अतिशयेन शस्यः शस्यतमः, शस्यतमः यः स्तवः-स्तुतिः तेन । " स्त
स्तोत्रं स्तुतिर्नुतिः " इत्यभिधानचिन्तामणिः ( का० २, श्लो० १८३ ) । किंविशिष्टस्य तव ? । ' रतीशस

कामतुल्यस्य । रूपेणेति शेषः । वस्तुतस्तु रतीशस्येत्यत्राकारप्रश्लेषः । तेन अरतीशस्य–कामरहितस्येत्यर्थः ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

ज्वलनायुधायै विज्ञापना—

दिश्यात् तवाशु ज्वलनायुधाऽल्प–
मध्या सिता कं प्रवरालकस्य ।
अस्तेन्दुरास्यस्य रुचोरु[1] पृष्ठ–
मध्यासिताऽकम्प्रवरालकस्य ॥ ४ ॥

—इन्द्रवज्रा

ज० वि०—दिश्यादिति । हे भव्य ! प्राणिन् ! ज्वलनायुधा–ज्वलनायुधाभिधा देवी आशु–शीघ्रं कं–सुखं दिश्यात्–देयादिति क्रियाकारकान्वयः । अत्र 'दिश्यात्' इति क्रियापदम् । का कर्त्री ? 'ज्वलनायुधा' । किं कर्मतापन्नम् ? 'कम्' । कस्य ? 'तव' । कथम् ? 'आशु' । ज्वलनायुधा कथंभूता ? 'अल्पमध्या' अल्पं–क्षामं मध्यं–कटिर्यस्याः सा तथा । पुनः कथं० ? 'सिता' शुक्लवर्णा । पुनः कथं० ? 'अस्तेन्दुः' न्यक्कृतमृगाङ्का । कया ? 'रुचा' कान्त्या । कस्य ? 'आस्यस्य' वदनस्य । आस्यस्य कथंभूतस्य ? 'प्रवरालकस्य' प्रधानचिकुरस्य । पुनः कथंभूता ज्वलनायुधा ? 'अध्यासिता' अध्यारूढा । किं कर्मतापन्नम् ? 'पृष्ठम्' उपरिभागम् । पृष्ठं कथंभूतम् ? 'उरु' विशालम् । कस्य ? 'अकम्प्रवरालकस्य' अकम्प्रः–स्थिरो यो वरालकः–देववाहनविशेषः तस्य ॥

अथ समासः—ज्वलन एव आयुधं यस्याः सा ज्वल० 'बहुव्रीहिः' । अल्पं मध्यं यस्याः सा अल्पमध्या 'बहुव्रीहिः' । प्रवरा अलका यस्मिन् तत् प्रवरालकं 'बहुव्रीहिः । तस्य प्रव० । अस्त इन्दुर्यया सा अस्तेन्दुः 'बहुव्रीहिः' । न कम्प्रः अकम्प्रः 'तत्पुरुषः' । अकम्प्रश्चासौ वरालकश्च अकम्प्र० 'कर्मधारयः' । तस्य अकम्प्र० ॥ इति काव्यार्थः ॥ ४ ॥

॥ इति शोभनस्तुतिवृत्तौ श्रीसुविधिजिनस्तुतेर्व्याख्या ॥ ९ ॥

सि० वृ०—दिश्यादिति । हे भव्य ! प्राणिन् ! ज्वलनायुधा देवी तव–भवतः आशु–शीघ्रं कं–सुखं दिश्यात्–देयादित्यर्थः । 'दिश अतिसर्जने' धातोराशिषि कर्तरि परस्मैपदे प्रथमपुरुषैकवचनम् । अत्र 'दिश्यात्' इति क्रियापदम् । का कर्त्री ? । 'ज्वलनायुधा' ज्वलन एव आयुधं यस्याः सा । कं कर्मतापन्नम् ? । कम् ।

"को ब्रह्मात्मानिलार्केषु, शमने रवैनाग्नि च ।
पावकेषु मयूरे च, सुखशीर्षजलेषु कम् ॥"

---

१ 'उरुपृष्ठं' इत्येकपदमपि संभवति ।



सर्वास्त्र महाज्वाला ११/१८

इति विश्वः। कस्य ?। तव। कथम् ?। आशु। कथंभूता ज्वलनायुधा ?। 'अल्पमध्या' अल्पं—अणु मध्यं—अवलग्नं यस्याः सा तथा। "मध्योऽवलग्नं" इति हैमः (का० ३, श्लो० २७१)। पुनः कथंभूता ?। सिता—शुक्लवर्णा। पुनः कथंभूता ?। 'अस्तेन्दुः' अस्तः—धिक्कृतः इन्दुः—चन्द्रो यया सा तथा। कया ?। रुचा—कान्त्या। कस्य ?। आस्यस्य-वदनस्य। आस्यस्य कथंभूतस्य ?। 'प्रवरालकस्य' प्रकर्षेण वराः—प्रधानाः कुटिला वा अलकाः—चूर्णकुन्तला यस्मिन् तत् तथा तस्य। "अलकाश्चूर्णकुन्तलाः" इत्यमरः (श्लो० १२६५)। यदाह—"स्वभाववक्राण्यलकानि केषां" इति भारविः। पुनः कथंभूता ज्वलनायुधा ?। अध्यासिता—आरूढा। किं कर्म ?। 'पृष्ठं' पृष्ठदेशस्तत्। "पृष्ठं तु चरमं तनोः" इति हैमः (का०३, श्लो० २६५)। पृष्ठं कीदृशम् ?। उरु—विशालम्। कस्य ?। 'अकम्प्रवरालकस्य' कम्पनशीलः कम्प्रः, न कम्प्रः अकम्प्रः—स्थिरो यो वरालको—देववाहनविशेषस्तस्य। उपेन्द्रवज्राच्छन्दः। "उपेन्द्रवज्रा जतजा गयुग्मौ" इति च तल्लक्षणम्॥ ४ ॥

॥ इति महोपाध्याय० श्रीसुविधिजिनस्य स्तुतिवृत्तिः ॥ ९ ॥

सौ० वृ०—दिश्यादिति। ज्वलनायुधानाम्नी देवी आशु-शीघ्रं तव-भवतः कं-सुखं दिश्यात् इत्यन्वयः। 'दिश्यात्' इति क्रियापदम्। का कर्त्री ?। 'ज्वलनायुधा'। 'दिश्यात्' दद्यात्। किं कर्मतापन्नम् ?। 'कं' सुखम्। कस्य ?। 'तव'। कथम् ?। 'आशु' शीघ्रम्। कथंभूता ज्वलनायुधा ?। अल्पं-कृशं मध्यं-उदरं यस्याः सा 'अल्पमध्या', कृशोदरी इत्यर्थः। पुनः कथं० ज्वलनायुधा ?। 'सिता' उज्ज्वला-गौरवर्णा। पुनः कथं० ज्वलनायुधा ?। 'प्रवरा' प्रधाना। पुनः कथं० ज्वलनायुधा ?। 'अस्तेन्दुः' न्यक्कृतचन्द्रा। कया ?। 'रुचा' कान्त्या। कस्य ?। 'आस्यस्य' मुखस्य। पुनः किं० ज्वलनायुधा ?। 'अध्यासिता' आरूढा। कं कर्मतापन्नम् ?। 'उरु' विस्तीर्णं 'पृष्ठं' पृष्ठदेशम्। उरुपृष्ठं कस्य ?। अकम्प्रः-स्थिरः वरालको-देववाहनविशेषः तथा वरः-प्रधानः अलको-हुडुविशेषः, तस्य अकम्प्रवरालकस्य। तथा किंविशिष्टस्य आस्यस्य ?। प्रवराः-प्रधानाः अलकाः-केशा यस्मिन् तत् प्रवरालकं, तस्य प्रवरालकस्य। "कं सुखे सलिले शीर्षे" इत्यनेकार्थः। इति पदार्थः॥

अथ समासः—ज्वलनं-शस्त्रं आयुधं यस्याः सा ज्वलनायुधा। अल्पं मध्यं यस्याः सा अल्पमध्या। अस्तः इन्दुः यया सा अस्तेन्दुः। उरु च तत् पृष्ठं च उरुपृष्ठम्। कम्पनशीलः कम्प्रः, न कम्प्रः अकम्प्रः, अकम्प्रश्चासौ वरालकश्च अकम्प्रवरालकः, तस्य अकम्प्रवरालकस्य॥ इति चतुर्थवृत्तार्थः॥ ४ ॥

श्रीसुविधिजिनेन्द्रस्य, स्तुतेरर्थो लिवीकृतः।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना॥

॥ इति नवमश्रीसुविधिजिनस्य स्तुतिः ॥ ४।९।३६ ॥

दे० व्या०—दिश्यादिति। ज्वलनायुधा देवी तव कं-सुखं आशु-शीघ्रं यथा स्यात् तथा दिश्यात्-दद्यात् इति सम्बन्धः। 'दिश अतिसर्जने' धातुः। 'दिश्यात्' इति क्रियापदम्। का कर्त्री ?। ज्वलनायुधा। किं कर्मतापन्नम् ?। कम्। "कं शिरो जलमाख्यातं, कं सुखं परिकीर्तितम्" इत्यनेकार्थः। कस्य ?। तव। किंविशिष्टा ज्वलनायुधा ?। 'अल्पमध्या' अल्पं मध्यं-मध्यभागो यस्याः सा तथा। अणुकोदरेत्यर्थः। पुनः किंविशिष्टा ?। सिता-गौरा। पुनः किंविशिष्टा ?। अध्यासिता-आरूढा। कम् ?। 'उरुपृष्ठं' उरु-विस्तीर्णं यत् पृष्ठं-पृष्ठभागम्। उरु इति पृथगेव पदमित्यपि कश्चित्। कस्य ?। 'अकम्प्रवरालकस्य' अकम्प्रः-स्थिरो यो वरालकः-देववाहनविशेषः तस्य। पुनः किंविशिष्टा ?। 'अस्तेन्दुः' अस्तो-न्यक्कृतः इन्दुः-चन्द्रो यया सा तथा। कया ?। रुचा-कान्त्या। कस्य ?। आस्यस्य-मुखस्य। किंविशिष्टस्य आस्यस्य ?। 'प्रवरालकस्य' प्रकर्षेण वरः-समीचीनः अलकः-चूर्णकुन्तलो भाले भ्रमरकविशेष इति यावत् यस्य तत् तस्य। "अलकाश्चूर्णकुन्तलाः" इत्यमरः (श्लो० १२६५)। इति तुरीयवृत्तार्थः॥ ४ ॥ उपेन्द्रवज्राच्छन्दः। "उपेन्द्रवज्रा जतजा गयुग्मम्" इति तल्लक्षणम्॥

## १० श्रीशीतलजिनस्तुतयः

अथ श्रीशीतलजिनस्तुतिः—

जयति शीतलतीर्थकृतः सदा
चलनतामरसं सदलं घनम् ।
नवकमम्बुरुहां पथि संस्पृशत्
चलनतामरसंसदलङ्घनम् ॥ १ ॥

—द्रुतविलम्बितम्

ज० वि०—जयतीति । शीतलतीर्थकृतः—शीतलनाम्नो जिनस्य चलनतामरसं—चरणकमलं सदा—सर्वकालं जयति—जयमासादयतीति क्रियाकारकसंटङ्कः । अत्र 'जयति' इति क्रियापदम् । किं कर्तृ ? 'चलनतामरसम्' । कस्य ? 'शीतलतीर्थकृतः' । कथम् ? 'सदा' । चलनतामरसं किं कुर्वत् ? 'संस्पृशत्' स्पर्शेनानुगृह्णत् । किं कर्मतापन्नम् ? 'नवकम्' नवैव नवकम् । स्वार्थे कः प्रत्ययः । केषां नवकम् ? 'अम्बुरुहाम्' वारिजानाम् । कथंभूतम् ? 'सदलम्' दलैः—पत्रैः सह वर्तमानम् । पुनः कथं० ? 'घनम्' सारम् । चलनतामरसं कथंभूतम् ? 'चलनतामरसंसत्' चला—चपला सती नता—प्रणता अमरसंसत्—देवानां सभा यस्य तत् तथा । चलत्वं च नमतां भूरिभक्तिभरवशेन राभस्यात् सम्भ्रमाद् वा घटते । पुनः कथं० ? 'अलङ्घनम्' न विद्यते लङ्घनं—कुतश्चिदधःकरणं यस्य तत् तथा । केनापि श्रियाऽनिर्जितमित्यर्थः ॥

अथ समासः—तीर्थं करोतीति तीर्थकृत् 'तत्पुरुषः' । शीतलश्चासौ तीर्थकृच्च शीतल० 'कर्मधारयः' । तस्य शीतल० । चलन एव तामरसं चल० 'कर्मधारयः' । सह दलैर्वर्तते यत् तत् सदलं 'तत्पुरुषः' । अम्भुनि रुहन्तीत्यम्बुरुंहि 'तत्पुरुषः' । तेषां अम्बुरुहाम् । चला चासौ नता च चलनता 'कर्मधारयः' । अमराणां संसत् अमरसंसत् 'तत्पुरुषः' । चलनता अमरसंसत् यस्य तत् चलन० 'बहुव्रीहिः' । न विद्यते लङ्घनं यस्य तद् अलङ्घनं 'बहुव्रीहिः' । इति काव्यार्थः ॥ १ ॥

सि० वृ०—जयतीति । समस्तसत्त्वसन्तापोपशामकत्वाद् गर्भस्थेऽस्मिन् पितुः पूर्वोत्पन्नोऽचिकित्स्यः पित्तदाहो मातृहस्तस्पर्शादेवोपशान्त इति वा शीतलः स चासौ तीर्थकृच्च शीतलतीर्थकृत् तस्य शीतलनाम्नस्तीर्थकृतः—शीतलनाम्नः तीर्थकरस्य चलनतामरसं—चरणकमलं सदा—सर्वकालं जयति—सर्वोत्कर्षेण वर्तत इत्यर्थः । 'जयतु' इति पाठे जयमासादयतु इत्यर्थः । 'जि जये' धातोः वर्तमाने कर्तरि परस्मैपदे

---

१ 'जयतु' इत्यपि पाठः ।

प्रथमपुरुषैकवचनं तिप्। 'अप्०' ( सा० सू० ६९१ ), 'गुणः' ( सा० सू० ६९२ ), 'स्वरहीनं' ( सा० सू० ३६ )। तथाच 'जयति' इति सिद्धम्। अत्र 'जयति' इति क्रियापदम्। किं कर्तृ ?। चलनतामरसम्। चलनमेव तामरसं चलनतामरसमिति 'कर्मधारयः'। कस्य ?। शीतलतीर्थकृतः। कथम् ?। सदा। किं कुर्वत् चलनतामरसम् ? । 'संस्पृशत्' स्पृशतीति स्पृशत् स्पर्शेनानुगृह्णत्। किं कर्मतापन्नम् ?। नवकं नवैव नवकम्। स्वार्थे कः। नवकं केषाम् ?। अम्बुरुहां–वारिजानां अम्बुनि–जले रुहन्ति–जायन्ते इति अम्बुरुंहि तेषां अम्बुरुहाम्। योगपुरस्कारेण अम्बुरुहशब्दस्य कमले एव रूढत्वात्। कस्मिन् ?। पथि–मार्गे। कथंभूतं अम्बुरुहां नवकम् ?। 'सदलं' दलानि–पत्राणि तैः सह वर्तमानं सदलम्। "पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्" इत्यमरः ( श्लो० ६७६ )। पुनः कथंभूतम् ?। घनं–सान्द्रम्। "घनं स्यात् कांस्यतालादि, वाद्यमध्यमनृत्तयोः", "घनं सान्द्रे दृढे दार्ढ्ये, विस्तारे लोहमुद्गरे । मेघमुस्तकयोश्चापि" इति विश्वः। अत्र तु सान्द्रवाचकं घनमव्ययमेव प्रतिभाति। कथंभूतं चलनतामरसम् ?। 'चलनतामरसंसत्' चला–चपला सती नता–प्रणता अमरसंसत्–अमराणां सभा यस्य तत् तथा। चलत्वं च नमतां भूरिभक्तिवशेन रभसत्वाद् सम्भ्रमाद् वा घटते। पुनः कथंभूतम् ?। 'अलङ्घनं' न विद्यते लङ्घनं–कुतश्चिदधःकरणं यस्य तत् तथा। केनापि श्रिया अनिर्जितमित्यर्थः ॥ १ ॥

सौ० वृ०–यः सुविधिर्भवति स प्रकृत्या शीतल एव भवति। अनेन संबन्धेनायातस्य दशमस्य श्रीशीतलजिन(स्य) स्तुतेरर्थो व्याख्यायते। जयतीति।

शीतलतीर्थकृतः–शीतलनाम्नस्तीर्थकरस्य चलनतामरसं–चरणकमलं सदा–सर्वदा जयतीत्यन्वयः। 'जयति' इति क्रियापदम्। किं कर्तृ ?। 'चलनतामरसम्'। कथंभूतं चलनतामरसम् ?। 'सदलं' सच्छायम्। चलनतामरसं किं कुर्वत् ?। 'संस्पृशत्' सम–सम्यक् प्रकारेण स्पर्शयत्। कं कर्मतापन्नम् ?। 'नवकम्'। केषाम् ?। 'अम्बुरुहाम्' सुरनिर्मितपद्मानाम्। कस्मिन् ?। 'पथि' मार्गे। पुनः किंविशिष्टं चलनतामरसम् ?। चला–चपला नता–प्रणता अमराणां संसत्–सभा यस्य तत् 'चलनतामरसंसत्'। पुनः किंविशिष्टं चलनतामरसम् ?। 'अलङ्घनं' अनुल्लङ्घनीयस्वरूपम्। पुनः किं० चलनतामरसम् ?। 'सत्' शोभनं विद्यमानं वा। पुनः किं० चलनतामरसम् ?। 'घनं' सान्द्रं निबिडं रेखाकारलक्षणादिभिः। इति पदार्थः ॥

अथ समासः—तीर्थं–चातुर्वर्ण्यसंघं प्रवचनं गणधरं वा करोतीति तीर्थकृत्, शीतलश्चासौ तीर्थकृच्च शीतलतीर्थकृत्, तस्य शीतलतीर्थकृतः। चलनाविव तामरसं चलनतामरसम्। दलेन सहितं सदलम्। नव एव नवकम्। अम्बुनि रुट्–जन्म येषां तानि अम्बुरुंहि, तेषां अम्बुरुहाम्। अमराणां संसत् अमरसंसत्, चला–नता अमरसंसत् यस्य तत् यस्मिन् वा चलनतामरसंसत्। नास्ति लङ्घनं–मार्गोल्लङ्घनं यस्य तत् अलङ्घनम्। नवकमिति स्वार्थे कन् प्रत्ययः। "दले पत्रे अभिख्यायाः" इत्यनेकार्थः। द्रुतविलम्बितच्छन्दसा स्तुतिरियम् ॥ इति प्रथमवृत्तार्थः ॥ १ ॥

दे० व्या०–जयतीति । शीतलतीर्थकृतः–शीतलतीर्थंकरस्य चलनतामरसं–चरणकमलं सदा–सर्वकालं जयति–सर्वोत्कर्षेण वर्तते इत्यन्वयः। 'जि जये' धातुः। 'जयति' इति क्रियापदम्। किं कर्तृ ?। 'चलनतामरसम्' चलनमेव तामरसं चलनतामरसमिति विग्रहः। कस्य ?। शीतलतीर्थकृतः। किंविशिष्टं चलनतामरसम् ?। 'चलनतामरसंसत्' चला–चञ्चला शीघ्रगमनात् सा चासौ नता अमरसंसत्–देवसभा यस्य

तत् । अमराणां संसद् अमरसंसत् इति पूर्वं 'षष्ठीतत्पुरुषः' । पुनः किंविशिष्टम् ? । 'अलङ्घनम्' नास्ति लङ्घनं-अधःकरणं यस्य तत्, सर्वेषामपि वन्द्यत्वात् । चलनतामरसं किं कुर्वत् ? । संस्पृशत्-संघट्टयत् । किम् ? । नवकम् । केषाम् ? । अम्बुरुहां-कमलानाम् । कस्मिन् ? । पथि-मार्गे । कथंभूतं नवकम् ? । 'सदलं' दलैः-पर्णैः सह वर्तमानम् । "बर्हं पर्णं छदं दलम्" इत्यभिधानचिन्तामणिः (का० ४, श्लो० १८९) । पुनः किंविशिष्टम् ? । घनं-निबिडम् ॥ इति प्रथमवृत्तार्थः ॥ १ ॥



जिनानां स्मरणम्—

स्मर जिनान् परिनुन्नजरारजो-
जननतानवतोदयमानतः ।
परमनिर्वृतिशर्मकृतो यतो
जने[2] ! नतानवतोऽदयमानतः ॥ २ ॥

—द्रुत०

ज० वि०—स्मर जिनानिति । हे जन ! अत इत्यस्मात् कारणात् त्वं जिनान्-वीतरागान् स्मर-स्मरणगोचरीकुर्विति क्रियाकारकसंबन्धः । अत्र 'स्मर' इति क्रियापदम् । कः कर्ता ? 'त्वम्' । कान् कर्मतापन्नान् ? 'जिनान्' । कस्मात् ? 'अतः' । अत इति कुतः ? 'यतः' यस्मात् कारणात् । 'परमनिर्वृतिशर्मकृतः' परमं-उत्कृष्टं निर्वृतिशर्म-मोक्षसुखं कुर्वन्तीति परमनिर्वृतिशर्मकृतः । यद्वा परं स्वात्मनो व्यतिरिक्तं अनिर्वृतिशर्मकृतः भवन्तीत्यध्याहार्यम् । जिना इति विशिष्यपदं च प्रक्रान्तत्वाज्ज्ञेयम् । ततो भवन्तीति क्रियापदम् । के कर्तारः ? 'जिनाः' । कथंभूताः ? 'परमनिर्वृतिशर्मकृतः' । जिनान् कथंभूतान् ? 'परिनुन्नजरारजोजननतानवतोदयमान्' जरा-विस्रसा रजः-कर्मलक्षणं जननं-जन्म 'तानवं' तनोर्भावस्तानवमिति व्युत्पत्त्या तनुत्वं दुर्बलत्वमित्यर्थः, तोदः 'तुद व्यथने' इत्यस्य धातोस्तुदनं तोदो व्यथा बाधेतियावत्, यमः-कृतान्तो मृत्युरितियावत्, एते जरादयः परिनुन्नाः-पर्यस्ता यैस्ते तथा तान् । अथवा परिनुन्नं जरेव पाण्डुरत्वात् रजो[1]-रेणुर्यैस्ते तथा, जनने यस्तानवः-शारीरस्तोदो-बाधा तत्र यमा इव-कृतान्ता इव यमाः तस्यान्तहेतुत्वात्, ततः परिनुन्नजरारजसश्च ते जननतानवतोदयमाश्च तान् । जिनान् किं कुर्वतः ? 'अवतः' रक्षतः त्रायमाणानितियावत् । कान् ? 'नतान्' प्रणताङ्गिनः । त्वं कथंभूतः सन् स्मरेत्याह—'आनतः' प्रणतः सन् । कथम् ? 'अदयं' निर्दयं स्वशरीरावयवरक्षानिरपेक्षं निर्व्याजमितियावत् तत् यथा स्यात् तथा ॥

अथ समासः—जरा च रजश्च जननं च तानवं च तोदश्च यमश्च जरारजोजननतानवतोदयमाः 'इतरेतरद्वन्द्वः' । परिनुन्ना जरारजो० यैस्ते परिनुन्नजरारजोजननतानवतोदयमाः

१ 'रजो' इत्यपि पाठः । २ 'जनन०' इति पाठान्तरम् ।

'बहुव्रीहिः'। अथवा जरैव रजो जरारजः 'कर्मधारयः'। परिनुन्नं जरारजो यैस्ते परि० 'बहुव्रीहिः'। तनोरयं तानवः, तानवश्चासौ तोदश्च तानवतोदः 'कर्मधारयः'। जनने तानवतोदः जनन० 'तत्पुरुषः'। जननतानवतोदे यमाः जनन० 'तत्पुरुषः'। परिनुन्नजरारजसश्च ते जननतानवतोदयमाश्च परिनुन्नजरा० 'कर्मधारयः'। तान् परि०। निर्वृतेः शर्म निर्वृतिशर्म 'तत्पुरुषः'। परमं च तन्निर्वृतिशर्म च परम० 'कर्मधारयः'। परमनिर्वृतिशर्म कुर्वन्तीति परमनि० 'तत्पुरुषः'। यद्वा पक्षे तु निर्वृतिशर्म कुर्वन्तीति निर्वृतिशर्मकृतः 'तत्पुरुषः'। न निर्वृतिशर्मकृतः अनिर्वृति० 'तत्पुरुषः'। न विद्यते दया यत्र तददयम् 'बहुव्रीहिः'। इति काव्यार्थः ॥ २ ॥

सि० वृ०—स्मर जिनानिति। हे जन! अतः कारणात् त्वं जिनान्—तीर्थपतीन् स्मर—स्मरणविषयीकुर्वित्यर्थः। 'स्मृ चिन्तायां' धातोः "आशीःप्रेरणयोः" (सा० सू० ७०३) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनं हिः। 'अप्०' (सा० सू० ६९१), 'गुणः' (सा० सू० ६९२) इत्यनेन गुणः, 'अतः' (सा० सू० ७०९) इति हेर्लुक्, ('स्वरहीनं' सा० सू० ३६)। तथाच 'स्मर' इति सिद्धम्। अत्र 'स्मर' इति क्रियापदम्। कः कर्ता?। त्वम्। कान् कर्मतापन्नान्?। जिनान्। कस्मात्?। अतः। अत इति कुतः?। यतः—यस्मात् कारणात्। परमनिर्वृतिशर्मकृतः। नहि जिनस्मरणमन्तरेण जन्तोः तात्त्विकी सिद्धिरिति भावः। "शिवं निःश्रेयसं श्रेयो, निर्वाणं ब्रह्मनिर्वृतिः" इति हैमः (का० १, श्लो० ७४)। कथंभूतान् जिनान्?। 'परिनुन्नजरारजोजननतानवतोदयमान्' जरा—विस्रसा रजः—कर्मलक्षणम्, 'रुजो' इति पाठे रुक्—रोगः जननं—जन्म तानवं तनोर्भावस्तानवं इति योगात् तनुत्वं दुर्बलत्वमितियावत्, तोदः 'तुद व्यथने' इत्यस्य धातोः तुदनं—तोदो—व्यथा यमः—कृतान्तः मृत्युरितियावत्, एते जरादयः परिनुन्नाः—परिक्षिप्ता यैस्ते तथा तान्। जरा च रजश्च जननं च तानवं च तोदश्च यमश्च जरारजोजननतानवतोदयमाः 'इतरेतरद्वन्द्वः'। ततः परिनुन्नपदेन 'बहुव्रीहिः'।

"यमो दण्डधरे ध्वाङ्क्षे, संयमे यमजेऽपि च।
शरीरसाधनापेक्ष—नित्यकर्मणि बोध्यते॥"

इति विश्वः। केचित् तु रोगवाची रुजस् शब्दोऽप्यस्ति, तेन रजःस्थाने रुज इति पठन्ति। यदाह—"रोगे रुजो (रोगो रुजा?) रुगातङ्को, मान्द्यं व्याधिरपाटवम्" इति हैमः (का० ३, श्लो० १२६)। केचित् तु परिनुन्नं जरैव पाण्डुरत्वात् रजो—रेणुः यैस्ते परिनुन्नजरारजसः, तथा जनने—जननविषये यः तनोरयं तानवः—शारीरस्तोदो—बाधा तत्र यमा इव यमाः—कृतान्ता इव तस्यान्तहेतुत्वात्, ततः परिनुन्नजरारजसश्च ते जननतानवतोदयमाश्च इति व्याख्यान्ति। जिनान् किं कुर्वतः?। अवतो—रक्षतस्त्रायमाणानित्यर्थः। त्वं कथंभूतः सन् स्मरेत्याह—आनतः—प्रणतः सन्। कथम्?। 'अदयं' न विद्यते दया यत्र तत् तथा। प्रणतिविषये स्वशरीरस्यापि रक्षां न कृतवानित्यर्थः ॥ २ ॥

सौ० वृ०–स्मर जिनानिति। हे जन!–हे लोक! अतः करणात् त्वं जिनान्–तीर्थकरान् स्मर इत्यन्वयः। 'स्मर' इति क्रियापदम्। कः कर्ता?। 'त्वम्'। 'स्मर' ध्यायस्व। कान् कर्मतापन्नान्?। 'जिनान्'। कथंभूतान् जिनान्। परिनुन्नाः–गताः–क्षीणा जरा–विस्रसा वयोहानिरूपा रजः–कर्मरजः जननं–जन्म तानवं–शरीरकार्श्यं तोदः–खेदः यमो–मरणं, गता येषां ते परिनुन्नजरारजोजननतानवतोदयमाः, तान् 'परिनुन्नजरारजोजननतानवतोदयमान्'। कस्मात्?। अतः कारणात् स्मर। अतः कथम्?। 'यतः' यस्मात् कारणात्। जिनान् किं कुर्वतः?। 'अवतः' रक्षतः। कान् कर्मतापन्नान्?। 'प्रणतान्' जनान्। पुनः कथंभूतान् जिनान्?। परमं–प्रकृष्टं निर्वृतिः–सिद्धिः–मुक्तिः तस्याः शर्म–सुखं तत् कुर्वन्तीति परमनिर्वृतिशर्मकृतः, तान् परमनिर्वृतिशर्मकृतः। कथम्?। 'अदयं' निर्व्याबाधं स्वशरीरानपेक्षं यथा स्यात् तथा। कथंभूतः त्वम्?। 'आनतः' मर्यादया प्रणतः। इति पदार्थः॥

अथ समासः—जयन्ति रागादिकान् शत्रून् इति जिनाः, तान् जिनान्। जरा च रजश्च जननं च, तनोर्भावः तानवम्, तानवं च तोदश्च यमश्च जरारजोजननतानवतोदयमाः, परिनुन्ना जरारजोजननतानवतोदयमा यैः ते येषां ते (वा) परिनुन्नजरारजोजननतानवतोदयमाः, तान् परिनुन्नजरारजोजननतानवतोदयमान्। निर्वृत्याः शर्म निर्वृतिशर्म, परमं च तत् निर्वृतिशर्म च परमनिर्वृतिशर्म, परमनिर्वृतिशर्म कुर्वन्ति ते परमनिर्वृतिशर्मकृतः, तान्। नास्ति दया स्वदेहरक्षणरूपा यस्मिन् तत् अदयम्। अदयं यथा स्यात् तथा, क्रियाविशेषणमिदम्। आङ्–मर्यादया नतः–आनतः। यद्वा परिनुन्नः–परिक्षीणः जरा इव जीर्णमिव रजो-बध्यमानं कर्म यैः ते, तथा जननं–जन्म तेन तानवाः–शारीरदुःखेन तोदेन–खेदेन कृशीभूताः तेषां दुःखहरणेन यमा इव यमाः, पञ्चस्वपि कल्याणेषु लोकोद्योतसुखकरत्वात् परिनुन्नजरारजसश्च जननतानवतोदयमाश्च परिनुन्नजरारजोजननतानवतोदयमाः, तान् परिनुन्नजरारजोजननतानवतोदयमान्। इत्यपि व्याख्येयम्॥ इति द्वितीयवृत्तार्थः॥ २॥

दे० व्या०–स्मर जिनानिति। हे जन! अतः कारणात् जिनान्–तीर्थङ्करान् त्वं स्मर–स्मृतिगोचरीकुरु इत्यन्वयः। 'स्मृ चिन्तायाम्' इति धातुः। 'स्मर' इति क्रियापदम्। कः कर्ता?। त्वम्। कान् कर्मतापन्नान्?। जिनान्। कुतः?। यतो–यस्मात् कारणात्। 'परमनिर्वृतिशर्मकृतः' मुक्तिसुखकर्तॄन् वर्तन्त इत्यध्याहारः। नहि जिनस्मरणमन्तरेण जन्तोस्तात्त्विकी सिद्धिरिति भावः। किंविशिष्टः त्वम्?। आनतः–प्रणतः। कथम्?। 'अदयम्' शरीरनिरपेक्षं यथा स्यात् तथा। किंविशिष्टान् जिनान्?। 'परिनुन्नजरारुजोजननतानवतोदयमान्' जरा–विस्रसा रुजो–रोगाः "रोगो रुजा रुगातङ्कः" इत्यभिधानचिन्तामणिः (का० ३, श्लो० १२६), जननं–जनिः तानवं–कार्श्यं तोदः पीडा यमो–मृत्युः, एतेषां पूर्वं 'द्वन्द्वः'। ततः परिनुन्नाः–परिक्षिप्ता जरारुजोजननतानवतोदयमा यैस्ते तथा इति विग्रहः। किं कुर्वतो जिनान्?। अवतः–रक्षतः। कान्?। नतान्–प्रणतान्। जनानिति शेषः॥ इति द्वितीयवृत्तार्थः॥ २॥

---

सिद्धान्त–स्वरूपम्—

जयति कल्पितकल्पतरूपमं
मतमसारतरागमदारिणा।
प्रथितमत्र जिनेन मनीषिणा-
मतमसा रतरागमदारिणा॥ ३॥

— त०

ज० वि०—जयतीति । जिनेन–सर्वज्ञेन प्रथितं–प्रख्यापितं मतं–श्रुतं अत्र–अस्मिन् जगति जयति–जयमनुभवतीति क्रियाकारकप्रयोगः । अत्र 'जयति' इति क्रियापदम् । किं कर्तृ ? 'मतम्'। कथंभूतम् ? 'प्रथितम्'। केन ? 'जिनेन'। कुत्र ? 'अत्र'। जिनेन कथंभूतेन ? 'असारतरागमदारिणा' असारतरः—कुत्सिततरो य आगमः–सिद्धान्तः शाक्यादिप्रवचनमित्यर्थः, तं दारयति अर्थात् हेतुयुक्त्यादिभिर्निराकरोतीत्येवंशीलः असारतरागमदारी तेन । पुनः कथंभूतेन ? 'अतमसा' तमसा–मोहेन अज्ञानेन वा रहितेन । पुनः कथंभूतेन ? 'रतरागमदारिणा' रतं–संभोगस्तत्र रागः–अभिलाषः मदः–जात्यादिकः तयोररिणा–वैरिणा तन्निवारणात् । केषाम् ? 'मनीषिणाम्' मतिमताम् । मतं पुनः कथंभूतम् ? 'कल्पितकल्पतरूपमम्' कल्पिता–समर्थिता कल्पतरुणा–कल्पवृक्षेण उपमा–साम्यं यस्य तत् तथा । यदिवा कल्पितेषु–मनःसङ्कल्पितेषु वस्तुषु कल्पतरोरुपमा यस्य तत् तथा ॥

अथ समासः—कल्पश्चासौ तरुश्च कल्पतरुः 'कर्मधारयः'। कल्पतरुणा उपमा कल्पतरूपमा 'तत्पुरुषः'। कल्पिता कल्पतरूपमा यस्य तत् कल्पित० 'बहुव्रीहिः'। यदिवा कल्पतरोरुपमा यस्य तत् कल्प० 'बहुव्रीहिः'। कल्पितेषु कल्पतरूपमं कल्पित० 'तत्पुरुषः'। न सारः असारः 'तत्पुरुषः'। अतिशयेनासारोऽसारतरः। असारतरश्चासावागमश्च असार० 'कर्मधारयः। असारतरागमं दारयतीत्येवंशीलः असारतरा० 'तत्पुरुषः'। तेन असारतरा०। न विद्यते तमो यस्य सोऽतमाः 'बहुव्रीहिः'। तेन अतमसा। रते रागो रतरागः 'तत्पुरुषः'। रतरागश्च मदश्च रतरागमदौ 'इतरेतरद्वन्द्वः'। रतरागमदयोररिः रतरागमदारिः 'तत्पुरुषः'। तेन रतराग०। इति काव्यार्थः ॥ ३ ॥

सि० वृ०—जयतीति । जिनेन–सर्वज्ञेन प्रथितं–प्रख्यापितं मतं–श्रुतं अत्र–अस्मिन् जगति जयति–सर्वोत्कर्षेण वर्तत इत्यर्थः । 'जि जये' धातोः वर्तमाने कर्तरि परस्मैपदे प्रथमपुरुषैकवचनम् । अत्र 'जयति' इति क्रियापदम् । किं कर्तृ ? । मतम् । कथंभूतम् ? । प्रथितम् । केन ? । जिनेन । कुत्र ? । अत्र । कथंभूतेन जिनेन ? । 'असारतरागमदारिणा' अतिशयेन असारः असारतरः–अतिकुत्सितो य आगमः चार्वाकशाक्यादिप्रवचनमित्यर्थः, तं दारयति अर्थात् हेतुयुक्त्यादिभिः निराकरोतीत्येवंशीलः असारतरागमदारी, तेन असारतरागमदारिणा । असारतरश्चासौ आगमश्चेति 'कर्मधारयः'। पुनः कथंभूतेन ? । 'अतमसा' नास्ति तमः–पापं अज्ञानं वा स अतमाः तेन । पुनः कथंभूतेन ? । रतरागमदारिणा' रतं–मैथुनं रागो–द्रव्यादावभिलाषः, यद्वा रते रागो रतरागः, मदो जात्याद्युत्थोऽभिनिवेशः, रतं च रागश्च मदश्च रतरागमदाः 'इतरेतरद्वन्द्वः" तेषां तयोर्वा अरिणा–वैरिणा, सर्वात्मना तदुच्छेदकत्वादितिभावः । केषाम् ? । 'मनीषिणां' मनीषा–प्रज्ञा विद्यते येषां ते मनीषिणः, तेषां मनीषिणाम् । मतं पुनः कथंभूतम् ? । 'कल्पितकल्पतरूपमं' कल्पिता–समर्थिता कल्पतरुणा–कल्पवृक्षेण उपमा–साम्यं यस्य तत् कल्पितकल्पतरूपमम् । यदिवा कल्पितेषु–मनः–संकल्पितेषु वस्तुषु कल्पतरोरुपमा यस्य तत् तथेत्यर्थः ॥ ३ ॥

सौ० वृ०—जयतीति । मतं-प्रवचनं जयति इत्यन्वयः । ' जयति ' इति क्रियापदम् । किं कर्तृ ? । ' मतम् ' । ' जयति ' सर्वातिशयेन वर्तते इत्यर्थः । किंविशिष्टं मतम् ? । ' प्रथितं ' उक्तम् । केन ? । ' जिनेन ' । केषाम् ? । 'मनीषिणाम्' प्राज्ञानां गणधराणाम् । पुनः किंवि० मतम् ? । कल्पिता-समर्थिता सर्वाभीष्टदानेन कल्पतरूणां-सुरतरूणां उपमा-उपमानं येन तत् ' कल्पितकल्पतरूपमम् ' । किंविशिष्टेन जिनेन ? । असारतरः-अतिशयेन निःसारः तादृशो य आगमः-मिथ्यादृक्प्रणीतकुशास्त्ररूपः तं प्रति दृणाति-विदारयति यः स तेन 'असारतरागमदारिणा' । पुनः किंवि० जिनेन ? । ' अतमसा ' अज्ञानपापरहितेन । पुनः किंवि० जिनेन ? । रतं-सुरतं तस्य रागः-स्नेहः मदः-अहंकारः जात्यादिर्वा तयोः अरिः-शत्रुरिव रतरागमदारिः तेन रतरागमदारिणा । कुत्र ? । 'अत्र' विश्वेऽस्मिन् । जिनेन कथितं मतं जयति । इति पदार्थः ॥

अथ समासः—कल्पतरूणां उपमा कल्पतरूपमा, कल्पिता कल्पतरूपमा यस्य तत् कल्पितकल्पतरूपमम् । अतिशयेन असारः असारतरः, असारतरश्चासौ आगमश्च असारतरागमः, असारतरागमं दृणातीति असारतरागमदारी, तेन असारतरागमदारिणा । मनीषा-बुद्धिः येषां ते मनीषिणः, तेषां मनीषिणाम् । न विद्यते तमो यस्यासौ अतमाः, तेन अतमसा । रतं च रागश्च मदश्च रतरागमदाः, रतरागमदानां अरिः रतरागमदारिः, तेन रतरागमदारिणा ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या०-जयतीति । इह-अस्मिन् लोके मतं-प्रवचनं जयति-सर्वोत्कर्षेण वर्तते इत्यन्वयः । ' जि जये ' धातुः । ' जयति ' इति क्रियापदम् । किं कर्तृ ? । मतम् । किंविशिष्टं मतम् ? । ' कल्पितकल्पतरूपमम् ' कल्पिता-घटिता कल्पतरुणा-कल्पवृक्षेण उपमा-साम्यं यस्य तत्, सकलमनोरथप्रपूरकत्वात् । पुनः किंविशिष्टम् ? । प्रथितं-विस्तारं प्रापितम् । केन ? । जिनेन-तीर्थंकरेण । जातावेकवचनम् । केषाम् ? । मनीषिणां-पण्डितानाम् । किंविशिष्टेन जिनेन ? । ' असारतरागमदारिणा ' असारतरान्-अतिशयेन अप्रशस्यान् मिथ्यात्वरूपानितियावत् आगमान्-सिद्धान्तान् दृणाति-विदारयतीत्येवंशीलस्तथा तेन । पुनः किंविशिष्टेन ? । अतमसा-अज्ञानरहितेन । नास्ति तमः-अज्ञानं यस्येति विग्रहः । पुनः किंविशिष्टेन ? । ' रतरागमदारिणा ' रतं-मैथुनं रागो-द्रव्यादावभिलाषः मदो-जात्यायुत्थोऽभिनिवेशः तेषां अरिणा-शत्रुणा, सर्वात्मना तदुच्छेदकारित्वात् ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥



मानवीदेव्याः स्तुतिः—

घनरुचिर्जयताद् भुवि मानवी
गुरुतराविहतामरसंगता ।
कृतकराऽस्त्रवरे फलपत्रभा-
गुरुतराविह तामरसं गता ॥ ४ ॥ १० ॥

—द्रुत०

ज० वि०—घनरुचिरिति । मानवी-मानवीनाम्नी देवी भुवि-पृथिव्यां इह-जगति जयतात्-जयत्विति क्रियाकारकसंबन्धः । अत्र 'जयतात्' इति क्रियापदम् । का कर्त्री ? 'मानवी' । कस्यां ? ' भुवि ' पृथिव्याम् । कथंभूता मानवी ? ' घनरुचिः ' घनवत्-मेघवत् ( रुचिः )-छाया यस्याः सा तथा, श्यामेत्यर्थः । पुनः कथंभूता ? ' गुरुतराविहतामरसङ्गता ' गुरुतराः-

१ ' ०तराऽविह० ' इत्यपि पाठः

अतिशयेन गुरवो–महान्तः अविहताः–केनाप्यपरिक्षता ये अमरा–देवास्तैः सङ्गता–सहिता। पुनः कथंभूता ? 'कृतकरा' स्थापितपाणिः। कस्मिन् ? 'फलपत्रभागुरुतरौ' फलानि च पत्राणि च भजन्त इति फलपत्रभाक् उरुः–विशालो यस्तरुः–वृक्षः तास्मिन् फलपत्रभागुरुतरौ। कथंभूते ? 'अस्त्रवरे' प्रवरायुधे। मानस्या देव्या वृक्षरूपमायुधमस्तीति। पुनः कथंभूता मानवी ? 'गता' प्राप्ता, समासीनेत्यर्थः। किं कमर्तापन्नम् ? 'तामरसं' कमलम् ॥

अथ समासः–घनवद् रुचिर्यस्याः सा घनरुचिः 'बहुव्रीहिः'। अतिशयेन गुरवो गुरुतराः। न विहता अविहता। उभयत्रापि 'तत्पुरुषः'। गुरुतराश्च ते अविहताश्च गुरु० 'कर्मधारयः'। गुरुतराविहताश्च तेऽमराश्च गुरुतरा० 'कर्मधारयः'। गुरुतराविहतामरैः सङ्गता गुरुतरा० 'बहुव्रीहिः'। कृतौ करौ यया सा कृतकरा 'बहुव्रीहिः'। अस्त्रेषु वरोऽस्त्रवरः 'तत्पुरुषः'। तास्मिन् अस्त्रवरे। फलानि च पत्राणि च फलपत्राणि 'इतरेतरद्वन्द्वः'। फलपत्राणि भजतीति फलपत्रभाक् 'तत्पुरुषः'। उरुश्चासौ तरुश्च उरुतरुः 'कर्मधारयः'। फलपत्रभाक् चासावुरुतरुश्च फलपत्र० 'कर्मधारयः'। तास्मिन् फलपत्र०। इति काव्यार्थः ॥ ४ ॥

॥ इति शोभनस्तुतिवृत्तौ श्रीशीतलतीर्थकृतः स्तुतेर्व्याख्या ॥ १० ॥

सि० वृ०–घनरुचिरिति। मानवी-मानवीनाम्नी देवी इह-जगति भुवि–पृथिव्यां जयतात्–सर्वोत्कर्षेण वर्ततामित्यर्थः। 'जि जये' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप्। 'अप्०' (सा० सू०१९१), 'गुणः' (सा० सू० १९२), 'ए अय्' (सा० सू० ४१) तुपस्तातंङादेशः। 'स्वरहीनं०' (सा० सू० ३६)। तथाच 'जयतात्' इति सिद्धम्। अत्र 'जयतात्' इति क्रियापदम्। का कर्त्री ?। मानवी। कस्याम् ?। भुवि। कथंभूता मानवी ?। 'घनरुचिः' घनो–मेघः तद्वद् रुचिः–कान्तिः यस्याः सा तथा, श्यामेत्यर्थः। पुनः कथंभूता ?। 'गुरुतराविहतामरसङ्गता' अतिशयेन गुरवो गुरुतराः–महान्तः ते च ते अविहताः–केनाप्यपरिक्षता ये देवाः तैः सङ्गता–सहिता। गुरुतराश्च ते अविहताश्चेति 'कर्मधारयः'। पुनः कथंभूता ?। 'कृतकरा' कृतः–स्थापितः करो–हस्तो यया सा तथा। कस्मिन् ?। 'फलपत्रभागुरुतरौ' फलानि पत्राणि भजते इति फलपत्रभाक् स चासौ उरुः–विशालो यः तरुः–वृक्षस्तस्मिन् फलपत्रभागुरुतरौ। कथंभूते ?। अस्त्रवरे–प्रवरायुधे। एतेन मानव्या देव्या वृक्षरूपमायुधमस्तीति सूचितम्। पुनः कथंभूता मानवी ?। गता–प्राप्ता समासीनेत्यर्थः। किम् ?। तामरसं–कमलम्। द्रुतविलम्बितच्छन्दः। "द्रुतविलम्बितमाह नभौ भरौ" इति च तल्लक्षणम् ॥

महामहोपाध्यायश्रीभानुचन्द्र० श्रीशीतलतीर्थकृतस्तुतिवृत्तिः ॥ ४ ॥

सौ० वृ०–घनरुचिरिति। मानवीनाम्नी देवी जयतात् इत्यन्वयः। 'जयतात्' इति क्रियापदम्। का कर्त्री ?। 'मानवी'। 'जयतात्' जयं प्राप्नुतात्। कस्याम् ?। 'भुवि'। किंविशिष्टा मानवी ?।

'घनरुचिः' सान्द्रकान्तिः, मेघश्यामा वा । पुनः किंवि० मानवी ? । गुरुतरा-महान्तोऽविहता-न केनापि पराजितास्तादृशा ये अमरा-देवाः तैः सङ्गता-परिवृता- मिलिता 'गुरुतराविहतामरसङ्गता'। पुनः किंवि० मानवी ?। 'कृतकरा' स्थापितहस्ता । कस्मिन् ?। 'अस्त्रवरे' शस्त्रप्रधाने । पुनः किंवि० मानवी ?। 'गता' प्राप्ता । किं कर्मतापन्नम् । 'तामरसं' कमलम् । क्व ?। 'इह' । कस्मिन् ?। फलानि (पत्राणि च) भजतीति फल (पत्र) भाक्, [ तादृशो अगुरुतरुः-अगुरुवृक्षः तथा ] उरुतरुः-विशालवृक्षो वा तस्मिन् 'फलपत्रभागुरुतरौ'। 'गुरुतरा' महती । पुनः किंविशिष्टा मानवी ?। 'अविहता' अपराजिता । पुनः किंवि० मानवी ?। 'अमरसङ्गमा' (ता) देवमिलिता । त्रीण्यपि विशेषणानि प्रथमान्तानि देव्या एव । इति पदार्थः ॥

अथ समासः—घनवद् रुचिः घनरुचिः वा घना सान्द्रा रुचिः यस्याः सा घनरुचिः। अतिशयेन गुरवः इति गुरुतराः, न विहता अविहताः, गुरुतराश्च ते अविहताश्च गुरुतराविहताः, गुरुतराविहताश्च ते अमराश्च गुरुतराविहतामराः, गुरुतराविहतामरैः संगता गुरुतराविहतामरसंगता । कृतः-स्थापितः करो यया सा कृतकरा । अस्त्राणां मध्ये वरं-प्रधानं वज्रं-अस्त्रवरं, तस्मिन् अस्त्रवरे । फलानि च पत्राणि च फलपत्राणि, फलपत्राणि भजतीति फलपत्रभाक् । उरुश्चासौ तरुश्च उरुतरुः । फलपत्रभाक् चासौ उरुतरुश्च फलपत्रभागुरुतरुः, तस्मिन् फलपत्रभागुरुतरौ; यद्वा फलपत्रैर्भातीति फलपत्रभः, तादृक् चासौ अगुरुतरुश्च फलपत्रभागुरुतरुः, तस्मिन् फलपत्रभागुरुतरौ । कृतकरास्त्रवरे कृतं करे अस्त्रवरं यया सा कृतकरास्त्रवरा, तस्याः सं० हे कृतकरास्त्रवरे ! यद्वा अस्त्रवरे इति तरुविशेषणं तस्याः शक्तिरूपत्वात् । वृक्षानपि अस्त्ररूपान् करोतीति भावः । अतिशयेन गुर्वी गुरुतरा इति देव्या विशेषणे समासः ॥ इति तुरीयवृत्तार्थः ॥ ४ ॥

श्रीशीतलजिनेन्द्रस्य, स्तुतेरर्थो निरूपितः ।
सौभाग्यसागराख्येन, सूरिणा सौख्यकारिणा ॥
॥ इति शीतलजिनस्तुतिः ॥ ४ ।१० ।४० ॥

दे० व्या०-घनरुचिरिति । इह भुवि-पृथिव्यां मानवी देवी जयतात्-सर्वोत्कर्षेण वर्ततादिति सम्बन्धः । 'जि जये' धातुः । 'जयतात्' इति क्रियापदम् । का कर्त्री ?। मानवी । किंविशिष्टा मानवी ?। 'घनरुचिः' घना-सान्द्रा रुचिः-कान्तिः यस्याः सा तथा । पुनः किंविशिष्टा ?। 'गुरुतराविहतामरसङ्गता' अतिशयेन गुरवो गुरुतराः ते च ते अविहता-अपरिक्षता ये देवास्तैः सङ्गता-सहिता । पुनः किंविशिष्टा ?। गता-उपविष्टा । किम् ?। तामरसं-कमलम् । कुत्र ?। 'फलपत्रभागुरुतरौ' फलं च पत्रं च भजते इति फलपत्रभाक् स चासौ उरुः-विशालो यः तरुः-वृक्षः तस्मिन् । सामीप्ये सप्तमीयम् । पुनः किंविशिष्टा ?। कृतकरा-विक्षिप्तहस्ता । कृतः करो ययेति विग्रहः । कस्मिन् ?। 'अस्त्रवरे' अस्त्रेषु वरं अस्त्रवरं तस्मिन् । प्रधानशस्त्रे इत्यर्थः । अन्ये तु किंविशिष्टा देवी ? कृतकरा । कस्मिन् ? फलपत्रभागुरुतरौ । किंविशिष्टे तरौ ?। अस्त्रवरे । इति व्याख्यानमाहुः ॥ इति चतुर्थवृत्तार्थः । द्रुतविलम्बितच्छन्दः ॥ "द्रुतविलम्बितमाह नभौ भरौ" इति तल्लक्षणम् ॥ ४ ॥

---

१ अतः परः पाठः प्रमादिकः प्रतिभाति ।

## ११ श्रीश्रेयांसजिनस्तुतयः

अथ श्रीश्रेयांसजिनस्य परमं वैराग्यम्—

कुसुमधनुषा यस्मादन्यं न मोहवशं व्यधुः
कमलसदृशां गीतारावा बलादथि तापितम् ।
प्रणमततरां द्राक् श्रेयांसं न चाहृत यन्मनः
कमलसदृशाङ्गी तारा वाऽबला दयिताऽपि तम् ॥ १ ॥

—हरिणी ( ६, ४, ७ )

ज० वि०—कुसुमधनुषेति । अयीति कोमलामन्त्रणे । भो भव्याः ! यूयं तं श्रेयांसं—श्रेयांसनामानमर्हन्तं द्राक्—सपदि प्रणमततराम्—अतिशयेन प्रणमतेति क्रियाकारकयोजनम् । अत्र 'प्रणमततराम्' इति क्रियापदम् । के कर्तारः ? 'यूयम्' । कं कर्मतापन्नम् ? 'श्रेयांसम्' कथम् ? 'द्राक्' । यत्तदोरभिसंबन्धात् तं कम् ? यस्मात्—श्रेयांसाद् अन्यम्—अपरं जनम् अलसदृशां—स्तिमितलोचनानां स्त्रीणां नृणां वा गीतारावा—गीतध्वनयः बलात्—हठात् मोहवशं—रागपरवशं न व्यधुः—न चक्रुः । अत्रापि 'व्यधुः' इति क्रियापदम् । कथम् ? 'न' । के कर्तारः ? 'गीतारावाः' । कं कर्मतापन्नम् ? 'कम्' । कथंभूतं न व्यधुः ? 'मोहवशम्' । कस्मात् ? 'बलात्' । कथंभूतं सन्तम् ? 'तापितं' दीपितं सन्तम् । केन ? 'कुसुमधनुषा' कामेन । गीतारावाः कासाम् ? 'अलसदृशाम्' । अनेन विशेषणेन गानकारकाणां समदचेष्टावत्त्वमाचष्टे । अत्र कमिति प्रश्ने । ततोऽयमर्थः । अलसदृशां गीतारावाः श्रेयांसतः कं अन्यं जनं स्मरोपतप्तं सन्तं बलात् मोहवशं न व्यधुः ? । अपि तु सर्वमपि व्यधुरेवेति । अबला वा सुन्दरी वा । 'वा शब्दः' समुच्चयार्थः । 'यन्मनो' यस्य मानसं 'न चाहृत' नाक्षिप्तवती । न क्षोभयामासेति भावः । अत्रापि 'आहृत' इति क्रियापदम् । कथं ? 'न' । का कर्त्री ? 'अबला' । किं कर्मतापन्नम् ? 'यन्मनः' । अबला कथंभूता ? 'कमलसदृशाङ्गी' वारिजसमगात्री सौकुमार्येण । पुनः कथं० 'तारा' कान्तिमती । 'च' शब्दः पुनरर्थे । पुनः कथं० ? 'दयिताऽपि' प्रेयस्यपि ॥

अथ समासः—कुसुमान्येव धनुर्यस्य स कुसुमधनुः 'बहुव्रीहिः' । तेन कुसुम० । मोहस्य वशो मोहवशः 'तत्पुरुषः' । तं मोहवशम् । अलसा दृशो यासां ता अलसदृशः 'बहुव्रीहिः' । तासां अलसदृशाम् । नृपक्षे तु पुंस्त्वपुरस्कारेण समासो विधेयः । गीतस्यारावा—गीतारावाः 'तत्पुरुषः' । यस्य मनो यन्मनः 'तत्पुरुषः' । तत् यन्मनः । कमलस्य सदृशं कमल० 'तत्पुरुषः' । कमलसदृशं अङ्गं यस्याः (सा) कमल० 'बहुव्रीहिः' । इति काव्यार्थः ॥ १ ॥

---

१ 'प्रणमततमां' इत्यपि पाठः ।

सि० वृ०—कुसुमधनुषेति । भो भव्याः ! यूयं तं श्रेयासं—श्रेयांसनामानं तीर्थङ्करं द्राक्—सपदि प्रणमततराम्—अतिशयेन प्रणमतेत्यर्थः । प्रपूर्वे 'णम प्रह्वीभावे' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि परस्मैपदे मध्यमपुरुषबहुवचनम् । 'आदेः ष्णः स्नः' (सा० सू० ७४८) इति नत्वे कृतेऽपि पुनर्णः । अप्० (सा० सू० १९१), 'स्वरहीनं०' (सा० सू० ३१) । तथाच 'प्रणमत' इति सिद्धम् । अत्र 'प्रणमत' इति क्रियापदम् । के कर्तारः ? । यूयम् । कं कर्मतापन्नम् ? । 'श्रेयांसं' श्रेयांसौ अंसौ अस्य (स) श्रेयांसः पृषोदरादिः । विश्वस्यापि श्रेयान्—हितकर इति वा श्रेयांसः । गर्भस्थेऽस्मिन् केनाप्यनाक्रान्तपूर्वा देवताधिष्ठिता शय्या मात्रा आक्रान्ता श्रेयश्च जातं इति वचनात् श्रेयासः तम् । कथम् ? । द्राक् । यत्तदोरभिसम्बन्धात् तं कम् ? । यस्मात् श्रेयांसाद् अन्यम्—अपरं जनं कं अलसदृशां—स्तिमितलोचनानां सरागदृशा वा स्त्रीणा नृणां वा गीतारावा—गीतध्वनयः बलात्—हठात् मोहवशं—रागपरवशं न व्यधुः, न चक्रुः इत्यर्थः । 'डु धाञ् धारणपोषणयोः' इति धातोः विपूर्वस्य भूते सौ कर्तरि परस्मैपदे प्रथमपुरुषबहुवचनम् अन् । 'दिबादावट्' (सा० सू० ७०७), 'दादेः पे' (सा० सू० ७२९) इति सिलोपः । 'स्याविदः' (सा० सू० ७३८) इति अनः उस् । 'आतोऽनपि' (सा० सू० ८०९) इत्याकारलोपः । 'इ यं स्वरे' (सा० सू० ३३), 'स्रोर्विसर्गः' (सा० सू० १२४) । तथाच 'व्यधुः' इति सिद्धम् । अत्र 'व्यधुः' इति क्रियापदम् । के कर्तारः ? । गीतारावाः । कं कर्मतापन्नम् ? । कम् । कथंभूतं न व्यधुः ? । मोहवशम् । कस्मात् ? । बलात् । कथंभूतं सन्तम् ? । तापितं—दीपितं सन्तम् । केन । कुसुमधनुषा—कन्दर्पेण । गीतारावाः केषाम् ? । अलसदृशाम् । अनेन विशेषणेन गानकारिणा समदचेष्टावत्त्वमाचष्टे । अत्र कमिति प्रश्ने, ततोऽयमर्थः—अलसदृशां गीतारावाः श्रेयांसतः कमन्यं जनं स्मरोपतप्तं सन्तं बलान्मोहं न व्यधुः ? अपितु सर्वमपि व्यधुरेवेति । यदाह "विकारहेतौ सति विक्रियन्ते, येषां न चेतांसि त एव धीराः" इति कुमारे कालिदासोक्तिः । अबला वा सुन्दरी । वाशब्दः समुच्चयार्थः । यन्मनः—यस्य चित्तं न वाहृत—नाक्षिप्तवती न क्षोभयामासेति भावः । 'हृञ् हरणे' धातोः भूते क्तौ कर्तरि आत्मनेपदे प्रथमपुरुषैकवचनं तन् । 'लोपो ह्रस्वाज्झसे' (सा० सू० ७९२?) इति सेर्लोपः, । 'दिबादावट्' (सा० सू० ७०७) । तथाच 'आहृत' इति सिद्धम् । अत्र 'आहृत' इति क्रियापदम् । का कर्त्री ? । अबला । किं कर्मतापन्नम् ? । यन्मनः । अबला कथंभूता ? । 'कमलसदृशाङ्गी' कमलस्य—पङ्कजस्य सदृशं अङ्गं—शरीरं यस्याः सा तथा । एतेन यस्य गात्रस्पर्शमात्रादेव कन्दर्पोन्मज्जनं भवतीति सूचितम् । पुनः कथंभूता ? । तारा—उज्ज्वला (दयिताऽपि) ॥ १ ॥

सौ० वृ०—यः शीतलो भवति स श्रेयःस्थानं भवति । अनेन संबन्धेनायातस्य एकादशश्रीश्रेयांसाजिनस्य (स्तुतेः) व्याख्यानं लिख्यते—

कुसुमधनुषेति । भो जनाः ! तं श्रेयांसनामानं जिनं द्राक्-शीघ्रं प्रणमततराम् इत्यन्वयः । 'प्रणमततराम्' इति क्रियापदम् । के कर्तारः ? । 'यूयम्' । 'प्रणमततराम्' अतिशयेन नमत । कं कर्मतापन्नम् ? । 'श्रेयांसम्' श्रेयांसनामानं जिनम् । कथम् ? । 'द्राक्' शीघ्रम् । किंविशिष्टं श्रेयांसम् ? । 'तं' प्रसिद्धम् । तं कम् ? । यन्मनः दयिता-वल्लभा अबलाऽपि न आहृत इत्यन्वयः । 'आहृत' इति क्रियापदम् । का

कर्त्री ? । 'अबला' स्त्री । 'आहृत' आक्षिप्तवती । कथम् ? । 'न' निषेधे । किं कर्मतापन्नम् ? । 'यन्मनः' यच्चित्तम् । किंवि० अबला ? । 'दयिता' वल्लभाऽपि । पुनः किंवि० अबला ? । 'कमलसदृशाङ्गी' सुकुमारत्वात् कमलकोमलदेहा । 'अयि' इति कोमलामन्त्रणे संबोधने वा । अलसदृशां-अलसेक्षणानां स्त्रीणां नृणां वा गीतारावा-गीतध्वनयः यस्मात् कारणात्, यस्मात् जिनाद् वा अन्यं कं न मोहवशं व्यधुः इत्यन्वयः । 'व्यधुः' इति क्रियापदम् । के कर्तारः ? । 'गीतारावाः' । 'व्यधुः' अकार्षुः । कं कर्मतापन्नम् ? । 'कं अन्यं' जनम् । अन्यं कस्मात् ? । 'यस्मात्' जिनात् । 'न' निषेधे काकूक्त्या । अपितु सर्वानपीत्यर्थः । किंविशिष्टं अन्यम् ? । 'मोहवशं' रागपरवशम् । पुनः किंवि० ? । 'तापितं' पीडितम् । केन ? । 'कुसुमायुधेन' स्मरेण । कथम् ? । 'बलात्' हठात् । किंवि० अबला ? । 'तारा' उज्ज्वला, गौरवर्णेत्यर्थः । 'वा' समुच्चयार्थे । विरुद्धमेतत् । दयिता स्वभर्तृमनः कथं नाक्षिप्तवती परं प्रव्रज्याप्रतिपत्त्यनन्तरम् इदं ज्ञेयम् । इति पदार्थः ॥

अथ समासः—कुसुमान्येव धनुर्यस्य स कुसुमधनुः, तेन कुसुमधनुषा । मोहस्य वशः मोहवशः, तं मोहवशम् । अलसा दृशो यासां ताः अलसदृशः, तासां अलसदृशाम् । नृपक्षे तु पुंस्त्वपुरस्कारेण येषां ते वा । गीतस्य आरावा गीतारावाः । "संबोधनेऽङ्ग भोः प्याट् पाट् हे है हंहो अरेऽयि रे" इति हैमकोषः ( का० ६, श्लो० १७३ ) । अतिशयेन प्रणमत इति प्रणमततराम् । यस्य मनः यन्मनः, तत् यन्मनः । कमलवत् वा कमलानां सदृशं अङ्गं यस्याः सा कमलसदृशाङ्गी । हरिणीच्छन्दसा स्तुतिरियम् । इति प्रथमवृत्तार्थः ॥ १ ॥

दे० व्या०—कुसुमधनुषेति । अयीति कोमलामन्त्रणे । अलसदृशां-मृगाक्षीणां गीतारावाः-गीतध्वनयो यस्मात् हेतोः कं अन्यं जनं इति शेषः, बलात्-हठात् मोहवशं-प्रेमवशवर्तिनं न व्यधुः-नाकार्षुः ? अपि तु सर्वमप्यकार्षुः इत्यन्वयः । 'न व्यधुः' इति क्रियापदम् । के कर्तारः ? । गीतारावाः । कासाम् ? । 'अलसदृशाम्' आलस्ययुक्ते, अर्धोद्घाटिते इतियावत् । दृशौ-अक्षिणी यासां ताः तासाम् । "अलसेक्षणा मृगाक्षी" इत्यभिधानचिन्तामणिः ( का० ३, श्लो० १७० ) । कं कर्मतापन्नम् ? । जनम् । किंविशिष्टं जनम् ? । तापितं-पीडितम् । केन ? । 'कुसुमधनुषा' कुसुममेव धनुः-कार्मुकं यस्य स कुसुमधन्वा-कन्दर्पः तेन । "पुष्पधन्वा रतिपतिः" इत्यमरः ( श्लो० ५२ ), तत्-तस्मात् कारणात् तं श्रेयांसं-श्रेयांसनाथं द्राक्-तूर्णं यथा स्यात् तथा यूयं प्रणमततराम्-अतिशयेन प्रणमतेति पूर्वेण सम्बन्धः । 'णम प्रह्वीभावे' धातुः । 'प्रणमत' इति क्रियापदम् । के कर्तारः ? । यूयम् । कं कर्मतापन्नम् ? । श्रेयांसम् । यत्तदोर्नित्याभिसम्बन्धाद् यन्मनः-यस्य चित्तं अबला-सामान्यवनिता वाशब्दश्चकारार्थः, तेन दयिताऽपि स्वकीयवनिताऽपिच न आहृत-न क्षिप्तवती इत्यन्वयः । 'हृञ् हरणे' धातुः । किंविशिष्टा दयिता ? । 'कमलसदृशाङ्गी' कमलेन-पङ्कजेन सदृशं-तुल्यं कोमलत्वात् अङ्गं-शरीरं यस्याः सा तथा । एतेन यस्याः संस्पर्शमात्रादेव कन्दर्पोन्मज्जनं भवति इति सूचितम् । पुनः किंविशिष्टा ? । तारा-उज्ज्वला । गौराङ्गीतियावत् । एतेन "विकारहेतौ सति विक्रियन्ते, येषां न चेतांसि त एव धीराः" ( कुमारसम्भवे ) इत्यादिना विकारसामग्र्यां सत्यामपि विकारानुत्पातत्वेन अतिधीरत्वं ध्वन्यते । इति प्रथमवृत्तार्थः ॥



जिनवराणां तल्लक्षणगर्भितस्तुतिः—

जिनवरततिर्जीवालीनामकारणवत्सलाऽ–
समदमहिताऽमारा दिष्टासमानवराऽजया ।
नमदमृतभुक्पङ्क्त्या नूता तनोतु मतिं ममाऽ–
समदमहितामाराद्दिष्टा समानवराजया ॥ २ ॥

—हरिणी

ज० वि०—जिनवरततिरिति । जिनवरततिः–तीर्थंकरपङ्क्तिः मम मतिं–प्रतिभां आरात्–शीघ्रं तनोतु–विस्तारयतु इति क्रियाकारकयोगः । अत्र 'तनोतु' इति क्रियापदम् । का कर्त्री ? 'जिनवरततिः' । कां कर्मतापन्नाम् ? 'मतिम्' । कस्य ? 'मम' । कथम् ? 'आरात्' । मतिं कथंभूताम् ? 'असमदमहिताम्' असमदैः–मदरहितैः शान्तैरित्यर्थः, महितां–पूजिताम् । जिनवरततिः कथंभूता ? 'अकारणवत्सला' निष्कारणं स्निग्धा । कासाम् ? 'जीवालीनाम्' जन्तुसन्ततीनाम् । पुनः कथं० ? 'असमदमहिता' असमदमानां–निरुपमोपशमानां हिता–हितकारिणी । पुनः कथं० ? 'अमारा' माररहिता । पुनः कथं० ? 'दिष्टासमानवरा' दिष्टा–दत्ता असमाना–असाधारणा वराः–प्रार्थितार्था यया सा तथा । पुनः कथं० ? 'अजया' न विद्यते जयः–अभिभवः कुतश्चित् यस्याः सा तथा । पुनः कथंभूता ? 'नूता' स्तुता । कया ? 'नमदमृतभुक्पङ्क्त्या' नमन्ती या अमृतभुजां–देवानां पङ्क्तिः–श्रेणिः तया । तथा कथंभूतया ? 'समानवराजया' मानवराजैः–भूपतिभिः सह वर्तमानया । अजयेति जिनवरततेर्विशेषणं व्याख्यातम् । तत्र नमदमृतभुक्पङ्क्तेर्वा व्याख्यायते । तथाहि–कथंभूतया नमदमृतभुक्पंक्त्या ? 'अजया' न जायत इत्यजा तया । तस्या उत्पातशय्यायामेवोत्पादात् । जन्मक्लेशरहितयेत्यर्थः । जिनवरततिः पुनः कथं० ? 'इष्टा' पूजिता अभिमता वा ॥

अथ समासः—जिनानां जिनेषु वा वरा जिनवराः 'तत्पुरुषः' । जीवानां आल्यो जीवाल्यः तत्पुरुषः । तासां जीवा० । न विद्यते कारणं यत्र तत् अकारणं 'बहुव्रीहिः' । अकारणं वत्सला अकारणव० 'तत्पुरुषः' । न समो असमः 'तत्पुरुषः' । असमो दमो येषां ते असमदमाः 'बहुव्रीहिः' । असमदमैर्महिता असम० 'तत्पुरुषः' । न विद्यते मारो यस्याः सा अमारा 'बहुव्रीहिः' । न समाना असमानाः 'तत्पुरुषः' । असमानाश्च ते वराश्च अस० 'कर्मधारयः' । दिष्टा असमानवरा यया सा दिष्टास० बहुव्रीहिः । न विद्यते जयो यस्याः सा अजया 'बहुव्रीहिः' । यद्वा न जायत इत्यजा 'तत्पुरुषः' । तया अजया । अमृतं भुञ्जन्तीत्यमृतभुजः 'तत्पुरुषः' । अमृतभुजां पङ्क्तिः अमृतभुक्पङ्क्तिः 'तत्पुरुषः' । नमन्ती चासावमृतभुक्पङ्क्तिश्च

१ '०ताऽमाराऽऽदिष्टासमावरा जया' इति पाठान्तरम् ।

नमद० ‘कर्मधारयः’ । तया नमद० । सह मदेन वर्तन्ते इति समदाः ‘तत्पुरुषः’ । न समदा असमदाः ‘तत्पुरुषः’ । असमदैर्महिता असमद० ‘तत्पुरुषः’ । तां असम० । मानवानां राजानो मानवराजाः ‘तत्पुरुषः’ । सह मानवराजैर्वर्तते या सा समानवराजा ‘तत्पुरुषः’ । तया समा० । इति काव्यार्थः ॥ २ ॥

सि० वृ०—जिनवरततिरिति । जिनानां जिनेषु वा वराः—प्रधानाः तेषां ततिः—पंक्तिः जिनवरततिः मम मतिं—प्रतिभां आरात्—शीघ्रं तनोतु—विस्तारयतु इत्यर्थः । ‘तनु विस्तारे’ धातोः ‘आशीःप्रेरणयोः’ ( सा० सू० ७०१ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप् । ‘तनादेरुप्’ ( सा० सू० ९९७), ‘नूपः’ ( सा० सू० ९७९ ) इति गुणः । तथाच ‘तनोतु’ इति सिद्धम् । अत्र ‘तनोतु’ इति क्रियापदम् । का कर्त्री ? । जिनवरततिः । कां कर्मतापन्नाम् ? । मतिम् । कथम् ? । आरात् । “आराद् दूरसमीपयोः” इति विश्वः । कथंभूतां मतिम् ? । ‘असमदमहितां’ सह मदेन—अभिमानेन वर्तन्ते इति समदाः ‘तत्पुरुषः’, न समदा असमदाः तैर्महिता—पूजिता ताम् । कथंभूता जिनवरततिः ? । ‘अकारणवत्सला’ न विद्यते कारणं यत्र तद् अकारणम्, अकारणम्—अनिमित्तं वत्सला—स्निग्धा अकारणवत्सला । “स्निग्धस्तु वत्सलः” इत्यमरः (श्लो० २०९३) । कासाम् ? । ‘जीवालीनां’ जीवानां—प्राणिनां आलयः—श्रेणयः तासाम् । पुनः कथंभूता ? । ‘असमदमहिता’ असमो—अनन्यसदृशो दमो येषां ते असमदमाः तेषां हिता—हितकारिणीत्यर्थः । पुनः कथंभूता ? । ‘अमारा’ न विद्यते मारः—कन्दर्पो यस्याः सा अमारा । पुनः कथंभूता ? । ‘दिष्टासमानवरा’ दिष्टा—दत्ता असमानाः-असाधारणाः वराः—प्रार्थितार्था यया सा, न समाना असमानाः असमानाश्च ते वराश्च असमानवराः इति ‘कर्मधारयः’ । पुनः कथंभूता ? । ‘अजया’ न विद्यते जयः— अभिभवः कुतश्चित् यस्याः सा तथा । यद्वा न जायते—नोत्पद्यते इत्यजा तया । यद्वा जयति अन्तरङ्गारिषड्वर्गमिति जया । अकारं विनैव छेदः । पुनः कथंभूता ? । नूता—स्तुता । कया ? । ‘नमदमृतभुक्पङ्क्त्या’ अमृतं भुञ्जन्तीत्यमृतभुजो—देवाः तेषां पंक्तिः अमृतभुक्पंक्तिः इति ‘तत्पुरुषः । नमन्ती चासौ अमृतभुजां पंक्तिः नमदमृतभुक्पंक्तिस्तया । कथंभूतया ? । ‘समानवराजया’ मानवानां राजानो मानवराजाः ‘राजाहःसखिभ्यष्टच्’ (पा० अ० ५, पा० ४, सू० ९१) मानवराजैः—नृपतिभिः सह—वर्तमाना सा तया । पुनः कथंभूता जिनवरततिः ? । इष्टा—पूजिता अभिमता वा ॥ २ ॥

सौ० वृ०—जिनवरततिरिति । जिनवरततिः-तीर्थंकरराजिः मम मतिं-बुद्धिं सदा-शश्वद् आरात् शीघ्रं तनोतु इत्यन्वयः । ‘तनोतु’ इति क्रियापदम् । का कर्त्री ? । ‘जिनवरततिः’ । ‘तनोतु’ विस्तारयतु । कां कर्मतापन्नाम् ? । ‘मतिम्’ । कस्य ? । ‘मम’ । कथम् ? । ‘सदा’ । किंविशिष्टा जिनवरततिः ? । ‘असमदमहिता’ निरुपमशमजनहिता । पुनः किंविशिष्टा जिनवरततिः ? । ‘अजया’ सर्वैरपराजिता । पुनः किं० जिनवरततिः ? । ‘नूता’ स्तुता । कया ? । नमन्तः-प्रणमन्तो येऽमृतभुजो-देवाः तेषां पंक्तिः-श्रेणिः तया ‘नमदमृतभुक्पंक्त्या’ । कथम् ? । ‘आरात्’ । किंवि० मतिम् ? । असमदैः-मदरहितैः सज्जनैः महितां-पूजिताम् ‘असमदमहिताम्’ । पुनः किं० जिनवरततिः ? । ‘इष्टा’ वल्लभा पूज्या वा । किंविशिष्टया नमदमृतभुक्पंक्त्या ? । ‘समानवराजया’ भूपति[श्रेणि]सहितया । पुनः किं० नमदमृतभुक्पंक्त्या ? । ‘अजया’ अगर्भोत्पन्नया, देवानां शय्योत्पत्तित्वात् । इति पदार्थः ॥

अथ समासः—जिनेषु वराः जिनवराः, जिनवराणां ततिः जिनवरततिः। जीवानां आली जीवाली, तासां जीवालीनाम्। न कारणं अकारणं, अकारणं वत्सला अकारणवत्सला। मदेन सहिताः समदाः, न समदाः असमदाः, असमदैर्महिता असमदमहिताः। न विद्यते मारः-कामो मरणं वा यस्याः सा अमारा। न समानः असमानः, असमानश्चासौ वरश्च असमानवरः। दिष्टः-कथितः दत्तो वा असमानवरो यया सा दिष्टासमानवरा। नास्ति अन्यैः जयो यस्याः सा अजया। अमृतं भुञ्जन्तीति अमृतभुजः, नमन्तश्च ते अमृतभुजश्च नमदमृतभुजः, नमदमृतभुजां पंक्तिः नमदमृतभुक्पंक्तिः, तया नमदमृतभुक्पंक्त्या। न समः असमः, असमो दमो येषां ते असमदमाः, असमदमैः असमदमानां वा हिता असमदमहिता, तां असमदमहिताम्। मानवानां राजा मानवराजः, मानवराजैः सहिता समानवराजा, तया समानवराजया। 'राजाहःसखिभ्यष्टच्' (पा० अ० ५, पा० ४, सू० ९१)। न जायते इति अजा, तया अजया। इति द्वितीयवृत्तार्थः॥ २॥

दे० व्या०-जिनवरततिरिति। जिनवरततिः-तीर्थङ्करश्रेणिः मम मतिं-बुद्धिम् आरात्-शीघ्रं यथा स्यात् तथा तनोतु-विस्तारयतु इत्यन्वयः। 'तनु विस्तारे' धातुः। 'तनोतु' इति क्रियापदम्। का कर्त्री?। जिनवरततिः। जिनवराणां ततिः जिनवरततिरिति विग्रहः। कां कर्मतापन्नाम्?। मतिम्। कस्य?। मम। किंविशिष्टां मतिम्?। 'असमदमहिताम्' मदेन-हर्षेण सह वर्तमानाः समदाः, न समदा असमदाः, तैः महितां-पूजिताम्। किंविशिष्टा जिनवरततिः?। 'अकारणवत्सला' अकारणेन-प्रयोजनाभावेन वत्सला-सस्नेहा। कासाम्?। जीवालीनाम्। जीवानां आल्यः तासां, प्राणिगणानामित्यर्थः। पुनः किंविशिष्टा?। 'असमदमहिता' असमः-अनन्यकल्पः दमः-इन्द्रियनियन्त्रणं येषां ते असमदमाः अर्थान्मुनयः तेषां हिता-हितकारिणी। पुनः किंविशिष्टा?। 'अमारा' नास्ति मारः-कन्दर्पो यस्याः सा तथा। "मदनो मन्मथो मारः" इत्यमरः (श्लो० ५९)। पुनः किंविशिष्टा?। 'दिष्टासमानवरा' दिष्टः-प्रदत्तः असमानः-अनन्यकल्पो वरो यया सा तथा। पुनः किंविशिष्टा?। अजया-जेतुमशक्या। मिथ्यादृष्टिभिरिति शेषः। यद्वा जयति अन्तरङ्गारिषड्वर्गामिति जया। अकारं विनैव छेदः। पुनः किंविशिष्टा?। नुता-स्तुता। कया?। 'नमदमृतभुक्पंक्त्या' नमन्तः-प्रणमन्तः ये अमृतभुजः-त्रिदिवेशाः तेषां पङ्क्तिः-श्रेणिः तया। किंविशिष्टया नमदमृतभुक्पङ्क्त्या?। 'समानवराजया' मानवानां-मनुष्याणां राजानः-मानवराजाः 'राजाहः सखिभ्यष्टच्' (पा० अ० ५, पा० ४, सू० ९१) इति टच् प्रत्ययः। तैः सह वर्तमाना समानवराजा तया। 'सहादेः सादिः' (सा० सू० ५०६) इति सूत्रेण सकारोऽवस्थितः। पुनः किंविशिष्टा?। इष्टा-वल्लभा। सर्वेषामिति शेषः॥ इति द्वितीयवृत्तार्थः॥ २॥



**जिनागमस्य स्तुतिः—**

भवजलनिधिभ्राम्यज्जन्तुव्रजायतपोत! हे
तनु मतिमतां सन्नाशानां सदा नरसम्पदम्।
समभिलषतामर्हन्नाथागमानतभूपतिं
तनुमति मतां सन्नाशानां सदानरसं पदम्॥ ३॥

—हरिणी

ज० वि०—भवजलनिधीति । हे इत्यामन्त्रणे । अर्हन्नाथागम !–जिनेन्द्रसिद्धान्त ! त्वं मतिमतां–मनीषिणां जनानां सदा–सर्वदा 'सदानरसं' सह दानरसेन द्रव्यवितरणाभिलाषेण वर्तते यत् तत् तथा तादृशं पदं–स्थानकं तनु–विस्तारय–देहीति क्रियाकारकसंयोगः। अत्र 'तनु' इति क्रियापदम् । कः कर्ता ? 'त्वम्'। किं कर्मतापन्नम् ? 'पदम्'। कथंभूतम् ? 'सदानरसम्'। कथम् ? 'सदा'। केषाम् ? 'मतिमताम्'। कथंभूतानां मतिमताम् ? 'सन्नाशानाम्' सन्ना–विशीर्णाः क्षीणा वा आशा–मनोरथा येषां ते तथा तेषाम् । पुनः कथंभूतानाम् ? 'सन्नाशानाम्' सन–विद्यमानो नाशो–मरणं येषां ते तथा तेषाम् । अल्पायुषामित्यर्थः। मतिमतां किं कुर्वताम् ? 'समभिलषताम्' आकाङ्क्षताम् । कां कर्मतापन्नाम् ? 'नरसम्पदम्' मनुष्यविभूतिम् । नरसम्पदं कथंभूताम् ? 'आनतभूपतिम्' आनताः–प्रणताः भूपतयो–राजानो यस्यां सा तथा ताम् । पुनः कथंभूताम् ? 'मताम्' अभीष्टाम् । कस्मिन् ? 'तनुमति' प्राणिनि । अयं वाक्यार्थः–ये मतिमन्तो मरणकाले नरसंबन्धिनीं सम्पदमभिलषन्ति तेषां त्वं तादृशं स्थानं देहि यत्र दानरसो भवतीति । अवशिष्टं त्वेकं संबोधनं तस्यार्थस्त्वयम्—'हे भवजलनिधिभ्राम्यज्जन्तुव्रजायतपोत !' भवः–संसारः स एव दुरुत्तरत्वाज्जलनिधिः–समुद्रः तत्र भ्राम्यन्–पर्यटन् यो जन्तुव्रजः–प्राणिसमुदायः तस्यायतपोत इव–दीर्घयानपात्रमिवायतपोतः तत्संबो० हे भवजल० ॥

अथ समासः—जलानां निधिः जलनिधिः 'तत्पुरुषः'। भव एव जलनिधिः भव० 'कर्मधारयः'। भवजलनिधौ भ्राम्यन् भव० 'तत्पुरुषः'। जन्तूनां व्रजो जन्तुव्रजः 'तत्पुरुषः'। भवजलनिधिभ्राम्यंश्चासौ जन्तुव्रजश्च भवजल० 'कर्मधारयः'। आयतश्चासौ पोतश्च आयतपोतः 'कर्मधारयः'। भवजलनिधिभ्राम्यज्जन्तुव्रजस्य आयतपोतः भवजल० 'तत्पुरुषः'। तत्संबो० हे भवजल०। सन्ना आशा येषां ते सन्नाशाः 'बहुव्रीहिः'। तेषां सन्नाशानाम् । नरस्य सम्पदं नरसम्पदम् 'तत्पुरुषः'। अर्हतां नाथा अर्हन्नाथाः 'तत्पुरुषः'। अर्हन्नाथानां आगमः अर्ह० 'तत्पुरुषः।' तत्संबो० हे अर्ह०। भुवः पतयो भूपतयः 'तत्पुरुषः'। आनता भूपतयो यस्यां सा आनतभूपतिः 'बहुव्रीहिः'। तामानतभूपतिम् । सन् नाशो येषां ते सन्नाशाः 'बहुव्रीहिः'। तेषां सन्नाशानाम् । दानस्य रसो दानरसः 'तत्पुरुषः'। सह दानरसेन वर्तते यत् तत् सदानरसं 'बहुव्रीहिः' ॥ इति काव्यार्थः ॥ ३ ॥

सि० वृ०—भवजलनिधीति । हे इत्यामन्त्रणे । हे अर्हन्नाथागम !–जिनेन्द्रसिद्धान्त ! त्वं मतिः–प्रज्ञा विद्यते येषां ते मतिमन्तः तेषां मतिमतां जनानां सदा–सर्वदा 'सदानरसं' दानम्–उत्सर्जनं तस्य रसो–गुणः तेन सह वर्तते यत् तत् तथा, "शृङ्गारादौ विषे वीर्ये, गुणे रागे द्रवे रसः" इत्यमरः (श्लो० २७८९), तादृशं पदं–स्थानकं तनु–विस्तारय देहीत्यर्थः । 'तनु विस्तारे' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३)

कर्तरि परस्मैपदे मध्यमपुरुषैकवचनं हिः । 'तनादेरुप्' (सा० सू० ९९७), 'ओर्वा हेः' (सा० सू० ९८१) इति हेर्लोपः । तथाच 'तनु' इति सिद्धम् । अत्र 'तनु' इति क्रियापदम् । कः कर्ता ? । त्वम् । किं कर्मतापन्नम् ? । पदम् । "पदं व्यवसितत्राण–स्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः (श्लो० २९२१) । कथंभूतम् ? । सदानरसम् । कथम् ? । सदा । केषाम् ? । मतिमताम् । कथंभूतानां मतिमताम् ? । 'सन्नाशानां' सन्नाः–क्षीणाः विशीर्णा वा आशा–मनोरथा येषां ते तथा तेषाम् । पुनः कथंभूतानाम् ? । 'सन्नाशानां' सन्–विद्यमानो नाशो–मरणं येषां ते तथा तेषाम् । "सत् प्रशस्ते विद्यमाने" इति विश्वः । अल्पायुषामित्यर्थः । मतिमतां किं कुर्वताम् ? । समभिलषतां–आकाङ्क्षताम् । काम् ? । 'नरसम्पदं' नराणां सम्पत् नरसम्पत् ताम् । कथंभूतां नरसम्पदम् ? । 'आनतभूपतिं' आनताः–प्रणताः भूपतयो–राजानो यस्यां सा ताम् । पुनः कथंभूताम् ? । मतां–संमताम् अभीष्टामितियावत् । कस्मिन् ? । 'तनुमति' तनुर्विद्यते यस्य स तनुमान् तस्मिन्, प्राणिनीत्यर्थः । तथाच ये मतिमन्तो मरणकाले नरसम्बन्धिनीं सम्पदं वाञ्छन्ति तेषां त्वं तादृशं स्थानं देहि, यत्र दानरसो भवतीति वाक्यार्थः । अवशिष्टं त्वेकं संबोधनम् । तस्य चायमर्थः—'हे भवजलनिधिभ्राम्यज्जन्तुव्रजायतपोत !' भवः–संसारः स एव दुरुत्तरत्वात् जलनिधिः–समुद्रः तत्र भ्राम्यन्–पर्यटन् यो जन्तूनां–प्राणिना व्रजः–समूहः तस्य आयतः–विस्तीर्णः स चासौ पोत इव पोतो–यानपात्रं तस्य संबोधनं हे भव० । "यानपात्रे शिशौ पोतः" इत्यमरः (श्लो० २४९४) । "पोतः शिशौ वहित्रे च, गृहस्थाने च वाससि" इति मेदिनी ॥ २ ॥

सौ० वृ०—भवजलनिधीति । भवः–संसारः चातुर्गतिकलक्षणः स एव जलनिधिः–समुद्रः तस्मिन् भ्रमन्तः–पर्यटन्तो ये जन्तवः–प्राणिनः तेषां व्रजः–समूहः तेषां तारणे आयतो–विस्तीर्णः पोत इव पोतः–यानपात्रं, तस्य सं० 'हे भवजलनिधिभ्राम्यज्जन्तुव्रजायतपोत !' । अर्हन्तो–वीतरागाः–केवलज्ञानिनः तेषां नाथाः–तीर्थंकराः तेषां आगमः–सिद्धान्तः तस्य सं० हे 'अर्हन्नाथागम !' । त्वं मतिमतां–विदुषां सदा–सर्वदा सदानरसं दानहर्षेण सहितं पदं–स्थानं तनु इत्यन्वयः । 'तनु' इति क्रियापदम् । कः कर्ता ? । 'त्वम्' । 'तनु' विस्तारय । किं कर्मतापन्नम् ? । 'पदम्' । केषाम् ? । 'मतिमताम्' पण्डितानाम् । कथम् ? । 'सदा' । किंविशिष्टानां मति(नर)सम्पदम् ? । वांनर '(?) इति क्रियापदम् । तथा नराणां सम्पदं नरसम्पदं वा । किंविशिष्टां (नर)सम्पदम् ? । [ मति वा ] आनताः–प्रणता भूपतयः यस्यां सा आनतभूपतिः, तां 'आनतभूपतिम्' । पुनः किंवि० ? । 'मतां' अभिमताम् । कस्मिन् ? । 'तनुमति' प्राणिनि । पुनः किंवि० मतिमताम् ? । सन्–विद्यमानः प्रशस्तो वा नाशः—अन्तो येषां ते सन्नाशाः तेषां 'सन्नाशानाम्' । इति पदार्थः ॥

अथ समासः—जलानि निधीयन्ते अस्मिन् इति जलनिधिः, भव एव जलनिधिः भवजलनिधिः, भवजलनिधौ भ्राम्यन्तः भवजलनिधिभ्राम्यन्तः, भवजलनिधिभ्राम्यन्तश्च ते जन्तवश्च भवजलनिधिभ्राम्यज्जन्तवः, भव०जन्तूनां व्रजः भवजलनिधिभ्राम्यज्जन्तुव्रजः, आयतश्चासौ पोतश्च आयतपोतः, भवज०व्रजस्य आयतपोतः भवज०व्रजायतपोतः, तस्य (सं०) हे भवजलनिधिभ्राम्यज्जन्तुव्रजायतपोत ! । हे इत्यामन्त्रणपदम् । तनुः–शरीरं विद्यते यस्यासौ तनुमान्, तस्मिन् तनुमति । सन्नाः–क्षीणाः आशा येषां ते सन्नाशाः, तेषां सन्नाशानाम् । दानस्य रसः दानरसः, दानरसेन सहितं सदानरसम् तत् सदानरसम् । सम्यक् प्रकारेण अभिलषन्तः तेषां समभिलषताम् । सुरादिकृतां पूजां अर्हन्ति ते

१ अशुद्धस्थलमेतत्, किन्तु के कर्तुस्तात्पर्यविषयकाः शब्दा इति प्रयत्नान्तराभावान्न निर्णेतुं शक्यते ।

अर्हन्तः, अर्हतां नाथाः अर्हन्नाथाः, अर्हन्नाथानां आगमः अर्हन्नाथागमः, तस्य सं० हे अर्हन्नाथागम ! । आनताः-प्रणता भूपतयो यस्याः सा आनतभूपतिः, तां आनतभूपतिम् । मतिः विद्यते येषां ते मतिमन्तः, तेषां मतिमताम् । सन् नाशो येषां ते सन्नाशाः, तेषां सन्नाशानाम् । नराणां सम्पत् नरसम्पत्, तां नरसम्पदम् । इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या०-भवजलनिधीति । हे अर्हन्नाथागम !-तीर्थङ्करागम ! त्वं मतिमतां-प्रेक्षावतां नरसम्पदं-मानवर्द्धिं सदा-निरन्तरं यथा स्यात् तथा तनु-विस्तारय इत्यन्वयः । 'तनु विस्तारे' धातुः । 'तनु' इति क्रियापदम् । कः कर्ता ? । त्वम् । कां कर्मतापन्नाम् ? । नरसम्पदम् । केषाम् ? । 'मतिमताम्' मतिः विद्यते येषां ते मतिमन्तः, तेषां मतिमताम् । किंविशिष्टां नरसम्पदम् ? । मतां-वाञ्छिताम् । कस्मिन् ? । 'तनुमति' तनुः-शरीरं विद्यते यस्य स तनुमान् तस्मिन् । किंविशिष्टाम् ? । 'आनतभूपतिम्' आ-समन्तात् नताः-प्रह्वीभूताः भूपतयः-राजानो यस्याः सा ताम् । किंविशिष्टानां मतिमताम् ? । 'सन्नाशानाम्' सन्-विद्यमानो नाशो-मरणं येषां ते तथा तेषाम् । अल्पायुषामिति फलितार्थः । पुनः किंविशिष्टानाम् ? । 'सन्नाशानाम्' सन्ना-क्षीणा आशा-मनोरथो येषां ते तथा तेषाम् । किं कुर्वतां मतिमताम् ? । 'समभिलषताम्' आकाङ्क्षताम् । किम् ? । पदं-स्थानकम् । किंविशिष्टं पदम् ? । 'सदानरसम्' दानस्य-वितरणस्य रसः-अभिलाषः तेन सह वर्तते यत् तत् । 'भवजलनिधिभ्राम्यज्जन्तुव्रजायतपोत !' इति । भवः-संसारः स एव जलनिधिः-समुद्रः तस्मिन् भ्राम्यन्तः-भ्रममाणा ये जन्तुव्रजाः-प्राणिसमूहाः तेषां आयतः-विपुलः पोत इव पोतः-यानपात्रं यः स तस्यामन्त्रणम् । इति तृतीयवृत्तार्थः ॥ ३ ॥



श्रीमहाकालीदेव्या विजयः—

धृतपविफलाक्षालीघण्टैः करैः कृतबोधित—
प्रजयतिमहा कालीमर्त्याधिपकुञ्जराजिभिः ।
निजतनुलतामध्यासीनां दधत्यपरिक्षतां
प्रजयति महाकाली मर्त्याधिपं कजराजिभिः ॥ ४ ॥ ११ ॥

—हरिणी

ज० वि०—धृतपवीति । महाकाली—महाकाल्यभिधा देवी प्रजयति—प्रकर्षेण जयमासादयतीति क्रियाकारकसम्बन्धरचना । अत्र 'प्रजयति' इति क्रियापदम् । का कर्त्री ? 'महाकाली' । कथंभूता ? 'कृतबोधितप्रजयतिमहा' बोधिताः—प्रतिबोधिताः प्रजा—लोका यैस्तादृशा ये यतयः—साधवस्तेषां कृतो—विहितो महः—उत्सवः पूजा वा यया सा तथा । कैः कृत्वा ? 'करैः' पाणिभिः करणभूतैः कृत्वा । यतीनां उत्सवं पूजां वा करोतीत्यर्थः । यदिवा उपलक्षितेति पदाध्याहारात् करैरुपलक्षितेति भिन्नमेव विशेषणम् । करैः कथंभूतैः ? 'धृतपविफलाक्षालीघण्टैः' पविः—

वज्रं फलं-पुष्पोत्तरकालभाविवस्तुरूपं अक्षाली-अक्षमाला घण्टा-वाद्यविशेषः, धृता-आधेयीकृताः पविफलाक्षालीघण्टा यैस्ते तथा । एतस्याः चत्वारः कराः पविप्रभृतीनि च चत्वारि वस्तूनि, तेनैकैकेन करेण एकैकं वस्तु धृतमित्यवसेयम् । करैः पुनः कथंभूतैः ? ' कजराजिभिः ' कजं-कमलं तद्वद् राजिभिः-राजनशीलैः । महाकाली किं कुर्वाणा ? ' दधती ' बिभ्राणा । कां कर्मतापन्नाम् ? 'निजतनुलताम्' स्वाङ्गयष्टिम् । कथंभूतां निजतनुलताम् ? ' अपरिक्षताम् ' अविध्वस्ताम् । अदूषितामित्यर्थः । कैः कृत्वा ? 'अर्त्याधिपङ्कजराजिभिः' अर्तिः-पीडा आधिः-मनोरोगः पङ्को-मलः जरा-स्थाविरम् आजिः-सङ्ग्रामः एतैः । पुनः कथंभूताम् ? ' कालीम् ' श्यामलाम् । पुनः कथंभूताम् ? 'अध्यासीनाम्' आरूढाम् । कं कर्मतापन्नम्? 'मर्त्याधिपम्' पुरुषप्रकाण्डं, नरवाहनामित्यर्थः ॥

अथ समासः—पविश्च फलं च अक्षाली च घण्टा च पवि० ' इतरेतरद्वन्द्वः ' । धृताः पविफलाक्षालीघण्टा यैस्ते धृतपवि० ' बहुव्रीहिः ' । तैर्धृतपवि० । बोधिताः प्रजा यैस्ते बोधितप्रजाः ' बहुव्रीहिः ' । बोधितप्रजाश्च ते यतयश्च बोधितप्रजयतयः ' कर्मधारयः ' । बोधितप्रजयतीनां महो बोधि० ' तत्पुरुषः ' । कृतो बोधितप्रजयतिमहो यया सा कृतबोधि० ' बहुव्रीहिः ' । अर्तिश्च आधिश्च पङ्कश्च जरा च आजिश्च अर्त्याधिपङ्कजराजयः ' इतरेतरद्वन्द्वः ' । तैरर्त्याधि० । तनुरेव लता तनुलता ' कर्मधारयः ' । निजस्य तनुलता निजतनु० ' तत्पुरुषः ' । यद्वा निजा चासौ तनुलता च निज० 'कर्मधारयः' । तां निज० । न परिक्षता अपरिक्षता ' तत्पुरुषः ' । तां अपरिक्षताम् । मर्त्यानां मर्त्येषु वा अधिपो मर्त्याधिपः 'तत्पुरुषः' । तं मर्त्या० । कात् जायत इति कजं ' तत्पुरुषः ' । कजवद् राजिनः कज० ' तत्पुरुषः ' । तैः कजराजिभिः ॥ इति काव्यार्थः ॥ ४ ॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीश्रेयांसजिनस्तुतेर्व्याख्या ॥ ११ ॥

सि० वृ०—धृतपवीति । महाकाली-महाकालीनाम्नी देवी प्रजयति-सर्वोत्कर्षेण वर्तत इत्यर्थः । प्रपूर्वक ' जि जये ' धातोः वर्तमाने कर्तरि परस्मैपदे प्रथमपुरुषैकवचनम् । अत्र ' प्रजयति ' इति क्रियापदम् । का कर्त्री ? । महाकाली । कथंभूता महाकाली ? । 'कृतबोधितप्रजयतिमहा' बोधिताः-प्रतिबोधिताः प्रजा-लोका यैस्ते बोधितप्रजयतयः तेषां कृतो-विहितो महः-उत्सवः पूजा वा यया सा कृत० । पुनः कथंभूता ? । उपलक्षितेत्यध्याहारः । कैः कृत्वा ? । करैः-हस्तैः । तथाच करैः उपलक्षिता इति देव्या भिन्नमेव विशेषणम् । कथंभूतैः करैः ? । 'धृतपविफलाक्षालीघण्टैः' पविः-वज्रं फलं-पुष्पोत्तरकालभाविवस्तुरूपं अक्षाली-जपमाला घण्टा-वाद्यविशेषः; पविश्च फलं च अक्षाली च घण्टा च पविफलाक्षालीघण्टाः ' इतरेतरद्वन्द्वः ', ततो धृता-गृहीता पविफलाक्षालीघण्टा यैस्ते तथा तैः तस्याश्चतुष्करत्वेन प्रतिकरमेकैकवस्तुधारणादिति ज्ञेयम् ।

" फलं हेतुसमुत्थे स्यात्, फलके व्युष्टिलाभयोः ।
जातीफलेऽपि कक्कोले, सस्यबाणाग्रयोरपि ॥ "

फलिन्यां तु फली प्राहुस्त्रिफलायां फले क्वचित् " इति विश्वः । " फलं फले धानबीजे, निष्पत्तौ भोगलाभयोः " इति केशवः । पुनः कथंभूतैः करैः ? । ' कजराजिभिः ' कात्–जलात् जायते इति कजं–कमलं तद्वद् राजन्तीत्येवंशीलाः कजराजिनः, तैः कजराजिभिः । महाकाली किं कुर्वाणा ? । दधती–बिभ्राणा । काम् ? । 'निजतनुलतां' तनुरेव लता तनुलता, निजा चासौ तनुलतेति ' कर्मधारयः ' । कथंभूतां निजतनुलताम् ? । ' अपरिक्षतां ' न परिक्षता अपरिक्षता तां, अदूषितां इत्यर्थः । कैः कृत्वा ? । ' अर्त्याधिपङ्कजराजिभिः ' अर्तिः–पीडा आधिः–मनोव्यथा पङ्को–मलः " अस्त्री पङ्कं पुमान् पाप्मा, पापं किल्बिषकल्मषं " इत्यमरः ( श्लो० २१० ), " पङ्कः कर्दमपापयोः " इति विश्वः, जरा–विस्रसा आजिः–संग्रामः, " समे क्ष्मांशे रणेऽप्याजिः " इत्यमरः ( श्लो० २१९८ ), एतैः अर्तिश्च आधिश्च पङ्कश्च जरा च आजिश्च अर्त्याधिपङ्कजराजयः तैः कृत्वा ' इतरेतरद्वन्द्वः । " पुंस्याधिर्मानसी व्यथा " इत्यमरः ( श्लो० ४१८ ) । पुनः कथंभूता ? । अध्यासीना–आरूढा । कम् ? । 'मर्त्याधिपं' मर्त्यानां मर्त्येषु वा अधिपो मर्त्याधिपः तं, पुरुषप्रकाण्डमित्यर्थः । 'अधेः शीङ् स्थास आधारः' ( सिद्ध० अ० २, पा० २, सू० २० ) इत्याधारस्य कर्मत्वम् । हरिणीच्छन्दः । " नसमरसलागः षड्भिर्वेदैर्हयैर्हरिणी मता " इति च तल्लक्षणम् ॥

॥ इति श्रीमहामहोपाध्यायश्रीभानुचन्द्रगणिशिष्य० श्रीश्रेयांसजिनस्तुतिवृत्तिः ॥ ११ ॥

सौ० वृ०—धृतपवीति । महाकालीनाम्नी देवी प्रजयति इत्यन्वयः । ' प्रजयति ' इति क्रियापदम् । का कर्त्री ? । ' महाकाली ' । 'प्रजयति ' प्रकर्षेण जयं प्राप्नोति । किंविशिष्टा महाकाली ? । ' उपलक्षिता ' ज्ञाता । उपलक्षिता इति पदं अध्याहार्यम् । कैः कृत्वा ? । ' करैः ' हस्तैः । किंविशिष्टैः ? । धृता–रक्षिताः पविः–वज्रं ( फलं– ) मातुलिङ्गादि अक्षाली–अक्षमाला घण्टा–वाद्यविशेषो यैस्ते तैः ' धृतपविफलाक्षालीघण्टैः ' । पुनः किंविशिष्टा महाकाली ? । ( कृता– ) निष्पादिता बोधिताः–प्रतिबोधिताः प्रजा–लोका यैः ते तादृशा ये यतयः तेषां महः–उत्सवः पूजा वा यया सा ' कृतबोधितप्रजयतिमहा ' । पुनः महाकाली किं कुर्वाणा ? । ' दधती ' धारयन्ती । कां कर्मतापन्नाम् ? । 'निजतनुलतां' स्वशरीरवल्लीम् । किंविशिष्टां निजतनुलताम् ? । ' कालीं ' श्यामाम् । पुनः किंवि० महाकाली ? । ' अपरिक्षता ' अपरिभुता । कैः ? । अर्तिः–पीडा आधिः–मानसी व्यथा पङ्को–मलः जरा–विस्रसा आजिः–संग्रामः तैः ' अर्त्याधिपङ्कजराजिभिः ' । पुनः किं० महाकाली ? । ' अध्यासीना ' आरूढा । कं कर्मतापन्नम् ? । ' मर्त्याधिपम् ' मानवप्रवरम् । नरवाहनामित्यर्थः । किंविशिष्टैः करैः ? । ' कजराजिभिः ' पद्मवद् राजमानैः । इति पदार्थः ॥

अथ समासः—पविश्च फलं च अक्षाली च घण्टा च पविफलाक्षालीघण्टाः, तैः धृतपविफलाक्षालीघण्टैः । बोधिताः प्रजा यैस्ते बोधितप्रजाः, बोधितप्रजाश्च ते यतयश्च बोधितप्रजायतयः, कृतः बोधितप्रजयतीनां महो यया सा कृतबोधितप्रजयतिमहा । अर्तिश्च आधिश्च पङ्कश्च जरा च आजिश्च मर्त्याधिपङ्कजराजयः तैः मर्त्याधिपङ्कजराजिभिः । तनुरेव लता तनुलता, निजा चासौ तनुलता च निजतनुलता, तां अधित्य–आश्रित्य आसीना–अध्यासीना । 'अधिशीङ्स्थासामाधारः कर्म स्यात्' इति कर्मणि द्वितीया । न परिक्षिता अपरिक्षिता, (तां अपरिक्षिताम्) । मर्त्यस्य अधिपो मर्त्याधिपः, तं मर्त्याधिपम् ।

१ ' अधिशीङस्थासां कर्म ' इति तु सारस्वते ( सू० ४२९ )

के-पानीये जायते इति कजानि, कजवद् राजन्ते इत्येवंशीलाः कजराजिनः, तैः कजराजिभिः । इति तुरीयवृत्तार्थः ॥४॥

श्रीश्रेयांसजिनेन्द्रस्य, स्तुतेरर्थः स्फुटीकृतः ।
सौभाग्यसागराख्येणा-ऽऽचार्येणार्यहितैषिणा ॥
॥ इत्येकादशजिनस्तुतिः ॥ ४ । ११ । ४४ ॥

दे० व्या०-धृतपवीति । महाकाली देवी प्रजयति-सर्वोत्कर्षेण वर्तते इत्यन्वयः । 'जि जये' धातुः । 'जयति' इति क्रियापदम् । का कर्त्री ? । महाकाली देवी । किंविशिष्टा महाकाली ? । उपलक्षिता इत्यध्याहारः । कैः ? । करैः । अन्यथा करैरित्यलग्नकं स्यात् । किंविशिष्टैः करैः ? । 'धृतपविफलाक्षालीघण्टैः' पविः-वज्रं फलं स्पष्टं अक्षाली-जपमालिका घण्टा प्रसिद्धा एतेषां पूर्वं 'द्वन्द्वः', ततो धृता-गृहीताः पविफलाक्षालीघण्टा यैः इति विग्रहः । पुनः किंविशिष्टैः ? । 'कजराजिभिः' कजं-कमलं तद्वद् राजन्ते इत्येवंशीलाः कजराजिनः तैः । पुनः किंविशिष्टा देवी ? । 'कृतबोधितप्रजयतिमहा' बोधिता-बोधिं प्रापिता प्रजा यैः ते बोधितप्रजाः ते च ते यतयश्चेति पूर्वं (कर्म०)समासः, कृतो बोधितप्रजयतीनां महः-उत्सवो ययेति 'तृतीयाबहुव्रीहिः'। पुनः कीदृशी ? । अध्यासीना-आरूढा । कम् ? । मर्त्याधिपं-पुरुषप्रकाण्डम् । अत्र अधेः 'शीङ्स्थासआधारे' इत्यासध्मा(?)-नुयोगे आधारस्य कर्मत्वम् । किं कुर्वती देवी ? । दधती-बिभ्रती । काम् ? । 'निजतनुलताम्' । तनुरेव लता तनुलता, निजा चासौ तनुलता च निजतनुलता, तां निजतनुलताम् । किंविशिष्टां निजतनुलताम् ? । अपरिक्षताम्-अदूषिताम् । कैः ? । 'अर्त्याधिपङ्कजराजिभिः' आर्तिः-पीडा आधिः-मानसी व्यथा पङ्कः-शरीरमलः जरा-वार्धक्यम् आजिः-सङ्ग्रामः एतेषां 'द्वन्द्वः' तैः । "स्यादाधिर्मानसीव्यथा" इत्यभिधानचिन्तामणिः (?) ॥ इति चतुर्थवृत्तार्थः । हरिणीच्छन्दः । "नसमरसलागः षड्वेदैर्हयैर्हरिणी मता" इति तल्लक्षणम् ॥ ४ ॥



## १२ श्रीवासुपूज्यजिनस्तुतयः

अथ श्रीवासुपूज्यवन्दनम्—

पूज्य ! श्रीवासुपूज्यावृजिन ! जिनपते ! नूतनादित्यकान्ते-
ऽमायासंसारवासावन ! वर ! तरसाली नवालानबाहो ! ।
आनम्रा त्रायतां श्रीप्रभव ! भवभयाद् बिभ्रती भक्तिभाजा-
मायासं सारवाऽसावनवरतरसालीनवाला नवाऽहो ! ॥ १ ॥

—स्रग्धरा ( ७,७,७ )

ज० वि०—पूज्य ! श्रीवासुपूज्येति । अहो श्रीवासुपूज्य ! श्रिया चतुस्त्रिंशदतिशयरूपयोपलक्षितो वासुपूज्यः श्रीवासुपूज्यः तत्सम्बोधनं अहो श्रीवासुपूज्य ! त्वया भक्तिभाजां—भक्तियुक्तानाम् आराधकानामितियावत् असौ—प्रत्यक्षलक्षा आली—श्रेणी तरसा—बलेन वेगेन वा भवभयात्—संसारभीतेः त्रायतां—रक्ष्यतामिति क्रियाकारकसम्बन्धः । अत्र 'त्रायताम्' इति क्रियापदम् । केन कर्त्रा ? 'त्वया' । का कर्मतापन्ना ? 'आली' । केषाम् ? 'भक्तिभाजाम्' । कस्मात् ? 'भवभयात्' । केन ? 'तरसा' । भक्तिभाजामाली कथंभूता ? 'असौ' । किं कुर्वती ? 'बिभ्रती' धारयन्ती । किं कर्मतापन्नम् ? 'आयासं' श्रमम् । अर्थात् जन्मजरामरणलक्षणक्लेशम् । पुनः कथंभूता ? 'आनम्रा' आनमनशीला । पुनः कथं० ? 'सारवा' सशब्दा । मधुरस्वरेण स्तुतिं कुर्वन्तीत्यर्थः । पुनः कथं० ? 'अनवरतरसालीनवाला' अनवरतं—निरन्तरं रसायां—पृथिव्याम् आलीना—आश्लिष्टा वालाः—केशा यस्याः सा तथा । एतावता आनम्रायाः सत्या एतस्याः केशपाशो भुवि लुठति । एतेन भक्तेरतिशयः समसूचि । पुनः कथं० ? 'नवा' अभिनवा-कतिपयदिनप्राप्तबोधिः अस्मदादिवत् । शेषाणि सर्वाण्यपि श्रीवासुपूज्यजिनेश्वरस्य सम्बोधनानि । तद्व्याख्या त्वेवम्—'हे पूज्य !' अर्चनीय ! । हे 'अवृजिन !' वृजिनं—पापं तेन रहित ! । हे 'जिनपते !' जिनेश्वर ! । हे 'नूतनादित्यकान्ते' ! नूतनो—नवस्तत्कालमुदयगिरिशृङ्गमाश्रित एतावता रक्तवर्ण एवंविधो य आदित्यो—रविस्तद्वत् कान्तिः—प्रभा यस्य स तथा । रक्तद्युतिरित्यर्थः । "पउमाभवासुपुज्जा रत्ता" इत्यागमात् ( आवश्यकनिर्युक्तौ, गा० ३७६ ) । हे 'अमाय !' मायारहित ! । हे 'असंसारवासावन !' संसारवासं—भवावस्थानं अवति—रक्षति स्वीकरोतीतियावत् स संसारवासावनः, तादृशो न भवति तत्सम्बो० हे असंसार० । हे 'वर !' प्रधान ! । हे 'नवालानबाहो' ! नवो—नवीनो य आलानः—करिबन्धनस्तम्भः तद्वद् बाहू—भुजौ यस्य स तथा, प्रबलप्रलम्बबाहुरित्यर्थः, तत्सम्बो० हे नवा० । हे 'श्रीप्रभव !' सम्पदुत्पत्तिस्थानक ! । अत्र नवेत्यत्र बवयोरैक्यम् ॥

---

१ 'भवत्रयात्' इत्यपि पाठः समीचीनः । २ पद्माभवासुपूज्यौ रक्तौ ।

अथ समासः—श्रियोपलक्षितो वासुपूज्यः श्रीवासुपूज्यः 'तत्पुरुषः'। तत्सम्बो० हे श्रीवा०। न विद्यते वृजिनं यस्य सोऽवृजिनः 'बहुव्रीहिः'। तत्सम्बो० हे अवृजिन!। जिनानां पतिर्जिनपतिः 'तत्पुरुषः'। तत्सम्बो० हे जिन०। नूतनश्चासावादित्यश्च नूत० 'कर्मधारयः'। नूतनादित्यस्येव कान्तिर्यस्य स नूत० 'बहुव्रीहिः'। तत्सम्बो० हे नूत०। न विद्यते माया यस्य सोऽमायः 'बहुव्रीहिः'। तत्सं० हे अमाय!। संसारे वासः संसारवासः 'तत्पुरुषः'। संसारवासमवतीति संसा० 'तत्पुरुषः'। न संसारवासावनः असंसा० 'तत्पुरुषः'। तत्सम्बो० हे असं०। नवश्चासावालानश्च नवालानः 'कर्मधारयः'। नवालानवद् बाहू यस्य स नवा० 'बहुव्रीहिः'। तत्सम्बो० हे नवा०। श्रियः प्रभवो यस्मात् स श्रीप्रभवः 'बहुव्रीहिः'। तत्सम्बो० हे श्रीप्रभव!। भवस्य भयं भवभयं 'तत्पुरुषः'। तस्मात् भव०। भक्तिं भजन्तीति भक्तिभाजः 'तत्पुरुषः'। तेषां भक्ति०। सहारवेण वर्तते या सा सारवा 'तत्पुरुषः'। रसाया-मालीना रसालीना 'तत्पुरुषः'। रसालीना वाला यस्याः सा रसा० 'बहु०'। अनवरतं रसालीनवाला अनवरतर० 'तत्पुरुषः'। तत्सम्बो०॥ इति काव्यार्थः॥ १॥

सि० वृ०—पूज्य! श्रीवासुपूज्येति। अहो इत्यामन्त्रणे। वसुपूज्यस्य अपत्यं वासुपूज्यः, वसवो-देवविशेषाः तेषां पूज्यो वसुपूज्यः स एव वासुपूज्यः। प्रज्ञाद्यण्। गर्भस्थेऽस्मिन् वसूनि—रत्नानि तैः अभीक्ष्णं वासवो राजकुलं पूजितवानिति वा वासुपूज्यः तस्य संबोधनं हे वासुपूज्य!। त्वया भक्तिभाजां—भक्तियुक्तानां असौ—प्रत्यक्षा आली—श्रेणिः तरसा—बलेन वेगेन वा भवभयात्—संसारभीतेः—सकाशात् त्रायतां—रक्ष्यता-मित्यर्थः। 'त्रैङ्' धातोः कर्मणि आत्मनेपदे प्रथमपुरुषैकवचनं ताम्। 'सन्ध्यक्षराणामा' ( सा० सू० ८०३ ) इत्यात्वम्। 'यक् चतुर्षु' ( सा० सू० ११६९ ) इति यक्। तथाच 'त्रायताम्' इति सिद्धम्। अत्र 'त्रायताम्' इति क्रियापदम्। केन कर्त्रा?। त्वया। का कर्मतापन्ना?। आली। केषाम्?। 'भक्तिभा-जाम्'। भक्तिः—पूज्येष्वनुरागः श्रद्धा वा तां भजन्ति ये ते भक्तिभाजः तेषाम्। "श्रद्धारचनयोर्भक्तिः" इत्यमरः (?)। कस्मात्?। 'भवभयात्' भवः—संसारः तस्य भयं—भीतिः तस्मात्। केन?। तरसा। "तरसा बले च वेगे च" इति विश्वः। कथंभूता आली?। असौ। अदस्शब्दस्य असौ रूपम्। अदसः 'त्यादेष्टः०' ( सा० सू० १७९ ) इत्यत्वे कृते अदो, 'दस्यः मः' ( सा० सू० २५० ) इति दकारस्य सत्वे, 'सेरौ' ( सा० सू० २०९ ) इति सेरौकारादेशे च कृते 'असौ' इति सिद्धम्। किं कुर्वती?। बिभ्रती—धारयन्ती। किम्?। आयासं—श्रमम्। अनवरतसंसारपरिभ्रमणोत्पन्नखेदं बिभ्रतीति फलितार्थः। पुनः कथंभूता?। आनम्रा—आनमनशीला। पुनः कथंभूता?। सारवा-सशब्दा, मधुरस्वरेण स्तुतिं कुर्वतीत्यर्थः। पुनः कथंभूता?। 'अनवरतरसालीनवाला' अनवरतं—निरन्तरं रसाया—पृथिव्यां आलीना—आश्लिष्टाः वालाः—केशा यस्याः सा। नमनसमये केशपाशस्य भुवि विलुठनेन तस्या भक्त्यतिशयो ध्वनितः। पुनः कथंभूता?। नवा—कतिपयदिनजाताभिः। अवशिष्टानि सर्वाणि श्रीवासुपूज्यस्य संबोधनपदानि। तेषां व्याख्या त्वेवम्—

हे पूज्य !—हे पूजार्ह !। 'ऋहलोर्ण्यत्' (पा० अ० ३, पा० १, सू० १२४) इति ण्यत्। 'चजोः कुघिण्यतोः' (पा० अ० ७, पा० ३, सू० ५२) इति कुत्वप्राप्तौ 'त्यजिपूज्योश्च' न कुत्वं इति निषेधात् कुत्वाभावः । हे 'अवृजिन !' नास्ति वृजिनं—पापं यस्य सः अवृजिनः तस्य संबोधनं हे अवृजिन ! आश्रवद्वाराणां निरोधात्। हे 'जिनपते!' जिनानां पतिः जिनपतिः तस्य० संबो०। हे 'नूतनादित्यकान्ते'! नूतनः—तत्कालमुदयागिरिशृङ्गमारूढः, उद्गमन्नित्यर्थः, एतावता रक्तवर्णो य आदित्यः—सूर्यः तद्वत् कान्तिः—छविर्यस्य स तथा तस्य संबो० हे नूतनादित्य० । रक्तद्युतिरित्यर्थः । तथाचोक्तं—"रक्तौ च पद्मप्रभवासुपूज्यौ" इति हैम्यां नाममालायाम् । हे 'अमाय'! न विद्यते माया—निकृतिर्यस्य स तथा तस्य संबोधनं हे अमाय ! । हे 'असंसारवासावन !' संसारे वसनं—वासो रुचा अवस्थानं अवति—रक्षतीति संसारवासावनः, तादृशो न भवति सः असंसारवासावनः तस्य संबो० हे असंसार० । हे वर !—प्रधान !।

"वरोऽभीष्टे देवतादे—र्वरो जामातृशृङ्गयोः ।
श्रेष्ठेऽन्यवत्परिवृतौ, वरं कश्मीरजे मतम् ॥"

इति विश्वः । हे 'नवालानबाहो !' नवो—नवीनः य आलानः—करिबन्धनस्तम्भः तद्वद् बाहू—भुजौ यस्य स तथा तस्य सं० हे नवालान० । "तोत्रं वेणुकमालानं, बन्धस्तम्भेऽथ शृङ्खले" इत्यमरः (श्लो० १५४९)। हे 'श्रीप्रभव !' श्रियो—लक्ष्म्याः प्रभवः—उत्पत्तिर्यस्मात् स तथा तस्य सं० हे श्रीप्रभव ! । अत्र नवेत्यत्र बवयोरैक्यम् ॥ १ ॥

सौ० वृ०—यः श्रेयांसो भवति स वासुपूज्यः-देवपूज्यो भवति । अनेन संबन्धेनायातस्य द्वादश-श्रीवासुपूज्यजिनस्तुतिव्याख्यानं व्याख्यायते ।

पूज्य ! श्रीवासुपूज्येति । हे 'पूज्य !' हे अर्चनीय ! श्रिया चतुस्त्रिंशदतिशयलक्ष्म्या युक्त ! वसुपूज्य-नृपनन्दन !-हे 'श्रीवासुपूज्य' ! हे 'अवृजिन!' हे पापरहित ! हे 'जिनपते !' जिनस्वामिन्! नूतनः-नवीन उद्गत्वरो य आदित्यः-सूर्यः तद्वत् कान्तिः-प्रभा यस्य स नूतनादित्यकान्तिः, तस्य सं० हे 'नूतनादित्य-कान्ते!' उपमा 'पंउमप्पहवासुपुज्जा रत्ता' इति आगमवचनात् । हे 'अमाय!' निर्दम्भ ! । हे असंसार-वास! । यद्वा ('अमायसंसारवास!') मायासंसारवासरहित!।हे 'अवनवर !' रक्षकप्रधान ! । नवं-नवीनं आलानं-हस्तिबन्धस्तम्भः युगं वा तद्वद् बाहू-भुजौ यस्य स नवालानबाहुः, तस्य संबो० हे 'नवाला-नबाहो!'। हे 'श्रीप्रभव!' सर्वलक्ष्म्युत्पत्तिस्थान! । त्वया असौ-प्रत्यक्षदृश्यमाना भक्तिभाजां-भक्तिमतां प्राणिनाम् आली-श्रेणिर्भवभयात्-संसारभीतेः सकाशात् त्रायताम् इत्यन्वयः । 'त्रायताम्' इति क्रियापदम् । केन कर्त्रा ?। 'त्वया' भवता । 'त्रायतां' रक्षताम् । का कर्मतापन्ना ?। 'आली' श्रेणिः । केषाम् ?। 'भक्तिभाजाम्'। कस्मात् ?। 'भवभयात्' । कथम् ?। 'तरसा' बलेन वेगेन वा । किं-विशिष्टा भक्तिभाजां आली ? । अनवरतं-निरन्तरं रसायां-पृथिव्यां आलीना-लुठिता वालाः-केशा यस्याः सा 'अनवरतरसालीनवाला' भगवत्पादप्रणतत्वात् । अत्र यमकत्वात् बवयोरैक्यम् । पुनः किंविशिष्टा भक्तिभाजां आली ?। 'नवा' प्रत्यग्रा अस्मदादिवत् शीघ्रबोधप्राप्ता । (पुनः किं० आली ?। 'आनम्रा' कृतप्रणामा । पुनः किं० आली ?। 'आयासं बिभ्रती' परिश्रमं दधाना)। 'अहो' इत्याश्चर्ये कोमलामन्त्रणे वा । पुनः किं० भक्तिभाजां आली ? । आरवः-शब्दस्तेन सहिता 'सारवा' सशब्दा स्तुतिपरा इत्यर्थः । यद्वा श्रीः-लक्ष्मीः तस्याः प्रभवः-नन्दनः कामस्तस्माद् भवं-उत्पन्नं यद् भयं तस्मात् श्रीप्रभवभवभयात् त्रायताम् । इति पदार्थः ॥

---

१ पद्मप्रभवासुपूज्यौ रक्तौ ।

अथ समासः—वसुपूज्यस्यापत्यं वासुपूज्यः, श्रिया युक्तो वासुपूज्यः श्रीवासुपूज्यः, तस्य सं० हे श्रीवासुपूज्य !। नास्ति वृजिनं-पापं यस्य सः अवृजिनः, तस्य सं० हे अवृजिन !। जिनानां-केवलिनां पतिः जिनपतिः, तस्य सं० हे जिनपते !। नूतनश्चासौ आदित्यश्च नूतनादित्यः, नूतनादित्यवत् कान्तिः यस्य स नूतनादित्यकान्तिः, तस्य सं० हे नूतनादित्यकान्ते !। नास्ति माया यस्य सः अमायः, तस्य सं० हे अमाय !। संसरणं-भ्रमणं संसारः, संसारस्य वासः संसारवासः, न विद्यते संसारवासो यस्य सः असंसारवासः, तस्य सं० हे असंसारवास !। यद्वा मायासंसारवासौ न विद्येते यस्य सः अमायासंसारवासः, तस्य सं० हे अमायासंसारवास !। अवन्ति ते अवनाः, अवनेषु वरः अवनवरः, तस्य सं० हे अवनवर !। "तरसाऽव्ययं बले वेगे" इति कोशः। नवश्चासौ आलानश्च नवालानः, नवालानवद् बाहू यस्य स नवालानबाहुः, तस्य सं० हे नवालानबाहो !। नमनशीला नम्रा, आ-समन्तात् नम्रा आनम्रा। श्रीणां प्रभवः श्रीप्रभवः, तस्य सं० हे श्रीप्रभव !। भवस्य भयं भवभयं, तस्मात् भवभयात्। बिभर्ति सा बिभ्रतिः(?)। भक्तिं भजन्ति इति भक्तिभाजः, तेषां भक्तिभाजाम्। आरवेण सहिता सारवा। रसायां आलीना रसालीना, अनवरतं-निरन्तरं रसालीना आवली यस्याः सा अनवरतरसालीनवाली। यद्वा श्रियाः प्रभवः-पुत्रः श्रीप्रभवः, श्रीप्रभवात् भवं श्रीप्रभवभवं; श्रीप्रभवभवं च तत् भयं च श्रीप्रभवभवभयं, तस्मात् श्रीप्रभवभवभयात्-कामरागजनितभयात्। त्रायताम् इति कर्मोक्तिः। कर्मोक्तौ तृतीयान्तः कर्ता प्रथमान्तं कर्म क्रियायामात्मनेपदं भवतीति कर्मोक्तिलक्षणम्। वक्रोक्तिः अपरनाम। अस्यां स्तुतौ स्रग्धराच्छन्दः॥ इति वृत्तार्थः॥ १॥

दे० व्या०-पूज्य ! श्रीवासुपूज्येति। अहो इत्याश्चर्ये। हे श्रीवासुपूज्य ! त्वया भक्तिभाजां-सपर्याकृतां आली-राजिः श्रीप्रभवभवभयात् त्रायतां-रक्षतां इत्यन्वयः। 'त्रा रक्षणे' इति धातुः। 'त्रायतां' इति क्रियापदम्। केन कर्त्रा ?। त्वया। का कर्मतापन्ना ?। आली। केषाम् ?। 'भक्तिभाजाम्' भक्तिं सेवां भजन्तीति भक्तिभाजः तेषाम्। कस्मात् ?। 'श्रीप्रभवभवभयात्' श्रीप्रभवात्-कामाद् भवं-जातं यद् भयं-साध्वसं तस्मात्। यदा तु श्रीप्रभव ! इति पृथग् जिनामन्त्रणं तदा श्रियाः-लक्ष्म्याः प्रकर्षेण भवः-उत्पत्तिर्यस्मात् स तथेत्यर्थः बोध्यः। किंविशिष्टा आली ?। आनम्रा-कृतप्रणामा। पुनः किंविशिष्टा ?। 'सारवा' आरवेण-शब्देन सह वर्तमाना, प्रारब्धस्तुतित्वात्। पुनः किंविशिष्टा ?। असौ-प्रत्यक्षदृश्या। पुनः किंविशिष्टा ?। 'अनवरतरसालीनवाला' अनवरतं-निरन्तरं रसायां-पृथिव्यां लीना-लग्ना बालाः-केशा यस्याः सा तथा। पुनः किंविशिष्टा ?। नवा-कतिपयदिनप्राप्तबोधिः। पुनः किंविशिष्टा ?। बिभ्रती-दधाना। किम् ?। आयासं-परिश्रमम्। 'पूज्य !' इति। पूजार्हः-पूज्यः, सर्वेभ्य उत्कृष्टत्वात्। 'अवृजिन !' इति। नास्ति वृजिनं-पापं यस्य स तस्यामन्त्रणम्, आश्रवद्वाराणां निरोधात्। 'जिनपते !' इति। जिनानां-सामान्यकेवलिनां पतिः-प्रभुः यः स तस्यामन्त्रणम्, तीर्थप्रवर्तकत्वात्। 'नूतनादित्यकान्ते !' इति। नूतन-उद्गच्छन् य आदित्यः-सूर्यः तद्वत् कान्तिः-प्रभा यस्य स तस्यामन्त्रणम्, रक्तवर्णशरीरत्वात्। 'अमाय !' इति। नास्ति माया-निकृतिः यस्य स तस्यामन्त्रणम्, कषायादीनां सर्वथोच्छिन्नत्वात्। 'असंसारवास !' इति। नास्ति संसारे वासो-वसनं यस्य स, तस्यामन्त्रणम्, अपुनर्भवावस्थितत्वात्। यथा (दा) अमायासंसारवासेत्येकमेव पदं तथा (दा) च नास्ति माया संसारे वासो यस्येत्यर्थो बोध्यः। 'अवन !' इति। अवतीत्यवनः तस्यामन्त्रणम्, षड्जीवनिकायाभयदायकत्वात्। अन्ये तु मायासंसारवासाभ्यां सकाशात् अवतीत्येकमेव पदम्। हे वर !-प्रधान !। केन ?। तरसा-बलेन वेगेन वा। 'नवालानबाहो !' इति। नवं-प्रत्यग्रं यदालानं-गजबन्धनस्तम्भः तद्वद् बाहुः-भुजो (बाहू-भुजौ) यस्य स तस्यामन्त्रणम्। एतानि सर्वाणि भगवतः सम्बोधनपदानि॥ इति प्रथमवृत्तार्थः॥ १॥



जिनराज्यै प्रार्थना—

पूतो यत्पाद^१पांसुः शिरसि सुरततेराचरच्चूर्णशोभां
या तापत्रा^२ऽसमानोऽप्रतिमदमवतीहारता राजयन्ती ।
कीर्तेः कान्त्या ततिः सा प्रविकिरतुतरां जैनराजी रजस् ते
यातापत्त्रासमानाऽप्रतिमदमवती हारतारा जयन्ती ॥ २ ॥

—स्रग्०

ज० वि०—पूत इति । हे भव्य ! प्राणिन् ! सा जैनराजी—जिनराजसम्बन्धिनी जिनराजानामियं जैनराजीति व्युत्पत्तेः ततिः—श्रेणी ते—तव रजः—कर्म प्रविकिरतुतराम्—अतिशयेन निरस्यत्विति क्रियाकारकसम्बन्धः । अत्र 'प्रविकिरतुतराम्' इति क्रियापदम् । का कर्त्री ? 'ततिः' । किंसम्बन्धिनी ? 'जैनराजी' । किं कर्मतापन्नम् ? 'रजः' । कस्य ? 'ते' । कुत्र ? 'इह' । सेति तच्छब्दसाहचर्याद् यच्छब्दघटनामाह—यत्पादपांसुः—यस्याश्चरणरेणुः सुरततेः—देवानां पङ्क्तेः शिरसि—मस्तके चूर्णशोभां—वासक्षोदश्रियं आचरत्—कृतवान् प्राप्तवानित्यर्थः । सुरततेर्नमन्त्याः भगवत्पादरजः शिरसि लग्नं सद् वासक्षोद इव प्रतिभासत इति हृदयम् । अत्रापि 'आचरत्' इति क्रियापदम् । कः कर्ता ? 'यत्पादपांसुः' । कां कर्मतापन्नाम् ? 'चूर्णशोभाम्' । कस्मिन् ? 'शिरसि' । कस्याः ? 'सुरततेः' । यतः यत्पादपांसुः कथंभूतः ? 'पूतः' पवित्रः । चूर्णं तावत् पवित्रं भवति अयमपि च पवित्रोऽस्तीति भावः । पुनर्यच्छब्दघटनामाह—या जैनराजी ततिः इह—अत्र जगति अप्रतिमदं—मदेन रहितं मदस्योपलक्षणत्वान्मददोषलक्षितैर्मदनादिभिरपि रहितं साधुजनमित्यर्थः अवति—कर्मशत्रुभ्यो रक्षति, मोक्षं प्रापयतीत्यर्थः । अत्रापि च 'अवति' इति क्रियापदम् । का कर्त्री ? 'या' । कं कर्मतापन्नम् ? 'अप्रतिमदम्' । कुत्र ? 'इह' । या किं कुर्वती सती ? 'राजयन्ती' शोभां लम्भयन्ती । भव्यानित्यर्थः सामर्थ्याद् गम्यते । पुनः किं कुर्वती ? 'जयन्ती' न्यक्कुर्वन्ती । काः कर्मतापन्नाः ? 'हारताराः' हाराः—मुक्तावल्यः ताराः—नक्षत्राणि । कया करणभूतया कृत्वा ? 'कान्त्या' प्रभया । कस्याः ? 'कीर्तेः' यशसः । अथवा कीर्तेः कान्त्या हेतुभूतया । 'हारतारा' हारोज्ज्वला । 'जयन्ती' पराभवन्ती । विपक्षानित्यध्याहारः । या कथंभूता ? 'तापत्रा' तापात् त्रायत इति तापत्रा । पुनः कथं० ? 'असमाना' अनन्यसदृशी । पुनः कथं० ? 'अरता' विरक्ता । रागरहितेत्यर्थः । यद्वा रतं—सम्भोगस्तन्न विद्यते यस्याः सा तथा । पुनः कथं० ? 'यातापत्त्रासमाना' आपद्—विपत् त्रासस्तु आकस्मिकं भयं मानः—अहङ्कारः, ततो याता—गता आपत्त्रासमाना यस्याः सा तथा । पुनः कथं० ? 'अप्रतिमदमवती' अप्रतिमः—अनन्यसदृशो यो दम—उपशमः स यस्या अस्तीति अप्रतिमदमवती ॥

१ 'दपांशुः' इति पाठान्तरम् । २ 'ना प्रति०' इत्यपि पाठः ।

**अथ समासः**—यस्याः पादौ यत्पादौ 'तत्पुरुषः'। यत्पादयोः पांसुर्यत्पाद० 'तत्पुरुषः' सुराणां ततिः सुरततिः 'तत्पुरुषः'। तस्याः सुर०। चूर्णस्य शोभा चूर्णशोभा 'तत्पुरुषः'। तां चूर्ण०। तापात् त्रायत इति तापत्रा 'तत्पुरुषः'। न समाना असमाना 'तत्पुरुषः'। न विद्यते प्रतिमदो यस्याऽसौ अप्रतिमदः 'बहुव्रीहिः'। तं अप्रतिमदम्। न रता अरता 'तत्पुरुषः'। यद्वा न विद्यते रतं यस्याः सा अरता 'बहुव्रीहिः'। आपच्च त्रासश्च मानश्च आपत्रासमानाः 'इतरेतरद्वन्द्वः'। याता आपत्रासमाना यस्याः सा यातापः० बहुव्रीहिः। न विद्यते प्रतिमो यस्य सोऽप्रतिमः 'बहुव्रीहिः'। अप्रतिमश्चासौ दमश्च अप्रतिमदमः 'कर्मधारयः'। अप्रतिमदमोऽस्या अस्तीति अप्रतिमदमवती 'मान्तोपधाद् वत्विनौ' (सा० सू० ६२४) इति वतुप्रत्ययः। हाराश्च ताराश्च हारताराः 'इतरेतरद्वन्द्वः'। ता हारताराः। अथवा हारवत् तारा हारताराः 'तत्पुरुषः' ॥ इति काव्यार्थः ॥२॥

**सि० वृ०—पूत इति**। हे भव्य! प्राणिन्! सा जिनराजानामियं जैनराजी जिनराजसम्बन्धिनीत्यर्थः' ततिः—श्रेणिः ते—तव रजः—कर्म प्रविकिरतुतरां—अतिशयेन निरस्यत्वित्यर्थः। प्रपूर्वक 'कृ विक्षेपे' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप्। 'अप् कर्तरि' (सा० सू० ६९१) इत्यप्। 'ऋत इरः' (सा० सू० ८२०) इतीर्। 'स्वरहीनं०' (सा० सू० ३६)। तथाच 'प्रविकिरतु' इति सिद्धम्। अत्र 'प्रविकिरतुतरा' इति क्रियापदम्। का कर्त्री?। ततिः। किंसम्बन्धिनी। जैनराजी। किं कर्मतापन्नम्?। रजः। "रजः स्यादार्तवे शुभे। रजः परागे रेणौ च रजं च परिकीर्तितं" इति विश्वः। "रजोऽयं रजसा सार्धं, स्त्रीपुष्पगुणधूलिषु" इति अजयः। कस्य?। ते। षष्ठ्येकवचनमिदम्। कुत्र?। इह। सेति तच्छब्दसाहचर्याद् यच्छब्दघटनामाह—यत्पादपांसुः—यस्याश्चरण-रेणुः सुरततेः—देवानां पङ्क्तेः शिरसि—मस्तके चूर्णशोभां—वासक्षोदश्रियं आचरत्—प्राप्तवानित्यर्थः। सुरततेर्नमन्त्याः भगवत्पादरजः शिरसि लग्नं सद् वासक्षोद इव प्रतिभासत इति भावः। 'चर गतिभक्षणयोः' इति धातोर्लङि अनद्यतने कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं दिप्। 'दिबादावट्' (सा० सू० ७०७), 'अप्०' (सा० सू० ६९१), 'वावसाने' (सा० सू० २४०) दस्य तः। तथाच 'आचरत्' इति क्रियापदम्। कः कर्ता?। यत्पादपांसुः। "रेणुर्द्वयोः स्त्रियां धूलिः, पांसुर्ना न द्वयो रजः" इत्यमरः (श्लो० १६६४)। का कर्मतापन्नाम्?। चूर्णशोभाम्। कस्मिन्?। शिरसि। कस्याः?। 'सुरततेः' सुराणां ततिः सुरततिः तस्याः सुरततेः 'तत्पुरुषः'। यतः यत्पादपांसुः कथंभूतः?। पूतः—पवित्रः। चूर्णं तावत् पूतं—पवित्रं भवति अयमपि च विशेषोऽस्तीति भावः। पुनर्यच्छब्दघटनामाह—या जैनराजी ततिः इह—अत्र जगति अप्रतिमदं—मदेन रहितं, मदस्योपलक्षणत्वात् मदोपलक्षितैर्मदनादिभिः रहितं साधुजनमित्यर्थः, अवति—कर्मशत्रुभ्यो रक्षति, मोक्षं प्रापयतीत्यर्थः। 'अव रक्षणे' धातोर्वर्तमाने कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तिप्। 'अप् कर्तरि' (सा० सू० ६९१) इत्यप्। 'स्वरहीनं०' (सा० सू० ३६)। तथाच 'अवति' इति सिद्धम्। अत्रापि 'अवति' इति क्रियापदम्। का कर्त्री?। या। कं कर्मतापन्नम्?। अप्रतिमदम्। कुत्र?। इह। या किं कुर्वती सती?। राजयन्ती—शोभां लम्भयन्ती। भव्यानित्यर्थसामर्थ्याद्

गम्यते । पुनः किं कुर्वती सती ? । जयन्ती–न्यत्कुर्वन्ती । काः ? । 'हारताराः' हाराः–मुक्तावल्यः ताराः–नक्षत्राणि, हाराश्च ताराश्चेति 'द्वन्द्वः' ताः । कया करणभूतया कृत्वा ? । कान्त्या–प्रभया । कस्याः ? । कीर्तेः–यशसः । अथवा कीर्तेः कान्त्या हेतुभूतया हारतारा–हारोज्ज्वला जयन्ती–पराभवन्ती । विपक्षानित्यध्याहारः । या कथंभूता ? । 'तापत्रा' तापात् त्रायत इति तापत्रा । पुनः कथंभूता ? । 'असमाना' नास्ति समानः–सदृशो यस्याः सा असमाना । पुनः कथंभूता ? । 'अरता' नास्ति रतं–सुरतादिकं सुखं यस्याः सा तथा, रागरहिता विरक्तेतियावत् । पुनः कथंभूता ? । 'यातापत्रासमाना' आपद्–विपत् त्रासः–आकस्मिकं भयं मानः–अभिमानः, आपच्च त्रासश्च मानश्च आपत्रासमानाः 'इतरेतरद्वन्द्वः', ततो याता–गता आपत्रासमाना यस्याः सा तथा । पुनः कथंभूता ? । 'अप्रतिमदमवती' अप्रतिमः–अनन्यसदृशो यो दमः–इन्द्रियनियन्त्रणं उपशमो वा यस्या अस्तीति अप्रतिमदमवती ॥ २ ॥

**सौ० वृ०—पूत इति । सा जैनराजी ततिः ते-तव रजः-पापं इह-संसारे प्रविकिरतुतरामित्यन्वयः । 'प्रविकिरतुतराम्' इति क्रियापदम् । का कर्त्री ? । 'ततिः' श्रेणिः । 'प्रविकिरतुतरां' अतिशयेन विक्षिपतु-इतस्ततो नाशं प्राप्नुयात् । किं कर्मतापन्नम् ? । 'रजः' बध्यमानः कर्ममलः पापं वा । कस्य ? । 'ते' तव । किंविशिष्टा ततिः ? । 'जैनराजी' जिनराजसंबन्धिनीत्यर्थः । पुनः किंविशिष्टा ततिः ? । 'सा' प्रसिद्धा । सा का ? । यत्पादपांशुः-यच्चरणरेणुः सुरततेः-सुरसमूहस्य शिरसि-मस्तके चूर्णशोभां आचरत इत्यन्वयः । 'आचरत' इति क्रियापदम् । कः कर्ता ? । 'यत्पादपांशुः' । 'आचरत्' अधारयत् । कां कर्मतापन्नाम् ? । 'चूर्णशोभां' वासक्षोदक्षेपशोभाम् । कस्मिन् ? । 'शिरसि' मस्तके । कस्याः ? । 'सुरततेः' देवश्रेण्याः । किंविशिष्टो यत्पादपांशुः ? । 'पूतः' पवित्रः । किंविशिष्टा जैनराजी ? । तापात्-संसारसंतापात् त्रायते-रक्षति इति 'तापत्रा' । पुनः किं० जैनराजी ? । 'असमाना' अनन्यसाधारणा । पुनः किं कुर्वती जैनराजी ? । 'अवती' रक्षती । कं कर्मतापन्नम् ? । 'अप्रतिमदं' साधुजनमित्यर्थः । पुनः किं० जैनराजी ? । 'अरता' अकामा । पुनः किं० जैनराजी ? । 'राजयन्ती' शोभमाना । कया ? । 'कान्त्या' प्रभया । कस्याः ? । 'कीर्तेः' यशसः । पुनः किं० जैनराजी ? । याता-गता आपद्-विपत् त्रासं-आकस्मिकं भयं मानः-अहङ्कारो यस्याः सा 'यातापत्रासमाना' । पुनः किं० जैनराजी ? । अप्रतिमः-अनुपमो दमः-इन्द्रियजयो यस्याः सा 'अप्रतिमदमवती' । पुनः किं० जैनराजी ? । 'जयन्ती' जित्वरशीला । काः कर्मतापन्नाः ? । हारो-निर्मलमौक्तिकस्रग्रूपः तारा-नक्षत्रश्रेणिः ता हारतारा निष्कलङ्कः नैर्मलत्वात् (?) । इति पदार्थः ॥**

**अथ समासः—यस्य पादौ यत्पादौ, यत्पादयोः पांशुः यत्पादपांशुः । सुराणां ततिः सुरततिः, तस्याः सुरततेः । चूर्णस्य शोभा चूर्णशोभा, तां चूर्णशोभाम् । या इति प्रत्यक्षदृश्यमाना ततिविशेषणम् । तापात् त्रायते तापत्रा । न विद्यते समानः-सदृशो यस्याः सा असमाना । अप्रतिमं अभयं (?) ददातीति, अप्रतिमदः, तं अप्रतिमदम् । यद्वा नास्ति कं प्रति मदो यस्य सः अप्रतिमदः, तं अप्रतिमदम् । न विद्यते रतं सुरतं यस्याः सा अरता । जिनानां राजा इति जिनराजः, जिनराजस्य इयं जैनराजी । आपच्च त्रासश्च मानश्च आपत्रासमानाः, याता-गता आपत्रासमाना यस्याः सा यातापत्रासमाना । न प्रतिमः अप्रतिमः, अप्रतिमश्चासौ दमश्च अप्रतिमदमः, अप्रतिमदमो विद्यते यस्याः सा अप्रतिमदमवती । हारवत् तारा-उज्ज्वला हारतारा, यद्वा हाराश्च ताराश्च हारताराः, ता हारताराः । एतादृशी जैनराजी ततिः ते-तव कर्मरजः अतिशयेन क्षिपतुतराम् ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥**

दे० व्या०-पूत इति । सा जैनराजी ततिः ते-तव रजः-कर्म नितरां-अतिशयेन प्रविकिरतु( तरां )-विक्षिपतु इत्यन्वयः । 'कॄ विक्षेपे' धातुः । 'प्रविकिरतु(तरां)' इति क्रियापदम् । का कर्त्री ? । ततिः । किं कर्मतापन्नम् ? । रजः । कस्य ? । ते-तव । यत्तदोर्नित्याभिसम्बन्धाद् या इह-अस्मिन् लोके तापत्रा-ज्वरच्छेत्री असमाना-अनन्यसदृशी गुणैरिति शेषः । प्रतिमदं-गतदर्पं अर्थात् साधुजनम् अवति-रक्षति । 'अवति' इति क्रियापदम् । का कर्त्री ? । या । कं कर्मतापन्नम् ? । प्रतिमदम् । यत्पादपांशुः सुरततेः शिरसि चूर्णशोभां आचरत्-प्राप्तवान् । 'चर गतिभक्षणयोः' इति धातुः । 'आचरत्' इति क्रियापदम् । कः कर्ता ? । यत्पादपांशुः-यस्याः चरणरेणुः । "स्युर्धूलीपांशुरेणवः" इत्यभिधानचिन्तामणिः (का० ४, श्लो० ३६ ) । कां कर्मतापन्नाम् ? । चूर्णशोभां-वासलक्ष्मीम् । "वासयोग्य( ग )स्तु चूर्णं स्यात्" इत्यभिधानचिन्तामणिः (का० ३, श्लो० ३०१) । कस्मिन् ? । शिरसि-मस्तके । कस्याः ? । सुरततेः-देवसमूहस्य । सुराणां ततिरिति विग्रहः तस्याः । किंविशिष्टः पादपांशुः ? । पूतः-पवित्रः । सुगतचरणसंस्पर्शनादिति भावः । किंविशिष्टा ततिः ? । 'जैनराजी' जिनराजानां इयं जैनराजी । पुनः किंविशिष्टा ? । 'यातापत्त्रासमाना' आपद्-विपत्तिः त्रासः-आकस्मिकं भयं मानः-स्मयः एतेषां पूर्वं 'द्वन्द्वः', ततो याता-गता आपत्त्रासमाना यस्या इति 'बहुव्रीहिः' । पुनः किंविशिष्टा ? 'हारतारा' । हाराः-मुक्तावल्यः तद्वत् तारा-निर्मला । पुनः किंविशिष्टा ? । अरता-अप्रतिबद्धा । पुनः किंविशिष्टा ? । राजयन्ती-शोभां लम्भयन्ती । (पुनः) किंविशिष्टा? । 'अप्रतिमदमवती' अप्रतिमः-अनन्यसदृशः दमः-उपशमः यस्याः सा । पुनः किंविशिष्टा ? । 'जयन्ती' अभिभवन्ती । कया ? । कान्त्या-प्रभया । कस्याः ? । कीर्तेः-यशसः ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥



जिनवाण्याः स्वरूपम्—

नित्यं हेतूपपत्तिप्रतिहतकुमतप्रोद्धतध्वान्तबन्धाऽ-
पापायाऽऽसाद्यमानाऽमदन ! तव सुधासारहृद्या हितानि ।
वाणी निर्वाणमार्गप्रणयिपरिगता तीर्थनाथ ! क्रियान्मेऽ-
पापायासाद्यमानामदनत ! वसुधासार ! हृद्याहितानि ॥ ३ ॥

—स्रग्०

ज० वि०-नित्यं हेतूपपत्तीति । हे तीर्थनाथ!-तीर्थपते! तव-भवतः वाणी-वाक् मे-मम हितानि-पथ्यानि नित्यं-सदा क्रियात्-विधेयात् इति क्रियाकारकसम्बन्धः । अत्र 'क्रियात्' इति क्रियापदम् । का कर्त्री ? 'वाणी' । कानि कर्मतापन्नानि ? 'हितानि' । कस्य ? 'मे' । वाणी कस्य ? 'तव' । हितानि कथंभूतानि ? 'आहितानि' स्थापितानि । कस्मिन् ? 'हृदि' मानसे । चित्तेऽप्सितानीत्यर्थः । वाणी कथंभूता ? 'हेतूपपत्तिप्रतिहतकुमतप्रोद्धतध्वान्तबन्धा' हेतवो-वस्तुगमकानि लिङ्गानि, उपपत्तयो-युक्तयः, ततो हेतवश्च उपपत्तयश्च हेतूपपत्तयः, यद्वा हेतूनामुपपत्तयो हेतूपपत्तयः, ताभिः प्रतिहतः-प्रतिषिद्धः कुमतरूपः प्रोद्धतध्वान्तबन्धः-प्रोद्दामतिमिरग्रन्थिर्यया सा तथा । पुनः कथं० ? 'अपापायासाद्यमाना' । अपगतोऽपायो-घातो येषां ते तथा तैरासाद्यमाना-

प्राप्यमाणा । अथवा अपापायेति आसाद्यमानेति च पृथग् विशेषणद्वयम् । तथाचायमर्थः—अपगतोऽपायो यस्याः सा तथा आसाद्यमाना । साधुभिरित्यध्याह्रियते । पुनः कथं० ? ‘ सुधासारहृद्या ’ सुधा—पीयूषं तस्या आसारो—वेगवान् वर्षस्तद्वद् हृद्या—मनोज्ञा । पुनः कथं० ? ‘ निर्वाणमार्गप्रणयिपरिगता ’ निर्वाणमार्गो—ज्ञानदर्शनचारित्ररूपस्तत्र प्रणयः—परिचयः स्नेहो वा येषां ते तथा तैः परिगता—समाश्रिता, स्वीकृतेत्यर्थः । अवशिष्टानि तीर्थनाथस्य सम्बोधनानि, तेषां व्याख्या यथा—हे ‘ अमदन ! ’ मदनरहित ! । हे ‘ अपापायासाद्यमानामदनत ’ ! पापं—पातकं आयासः—खेदः तौ आदौ येषां ते पापायासादयो दोषास्ते न विद्यन्ते येषां ते अपापायासादयः, अमाना—मानरहिताः अमदा—मदरहिताः, ततो अपापायासादयश्च ते अमानाश्च ते अमदाश्च अपापायासाद्यमानामदास्तैर्नत !—वन्दित ! । हे ‘ वसुधासार ! ’ वसुधा—पृथ्वी तत्र सार !—उत्कृष्ट ! ॥

अथ समासः—हेतूनामुपपत्तयः ( हेतुपपत्तयः ) ‘ तत्पुरुषः ’ । ( हेतवश्च उपपत्तयश्च हेतूपपत्तयः ‘ इतरेतरद्वन्द्वः ’ ) । ध्वान्तस्य बन्धो ध्वान्तबन्धः ‘ तत्पुरुषः ’ । प्रोद्धतश्चासौ ध्वान्तबन्धश्च प्रोद्धतध्वान्तबन्धः ‘ कर्मधारयः ’ । कुमतमेव प्रोद्धतध्वान्तबन्धः कुमतप्रो० ‘ कर्मधारयः ’ । प्रतिहतः कुमतप्रोद्धतध्वान्तबन्धो यया सा प्रतिहत० ‘ बहुव्रीहिः ’ । हेतूपपत्तिभिः प्रतिहतकुमतप्रोद्धतध्वान्तबन्धा हेतूपपत्ति० ‘ तत्पुरुषः ’ । अपगतोऽपायो येषां ते अपापायाः ‘तत्पुरुषः’ । अपापायैरासाद्यमाना अपापा० ‘ तत्पुरुषः’ । यद्वा अपगतोऽपायो यस्याः सा अपापाया ‘तत्पुरुषः ’ । न विद्यते मदनो यस्य सोऽमदनः ‘ तत्पुरुषः ’ । तत्सम्बो० हे अमदन ! । सुधाया आसारः सुधासारः ‘तत्पुरुषः’ । सुधासार इव हृद्या सुधा० ‘तत्पुरुषः’ । निर्वाणस्य मार्गो निर्वाणमार्गः ‘तत्पुरुषः’ । प्रणयोऽस्त्येषां ते प्रणयिनः ( ‘बहुव्रीहिः’ ) । निर्वाणमार्गस्य प्रणयिनो निर्वाण० ‘तत्पुरुषः’ । निर्वाणमार्गप्रणयिभिः परिगता निर्वाण० ‘तत्पुरुषः ’ । तीर्थस्य नाथस्तीर्थनाथः ‘तत्पुरुषः’ । तत्सम्बोधनं हे तीर्थ० । पापं च आयासश्च पापायासौ ‘इतरेतरद्वन्द्वः’ । पापायासावादौ येषां ते पापायासादयः ‘बहुव्रीहिः ’ । न विद्यन्ते पापायासादयो येषां ते अपापाया० ‘बहुव्रीहिः’ । न विद्यते मानं येषां ते अमानाः ‘बहुव्रीहिः ’ । न विद्यते मदो येषां ते अमदाः । ततोऽपापायासादयश्च ते अमानाश्च ते अमदाश्च अपापा० ‘ कर्मधारयः’ । अपापायासाद्यमानामदैर्नतः अपापायासा० ‘ तत्पुरुषः ’ । तत्सम्बो० हे अपापाया० । वसुधायां सारो वसु० ‘ तत्पुरुषः ’ । तत्सम्बो० हे वसु० ॥ इति काव्यार्थः ॥ ३ ॥

सि० वृ०—नित्यं हेतूपपत्तीति । तीर्थं—चतुर्विधः सङ्घः प्रथमगणधरो वा तस्य नाथः—स्वामी तस्य सम्बोधनं हे तीर्थनाथ ! तव—भवतः वाणी—वाक् मे—मम हितानि—कल्याणानि नित्यं—सदा क्रियात्—विधेयात् इत्यर्थः । ‘डुकृञ् करणे’ धातोराशिषि कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं यात् । ‘यादादौ’ (सा० सू० ८१४ ) इति ऋकारस्य रिङादेशः । तथाच ‘क्रियात्’ इति सिद्धम् । अत्र ‘क्रियात्’ इति क्रियापदम् । का

कर्त्री? । वाणी । कानि कर्मतापन्नानि ? । हितानि । कस्य ? । मे । वाणी कस्य ? । तव । कथंभूतानि हितानि ? । आहितानि—स्थापितानि । कस्मिन् ? हृदये । चित्तेप्सितानीति फलितार्थः । कथंभूता वाणी ? । 'हेतूपपत्ति-प्रतिहतकुमतप्रोद्धतध्वान्तबन्धा' हेतवः—साध्यगमकानि लिङ्गानि, उपपत्तयो—युक्तयः, ततो हेतवश्च उपपत्तयश्च हेतूपपत्तयः 'इतरेतरद्वन्द्वः', यद्वा हेतूनामुपपत्तयः हेतूपपत्तयः, ताभिः प्रतिहतो—निराकृतः कुमतरूप. प्रोद्धतध्वान्तबन्धः—प्रोद्दामतिमिरग्रन्थिर्यया सा । तथा प्रोद्धतश्चासौ ध्वान्तबन्धश्च प्रोद्धतध्वान्तबन्धः, कुमतं एव प्रोद्धत० कुमत० इति 'कर्मधारयः' । पुनः कथंभूता ? । 'अपापायासाद्यमाना' अपगतः अपायो विघातो येषा ते अपापायाः, तैः आसाद्यमाना—प्राप्यमाणा । केचित् तु अपापायेति आसाद्यमानेति च पृथग् विशेषणद्वयम् । तथाचायमर्थः—अपगतः अपायो यस्याः सा (अपापाया), आसाद्यमाना साधुभिरित्यध्याह्रियत इति वदन्ति । पुनः कथंभूता ? । 'सुधासारहृद्या' सुधायाः—अमृतस्य आसारः—वेगवद्वृष्टिः तद्वद् हृद्या—मनोज्ञा । श्रूयमाणा अमृतमिव हृदयङ्गमेति फलितार्थः । "आसारो वेगवान् वर्षे" (का० २, श्लो० ७९) इति हैमः । पुनः कथंभूता ? । 'निर्वाणमार्गप्रणयिपरिगता' निर्वाणस्य—मोक्षस्य मार्गः—ज्ञानदर्शनचारित्ररूपस्तत्र प्रणयः—परिचयः स्नेहो वा येषां ते निर्वाणमार्गप्रणयिनः, तैः परिगता—अङ्गीकृता । "निर्वाणं निर्वृतौ मोक्षे, विनाशे गजमज्जने" इत्यमरः[1] (?) । अवशिष्टानि भगवतः सम्बोधनानि । तेषामर्थश्चैवम्—न विद्यते मदनः—मन्मथो यस्य स तथा तस्य सम्बोधनं हे अमदन !—मदनरहित ! । पापं—पातकं आयासः—खेदः पापं च आयासश्च पापायासौ 'द्वन्द्वः', तौ आदौ येषां ते पापायासादयो दोषास्ते न विद्यन्ते येषां ते अपापायासादयः, न विद्यते मानं (नो) येषां ते अमानाः—मानरहिताः, न विद्यते मदो येषां ते अमदाः—मदरहिताः, ततः अपापायासादयश्च ते अमानाश्च ते अमदाश्च अपापायासाद्यमानामदास्तैर्नतः—वन्दितः, तस्य सम्बोधनं हे अपापायासाद्यमानामदनत ! । वसुधा—पृथ्वी तत्र सारः—श्रेष्ठः तस्य सम्बोधनं हे वसुधासार ! ॥ २ ॥

**सौ० वृ०—नित्यं हेतूपपत्तीति । हे तीर्थनाथ !-तीर्थस्वामिन् ! । हे अमदन !-अकाम ! । हे अपापायासाद्यमानामदनत ! गतपाप आयासः-श्रमः तदादि अमानो-निरभिमानः अमदः-अदर्पितः नतः प्रणतः इत्यर्थः । तस्य सं० हे 'अपापायासाद्यमानामदनत !' । हे 'वसुधासार !' पृथिवीप्रधान ! । तव-भवतः वाणी-भारती मे-मम हितानि-पथ्यानि क्रियात् इत्यन्वयः । 'क्रियात्' इति क्रियापदम् । का कर्त्री ? । 'वाणी' भारती । 'क्रियात्' कुर्यात् । कानि कर्मतापन्नानि? । 'हितानि' पथ्यानि । कस्य ? । 'मे' मम । कथम् ? । 'नित्यं' सदा । किंविशिष्टानि हितानि ? । 'आहितानि' स्थापितानि । कस्मिन् ? । 'हृदि' चित्ते । किंविशिष्टा वाणी ? । हेतवः-लिङ्गगमकाः उपपत्तयः-दृष्टान्ताः तैः प्रतिहतं-निराकृतं कुमतं-कुत्सितशासनं तदेव प्रोद्धतं-प्रकर्षेण उद्दामं ध्वान्तं-अन्धकारं यदनादिमिथ्यात्वरूपं तस्य बन्धो-ग्रन्थिकाभेदलक्षणो यया सा 'हेतूपपत्तिप्रतिहतकुमतप्रोद्धतध्वान्तबन्धा' । पुनः किं० वाणी ? । अपगताः पापायासा येभ्यः ते तैः । साधुभिरित्यध्याहार्यम् । (आ)साद्यमाना स्वाद्यमाना (?) 'अपापायासाद्यमाना' । पुनः किंविशिष्टा वाणी ? । सुधा-अमृतं तस्य आसारो-रसः "आसारो वेगवान् वर्षः" (अभि० का० ?, श्लो०) तद्वद् हृद्या-मनोज्ञा 'सुधासारहृद्या' । पुनः किं० वाणी ? । निर्वाणमार्गो-मोक्षमार्गः सम्यक्ज्ञानदर्शनचारित्रलक्षणः तस्मिन् प्रणयः-स्नेहो येषां ते तादृशा ये साधवस्तैः परिगता-व्याप्ता 'निर्वाणमार्गप्रणयिपरिगता' । एतादृशी जिनवाणी मे-मम हितानि-अभीष्टानि कुर्यात् । इति पदार्थः ॥**

**अथ समासः—हेतवश्च ते उपपत्तयश्च हेतूपपत्तयः, यद्वा हेतूनां उपपत्तयः-प्राप्तयः हेतूपपत्तयः, हेतूपपत्तिभिः प्रतिहतं हेतूपपत्तिप्रतिहतम्, कुत्सितं मतं कुमतं [ तदेव ध्वान्तं कुमतध्वान्तम् ], प्रकर्षेण**

1 अयं पाठो निरर्थकः प्रतिभाति ।

उद्भूतं प्रोद्भूतम्, प्रोद्भूतं च तद् ध्वान्तं च प्रोद्भूतध्वान्तम्, कुमतस्य प्रोद्भूतध्वान्तं कुमतप्रोद्भूतध्वान्तम्, ( हेतूपपत्तिप्रतिहतं च तत् कुमतप्रोद्भूतध्वान्तं हेतू० ), हेतूपपत्तिप्रतिहतकुमतप्रोद्भूतध्वान्तस्य बन्धो यया सा हेतूपपत्तिप्रतिहतकुमतप्रोद्भूतध्वान्तबन्धा । पापस्य आयासः पापायासः, न विद्यते पापायासो येषां ते अपापायासाः, अपापायासैः (आ)=साद्यमाना अपापायासाद्यमाना । न विद्यते मदनो यस्य स अमदनः, तस्य सं० हे अमदन! । सुधायाः सारं सुधासारम्, सुधासारवद् हृद्या सुधासारहृद्या । निर्वाणस्य मार्गो निर्वाणमार्गः, निर्वाणमार्गे प्रणयोऽस्ति येषाम् इति निर्वाणमार्गप्रणयिनः, निर्वाणमार्गप्रणयिभिः परिगता निर्वाणमार्गप्रणयिपरिगता । तीर्थस्य नाथः तीर्थनाथः, तस्य सं० हे तीर्थनाथ! । पापं च आयासश्च पापायासौ, पापायासौ आदी येषां ते पापायासादयः, न विद्यन्ते पापायासादयो येषां ते अपापायासादयः, नास्ति मानो येषां ते अमानाः, नास्ति मदो येषां ते अमदाः, अपापायासादयश्च अमानाश्च अमदाश्च अपापायासाद्यमानामदाः, अपापायासाद्यमानामदैर्नतः अपापायासाद्यमानामदनतः, तस्य सं० हे अपापायासाद्यमानामदनत!। वसुधायां सारः-प्रधानः वसुधासारः, तस्य सं० हे वसुधासार! यद्वा हे अपाप! हे अनायास (?)! हे आद्यमान!-जगत्याद्यप्रमेयमहिमन्! इत्यपि विशेषणत्रयी जिनसंबोधने पृथग् विशेषणानि व्याख्येयानि॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या०—नित्यं हेतूपपत्तिरिति । हे तीर्थनाथ ! तीर्थं-चतुर्विधसङ्घः प्रथमगणधरो वा तस्यामन्त्रणम् । ते-तव वाणी-भारती मे-मम हितानि-पथ्यानि नित्यम्-अनवरतं यथा स्यात् तथा क्रियात्-दिश्यादित्यन्वयः । 'डुकृञ् करणे' धातुः । 'क्रियात्' इति क्रियापदम् । का कर्त्री ? । वाणी । कस्य ? । तव । कानि कर्मतापन्नानि ? । हितानि । कस्य ? । मे-मम । किंविशिष्टानि हितानि ? । आहितानि-स्थापितानि । "स्थितं स्थापितमाहितम्" इत्यमरः (?) । कस्मिन् ? । हृदि-हृदये । किंविशिष्टा वाणी ? । 'हेतूपपत्तिप्रतिहतकुमतप्रोद्भूतध्वान्तबन्धा' हेतवः-प्रमाणानि उपपत्तयः-युक्तयः, यद्वा हेतूनां उपपत्तयः ताभिः प्रतिहता-विध्वस्ता कुमतस्य प्रोद्धता-प्रोद्दामा ध्वान्तबन्धा-अज्ञानग्रन्थिः यया सा तथा । प्रोद्धता चासौ ध्वान्तबन्धेति पूर्वं 'कर्मधारयः' । पुनः किंविशिष्टा ? । 'अपापायासायमाना' अपगता अपायाः-आपत्स्वरूपा यैस्तैः आसाद्यमाना-प्राप्यमाणा । पुनः किंविशिष्टा ? । 'सुधासारहृद्या' सुधायाः-अमृतस्य आसारो-वेगवान् वर्षः तद्वद् हृद्या-वल्लभा । "आसारो वेगवान् वर्षः" इत्यभिधानचिन्तामणिः ( का० २, श्लो० ७९ ) । श्रूयमाणा अमृतमिव हृदयङ्गमेति तात्पर्यार्थः । पुनः किंविशिष्टा ? । 'निर्वाणमार्गप्रणयिपरिगता' निर्वाणस्य-मोक्षस्य मार्गे-वर्त्मनि प्रणयः-स्नेहो विद्यते येषां ते तथा तैः परिगता-अङ्गीकृता । 'अमदन!' इति । नास्ति मदनः-कन्दर्पो यस्य स तस्यामन्त्रणम् । 'अपापायासायमानामदनत!' इति । पापं च आयासादयश्च ते तथा, न विद्यन्ते पापायासादयो येषां ते अपापायासादयः, न विद्यते मानः-अहङ्कारो येषां ते तथा, न विद्यते मदनः-कन्दर्पो (मदः-दर्पो) येषां ते तथा, अपापायासादयः अमानाः अमदना(अमदा)श्च ते नराश्चेति तैः नत!-वन्दित! । 'वसुधासार!' इति । वसुधायां-पृथिव्यां सारः-प्रधानो यस्तस्यामन्त्रणम् । एतानि भगवतः सम्बोधनपदानि ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

---

श्रीशान्तिदेव्याः स्तुतिः—

रक्षःक्षुद्रग्रहादिप्रतिहतिशमनी[२] वाहितश्वेतभास्वत्-
सन्नालीका सदा सापरिकरमुदिता सा क्षमालाभवन्तम् ।
शुभ्रा श्रीशान्तिदेवी जगति जनयतात् कुण्डिका भाति यस्याः
सन्नालीका सदासा परिकरमुदिता साक्षमाला भवन्तम् ॥ ४ ॥

—स्रग्०

---

१ आयासस्य स्थाने 'आय'शब्दस्य प्रयोगः कार्य इति प्रतिभाति । २ 'शमिनी' इति पाठान्तरम् ।

ज० वि०—रक्षःक्षुद्रेति। हे भव्य ! प्राणिन् ! सा श्रीशान्तिदेवता, अयं श्रीशब्दः पूज्यत्वसूचकः, भवन्तं—त्वां जगति—भुवने सदा—नित्यं 'क्षमालाभवन्तं' क्षमा—क्षान्तिः तस्या लाभः—प्राप्तिः स विद्यते यस्य स क्षमालाभवान् तथाविधं जनयतात्—कुर्वीत इति क्रियाकारकप्रयोगः। अत्र 'जनयतात्' इति क्रियापदम्। का कर्त्री ? 'श्रीशान्तिदेवी'। कं कर्मतापन्नम् ? 'भवन्तम्'। कथंभूतम् ? 'क्षमालाभवन्तम्'। कस्मिन् ? 'जगति'। कथम् ? 'सदा'। श्रीशान्तिदेवी कथंभूता ? 'रक्षःक्षुद्रग्रहादिप्रतिहतिशमनी' रक्षांसि—राक्षसाः क्षुद्राः—शाकिनीप्रभृतयः ग्रहाः—शनैश्चरादयः आदिशब्दात् भूपालव्यालकालभूतादयस्तेभ्यः प्रतिहतिः—उपघातः तस्याः शमनी—विनाशिनी। पुनः कथंभूता ? 'वाहितश्वेतभास्वत्सन्नालीका' श्वेतं—उज्ज्वलं भास्वत्—दीप्यमानं सत्—शोभनं नालीकं—कमलं वाहितं—वाहनीकृतं श्वेतभास्वत्सन्नालीकं यया सा तथा। पुनः कथंभूता ? 'प्रापरिकरमुदिता' प्रापरिकरः—जटामण्डलं तेन मुदिता—हृष्टा। पुनः कथं० ? 'शुभ्रा' शुक्लवर्णा। पुनः कथं० ? 'सन्नालीका' सन्नं—अवसादं गतं अलीकं—असत्यं यस्याः सा तथा। पुनः कथं० ? 'सदाप्ता' सतां—साधूनां आप्ता—अविप्रतारिका। सेति तच्छब्दसहचारित्वाद् यच्छब्दघटनामाह—यस्याः—शान्तिदेव्याः 'परिकरं' करं—हस्तं लक्षीकृत्य करे इत्यर्थः, कुण्डिका—कमण्डलुः भाति—शोभते। अत्रापि 'भाति' इति क्रियापदम्। का कर्त्री ? 'कुण्डिका'। कथम् ? 'परिकरम्'। कस्याः ? 'यस्याः'। कुण्डिका कथंभूता ? 'उदिता' उदयं प्राप्ता। पुनः कथंभूता ? 'साक्षमाला' अक्षावलीसमेता। एते द्वे विशेषणे श्रीशान्तिदेव्या वा व्याख्यायेते ॥

अथ समासः—रक्षांसि च क्षुद्राश्च ग्रहाश्च रक्षःक्षुद्रग्रहाः 'इतरेतरद्वन्द्वः'। रक्षःक्षुद्रग्रहा आदौ येषां ते रक्षः० 'बहुव्रीहिः'। रक्षःक्षुद्रग्रहादिभ्यः प्रतिहतिः रक्षः० 'तत्पुरुषः'। रक्षःक्षुद्रग्रहादिप्रतिहतेः शमनी रक्षःक्षुद्र० 'तत्पुरुषः'। भास्वच्च तत् सच्च भास्वत्सत् 'कर्मधारयः'। भास्वत्सच्च तन्नालीकं च भास्वत्स० 'कर्मधारयः। श्वेतं च तत् भास्वत्सन्नालीकं च श्वेतभा० 'कर्मधारयः'। वाहितं श्वेतभास्वत्सन्नालीकं यया सा वाहितश्वेत० 'बहुव्रीहिः'। प्रायाः परिकरः प्रापरिकरः 'तत्पुरुषः'। प्रापरिकरेण मुदिता प्राप० 'तत्पुरुषः'। क्षमाया लाभः क्षमालाभः 'तत्पुरुषः'। क्षमालाभोऽस्यास्तीति क्षमालाभवान् 'बहुव्रीहिः'। तं क्षमा०। शान्तिश्चासौ देवी च शान्तिदेवी 'कर्मधारयः'। श्रियोपलक्षिता शान्तिदेवी श्रीशान्ति० 'तत्पुरुषः'। सन्नं अलीकं यया सा सन्नालीका 'बहुव्रीहिः'। सतामाप्ता सदाप्ता 'तत्पुरुषः'। करं परि—लक्षीकृत्य परिकरं 'अव्ययीभावः'। सह अक्षमालया वर्तते या सा साक्षमाला 'तत्पुरुषः'॥ इति काव्यार्थः ॥ ४ ॥

इति श्रीमद्बृहत्पण्डितश्रीदेवविजयगणिशिष्यपं०जयविजयगणिविरचितायां श्रीशोभनस्तुतिवृत्तौ श्रीवासुपूज्यजिनपतिस्तुतेर्व्याख्या ॥ १२ ॥

॥ द्वितीयांशः सम्पूर्णः ॥

सि० वृ०—रक्षःक्षुद्रेति । हे भव्य ! प्राणिन् ! सा श्रीशान्तिदेवी शान्तिदेवता, श्रीशब्दोऽत्र महत्त्वख्यापकः, भवन्तं—त्वां जगति—भुवने सदा—नित्यं 'क्षमालाभवन्तं' क्षमतीति क्षमा तस्या लाभः—प्राप्तिः स विद्यते यस्य स क्षमालाभवान् तादृशं जनयतात्—कुरुतादित्यर्थः । 'जनी प्रादुर्भावे' धातोः 'आशीःप्रेरणयोः' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप् । 'अप्०' ( सा० सू० ९९१ ), 'गुणः' ( सा० सू० ९९२ ), 'ए अय्' ( सा० सू० ४१ ) तुपस्तातङादेशः । तथा च 'जनयतात्' इति सिद्धम् । अत्र 'जनयतात्' इति क्रियापदम् । का कर्त्री ? । श्रीशान्तिदेवी । कं कर्मतापन्नम् ? । भवन्तम् । भवच्छब्दस्यामि परे रूपम् । कस्मिन् ? । जगति । कथम् ? । सदा । कथंभूता श्रीशान्तिदेवी ? । 'रक्षः-क्षुद्रग्रहादिप्रतिहतिशमनी' रक्षांसि—राक्षसाः क्षुद्राः—शाकिन्यादयः ग्रहाः—शनैश्चरप्रमुखाः आदिशब्दादन्येऽपि भूपालव्यालकालादयः तेभ्यः प्रतिहननमिति व्युत्पत्त्या प्रतिहतिः—उपघातः तस्याः शमनी—विनाशिनी । पुनः कथंभूता ? । 'वाहितश्वेतभास्वत्सन्नालीका' वाहितं—वाहनीकृतं श्वेतं—उज्ज्वलं भास्वद्—दीप्यमानं सत—शोभनं नालीकं—कमलं यया सा तथा । पुनः कथंभूता ? । 'सतापरिकरमुदिता' सा—जटा तस्याः परिकरः—मण्डलं तेन मुदिता—हृष्टा । अत्र साशब्देन जटा ज्ञेया । लक्ष्यं च—

"राजा राजार्चितांह्रिरनुपचितकलो यस्य चूडामणिस्त्वं
नागा नागात्मजार्धे नमसितधवलं यद्वपुर्भूषयन्ति ।
मा रामारागिणी भून्मतिरिति यमिनां येन वोऽदाहि मारः
स साः ससाश्वनुन्नारुणकिरणनिभाः पातु बिभ्रत्त्रिनेत्रः ॥"

इति रससतरङ्गिण्यां शृङ्गारतिलकटीकायाम् । पुनः कथंभूता ? । शुभ्रा—शुक्लवर्णा । पुनः कथंभूता ? । 'सन्नालीका' सन्नं—क्षीणं क्षयं गतमितियावद् अलीकं—असत्यं यस्याः सा तथा । पुनः कथंभूता ? । 'सदाप्ता' सतां—साधूनां आप्ता—अवञ्चका, अविप्रतारिकेत्यर्थः । सेति तच्छब्दसहचारित्वाद् यच्छब्दघटनामाह—यस्याः—शान्तिदेव्याः परिकरं करं—हस्तं लक्ष्यीकृतकरेत्यर्थः, कुण्डिका—कमण्डलुः भाति—शोभत इत्यर्थः । 'भा दीप्तौ' इति धातोर्वर्तमाने कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तिप् । अत्र 'भाति' इति क्रियापदम् । का कर्त्री ? । 'कुण्डिका' कुण्डिरेव कुण्डिका । "अस्त्री कमण्डलुः कुण्डी" इत्यमरः ( श्लो० १४४४ ) । कथम् ? । परिकरम् । कस्याः ? । यस्याः । कथंभूता कुण्डिका ? । उदिता—उदयं प्राप्ता । पुनः कथंभूता । साक्षमाला—अक्षावलीसमेता । एते द्वे विशेषणे श्रीशान्तिदेव्या ( वा ) व्याख्येये इति । स्रग्धराच्छन्दः । "विज्ञेया स्रग्धरेयं मरभनययया वाहवाहैर्यतिश्चेत्" इति च तल्लक्षणम् ॥ ४ ॥

॥ इति महोपाध्यायभानुचन्द्र० श्रीवासुपूज्यजिनस्तुतिवृत्तिः ॥ १२ ॥

सौ० वृ०—रक्षःक्षुद्रेति । श्रीशान्तिनाम्नी देवी चण्डीत्यपरोक्षा जगति-पृथिव्यां भवन्तं-त्वां क्षमा-क्षान्तिः तस्या लाभस्तद्वन्तं क्षमालाभवन्तं जनयतादित्यन्वयः । 'जनयतात्' इति क्रियापदम् । का कर्त्री ? । 'श्रीशान्तिदेवी' शान्तिनाम्नी देवी । श्रीशब्दः पूज्यार्थे । श्रिया-लक्ष्म्या युक्ता शान्तिदेवी श्री-शान्तिदेवी । 'जनयतात्' विदध्यात् । कं कर्मतापन्नम् ? । 'भवन्तम्' । किंवि० भवन्तम् ? । 'क्षमालाभवन्तम्' । किंविशिष्टा श्रीशान्तिदेवी ? । 'शुभ्रा' गौरवर्णा । पुनः किंवि० श्रीशान्तिदेवी ? । रक्षः(क्षांसि)-राक्षसाः क्षुद्राः-शाकिन्यादयः ग्रहाः-खेटाः आदिशब्दात् भूपालव्यालादयः तेषां प्रतिहतिः-विघ्नं तस्याः

शमिनी–शान्तिकारिणी 'रक्षःक्षुद्रग्रहादिप्रतिहतिशमिनी'। पुनः किंवि० श्रीशान्तिदेवी ?। 'वाहितश्वेतभास्वत्सन्नालीका'। पुनः किं० श्रीशान्तिदेवी ?। सद्भिः–साधुभिः आप्ता–प्रमाणीकृता 'सदाप्ता'। पुनः किं० श्रीशान्तिदेवी ?। परिकरैः–परिजनैः सेवकैर्वा मुदिता–हर्षिता परिकरमुदिता। पुनः किं० श्रीशान्तिदेवी ?। अक्षमालया–जपमालया सहिता इति साक्षमाला। पुनः किं० श्रीशान्तिदेवी ?। 'सा' सा—प्रसिद्धा उपलक्षिता। सा का ?। यस्याः परिकरं–हस्तं उपलक्षीकृत्य कुण्डिका—कमण्डलुर्भाति इत्यन्वयः। 'भाति' इति क्रियापदम्। का कर्त्री ?। कुण्डिका। 'भाति' शोभते। कथम् ?। 'परिकरं' हस्ते इत्यर्थः। परीत्यव्ययस्य आधारकर्मणि द्वितीया। कस्याः ?। 'यस्याः' देव्याः। पुनः किं० श्रीशान्तिदेवी ?। सन्नं—क्षीणं गतं वा अलीकं—मिथ्यात्वं यस्याः सा सन्नालीका'। कथम् ?। 'सदा' निरन्तरम्। पुनः किं० श्रीशान्तिदेवी ?। 'आप्ता' प्रतीता। पुनः किं० श्रीशान्तिदेवी ?। 'उदिता' उदयं प्राप्ता। इति पदार्थः ॥

अथ समासः—रक्षांसि च क्षुद्राश्च ग्रहाश्च रक्षःक्षुद्रग्रहाः, रक्षःक्षुद्रग्रहा आदिर्येषां ते रक्षःक्षुद्रग्रहादयः, रक्षःक्षुद्रग्रहादिभ्यः प्रतिहतिः रक्षःक्षुद्रग्रहादिप्रतिहतिः, तस्याः शमिनी रक्षःक्षुद्रग्रहादिप्रतिहतिशमिनी। सत् च तत् नालीकं च सन्नालीकं, भास्वच्च तत् सन्नालीकं च भास्वत्सन्नालीकम्, श्वेतं च तत् भास्वत्सन्नालीकं च श्वेतभास्वत्सन्नालीकम्, वाहितं श्वेतभास्वत्सन्नालीकं यया सा वाहितश्वेतभास्वत्सन्नालीका। सद्भिः सतां वा आप्ता सदाप्ता। परिकरैः मुदिता परिकरमुदिता। अक्षाणां माला अक्षमाला, अक्षमालया सहिता साक्षमाला। सन्नं–क्षीणं अलीकं यस्याः सा सन्नालीका। करं परि–व्याप्तीकृत्य इति परिकरम्। मुत् सञ्जाता अस्या इति मुदिता। क्षमाया लाभः क्षमालाभः, क्षमा च लाभश्च क्षमालाभौ, क्षमालाभौ विद्येते यस्यासौ क्षमालाभवान्, तं क्षमालाभवन्तम्। ॥ इति चतुर्थवृत्तार्थः ॥ ४ ॥

श्रीवासुपूज्यदेवस्य, स्तुतेरर्थो लिपीकृतः।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना ॥

॥ इति वासुपूज्यजिनस्तुतिः ॥ ४।१२।४८ ॥

दे० व्या०–रक्षःक्षुद्रेति। सा श्रीशान्तिदेवी भवन्तं क्षमालाभवन्तं जनयतात्–कुर्यादिति सम्बन्धः। 'जनी प्रादुर्भावे' धातुः। 'जनयतात्' इति क्रियापदम्। का कर्त्री ?। (श्री)शान्तिदेवी। श्रीशब्दोऽत्र पूज्यवाचकः। कं कर्मतापन्नम् ?। भवन्तम्। किंविशिष्टं भवन्तम् ?। 'क्षमालाभवन्तम्' क्षमायाः–उपशमस्य लाभः–प्राप्तिः तद्वन्तम्। किंविशिष्टा देवी ?। 'रक्षःक्षुद्रग्रहादिप्रतिहतिशमनी' रक्षांसि–कीनाशाः क्षुद्राः–शाकिनीप्रमुखाः ग्रहाः–शनैश्चरादयः आदिग्रहणादन्येऽपि भूपालव्यालकालादयो ग्राह्याः, एतेषां 'द्वन्द्वः', तेभ्यः प्रतिहतिः–उपघातः तस्याः शमनी–नाशिनी। पुनः किंविशिष्टा ?। 'वाहितश्वेतभास्वत्सन्नालीका' वाहितं–वाहनीकृतं श्वेतं–धवलं भास्वत्–दीप्यमानं सत्–शोभनं नालिकं–कमलं यया सा तथा। पुनः किंविशिष्टा ?। आप्ता–यथार्थोपदेष्ट्री, अविप्रतारिकेत्यर्थः। कथम् ?। सदा–सर्वदा। पुनः किंविशिष्टा ?। 'परिकरमुदिता' परिकरेण–परिस्कन्देन परिवारेणेतियावत् मुदिता–हर्षिता। "परिस्कन्दः परिकर" इत्यभिधानचिन्तामणिः (?)। पुनः किंविशिष्टा ?। शुभ्रा–अवदाता। यत्तदोर्नित्याभिसम्बन्धाद् यस्याः–शान्तिदेव्याः जगति–पृथिव्यां कुण्डिका भाति–शोभते इत्यन्वयः। 'भाक् दीप्तौ' इति धातुः। 'भाति' इति क्रियापदम्। का कर्त्री ?। कुण्डिका। कस्याः ?। शान्तिदेव्याः। कस्मिन् ?। जगति। किंविशिष्टा कुण्डिका ?। 'सन्नालीका' सत्–शोभनं नालीकं–कमलं यस्याः सा तथा। पुनः किंविशिष्टा कुण्डिका ?। 'सदाप्ता' साद्भिः–साधुजनैः आप्ता–प्राप्ता। पुनः किंविशिष्टा ?। 'परिकरमुदिता' करं–हस्तं परि–लक्ष्यीकृत्य उदिता–उदयं प्रापिता। 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' ( पा० अ० १, पा० ४, सू० ९० ) इति सूत्रेण द्वितीया। पुनः किंविशिष्टा ?। 'साक्षमाला' अक्षमाला–जपमाला तया सह वर्तमाना। देवीपक्षे 'सन्नालीका' सन्नं–क्षीणं अलीकं–असत्यं यस्याः सा तथा ताम्। 'सदाप्ता' सतां मध्ये आप्ता–वृद्धा। निर्धारणे षष्ठी। परिकरेण–जटामण्डलेन मुदिता–हर्षिता इत्यर्थो बोध्यः। इति चतुर्थवृत्तार्थः ॥ ४ ॥ स्रग्धराच्छन्दः। "विज्ञेया स्रग्धरेयं मरभनययया वाहवाहैर्यतिश्चेत्" इति तल्लक्षणम् ॥

## १३ श्रीविमलजिनस्तुतयः

अथ श्रीविमलनाथाय प्रणामः—

अपापदमलं घनं शमितमानमामो हितं
नतामरसभासुरं विमलमालयाऽऽमोदितम् ।
अपापदमलङ्घनं शमितमानमामोहितं
न तामरसभासुरं विमलमालयामोदितम् ॥ १ ॥

—पृथ्वी ( ८, ९ )

ज० वि०—अपापदमलमिति । वयं विमलं—विमलनामानं भगवन्तं आनमामः—प्रणमामः इति क्रियाकारकसंटङ्कः । अत्र ' आनमामः ' इति क्रियापदम् । के कर्तारः? ' वयम् ' । कं कर्मतापन्नम् ? ' विमलम् ' । कथंभूतं विमलम् ? ' अपापदं ' न पापं ददातीत्यपापदस्तम् । कथम् ? ' अलं ' अत्यर्थम् । अथवा अपापदमलमित्यक्षतमेव विशेषणम् । तथाचायमर्थः—अपापो—निष्पङ्को यो दम—उपशमस्तं लाति-आदत्ते इत्यपापदमलस्तम् । पुनः कथं० ? ' इतं ' प्राप्तम् । किं कर्मतापन्नम् ? ' शं ' सुखम् । शं कथंभूतम् ? ' घनं ' अच्छिद्रम् । अशेषमलक्षयोत्थमित्यर्थः । पुनः कथं० विमलम्? 'हितं' हितकारिणम् । पुनः कथं० ? 'नतामरसभासुरं' नता—नम्रीभूता अमर सभा-देवपर्षत् असुरा-भुवनपतिदेवविशेषा यस्य, अथवा नता अमरा-देवाः सभा—भासहिताः असुरा यस्य स तथा तम् । पुनः कथं० ? ' आमोदितं ' सुरभीकृतम् । कया ? ' विमलमालया ' विमला—विगतमला या माला—स्रक् तया । पुनः कथं० ? ' अपापदं ' अपगता आपदो यस्मात् स तथा तम् । पुनः कथं० ? ' अलङ्घनं ' न विद्यते लङ्घनम्—अधःकरणं कुतोऽपि यस्य स तथा तम् । पुनः कथं० ? ' शमितमानं ' शमितः—शमं नीतो मानो येन स तथा तम् । पुनः कथं० ? ' आमोहितं न ' आ—समन्तात् मोहितं न । नेति निषेधपदम् । पुनः कथं ? ' तामरसभासुरं ' तामरसं—महोत्पलं तद्वद् भासुरं—भासनशीलम् । पुनः कथं० ? ' आलयामोदितं ' आलयैः—आवासैरमोदितं-न मोदं नीतम् । यद्वा आलयेऽमोदितं—न मुदमापन्नम्, त्यक्तगृहवासत्वात् ॥

अथ समासः—पापं ददातीति पापदः ' तत्पुरुषः '। (न पापदः अपापदः 'तत्पुरुषः' )। तं अपापदम् । अथवा अपगतं पापं यस्मात् सः अपापः 'बहुव्रीहिः' । अपापश्चासौ दमश्च अपापदमः 'कर्मधारयः' । अपापदमं लातीत्यपापदमलः ' तत्पुरुषः '। तमपाप० । अमराणां सभा अमरसभा 'तत्पुरुषः'। अमरसभा च असुराश्च अमर० 'इतरेतरद्वन्द्वः' । नता अमरसभासुरा यस्य स नतामर०

---

१ ' या मोदितम् ' इत्यपि पाठः ।

'बहुव्रीहिः'। तं नतामर०। यदिवा सह भान्ति वर्तन्ते ये ते सभाः 'तत्पुरुषः'। सभाश्च ते असुराश्च सभासुराः 'कर्मधारयः'। अमराश्च सभासुराश्च अमर० 'इतरेतरद्वन्द्वः'। नता अमरसभासुरा यस्य स नताम० 'बहुव्रीहिः'। तं नतामर०। विमला चासौ माला च विम-लमाला 'कर्मधारयः'। तया विमल०। अपगता आपदो यस्मात् सः अपापद् 'बहुव्रीहिः' तमपापदम्। न विद्यते लङ्घनं यस्य सोऽलङ्घनः 'बहुव्रीहिः'। तं अलङ्घनम्। शमितो मानो येन स शमितमानः 'बहुव्रीहिः'। तं शमि०। तामरसवद् भासुरस्ताम० 'तत्पुरुषः'। तं ताम०। न मोदितः अमोदितः तत्पुरुषः। आलयैरमोदितः आलया०। यद्वा आलये अमोदित आलया-मोदितः, उभयथाऽपि 'तत्पुरुषः'। तं आलया०॥ इति काव्यार्थः॥ १॥

सि० वृ०—अपापदमलमिति। विमलानि ज्ञानानि अस्य विमलः, विगतो मलः—पापं अस्येति वा विमलः। "मलं किट्टे पुरीषे च, पापे च कृपणे मलः" इति विश्वः। गर्भस्थेऽस्मिन् मातुर्मतिस्तनुश्च विमला जातेति वा विमलः, तं विमलं—विमलनामानमर्हन्तं वयं आनमामः—प्रणमाम इत्यर्थः। आङ्पूर्वक 'णम प्रह्वीभावे' धातोर्वर्तमाने कर्तरि परस्मैपदे उत्तमपुरुषबहुवचनं मस्। 'अप् कर्तरि' (सा० सू० ६९१) इत्यप्। 'अमोरा' (सा० सू० ६९६) इत्यात्वम्। 'स्रोर्विसर्गः' (सा० सू० १२४)। तथाच 'आनमामः' इति सिद्धम्। अत्र 'आनमामः' इति क्रियापदम्। के कर्तारः?। वयम्। कं कर्मतापन्नम्?। विमलम्। कथंभूतं विमलम्?। 'अपापदं' न पापं ददातीत्यपापदस्तम्। कथम्?। अलम्—अत्यर्थम्। "अलं भूषणपर्याप्ति—वारणेषु निरर्थके। अलं शक्तौ च निर्दिष्टं" इति विश्वः। यद्वा अपापदमलमित्यक्षतमेव विशेषणे। तथाच अपापः—निष्पङ्को यो दमः—उपशमः तं लाति—गृह्णातीति अपापदमलस्तं अपापदमलमित्यर्थः। पुनः कथंभूतम्?। इतं—प्राप्तम्। किम्?। शं—सुखम्। "शं सुखेऽपि च कल्याणे" इति विश्वः। कथंभूतं शम्?। घनं—निरन्तरम्, निखिलकर्मक्षयोत्थमित्यर्थः। "घनो मेघे मूर्तिगुणे, त्रिषु मूर्ते निरन्तरे" इत्यमरः (?)। पुनः कथंभूतं विमलम्?। हितं—हितकारकम्। 'दधातेर्हिः' (सा० सू० १३०९)। पुनः कथंभूतम्?। 'नतामरसभासुरं' नता—नम्रीभूता अमरसभा अमराणां—देवानां सभा—पर्षत् असुराः—भुवनपतिदेवविशेषाश्च यस्य, यद्वा अमरदेवाः सभाः—भासहिताः असुराश्च यस्य स तथा तम्। पुनः कथंभूतम्?। आमोदितं—सुरभीकृतम्। कया?। 'विमलमालया' विमला—विगतमला माला—स्रक् तया। पुनः कथंभूतम्?। 'अपापदं' अपगता आपदो यस्मात् स तथा तम्। पुनः कथंभूतम्?। 'अलङ्घनं' न विद्यते लङ्घनं—अधःकरणं कुतोऽपि यस्य स तथा तम्। पुनः कथं-भूतम्?। 'शमितमानं' शमितः—शमं—क्षयं नीतः मानः—अभिमानो येन स तम्। पुनः कथं०?। 'न आमोहितं' आ—समन्तात् मोहितम्। नेति निषेधपदम्। पुनः कथंभूतम्?। 'तामरसभासुरं' तामरसं—कुशेशयं तद्वद् भासुरं—भासनशीलम्। पुनः कथंभूतम्?। 'आलयामोदितं' आलयैः—आवासैः अमोदितं—न मोदं नीतम्, आलये—गृहे अमोदितं—न मुदमापन्नमित्यर्थो वा। त्यक्तगृहवासत्वादिति भावः॥ १॥

सौ० वृ०—यो वासवानां पूज्यो भवति स विगतमलो भवति । अनेन संबन्धेनायातस्य त्रयोदश-श्रीविमलजिनस्य स्तुतिव्याख्यानं व्याख्यायते—अपापदमलमिति ।

वयं विमलनामानं त्रयोदशं ( जिनं ) आनमाम इत्यन्वयः । 'आनमामः' इति क्रियापदम् । के कर्तारः ? । 'वयम्' । 'आनमामः' प्रणमामः । कं कर्मतापन्नम् ? । 'विमलं' विमलजिनम् । किंवि० विमलम् ? । 'अपापदं' न पापदायकम् । धर्मदातारमित्यर्थः । यद्वा अपापः-पवित्रः दमः-इन्द्रियादिजयो यस्य सः अपापदमः तं 'अपापदमम्' । कथम् ? । 'अलं' अत्यर्थम् । पुनः किं० विमलम् ? । 'घनं' सान्द्रं निबिडितं (डं) निश्छिद्रम् । पुनः किं० विमलम् ? । शं-सुखं इतं-प्राप्तं 'शमितम्' । पुनः किं० विमलम् ? । 'हितं' लोकस्य हितकारिणम् । पुनः किं० विमलम् ? । नताः-प्रणता ये अमरा-देवास्तेषां सभा-पर्षत् तादृशास्तथा (?) असुरा-नाग(असुर ?)कुमारादयस्तैर्भासुरं-देदीप्यमानं तं 'नतामरसभासुरम्' । पुनः किं० विमलम् ? । 'अपापदं' अपगतापदं-गतविपदम् । यद्वा अपापो-निर्मलो दमः तं लाति-गृह्णातीति अपापदमलम् । पुनः किं० विमलम् ? । 'अलङ्घनं' अनुल्लङ्घनीयवचनम् । पुनः किं० विमलम् ? । 'शमितमानं' गताहङ्कारम् । पुनः किं० विमलम् ? । आ-समन्तात् मोहितं व्यामोहितम् । कथम् ? । 'न' निषेधे । अमोहितमित्यर्थः । पुनः किं० विमलम् ? । तामरसं-महोत्पलं तद्वद् भासुरः-देदीप्यमानः तं 'तामरसभासुरम्' । पुनः किं० विमलम् ? । विमला-निर्मला या माला-पुष्पस्रक् तया विमलमालया आमोदितं-सुरभीकृतम् । पुनः किं० विमलम् ? । आलयं-गृहं तैः अमोदितः-न मोदं गतः तं 'आलयामोदितम्' । एवंविधं विमलं प्रणमामः । इति पदार्थः ॥

अथ समासः—पापं ददातीति पापदः, न पापदः अपापदः, तं अपापदम् । यद्वा न विद्यते पापं यस्मिन् सः अपापः । अपापो दमो यस्य सः अपापदमः तं अपापदमम् । लङ्घ्यते-उल्लङ्घ्यते-अधः-क्रियते इति लङ्घनम्, नास्ति लङ्घनं यस्य सः अलङ्घनः, तं अलङ्घनम् । शं-सुखं इतः-प्राप्तः शमितः, तं शमितम् । यद्वा शमः-उपशमः सञ्जातो यस्य स शमितः, तं शमितम् । अमराणां सभा अमरसभा, अमरसभा च असुराश्च अमरसभासुराः, नता अमरसभासुरा यस्य स नतामरसभासुरः, तं नतामरसभासुरम् । विगतो मला यस्य स विमलः, तं विमलम् । आलयैः-गृहैः गृहाणां वा न मोदितः आल०, तं आलयामोदितम् । नास्ति गृहममकार इत्यर्थः । अपगताः आपदो यस्य स अपापदः, तं अपापदम् । शमितः-क्षयं नीतो मानः-अहङ्कारो येन स शमितमानः, तं शमितमानम् । आ-समन्तात् मोहितः आमोहितः, तं आमोहितम् । कथम् ? । 'न' निषेधे । विमला चासौ माला च विमलमाला, तया विमलमालया । तामरसवद् भासुरः तामरसभासुरः, तं तामरसभासुरम् । मोहः संजातोऽस्य इति मोहितः, न मोहितः अमोहितः, तं अमोहितम् । इति प्रथमवृत्तार्थः ॥१॥ पृथ्वीच्छन्दसा स्तुतिरियम् अर्धपादयमकेन॥

दे० व्या०—अपापदमलमिति । विमलं-विमलनाथं वयं अलं-अत्यर्थं यथा स्यात् तथा आनमामः इत्यन्वयः । 'णम प्रह्वीभावे' धातुः । 'आनमामः' इति क्रियापदम् । के कर्तारः ? । वयम् । कं कर्मतापन्नम् ? । विमलम् । किंविशिष्टं विमलम् ? । 'अपापदम्' न पापं ददातीत्यपापदः तम् । अपापः-पापरहितो यो दमस्तं लाति गृह्णातीत्यपापदमलः तं इति एकपदमेव वा । पुनः किंविशिष्टम् ? । 'शमितम्' शं-सुखं ( इतं- ) प्राप्तं येन स तम् । पुनः किंविशिष्टम् ? । हितं-हितकारकम्, मोक्षमार्गप्रदर्शनात् । पुनः किंविशिष्टम् ? । 'नतामरसभासुरम्' नता-प्रह्वीभूता अमरसभा-देवपर्षत् असुरा-भुवनपतयश्च यस्य स तम्, अथवा नता-नम्रीभूता अमरा-देवाः ( सभा-भासहिताः ) असुराश्च यस्य स तम् । पुनः किंविशिष्टम् ? । मोदितं-सुरभीकृतम् । कया ? । 'विमलमालया' विमला-निर्मला या माला-पुष्पस्रक् तया । पुनः किंविशिष्टम् ? । 'अपापदम्' । अपगता आपद्-विपत्तिर्यस्य स तम् । पुनः किंविशिष्टम् ? । 'अलङ्घनम्' नातिक्रमणीयं, सर्वेषामपि पूज्यत्वात् । पुनः किंविशिष्टम् ? । 'शमितमानम्' शमितः-शान्तिं नीतः मानः-स्मयो येन स तम् । पुनः किंविशिष्टम् ? । 'नामोहितम्' मोहेन आ-समन्तान्न वशीकृतम् । पुनः किंविशिष्टम् ? । 'तामरसभासुरम्' तामरसं-कमलं तद्वद् भासुरं-दीप्तम् । पुनः किंविशिष्टम् ? । 'आलयामोदितम्' आलये-गृहे अमोदितं-अहर्षितम् ॥ इति प्रथमवृत्तार्थः ॥ १ ॥

---

१ अयमर्थो विचारणीयः ।

समस्तजिनेश्वराणां नुतिः—

सदानवसुराजिता असमरा जिना भीरदाः
क्रियासु रुचितासु ते[1] सकलभारतीरा यताः ।
सदानवसुराजिता असमराजिनाभीरदाः
क्रियासुरुचितासु ते सकलभा[2] रतीरायताः ॥ २ ॥

—पृथ्वी

ज० वि०—सदानवेति । भो भव्यात्मन् ! ते–तव ते जिनाः–तीर्थकराः क्रियासु–कर्तव्येषु आयता-दीर्घा रतीः–मुदः क्रियासुः–विधेयासुः इति क्रियाकारकान्वयः । अत्र 'क्रियासुः' इति क्रियापदम् । के कर्तारः ? 'जिनाः' । काः कर्मतापन्नाः ? 'रतीः' । कस्य ? 'ते' । कासु ? 'क्रियासु' । रतीः कथंभूताः ? 'आयताः' । क्रियासु कथंभूतासु ? 'रुचितासु' अभिप्रेतासु । पुनः कथं० ? 'उचितासु' योग्यासु । जिनाः कथंभूताः ? 'सदानवसुराजिताः' दानवसहिता ये सुराः–देवाः तैः अजिता–उपसर्गादिभिः कृत्वा अक्षोभिताः । पुनः कथं० ? 'असमराः' समरः–संग्रामः तेन रहिताः । पुनः कथं० ? 'भीरदाः' भियं–भयं रदन्ति–भिन्दन्तीति भीरदाः–भयच्छिदः । पुनः कथं० ? 'सकलभारतीराः' सकलाः–सदोषाः सांसारिककृत्यरूपा ये भारास्तेषां पर्यन्तत्वात् तीराः–तीरभूताः । अथवा अकारप्रश्लेषविधानेन असकलां–अदोषां भारतीं–सरस्वतीं ईरयन्ति रान्तीति वा ते तथा । पुनः कथं० ? 'यताः' यत्नं कुर्वाणाः । निगृहीतेन्द्रिया इत्यर्थः । पुनः कथं० ? 'सदानवसुराजिताः' सदानं–दानसहितं यद् वसु–द्रव्यं तेन राजिताः–शोभिताः । इदं च विशेषणं गृहस्थावस्थामाश्रित्य ज्ञेयम् । पुनः कथं० ? 'असमराजिनाभीरदाः' असमं राजन्त इत्येवंशीला असमराजिनः, अथवा असमाश्च ते राजिनश्च असमराजिनः, एवंविधा नाभीरदा–नाभिदशना येषां ते तथा । पुनः कथं० । 'सकलभाः' सकला–सम्पूर्णा भा–दीप्तिर्येषां ते तथा ॥

अथ समासः—सह दानवैर्वर्तमाना इति सदानवाः 'तत्पुरुषः' । सदानवाश्च ते सुराश्च सदानव० 'कर्मधारयः' । न जिता अजिताः 'तत्पुरुषः' । सदानवसुरैरजिताः सदानव० 'तत्पुरुषः' । न विद्यते समरो येषां ते असमराः 'बहुव्रीहिः' । भियं रदन्तीति भीरदाः 'तत्पुरुषः' । सह कलाभिर्वर्तमाना इति सकलाः 'तत्पुरुषः' । सकलाश्च ते भाराश्च सक० 'कर्मधारयः' । सकलभाराणां तीराः सक० 'तत्पुरुषः' । अथवा न सकला असकला 'तत्पुरुषः' । असकला चासौ भारती च असक० 'कर्मधारयः' । असकलभारतीमीरयन्ति रान्तीति वा असक० 'तत्पुरुषः' । सह दानेन वर्तते यत् तत् सदानं 'तत्पुरुषः' । सदानं च तद् वसु च सदा० 'कर्मधारयः' ।

१ 'तेऽसकल०' इति पाठान्तरम् । २ '०भारतीरायताः' इत्यपि पाठः ।

**सदानवसुभी राजिना सदान० 'तत्पुरुषः'। न समं असमं 'तत्पुरुषः'। असमं राजन्त इत्यसमराजिनः 'तत्पुरुषः'। यद्वा न समा असमाः 'तत्पुरुषः'। असमाश्च ते राजिनश्च असम० 'तत्पुरुषः'। नाभी च रदाश्च नाभीरदाः 'इतरेतरद्वन्द्वः'। असमराजिनो नाभीरदा येषां ते असम० 'बहुव्रीहिः'। सकला भा येषां ते सकलभाः 'बहुव्रीहिः'॥ इति काव्यार्थः॥ २॥**

सि० वृ०—सदानवेति । भो भव्यात्मन् ! ते—तव ते जिनाः—तीर्थकराः क्रियासु—कर्तव्येषु आयता—दीर्घा रतीः—मुदः क्रियासुः—विधेयासुरित्यर्थः । 'डुकृञ् करणे' धातोराशिषि कर्तरि परस्मैपदे प्रथमपुरुषबहुवचनं यासुस् । 'यादादौ' ( सा०सू०८१४ ) इत्यनेन ऋकारस्य रिङादेशः । 'स्रोर्विसर्गः' ( सा०सू०१२४ ) । तथाच 'क्रियासुः' इति सिद्धम् । अत्र 'क्रियासुः' इति क्रियापदम् । के कर्तारः ? । जिनाः । काः कर्मतापन्नाः ? । रतीः । कस्य ? । ते । कासु ? । क्रियासु ।

"क्रिया कर्मणि चेष्टायां, करणं संप्रधावने ।
आरम्भोपायशिष्यार्थे—श्चिकित्साविकृतिष्वपि ॥"

इति विश्वः । रतीः कथंभूताः ? । आयताः । कथंभूतासु क्रियासु ? । रुचितासु । पुनः कथं० ? । उचितासु—योग्यासु । कथंभूता जिनाः ? । 'सदानवसुराजिताः' सदानवा—दानवैः सह वर्तमाना ये सुरा—देवाः तैरजिताः—उपसर्गादिभिरक्षोभिताः । पुनः कथंभूताः ? । 'असमराः' समरः—सङ्ग्रामस्तेन रहिताः । पुनः कथंभूताः ? । 'भीरदाः' रदन्ति—भिन्दन्ति इति रदाः, पचादित्वादच्, ततः भियं—भयं रदन्ति ते भीरदाः । भियं रदन्तीति विग्रहे । 'कर्मण्यण्' ( पा० अ० ३, पा० २, सू० १ ) इति वृद्धौ भिरदा इत्यनिष्टं स्यादिति । पुनः कथंभूताः ? । 'सकलभारतीराः' सकलाः—सदोषाः सांसारिककृत्यरूपा ये भारास्तेषां पर्यन्तत्वात् तीराः—तीरभूताः, यद्वा असकला—अदोषा भारतीं—गिरं ईरयन्ति रान्तीति वा असकलभारतीरा इत्यर्थः । पुनः कथंभूताः ? । यताः—यत्नं कुर्वाणाः, निगृहीतेन्द्रिया इत्यर्थः । पुनः कथंभूताः ? । 'सदानवसुराजिताः' सदानं—दानसहितं यद् वसु—द्रव्यं तेन राजिताः—शोभिताः । इदं च विशेषणं गृहस्थावस्थामाश्रित्य ज्ञेयम् । "देवभेदेऽनले रश्मौ, वसू रत्ने धने वसु" इत्यमरः ( श्लो० २७९१ ) । पुनः कथंभूताः ? । 'असमराजिनाभीरदाः' असमं राजन्त इत्येवंशीलाः असमराजिनः, असमाश्च ते राजिनश्चेति वा नाभीरदाः—नाभीदशना येषां ते तथा । नाभी च रदाश्च नाभीरदाः 'इतरेतरद्वन्द्वः' । पुनः कथंभूताः ? । 'सकलभाः' सकला—सम्पूर्णा भा—दीप्तिर्येषां ते तथा । "स्युः प्रभारुग्रुचिस्त्विड्भा०" इत्यमरः ( श्लो० २१२ ) । "भा मयूखमहसी छविर्विभा" इति हैमः ( का०२, श्लो०१४ ) ॥ २ ॥

**सौ० वृ०—सदानवेति । ते जिनाः—तीर्थंकरा उचितासु—योग्यासु मुक्तिप्राप्तिलक्षणासु क्रियासु ते—तव रतीः क्रियासुः इत्यन्वयः। 'क्रियासुः' इति क्रियापदम् । के कर्तारः ? । 'जिनाः' । काः कर्मतापन्नाः ? । 'रतीः' परमप्रीतीः । कासु ? । 'क्रियासु' आवश्यकाद्यनुष्ठानेषु । किंवि० क्रियासु ? । 'उचितासु' योगक्षेमावाप्तियोग्यासु । कस्य ? । 'ते' तव । किंविशिष्टा जिनाः ? । दानवैः सहिता ये सुरा—अमराः तैः अजिताः—अपराजिताः 'सदानवसुराजिताः' । पुनः किंवि० जिनाः ? । 'असमराः' असङ्ग्रामाः । पुनः**

किं० जिनाः ?। भीः-भयं तद् रदन्ति-दारयन्ति 'भीरदाः'। पुनः किं० जिनाः ?। सकला-सम्पूर्णा भा-प्रभा येषां ते 'सकलभाः'। यद्वा सकला-समस्ता भारती-सरस्वती तां ईरयन्ति-प्रेरयन्ति ते 'सकलभारतीराः', यद्वा सकलभारतीं रान्ति-ददति ते 'सकलभारतीराः'। पुन० किं० जिनाः ?। 'यताः' यत्नं कुर्वाणा धर्मोपदेशादिषु। पुनः किं० जिनाः ?। दानेन सहितं यद् वसु-धनं तेन राजिताः-शोभमानाः 'सदानवसुराजिताः'। एतद् विशेषणं गृहस्थावस्थामाश्रित्य ज्ञेयम्। यद्वा सदा-निरन्तरं नवसु-नवपद्मेषु राजिताः-शोभिताः 'सदानवसुराजिताः'। पुनः किं० जिनाः ?। असमाः-अनन्यसदृशा राजन्ते-शोभन्ते इत्येवंशीलाः असमराजिनः तादृशा नाभी-तुन्दककूपिका रदा-दशना येषां ते 'असमराजिनाभीरदाः'। पुनः किं० जिनाः ?। सुष्ठु-प्रधाना रुचिता-परमानन्दहेतुता येषां ते सुरुचिताः। कासु ?। क्रियासु। पुनः किं० जिनाः ?। सकलः-समस्तो यो भारः-संसारभ्रमणरूपः तस्य तीरं-तटं तं प्रति आयताः-प्राप्ताः 'सकलभारतीरायताः', संसारसमुद्रपारं प्राप्ताः। इति पदार्थः॥

अथ समासः—दानवैः सहिताः सदानवाः, सदानवाश्च ते सुराश्च सदानवसुराः, सदानवसुरैः अजिताः सदानवसुराजिताः। न विद्यते समरः-सङ्ग्रामो येषां त असमराः। जयन्ति रागादीन् इति जिनाः। भियं रदन्ति-कर्षन्ति ते भीरदाः। क्रिया सुष्ठु-शोभना रुचिता च येषां ते क्रियासुरुचिताः। 'उ' इति प्रकाशनार्थे। "उसंभायुव (?) प्रकाशे स्यात्" इत्यनेकार्थः। सकला भा-कान्तिः येषां ते सकलभाः। दानेन सहितं सदानम्, सदानं च तद् वसु च सदानवसु, सदानवसुना राजिताः सदानवसुराजिताः। यद्वा नवेति नवसंख्याका सुष्ठु राः-स्वर्ण हेमपङ्कजं तैः जिताः-शोभमाना नवसुराजिताः, सुरसंचारितस्वर्णकमलोपरि गमनत्वात्। इदं कैवल्यावस्थामाश्रित्य ज्ञेयम्। न समाः असमाः, असमा राजन्ते इत्येवंशीलाः असमराजिनः, नाभयश्च रदाश्च नाभीरदाः, असमराजिनः नाभीरदा येषां ते असमराजिनाभीरदाः। सकलश्चासौ भारश्च सकलभारः, सकलभारस्य तीरं सकलभारतीरं, आ-समन्तात् यता-प्राप्ता सकलभारतीरायताः। यद्वा सकला चासौ भारती च सकलभारती, सकलभारतीं रान्तीति ते सकलभारतीराः। एवंविधा जिनाः ते-तव क्रियासु रतीः क्रियासुः॥ इति द्वितीयवृत्तार्थः॥ २॥

दे० व्या०—सदानवेति। ते जिनाः-तीर्थंकराः ते-तव रुचितासु क्रियासु-कार्येषु रतीः क्रियासुः-विधेयासुः इत्यन्वयः। 'डुकृञ् करणे' धातुः। 'क्रियासुः' इति क्रियापदम्। के कर्तारः ?। जिनाः। काः कर्मतापन्नाः ?। रतीः। कस्य ?। ते-तव। कासु ?। क्रियासु। किंविशिष्टा जिनाः ?। 'सदानवसुराजिताः' दानवैः-असुरैः सह वर्तमाना ये सुरा-वैमानिकाः तैः अजिता-अवशीकृता उपसर्गादिभिरजिता। पुनः किंविशिष्टाः ?। 'असमराः' नास्ति समरः-संग्रामो येषां ते तथा, सकलकर्मविपक्षपक्षक्षयात्। पुनः किंविशिष्टाः ?। भीरदाः-भीविलेखकाः ('रद विलेखने' भियं रदन्ति-भिन्दन्तीति), भयनाशकाइति निष्कर्षः। पुनः किंविशिष्टाः ?। ('सकलभारतीराः' सकलां-कृत्स्नां भारतीं-वियां रान्ति-ददतीति तथा)। पुनः किंविशिष्टाः ?। यताः-प्रयत्नवन्तः। पुनः किंविशिष्टाः ?। 'सदानवसुराजिताः' सदानं-दानसहितं यद् वसु-द्रव्यं तेन राजिताः-शोभिताः [यावत्,] सदा दानदायकत्वात्। पुनः किंविशिष्टाः ?। 'असमराजिनाभीरदाः' नाभिश्च रदाश्चेति पूर्वं 'द्वन्द्वः', ततः असमा-निरुपमा राजिनः-शोभमाना नाभीरदा येषामिति विग्रहः। पुनः किंविशिष्टाः ?। 'सकलभाः' सकला-समग्रा भा-कान्तिः येषां ते तथा। पुनः किंविशिष्टाः ?। आयताः। किंविशिष्टासु क्रियासु ?। रुचितासु-मनोज्ञासु। पुनः किंविशिष्टासु ?। उचितासु-योग्यासु पुण्यरूपासु। इति द्वितीयवृत्तार्थः॥ २॥



**जिनप्रवचनप्रणामः—**

सदा यतिगुरोरहो ! नमत मानवैरञ्चितं
मतं वरदमेनसा रहितमायताभावतः ।
सदायति गुरोरहो न मतमानवैरं चितं
मतं वरदमेन सारहितमायता भावतः ॥ ३ ॥

—पृथ्वी

ज० वि०—सदेति । 'अहो' इत्यामन्त्रणे । भो भव्याः ! यूयं 'यतिगुरोः' यतीनां—साधूनां गुरुः—तत्त्वोपदेष्टा तस्य यतिगुरोः अर्हत इत्यर्थः, मतं—शासनं सदा—सर्व [दा] कालं भावतः—भक्तितः अनुरागतो वा नमत—प्रणमत इति क्रियाकारकयोजना । अत्र 'नमत' इति क्रियापदम् । के कर्तारः ? 'यूयम्' । किं कर्मतापन्नम् ? 'मतम्' । कस्य ? 'यतिगुरोः' । कथम् ? 'सदा' । कुतः ? 'भावतः' । मतं कथंभूतम् ? 'अञ्चितं' पूजितम् । कैः कर्तृभिः ? 'मानवैः' नरैः । पुनः कथं० ? 'वरदं' अभीष्टप्रदम् । पुनः कथं० ? 'रहितं' त्यक्तम् । केन ? 'एनसा' पापेन । पुनः कथं० ? 'सदायति' सती—शोभना आयतिः—प्रभुता उत्तरकालो वा यस्य तत् तथा । पुन कथं० ? 'रहः' रहस्यभूतम् । पुनः कथं० ? 'न मतमानवैरं' मते—अभिप्रेते मानवैरे—अहङ्कारविरोधौ यस्य तत् मतमानवैरम्, न इति निषेधे, तादृक् न भवतीति भावः । पुनः कथं० ? 'चितं' व्याप्तं सम्बद्धं वा । केन ? 'वरदमेन' प्रधानप्रशमेन । किं कुर्वता ? 'आयता' गच्छता । पुनः कथं० ? 'सारहितं' सारं च तत् हितं च, यद्वा सारं हितं यस्मिन् तत् तथा । यतिगुरोः कथंभूतस्य ? 'आयताभावतः' आयता—विस्तारिणी आभा—छाया सा विद्यते यस्य स आयताभावान् तस्य । पुनः कथंभूतस्य ? 'गुरोः' महतः ॥

अथ समासः—यतीनां यतिनां वा गुरुः यतिगुरुः 'तत्पुरुषः' । तस्य यति० । वरं ददातीति वरदं 'तत्पुरुषः' । तत् वरदम् । आयता चासौ आभा च आयताभा 'कर्मधारयः' । आयताभा वर्तते यस्य स आय० । तस्य आयता० । सती आयतिर्यस्य तत् सदायति 'बहुव्रीहिः' । तत् सदा० । मानं च वैरं च मानवैरे 'इतरेतरद्वन्द्वः' । मते मानवैरे यस्य तत् मत० 'बहुव्रीहिः' । तत् मत० । वरश्चासौ दमश्च वरदमः 'कर्मधारयः' । तेन वर० । सारं च तत् हितं च सारहितं 'कर्मधारयः' । यद्वा सारं हितं यस्मिन् तत् सार० 'बहुव्रीहिः । तत् सार० ॥ इति काव्यार्थः ॥ ३ ॥

सि० वृ०–सदेति। अहो इत्यामन्त्रणे । हे भव्याः! यूयं यतिगुरोः–अर्हतः मतं–शासनं सदा–सर्वकालं भावतः–भक्तितः अनुरागतो वा नमत–प्रणमतेत्यर्थः। 'णम प्रह्वीभावे' धातोः 'आशीःप्रेरणयोः' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे मध्यमपुरुषबहुवचनं णम् अग्रे त। 'आदेः ष्णः स्नः' (सा० सू० ७४८) इति णस्य नकारः। 'अप् कर्तरि' (सा० सू० ६९१) इत्यप्। 'स्वरहीनं०' (सा० सू० ३६ )। तथाच 'नमत' इति सिद्धम्। अत्र 'नमत' इति क्रियापदम्। के कर्तारः ?। यूयम्। किं कर्मतापन्नम् ?। मतम्। कस्य ?। 'यतिगुरोः' यतीनां–साधूनां गृणाति धर्मोपदेशं यथार्थोपदेष्टा वा यतिगुरुः, तस्य यतिगुरोः। कथम् ?। सदा। कुतः ?। 'भावतः' भावादिति भावतः सार्वविभक्तिकस्तस्। कथंभूतं मतम् ?। अञ्चितं–पूजितम्। 'नाञ्चेः पूजायां' ( सा० सू० २८७ ) इति नकारस्य लोपः। कैः कर्तृभिः ?। मानवैः–मनुष्यैः। पुनः कथंभूतम् ?। 'वरदं' वरं–वाञ्छितं ददातीति वरदम्। पुनः कथंभूतम् ?। रहितं–वर्जितम्। केन ?। एनसा–पापेन। पुनः कथंभूतम्। सती-शोभना आयतिः-प्रभावः उत्तरकालो वा यस्य तत् तथा। "आयतिस्तूत्तरः कालः" (अभि० का० २, श्लो० ७६ ), "स्यात् प्रभावेऽपि चायतिः" इत्यमरः। पुनः कथंभूतम् ?। रहः–रहस्यभूतं तत्त्वमितियावत्। "रहोऽपि गुह्ये भवने च तत्त्वे" इति विश्वः। पुनः कथंभूतम् ?। 'न मतमानवैरं' न इति निषेधवाचकम्, तेन न मते–न अभिप्रेते मानवैरे–अहङ्कारविरोधौ यस्य तत्। मानं च वैरं च मानवैरे 'इतरेतरद्वन्द्वः'। "वैरं विरोधो विद्वेषः" इत्यमरः ( श्लो० ४११ )। पुनः कथंभूतम् ?। चितं–व्याप्तम्। केन ?। 'वरदमेन' वरः–प्रधानो यो दमो–दमनं तेन। वरदमेन किं कुर्वता ?। आयता–आगच्छता। पुनः कथंभूतम् ?। 'सारहितं' सारं हितं यस्मिन् तत्, सारं च तद्धितं चेति वा। कथंभूतस्य यतिगुरोः ?। 'आयताभावतः' आयता–विस्तारिणी आभा–छाया सा विद्यते यस्य स आयताभावान् तस्य। कथंभूतस्य ?। गुरोः–महतः ॥३॥

सौ० वृ०–सदेति। अहो इत्यामन्त्रणे। भो भव्याः! यूयं यतीनां–साधूनां गुरुः-धर्मोपदेष्टा तस्य यतिगुरोः-तीर्थकृतः मतं–शासनं प्रवचनं वा सदा–सर्वदा भावतो–रागतः भक्तितो वा नमत इत्यन्वयः। 'नमत' इति क्रियापदम्। के कर्तारः ?। 'यूयं' भवन्तः। 'नमत' प्रणमत। किं कर्मतापन्नम् ?। 'मतम्'। कथम् ?। 'सदा' सर्वदा। किंवि० मतम् ?। 'अर्चितं' पूजितम्। कैः ?। 'मानवैः' मनुष्यैः। पुनः किं० मतम् ?। 'वरदं' इष्टवरदम्–इष्टवरदायकम्। पुनः किं० मतम् ?। 'रहितं' विरहितम्। केन ? 'एनसा' पापेन। किंविशिष्टस्य यतिगुरोः ?। आयता–महती या आभा–शोभा तद्वान् आयताभावान् तस्य 'आयताभावतः'। पुनः किं० मतम् ?। सत्–शोभना आयतिः–उत्तरकालः पूजाप्राप्तिर्वा यस्य तत् 'सदायति'। पुनः किं० मतम् ?। 'रहः' रहस्यभूतम्। कस्य ?। 'गुरोः' पूज्यस्य। पुनः किं० मतम् ?। मतं-संमतं मानं च वैरं च यस्य तत् 'मतमानवैरम्'। कथम् ?। 'न' निषेधे। रागद्वेषरहितमित्यर्थः। पुनः किं० मतम् ?। 'चितं' व्याप्तम्। केन ?। वरः–प्रधानो दमः-इन्द्रियविषयदमलक्षणः तेन 'वरदमेन'। वरदमेन किंविशिष्टेन ?। 'आयता' विस्तीर्णेन। पुनः किं० मतम् ?। सारं-प्रधानं हितं यस्मिन् तत् 'सारहितम्'। इति पदार्थः ॥

अथ समासः–यतीनां गुरुः यतिगुरुः, तस्य यतिगुरोः। वरं ददातीति वरदः, तं वरदम्। आयता भा यस्यासौ आयताभावान्, तस्य आयताभावतः। सती-शोभना आयतिः यस्य तत् सदायति। गृणाति–वदति तत्त्वं-हिताहितम् इति गुरुः, तस्य गुरोः। मानं च वैरं च मानवैरे, मते मानवैरे यस्य तत् मतमानवैरम्। वरश्चासौ दमश्च वरदमः, तेन वरदमेन। सारं च तत् हितं च सारहितम्, यद्वा सारं हितं यस्मिन् तत् सारहितम्। एवंविधं जिनमतं नमत ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

---

१ इदं सूत्रं पाणिनीयेऽपि।

दे० व्या०—सदेति । अहो इत्याश्चर्ये । यतिगुरोः–जिनवरस्य मतं–प्रवचनं यूयं भावतः–भक्तितः नमत इत्यन्वयः । 'णम प्रह्वीभावे' धातुः । 'नमत' इति क्रियापदम् । के कर्तारः ? । यूयम् । किं कर्मतापन्नम् ? । मतम् । मतं कस्य ? । 'यतिगुरोः' यतीनां गुरुः यतिगुरुः इति विग्रहः, तस्य । कस्मात् ? । भावतः । किंविशिष्टा यूयम् ? । 'आयताः' आ–समन्तात् यताः–यत्नं कुर्वाणाः । किंविशिष्टस्य 'यतिगुरोः' ? । 'आयताभावतः' आयता–विपुला भा–कान्तिर्यस्य स तस्य । अस्त्यर्थे वतुप्प्रत्ययः । किंविशिष्टं मतम् ? । अश्चितं–पूजितम् । कैः ? । मानवैः–मनुष्यैः । पुनः किंविशिष्टम् ? । वरदं–वाञ्छितप्रदम् । पुनः किंविशिष्टम् ? । रहितं–वर्जितम् । केन ? । एनसा–पापेन । "एनः पाप्मा च पातकम्" इत्यभिधानचिन्तामणिः ( का० ६, श्लो० १६ ) । पुनः किंविशिष्टम् ? । 'सदायति' सती–शोभना आयतिः–उत्तरकालो यस्य तत् । "आयतिस्तूत्तरः कालः" इत्यभिधानचिन्तामणिः ( का० २, श्लो० ७६ ) । भगवत्प्रवचनस्य कदापि केनापि खण्डयितुमशक्यत्वात् । "आयतिः प्रभुता" इति प्राञ्चः । पुनः किंविशिष्टम् ? । रहः–रहस्यभूतम् । कस्य ? । गुरोः, अर्हत इत्यर्थः । पुनः किंविशिष्टम् ? । 'न मतमानवैरम्' मानश्च वैरं चेति पूर्वं 'द्वन्द्वः', ततो न मते–नाभिप्रेते मानवैरे–गर्वविरोधौ यस्य इति विग्रहः । पुनः किंविशिष्टम् ? । चितं–व्याप्तम् । केन ? । वरदमेन–प्रधानोपशमेन । वरश्चासौ दमश्चेति समासः । उपशमस्यैवात्र प्रधानत्वेन ख्यापनात् । पुनः किंविशिष्टम् ? । 'सारहितं' सारं–प्रधानं हितं–पथ्यं यस्मिन् तत् । पुनः किंविशिष्टम् ? । मतं–वाञ्छितम् । सतामिति शेषः ॥ इति तृतीयवृत्तार्थः ॥३॥



श्रीरोहिण्यै विनतिः—

प्रभाजि तनुतामलं परमचापला रोहिणी
सुधावसुरभीमना मयि सभाक्षमालेहितम् ।
प्रभाजितनुताऽमलं परमचापलाऽऽरोहिणी
सुधावसुरभीमनामयिसभा क्षमाले हितम् ॥ ४ ॥

—पृथ्वी

ज० वि०—प्रभाजीति । रोहिणी–रोहिण्याख्या देवी मयि–मद्विषये अलम्–अत्यर्थं परं–प्रकृष्टम् अमलम्–अनवद्यम् ईहितं–वाञ्छितं हितं–सुखानुकूलं वस्तु तनुतां–विस्तारयतु इति क्रियाकारकयोजना । अत्र 'तनुताम्' इति क्रियापदम् । का कर्त्री ? 'रोहिणी' । किं कर्मतापन्नम् ? 'हितम्' । कथं० 'अमलं' गतमलम् । कस्मिन् ? 'मयि' । कथंभूते मयि ? 'प्रभाजि' प्रकर्षेण भजते–सेवत इति प्रभाक् तस्मिन्, अत्यन्तसेवावर्तिनीत्यर्थः । पुनः कथंभूते ? 'क्षमाले' क्षमा–क्षान्तिस्तां लातीति क्षमालस्तस्मिन् । रोहिणी कथंभूता ? 'अचापला' चापलं–चपलत्वं न विद्यते यस्याः सा तथा । पुनः कथं० ? 'सुधावसुः' सुधा–प्रासादादीनां लेपद्रव्यं छोहेति प्रसिद्धा तद्वद् वसुः–तेजो यस्याः सा तथा, अथवा सुधा–पीयूषं सैव वसु–द्रव्यं यस्याः सा तथा । पुन कथं० ? 'अभीमनाः' न भीः–भयं मनसि यस्याः सा तथा । पुनः कथं० ? 'सभाक्षमाला' भा–प्रभा तया सह वर्तमाना सभा, एतादृशी अक्षमाला यस्याः सा

तथा। पुनः कथं० ? 'प्रभाजितनुता' प्रभाजितैः–तेजस्तिरस्कृतैः नुता–स्तुता। पुनः कथं० ? 'परमचापला' परमं–प्रधानं चापं–धनुः लातीति तथा। पुनः कथं० ? 'आरोहिणी'। अयं आवश्यके णिनिः। कां कर्मतापन्नाम् ? 'सुधावसुरभीं' धावनं धावो–वेगः, शोभनो धावो यस्याः सा सुधावा या सुरभी–गौस्ताम्। णिनिसम्बन्धादत्र 'न निष्ठादिषु' इति षष्ठीप्रतिषेधः। पुनः कथं० ? 'अनामयिसभा' अनामयिनी–अरोगिणी सभा–संसद् यस्याः सा तथा॥

अथ समासः—चपलस्य भावः चापलं 'तत्पुरुषः'। न विद्यते चापलं यस्याः सा अचापला 'बहुव्रीहिः'। सुधावद् वसुर्यस्याः सा सुधावसुः 'बहुव्रीहिः'। अथवा सुधैव वसु यस्याः सा सुधावसुः 'बहुव्रीहिः'। भीः मनसि यस्याः सा भीमनाः 'बहुव्रीहिः'। न भीमनाः अभीमनाः 'तत्पुरुषः'। सह भया वर्तत इति सभा 'तत्पुरुषः'। सभा अक्षमाला यस्याः सा सभा० 'बहुव्रीहिः'। प्रभया जिताः प्रभाजिताः 'तत्पुरुषः'। प्रभाजितैर्नुता प्रभाजि० 'तत्पुरुषः'। न विद्यते मलो यत्र तदमलं 'बहुव्रीहिः'। परमं च तत् चापं च परमचापं 'कर्मधारयः'। परमचापं लातीति परम० 'तत्पुरुषः'। शोभनो धावो यस्याः सा सुधावा 'बहुव्रीहिः'। सुधावा चासौ सुरभी च सुधा० 'कर्मधारयः'। तां सुधाव०। आमयोऽस्याऽस्तीति आमयिनी ('बहुव्रीहिः')। न आमयिनी अनामयिनी 'तत्पुरुषः'। अनामयिनी सभा यस्याः सा अनामयिसभा 'बहुव्रीहिः'। क्षमां लातीति क्षमालः 'तत्पुरुषः'। तस्मिन् क्षमाले॥ इति काव्यार्थः॥ ४॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीविमलजिनेश्वरस्तुतेर्व्याख्या॥ १३॥

सि० वृ०—प्रमाजीति। रोहिणी–रोहिणीनाम्नी देवी मयि–मद्विषये अलम्–अत्यर्थं परं–प्रकृष्टम् अमलम्–अनवद्यम् ईहितं–वाञ्छितं हितं–सुखाद्यनुकूलं वस्तु तनुतां–विस्तारयत्वित्यर्थः। 'तनु विस्तारे' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि आत्मनेपदे प्रथमपुरुषैकवचनं तन् अग्रे ताम् 'तनादेरुप्' (सा० सू० ९९७) अपोपवादः। 'स्वरहीनं०' (सा० सू० ३६)। तथाच 'तनुताम्' इति सिद्धम्। अत्र 'तनुताम्' इति क्रियापदम्। का कर्त्री ?। रोहिणी। रोहन्ति कार्याण्यस्यामिति रोहिणी। रुहेरिनन्। '[1]गौरादित्वात् ङीष्'। किं कर्मतापन्नम् ?। हितम्। कथंभूतं हितम् ?। परम्। पुनः कथं०। अमलम्। कथम् ?। अलम्। कस्मिन् ?। मयि। कथंभूते मयि ?। 'प्रभाजि' प्रकर्षेण भजते–सेवत इति प्रभाक्, तस्मिन् प्रभाजि, अनवरतं सेवातत्पर इत्यर्थः। पुनः कथंभूते ?। 'क्षमाले' क्षमा–क्षान्तिस्तां लाति–गृह्णातीति क्षमालस्तस्मिन्। कथंभूता रोहिणी ?। 'अचापला' चापलं–चपलत्वं न विद्यते यस्या यस्माद् वा सा तथा। पुनः कथंभूता ?। 'सुधावसुः' सुधा–प्रासादादीनां लेपनद्रव्यं छोह इति प्रसिद्धा तदिव वसुः–तेजो यस्याः सा तथा। अथवा सुधा–पीयूषं सैव वसु–द्रव्यं यस्याः सा तथेत्यर्थः। पुनः कथंभूता ?। 'अभीमनाः' न भीः–भयं मनसि यस्याः सा तथा। पुनः कथं० ?। 'सभाक्षमाला' भा–प्रभा तया सह वर्तमाना सभा, एतादृशी अक्षमाला यस्याः सा।

---

१ 'गौरादिभ्यो मुख्यान् ङीः' इति सिद्धहेमे ( २।४।१९ )।

पुनः कथंभूता ? । 'प्रभाजितनुता' प्रभया—तेजसा जितैः—तिरस्कृतैः नुता—स्तुता । "स्तवः स्तोत्रं स्तुतिर्नुतिः" इति हैमः ( का० २, श्लो० १८३ ) । पुनः कथंभूता ? । 'परमचापला' परमं—प्रकृष्टं च तत् चापं-धनुः लाति—गृह्णातीति परमचापला । पुनः कथंभूता ? । 'आरोहिणी' अवश्यमारोक्ष्यत्यारोहिणी । अयमावश्यके णिनिः । 'ऋन्नेभ्यो ङीप्' ( पा० अ० ४, पा० १, सू० ५ ) इति ङीप् । काम् ? । 'सुधावसुरभीं' धावनं धावः—वेगः सुष्टु—शोभनो वेगो यस्याः सा सुधावा, 'सृ गतौ' इत्यस्य धावादेशः, सा चासौ सुरभी—गौस्ताम् । पुनः कथंभूता ? । 'अनामयिसभा' आमयो—रोगः सोऽस्याऽस्तीति आमयिनी, न आमयिनी—निरोगिणी सभा—संसत् यस्याः सा । 'गोस्त्रियोरुपसर्जनस्य' ( पा० अ० १, पा० २, सू० ४८ ) इति ह्रस्वः । "आम आमय आकल्यम्" इति हैमः ( का० ३, श्लो० १२७ ) पृथ्वीच्छन्दः । "यतिर्वसुकृता जसौ जसयलाश्च पृथ्वी गुरुः" इति तल्लक्षणम् ॥ ४ ॥

॥ इति महोपाध्याय० विमलस्तुतिवृत्तिः ॥ १३ ॥

सौ० वृ०—प्रभाजीति । रोहिणीनाम्नी देवी मयि-अस्मिन् (मद् ?) विषये ईहितं-वाञ्छितं अमलं-अनवद्यं हितं-पथ्यं तनुतामित्यन्वयः । 'तनुताम्' इति क्रियापदम् । का कर्त्री ? । 'रोहिणी' देवी । 'तनुतां' विस्तारयतु । किं कर्मतापन्नम् ? । 'ईहितम्' । कस्मिन् ? । 'मयि' । कथम् ? । 'अलं' अत्यर्थम् । किंवि० ईहितम् ? । 'अमलम्' । पुनः किं० ईहितम् ? । 'परं' प्रकृष्टं प्रधानं वा । पुनः किं० ईहितम् ? । 'हितं' हित-कृत् । किंविशिष्टे मयि ? । प्रकर्षेण भजतीति प्रभाक् तस्मिन् 'प्रभाजि', समीपवर्तिनीत्यर्थः । पुनः किं० मयि ? । क्षमां लातीति क्षमालस्तस्मिन् 'क्षमाले' उपशमवति । किंवि० रोहिणी ? । प्रभया-कान्त्या जिता ये अमराः तैः नुता-स्तुता 'प्रभाजितनुता' । पुनः किं० रोहिणी ? । 'अचापला' चापल्यरहिता । पुनः किं० रोहिणी ? । परमं-प्रधानं चापं-धनुः लाति-गृह्णाति इति 'परमचापला' । पुनः किं० रोहिणी ? । सुधा-प्रसादलेपद्रव्यम्, "छो" इति भाषायाम्, तद्वद् वसुः-तेजो यस्याः सा 'सुधावसुः' गौरवर्णा इत्यर्थः । यद्वा सुधा-अमृतं तदेव वसु-द्रव्यं यस्याः सा 'सुधावसुः' । पुनः किं० रोहिणी ? । नास्ति भीः-भयं मनसि यस्याः ( सा ) 'अभीमनाः' । पुनः० किं० रोहिणी ? । 'आरोहिणी' आरूढा । कां कर्मतापन्नाम् ? । सु-शोभनो धावः-वेगो यस्याः सा तादृशी सुरभीः तां 'सुधावसुरभीम्' । पुनः किं० रोहिणी ? । आमयो-रोगो नास्तीति अनामयी, अनामयी सभा यस्याः सा 'अनामयिसभा' । पुनः किं० रोहिणी ? । भा-कान्तिस्तया सहिता अक्षमाला-जाप्यमाला यस्याः सा 'सभाक्षमाला' । एतादृशी रोहिणी देवी मयि विषये ईहितं तनुताम् । इति पदार्थः ॥

अथ समासः—प्रकर्षेण भजते इति प्रभाक्, तस्मिन् प्रभाजि । चपलस्य भावः चापलम्, न विद्यते चापलं यस्याः सा अचापला । सुधावद् वसुर्यस्याः सा सुधावसुः, यद्वा सुधा एव वसु यस्याः सा सुधावसुः । न विद्यते भीः-भयं मनसि यस्याः सा अभीमनाः । भया-कान्त्या सहिता सभा, ( सभा ) अक्षमाला यस्याः सा सभाक्षमाला । प्रभया जिताः प्रभाजिताः, प्रभाजितैः नुता प्रभाजितनुता । न विद्यते मलो यस्मिन् तत् अमलम् । परमश्चासौ चापश्च परमचापः, परमचापं लातीति परमचापला । आरुह्यते सा आरोहिणी । सु-शोभनो धावो-वेगो यस्याः सा सुधावा, सुधावा चासौ सुरभी च सुधावसुरभी, तां सुधावसुरभीम् । नास्ति आमयो-रोगो यस्यां सा अनामयिनी, अनामयिनी सभा यस्यां( स्याः ) सा अनामयिसभा । क्षमां लातीति क्षमालः, तस्मिन् क्षमाले ॥

" अक्षो बिभीतके कर्षे, रावणे शकटात्मनोः ।
पाशके मणिके चाक्षः, इन्द्रिये खण्डमोक्षयोः ॥ "

इत्यनेकार्थतिलके । इति चतुर्थवृत्तार्थः ॥ ४ ॥

श्रीविमलजिनेन्द्रस्य, स्तुतेरर्थो लिबीकृतः ।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना ॥
इति त्रयोदशविमलजिनस्तुतिः ॥ ४।१३।५२॥

दे० व्या०—प्रभाजीति । रोहिणी देवी मयि–मद्विषये हितं–पथ्यं तनुतां–विस्तारयतां इत्यन्वयः । 'तनु विस्तारे' धातुः । 'तनुताम्' इति क्रियापदम् । का कर्त्री ? । रोहिणी । किं कर्मतापन्नम् ? । हितम् । कथम् ? । अलम्–अत्यर्थम् । कस्मिन् ? । मयि । किंविशिष्टे मयि ? । प्रभाजि–प्रकर्षेण भजमाने । पुनः किंविशिष्टे ? । 'क्षमाले' क्षमां लाति–गृह्णाति इति क्षमालः तस्मिन् । किंविशिष्टं हितम् ? । अमलम्–अनवद्यम् । पुनः किंविशिष्टम् ? । परं–प्रकृष्टम् । पुनः किंविशिष्टम् ? । ईहितं–वाञ्छितम् । किंविशिष्टा रोहिणी ? । अचापला–चापल्यरहिता । पुनः किंविशिष्टा ? । 'सुधावसुः' सुधा–अमृतं तद्वद् वसुः-प्रभा यस्याः सा तथा । पुनः किंविशिष्टा ? । 'अभीमनाः' अभीः–निर्भयं मनो–मानसं यस्याः सा । पुनः किंविशिष्टा ? । 'सभाक्षमाला' भया–कान्त्या सह वर्तमाना अक्षमाला यस्याः सा । पुनः किंविशिष्टा ? । 'प्रभाजितनुता' प्रभसा–तेजसा जिताः पराभूताः तैः नुता–स्तुता कथम् ? । अलम् । पुनः किंविशिष्टा ? । 'परमचापला' परमम्–उत्कृष्टं चापं–धनुः लाति–गृह्णातीति तथा । " धनुश्चापोऽस्त्रमिष्वासः " इत्यभिधानचिन्तामणिः ( का०३, श्लो० ४३९ ) । पुनः किंविशिष्टा ? । आरोहिणी–आरोहणशीला । काम् ? । 'सुधावसुरभीं' सुधावा–सुवेगा या सुरभिः–गौः ताम् । पुनः किंविशिष्टा ? । 'अनामयिसभा' न विद्यते आमयो–रुग् यस्यां एवंविधा सभा–पर्षत् यस्याः सा तथा ॥ इति चतुर्थवृत्तार्थः ॥ ४ ॥ पृथ्वीच्छन्दः ॥ " यतिर्वसुकृता जसौ जसयलाश्च पृथ्वी गुरुः " इति च तल्लक्षणम् ॥



# १४ श्रीअनन्तजिनस्तुतयः ।

अथ श्रीअनन्तनाथस्य स्तुतिः—

सकलधौतसहासनमेरव-
स्तव दिशन्त्वभिषेकजलप्लवाः ।
मतमनन्तजितः स्नपितोल्लसत-
सकलधौतसहासनमेरवः ॥ १ ॥

—द्रुतविलम्बितम्

ज० वि०—सकलधौतेति। भो भव्यात्मन्! 'अनन्तजितः' अनन्तजिन्नाम्नो जिनस्य अनन्तजित् इत्यपि नामास्ति, "स्यादनन्तजिदनन्तः" इत्यभिधानचिन्तामणि (का०१, श्लो०२९)-वचनात्, 'अभिषेकजलप्लवाः' अभिषेकस्य—जन्माभिषेकस्य जलप्लवाः—जलप्रवाहाः तव—भवतः मतं—अभिप्रेतं दिशन्तु—ददतु इति क्रियाकारकान्वयः । अत्र 'दिशन्तु' इति क्रियापदम् । के कर्तारः ? 'अभिषेकजलप्लवाः' । किं कर्मतापन्नम् ? 'मतम्' । कस्य ? 'तव' । अभिषेकजलप्लवाः कस्य ? 'अनन्तजितः' । कथंभूता अभिषेकजलप्लवाः ? 'सकलधौतसहासनमेरवः'; सकलाः—समस्ता धौताः—क्षालिताः सहासाः—सविकासा नमेरवो—देववृक्षविशेषा यैस्ते तथा। पुनः कथं०? 'स्नपितोल्लसत्सकलधौतसहासनमेरवः' उल्लसन्-शोभमानः सकलधौतः कलधौतं—सुवर्णं तेन सह वर्तमानः सहासनेन—स्नानपीठेन असनैः—वृक्षविशेषैर्वा सह वर्तमान एवंविधो यो मेरुः—मेरुपर्वतः, ततः स्नपितः—स्नानं कारित उल्लसत्सकलधौतसहासनमेरुर्यैस्ते तथा । यद्वा उल्लसत्सकलधौतं सहं-क्षमं दृढमित्यर्थः, एतादृशमासनं यत्र स उल्लसत्सकलधौतसहासन एवंविधो मेरुः स्नपितो यैस्ते तथा ॥

अथ समासः—सकलाश्च ते धौताश्च सकलधौताः 'कर्मधारयः' । सह हासेन वर्तन्त इति सहासाः 'तत्पुरुषः' । सहासाश्च ते नमेरवश्च सहा० 'कर्मधारयः' । सकलधौताः सहासनमेरवो यैस्ते सकल० 'बहुव्रीहिः' । जलानां प्लवा जलप्लवाः 'तत्पुरुषः' । अभिषेकस्य जलप्लवा अभिषेकजलप्लवाः 'तत्पुरुषः' । सह कलधौतेन वर्तत इति सकल०'तत्पुरुषः'। उल्लसंश्चासौ सकलधौतश्च उल्लस० 'कर्मधारयः' । सह आसनेन असनैर्वा वर्तत इति सहासनः 'तत्पुरुषः' । सहासनश्चासौ मेरुश्च सहा० 'कर्मधारयः' । उल्लसत्सकलधौतश्चासौ सहासनमेरुश्च उल्लसत्सकल० 'कर्मधारयः' । स्नपित उल्लसत्सकलधौतसहासनमेरुर्यैस्ते स्नपितोल्लस० 'बहुव्रीहिः' । अथवा उल्लसच्च तत् सकलधौतं च उल्लस० 'कर्मधारयः' । सहं च तदासनं च

सहासनं ' कर्मधारयः ' । उल्लसत्सकलधौतं सहासनं यस्मिन् स उल्लस० ' बहुव्रीहिः । उल्लसत्सकलधौतसहासनश्चासौ मेरुश्च उल्लस० ' कर्मधारयः ' । स्नपित उल्लसत्सकलधौतसहासनमेरुर्यैस्ते स्नपितोल्ल० ' बहुव्रीहिः ' ॥ इति काव्यार्थः ॥ १ ॥

सि० वृ०—सकलधौतेति । भो भव्यात्मन् ! अनन्तानि ज्ञानादीनि अस्य, नास्ति गुणानामन्तो वाऽस्येति अनन्तः, स चासौ जिच्च अनन्तजित् तस्य अनन्तजितः—अनन्तजिन्नाम्नो जिनस्य । अनन्तनाथस्य अनन्तजित् इत्यपि नामान्तरमस्ति । यदाहुः ( अभि० का० १, श्लो० २९ )—

" ऋषभो वृषभः श्रेयान्, श्रेयांसः स्यादनन्तजिदनन्तः ।
सुविधिः सुपुष्पदन्तो, मुनिसुव्रत-सुव्रतौ तुल्यौ ॥ "—आर्या

इति हेमसूरिपादाः । ' अभिषेकजलप्लवाः ' अभिषेकः—जन्माभिषेकः तस्य जलप्लवाः—जलप्रवाहाः तव—भवतः मतं—अभिप्रेतं दिशन्तु—ददत्वित्यर्थः । 'दिश अतिसर्जने' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि परस्मैपदे प्रथमपुरुषबहुवचनं अन्तु । 'तुदादेरः ' ( सा० सू० १००७ ), 'स्वरहीनं० ' ( सा० सू० ३६ ) । तथाच ' दिशन्तु ' इति सिद्धम् । अत्र ' दिशन्तु ' इति क्रियापदम् । के कर्तारः ? । अभिषेकजलप्लवाः । " अम्बुवृद्धौ पुरः प्लवश्च सः ( प्लवोऽपि च )" इति हैमः ( अभि० का० ४, श्लो० १९१ ) । किं कर्मतापन्नम् ? । मतम् । कस्य ? । तव । अभिषेकजलप्लवाः कस्य ? । ' अनन्तजितः ' अनन्तान् कर्मांशान् जयति, अनन्तैर्ज्ञानादिभिर्वा जयति—राजते इत्यनन्तजित् तस्य । किंविशिष्टा अभिषेकजलप्लवाः ? । ' सकलधौतसहासनमेरवः ' सकलाः—सर्वा धौताः—क्षालिताः सहासाः—सविकासा नमेरवः—देववृक्षविशेषा यैस्ते तथा । सहासाश्च ते नमेरवश्च सहासनमेरवः इति ' कर्मधारयः ' । " नमेरुः सुरपुन्नागः " इत्यमरः ( ? ) । ( पुनः कथं० ? ) ' स्नपितोल्लसत्सकलधौतसहासनमेरवः ' उल्लसन्—शोभमानः सकलधौतं कलधौतं—सुवर्णं तेन सह वर्तमानः सहासनः आसनेन—स्नानपीठेन असनैः—वृक्षविशेषैर्वा सह वर्तमानः, एवंविधो यो मेरुः—मेरुपर्वतः स उल्लसत्सकलधौतसहासनमेरुः, ततः स्नपितः—स्नानं कारित उल्लसत्सकलधौतसहासनमेरुः यैस्ते तथा । यदिवा उल्लसत्सकलधौतं सहं—क्षमं दृढमित्यर्थः, एतादृशं आसनं यत्र स सकलधौतसहासनः, एतादृशो मेरुः स्नपितो यैस्ते तथेत्यर्थः । उल्लसच्च तत् सकलधौतं च उल्लसत्सकलधौतं इति ' कर्मधारयः ', सहं च तदासनं च सहासनं ( इति ) ' कर्मधारयः, ' उल्लसत्सकलधौतं सहासनं यस्मिन् स तथेति ' बहुव्रीहिः ', उल्लसत्सकलधौत( सहासन )श्चासौ मेरुश्च उल्लसत्सकलधौतसहासनमेरुः इति 'कर्मधारयः', स्नपित उल्लसत्सकलधौतसहासनमेरुर्यैस्ते स्नपितोल्लसत्सकलधौतसहासनमेरवः इति ' बहुव्रीहिः ' । " कलधौतं रूप्यहेम्नोः, कलधौतः कलध्वनौ " इति विश्वः ॥ १ ॥

सौ० वृ०—यो विगतमलो भवति सोऽनन्तगुणवानेव भवति । अनेन संबन्धेनायातस्य चतुर्दशश्रीअनन्तजितः स्तुतिः प्रारभ्यते—सकलधौतेति ।

भो भव्याः ! अनन्तजितः—अनन्ततीर्थकृतः अभिषेको—जन्ममहोत्सवस्नात्रं तस्य जलं—वारि तस्य प्लवाः—प्रवाहाः अभिषेकजलप्लवाः तव—भवतः मतम्—अभिमतं दिशन्तु इत्यन्वयः । ' दिशन्तु ' इति क्रियापदम् । के कर्तारः ? । ' अभिषेकजलप्लवाः ' । ' दिशन्तु ' ददतु । किं कर्मतापन्नम् ? ।

'मतं' अभीष्टम्। कस्य ?। 'तव'। अभिषेकजलप्लवाः कस्य ?। 'अनन्तजितः'। अनन्तजिनेशस्य त्रे नाम्नी, "अनन्तजित् अनन्तः" इत्यभिधानचिन्तामणिः (का० १, श्लो० २९)। किंवि० अभिषेक-जलप्लवाः ?। सकलाः-समस्ताः धौताः-क्षालिताः सहासा-विकसिता नमेरवो-देववृक्षविशेषा यैः ते 'सकलधौतसहासनमेरवः'। पुनः किं० अभिषेकजलप्लवाः ?। स्नपितं-स्नापितम् उल्लसत्-दीप्यमानं कलधौतं-सुवर्णं तेन सहितं सकलधौतं सहं-समर्थम् आसनं-सिंहासनम्, यद्वा असनः-शालवृक्षवि-शेषो यस्मिन् तादृशो मेरुर्यैस्ते 'स्नपितोल्लसत्सकलधौतसहासनमेरवः'। इति पदार्थः॥

अथ समासः—सकलाश्च ते धौताश्च सकलधौताः, हासेन सहिताः सहासाः, सकलधौताश्च ते सहासाश्च सकलधौतसहासाः, सकलधौतसहासा नमेरवो यैः ते सकलधौतसहासनमेरवः। अभिषेकस्य जलम् अभिषेकजलम्, अभिषेकजलस्य प्लवा अभिषेकजलप्लवाः। अनन्तकर्मादिपक्षं जयतीति अनन्त-जित्, तस्य अनन्तजितः। कलधौतेन सहितं सकलधौतम्, उल्लसत् च तत् सकलधौतं च उल्लसत्-सकलधौतम्, सह्यते इति सहम्, सहं च तद् आसनं च सहासनम्, उल्लसत्सकलधौतं च तत् सहासनं च उल्लसत्सकलधौतसहासनम्, स्नपितेन उल्लसत्० स्नपित०सकलधौतसहासनम्, यद्वा असनाः-शालवृक्षविशेषा यस्मिन् स स्नपितोल्लसत्सकलधौतसहासनः। स्नपितोल्लसत्सकलधौतसहासनो मेरुर्यैस्ते स्नपितोल्लसत्सकलधौतसहासनमेरवः। एतादृशा अनन्तजितः अभिषेकजलप्लवाः तव मतं-अभिमतं दिशन्तु। द्रुतविलम्बितच्छन्दसा स्तुतिरियम्॥ इति प्रथमवृत्तार्थः॥ १॥

दे० व्या०—सकलधौतेति। अनन्तजितः-अनन्तजिनस्य अभिषेकजलप्लवाः ते-तव मतं-वाञ्छितं दिशन्तु-ददतु इत्यन्वयः। 'दिश अतिसर्जने' धातुः। 'दिशन्तु' इति क्रियापदम्। के कर्तारः ?। अभिषेकजल-प्लवाः। "अम्बु वृद्धौ पूरः प्लवश्च सः (प्लवोऽपि च)" इत्यभिधानचिन्तामणिः (का० ४, श्लो० १५३)। किं कर्मतापन्नम् ?। मतम्। कस्य ?। अनन्तजितः। किंविशिष्टा अभिषेकजलप्लवाः ?। 'सकलधौतसहा-सनमेरवः' सकलाः-समस्ताः ते च ते धौताः-प्रक्षालिताः सहासा-विकासितपुष्पा नमेरवो-वृक्षविशेषा यैस्ते तथा। पुनः किंविशिष्टाः ?। 'स्नपितोल्लसत्सकलधौतसहासनमेरवः' स्नपितः-स्नानं कारितः उल्लसन्-शोभ-मानः सकलधौतसहासनमेरुर्यैस्ते तथा॥ इति प्रथमवृत्तार्थः॥ १॥



## जिनसमुदायस्य विज्ञप्तिः—

मम रतामरसेवित ! ते क्षण-
प्रद ! निहन्तु जिनेन्द्रकदम्बक !।
वरद ! पादयुगं गतमज्ञता-
ममरतामरसे विततेक्षण !॥ २॥

—द्रुत०

ज० वि०—मम रतामरेति। हे जिनेन्द्रकदम्बक!—तीर्थंकरसमूह! ते—तव पादयुगं—चर-णद्वयं मम अज्ञतां—मूढतां निहन्तु—विनाशयतु इति क्रियाकारकसंटङ्कः। अत्र 'निहन्तु' इति क्रियापदम्। किं कर्तृ ? 'पादयुगम्'। कां कर्मतापन्नाम् ? 'अज्ञताम्'। कस्य ? 'मम'। पाद-

युगं कस्य ? 'ते'। कथंभूतं पादयुगम् ? 'गतं' प्राप्तम्। कस्मिन् ? 'अमरतामरसे' अमरसम्बन्धिनि तामरसे—कमले। अत्रैकवचननिर्देशस्तु जात्या पर्यवसेयः। अपराणि सर्वाण्यपि जिनकदम्बकस्य सम्बोधनानि, तेषां व्याख्या त्वेवम्— हे 'रतामरसेवित !' रता—भक्तिप्राग्भारवशादासक्तचित्ता ये अमरा—देवाः तैः सेवित !—पर्युपासित !। हे 'क्षणमद !' उत्सवप्रदायिन् !। हे 'वरद !' वाञ्छितदायक !। हे 'विततेक्षण !' विशाललोचन !॥

अथ समासः—रताश्च ते अमराश्च रतामराः 'कर्मधारयः'। रतामरैः सेवितो रता० 'तत्पुरुषः। तत्सम्बो० हे रता०। क्षणान् प्रददातीति क्षणप्रदः 'तत्पुरुषः'। तत्सम्बो० हे क्षण०। जिनानां जिनेषु वा इन्द्रा जिनेन्द्राः 'तत्पुरुषः'। जिनेन्द्राणां कदम्बकं जिनेन्द्रकदम्बकं 'तत्पुरुषः'। तत्सम्बो० हे जिनेन्द्र०। वरं ददातीति वरदः 'तत्पुरुषः'। तत्सम्बो० हे वरद !। पादयोर्युगं पादयुगं 'तत्पुरुषः'। न ज्ञः अज्ञः 'तत्पुरुषः'। अज्ञस्य भावोऽज्ञता। तां अज्ञताम्। अमराणां तामरसं अमर० 'तत्पुरुषः'। तस्मिन्नमर०। वितते ईक्षणे यस्य स वितते० 'बहुव्रीहिः'। तत्सम्बो० हे वितत०॥ इति काव्यार्थः॥ २॥

सि० वृ०—मम रतामरेति। हे जिनेन्द्रकदम्बक !—तीर्थंकरसमूह ! ते—तव पादयुगं—चरणद्वयं मम अज्ञतां निहन्तु—नाशयतु इति क्रियाकारकसण्टङ्कः। अत्र 'निहन्तु' इति क्रियापदम्। किं कर्तृ ?। पादयुगम्। कां कर्मतापन्नाम् ?। अज्ञताम् ?। कस्य ?। मम। पादयुगं कस्य ?। ते। कथंभूतं पादयुगम् ?। गतं—प्राप्तम्। कस्मिन् ?। 'अमरतामरसे' अमरसम्बन्धिनि तामरसे—कमले। "तामरसं महोत्पलं" इति अभिधानचिन्तामणौ (का० ४, श्लो० २२७)। अत्रैकवचननिर्देशस्तु जात्यपेक्षयाऽवसेयः। अपराणि सर्वाण्यपि जिनेन्द्रकदम्बकस्य सम्बोधनानि, तेषां व्याख्या त्वेवम्—हे 'रतामरसेवित !' रता—भक्तिप्राग्भारवशात् आसक्तचित्ता ये अमरा—देवाः तैः सेवित !—पर्युपासित !। हे क्षणप्रद !—उत्सवप्रदायिन् !। हे वरद !—वाञ्छितदायक !। हे विततेक्षण !—विशाललोचन !॥

अथ समासानाह—रताश्च ते अमराश्च रतामराः 'कर्मधारयः', रतामरैः सेवितो रता० 'तत्पुरुषः', (तस्य सं०) हे रतामरसेवित !। क्षणान् प्रददातीति क्षणप्रदः 'तत्पुरुषः', तत्सम्बोधनं हे क्षणप्रद !। जिनाना जिनेषु वा इन्द्रा जिनेन्द्राः 'तत्पुरुषः', जिनेन्द्राणां कदम्बकं जिनेन्द्र० 'तत्पुरुषः', तत्सम्बोधनं हे जिनेन्द्र०। वरं ददातीति वरदः 'तत्पुरुषः', तत्सम्बोधनं हे वरद !। पादयोर्युगं पादयुगं 'तत्पुरुषः'। न ज्ञः अज्ञः 'तत्पुरुषः' अज्ञस्य भावोऽज्ञता, तां अज्ञताम्। अमराणा तामरसं अमर० 'तत्पुरुषः', तस्मिन् अमर०। वितते ईक्षणे यस्य स वितते० 'बहुव्रीहिः', तत्सम्बोधनं हे विततेक्षण !। इति काव्यार्थः॥ २॥

सौ० वृ०—मम रतामरेति। जिनाः—सामान्यकेवलिनः तेषां इन्द्राः—स्वामिनः तेषां कदम्बकं—वृन्दं तस्य सं० हे जिनेन्द्रकदम्बक !—तीर्थंकरसमूह !। पुनः रता—भक्तिमन्तो ये अमरा—देवास्तैः सेवितः—

पूजितः, तस्य सं० रतामरसेवित ! । पुनः क्षणः-उत्सवः तं प्रकर्षेण ददातीति, तस्य सं० हे क्षणप्रद ! । पुनः वरम्-ईप्सितं दानं ददातीति वरदः, तस्य सं० हे वरद ! । पुनः विततानि-विस्तीर्णानि-प्रकाशमयानि नेत्राणि यस्य स विततेक्षणः, तस्य सं० हे विततेक्षण ! । ते-तव पादयुगं-चरणयुगं मम-अस्मत्सत्कां अज्ञतां-जाड्यं निहन्तु इत्यन्वयः । 'निहन्तु' इति क्रियापदम् । किं कर्तृ ? । 'पादयुगम्'। 'निहन्तु' विनाशयतु । कां कर्मतापन्नाम् ? । 'अज्ञतां' अज्ञानत्वम् । कस्य ? । 'मम' मदीयाम् । किंवि० पादयुगम् ? । 'गतं' प्राप्तम् । कस्मिन् ? । अमराणां-देवानां तामरसं-कमलं तस्मिन् 'अमरतामरसे', सुरनिर्मितानि कमलानि बहूनि सन्ति, परं जातावेकवचनत्वात् । इति पदार्थः ॥

अथ समासः—रताश्च ते अमराश्च रतामराः, रतामरैः सेवितः रतामरसेवितः, तस्य सं० हे रतामरसेवित ! । क्षणं प्रकर्षेण ददातीति क्षणप्रदः, तस्य सं० हे क्षणप्रद ! । जिनानां इन्द्रा जिनेन्द्राः, जिनेन्द्राणां कदम्बकं जिने०, तस्य सं० हे जिनेन्द्रकदम्बक ! । वरं ददातीति वरदः, तस्य सं० हे वरद ! । पादयोर्युगं पादयुगम् । जानातीति ज्ञः, न ज्ञः अज्ञः, अज्ञस्य भावः अज्ञता, तां अज्ञताम् । अमराणां तामरसं अमरतामरसं, तस्मिन् अमरतामरसे । विततानि ईक्षणानि यस्य स विततेक्षणः, तस्य सं० हे विततेक्षण ! ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥

दे० व्या०—मम रतामरेति । हे 'जिनेन्द्रकदम्बक' ! जिनेन्द्राणां कदम्बकः-समूहः तस्यामन्त्रणं ते-तव पादयुगं-चरणयुगलं मम अज्ञतां-मूढतां निहन्तु-विनाशयतु इत्यन्वयः । 'हन हिंसागत्योः' इति धातुः । 'निहन्तु' इति क्रियापदम् । किं कर्तृ ? । पादयुगम् । पादयोः युगं पादयुगमिति विग्रहः । कस्य ? । ते-तव । कां कर्मतापन्नाम् ? । 'अज्ञतां' अज्ञस्य भावः अज्ञता ताम् । कस्य ? । मम । किंविशिष्टं पादयुगम् ? । गतं-न्यस्तम् । कस्मिन् ? । 'अमरतामरसे' अमरसम्बन्धि यत् तामरसं-कमलं तस्मिन् । जातिनिर्देशादत्रैकवचनम् । 'रतामरसेवित' ! इति । रताः-आसक्तचित्ताः ये अमरा-देवाः तैः सेवितः-पर्युपासितः यः स तस्यामन्त्रणम् । 'क्षणप्रद ! इति । क्षणं-उत्सवं प्रकर्षेण ददातीति क्षणप्रदः तस्यामन्त्रणम् । 'वरद !' इति । वरं-वाञ्छितं ददातीति वरदः तस्यामन्त्रणम् । 'विततेक्षण !' इति । वितते-विशाले ईक्षणे यस्य स तस्यामन्त्रणम् । एतानि सर्वाणि भगवतः संबोधनपदानि । इति द्वितीयवृत्तार्थः ॥ २ ॥

---

आगमस्तुतिः—

> परमतापदमानसजन्मनः-
> प्रियपदं भवतो भवतोऽवतात् ।
> जिनपतेर्मतमस्तजगत्त्रयी-
> परमतापदमानसजन्मनः ॥ ३ ॥
>
> —द्रुत०

ज० वि०—परमतेति । भो भव्याः ! जिनपतेः-भगवतः मतं-सिद्धान्तं भवतः-युष्मान् भवतः-संसारतः अवतात्-रक्षतु इति क्रियाकारकप्रयोगः । अत्र 'अवतात्' इति क्रियापदम् । किं कर्तृ ? 'मतम्' । कान् कर्मतापन्नान् ? 'भवतः' । कुतः ? 'भवतः' संसारतः । मतं कस्य ? 'जिनपतेः' । कथंभूतं मतम् ? 'परमतापत्' परमतानां-विपक्षागमानां आपद्धेतुत्वादापत् । पुनः

कथं० ? ' अमानसजन्मनःप्रियपदम् ' अमानानि—अप्रमाणानि सजन्ति—बध्यमानानि मनः-प्रियाणि—हृदयाह्लादीनि पदानि—स्यादित्यादिविभक्त्यन्तरूपाणि यत्र तत् तथा। जिनपतेः कथं-भूतस्य ? ' अस्तजगत्त्रयीपरमतापदमानसजन्मनः ' जगत्त्रय्याः—त्रिभुवनस्य परमतापदः—प्रकृष्टसन्तापदायी यो मानसजन्मा—कामः सः अस्तः—क्षिप्तः येन स तथा तस्य ॥

अथ समासः—परेषां मतानि पर० ' तत्पुरुषः '। परमतानामापत् परमतापत् ' तत्पुरुषः '। मनसः प्रियाणि मनःप्रियाणि ' तत्पुरुषः '। सजन्ति च तानि मनःप्रियाणि च सजन्म० ' कर्मधारयः '। सजन्मनःप्रियाणि च तानि पदानि सजन्म० ' कर्मधारयः '। न विद्यते मानं येषां तान्यमानानि ' बहुव्रीहिः '। अमानानि सजन्मनःप्रियपदानि यस्मिंस्तत् अमानसजन्म० ' बहुव्रीहिः '। जिनानां जिनेषु वा पतिर्जिन० ' तत्पुरुषः '। तस्य जिन०। जगतां त्रयी जगत्त्रयी ' तत्पुरुषः '। परमश्चासौ तापश्च परमतापः ' कर्मधारयः '। परमतापं ददातीति परमतापदः ' तत्पुरुषः '। जगत्त्रय्याः परमतापदो जगत्त्र० ' तत्पुरुषः '। मानसाज्जन्म यस्य स मानसजन्मा ' बहुव्रीहिः '। जगत्त्रयीपरमतापदश्चासौ मानसजन्मा च जग० ' कर्म-धारयः '। अस्तो जगत्त्रयीपरमतापदमानसजन्मा येन सोऽस्तजगत्त्र० ' बहुव्रीहिः '। तस्य अस्त-जगत्त्र० ॥ इति काव्यार्थः ॥ ३ ॥

सि० वृ०—परमतेति। भो भव्याः ! जिनपतेः—भगवतः मतं—सिद्धान्तः भवतः—युष्मान् भवतः—संसारतः अवतात्—रक्षत्वित्यर्थः। ' अव रक्षणे ' धातोः ' आशीःप्रेरणयोः ' ( सा० सू० ७०१ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप्। ' तुदादेः ' ( सा० सू० १००७ ) तुह्योस्तातङादेशः। तथाच ' अवतात् ' इति सिद्धम्। अत्र 'अवतात्' इति क्रियापदम्। किं कर्तृ ?। मतम् ?। कान् कर्मतापन्नान् ?। भवतः। कुतः ?। भवतः। मतं कस्य ?। जिनपतेः। कथंभूतं मतम् ?। ' परमतापत् ' विपक्षागमानामापद्धे-तुत्वाद् आपत्। पुनः कथंभूतम् ?। ' अमानसजन्मनःप्रियपदं ' अमानानि—अप्रमाणानि सजन्ति—सम्बध्य-मानानि मनःप्रियाणि—हृदयाह्लादीनि पदानि—स्यादित्यविभक्त्यन्तरूपाणि यत्र तत् तथा। अर्थसमाप्तिः पदमित्येके स्याद्यन्तं त्याद्यन्तं च तत् इत्यन्ये ॥

" एकाधिकपञ्चाशत्कोट्योऽष्टौ लक्षकाः ते द्वे ( हे ? ) स्राश्च।
षडशीतिचत्वारिंशदधिकशताष्टौ शतानि पुनः ॥
वर्णाष्टकमेकपदे श्लोकानां मानमागमस्योक्तम्।
जिनभाषितस्य सैकादशाङ्गपूर्वस्य विद्वाद्भिः ॥ "

इत्यपरे। कथंभूतस्य जिनपतेः ?। ' अस्तजगत्त्रयीपरमतापदमानसजन्मनः ' जगतां—लोकानां स्वर्गमर्त्यपाता-ललक्षणाना त्रयी जगत्त्रयी तस्याः परमं—प्रकृष्टं तापं ददातीति परमतापदायी यो मानसजन्मा—कामः सः अस्तः—अस्तं नीतो येन स तस्य, परमश्चासौ तापश्च परमतापः इति ' कर्मधारयः '॥ ३ ॥

सौ० वृ०—परमतेति । भो भव्याः ! जिनपतेः-भगवतः मतं-सिद्धान्तो भवतो-युष्मान् भवतः-संसारात् अवतादित्यन्वयः । 'अवतात्' इति क्रियापदम् । किं कर्तृ ? । 'मतम्' । 'अवतात्' रक्षतात् । कान् कर्मतापन्नान् ? । 'भवतः' । कस्मात् ? । 'भवतः' संसारात् । मतं कस्य । 'जिनपतेः' । किंवि० मतम् ? । परेषां मतानि सौगतादीनि तेषां आपदिव आपद् 'परमतापत्' । पुनः किं० मतम् ? । अमानानि-अप्रमाणानि सजन्ति-सङ्गं कुर्वन्ति मनसः-चेतसः प्रियाणि-आह्लादकारकाणि पदानि-अर्हदादीनि यस्मिन् तत् 'अमानसजन्मनःप्रियपदम्' । किंवि० जिनपतेः ? । अस्तो-निराकृतो जगत्त्रय्या-विष्टपत्रयस्य परमः-प्रकृष्टः तापदः-तापदायको मानसजन्मा-कामो येन सः अस्तजगत्त्रयीपरमतापदमानसजन्मा तस्य 'अस्तजगत्त्रयीपरमतापदमानसजन्मनः' । एवंविधस्य जिनपतेर्मतं भवतः-संसारात् भवतो-युष्मान् अवतादिति पदार्थः ॥

अथ समासः--परेषां मतानि परमतानि, यद्वा पराणि च तानि मतानि च परमतानि, परमतेषु परमतानां वा आपदिव आपद् परमतापत् । मनसः प्रियाणि मनःप्रियाणि, सजन्ति च तानि मनःप्रियाणि च सजन्मनःप्रियाणि, न मानानि अमानानि, अमानानि च तानि अज० असज०, अमान सजन्मनःप्रियाणि पदानि यस्मिन् यस्मै वा तद् अमा नसजन्मनःप्रियपदम् । जिनानां पतिः जिनपतिः, तस्य जिनपतेः । तापं ददातीति तापदः, परमश्चासौ तापदश्च परमतापदः, जगतां त्रयी जगत्त्रयी, जगत्त्रय्याः परमतापदः जगत्त्रयीपरमतापदः, मानसात् जन्म यस्य स मानसजन्मा, अस्तो-ध्वस्तो जगत्त्रयीपरमतापदो मानसजन्मा येन सः अस्तजगत्त्रयीपरमतापदमानसजन्मा, तस्य अस्तजगत्त्रयीपरमतापदमानसजन्मनः । "मनः शृङ्गारसंकल्पात्मानो योनिः" इत्यभिधानचिन्तामणिः ( का० २, श्लो० १४३ ) । इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या०—परमतेति । जिनपतेः-तीर्थङ्करस्य मतं-प्रवचनं भवतो-युष्मान् भवतः-संसारात् अवतात्-रक्षतात् इत्यन्वयः । 'अव रक्षणे' धातुः । 'अवतात्' इति क्रियापदम् । किं कर्तृ ? । मतम् । कान् कर्मतापन्नान् ? । भवतः । कस्य ? । 'जिनपतेः' जिनानां पतिः जिनपतिः इति विग्रहः तस्य । कस्मात् ? । भवतः । किंविशिष्टं मतम् ? । 'परमतापत्' परेषां मतं परमतमिति षष्ठीतत्पुरुषः तस्य आपत्-आपदाभूतं तत्क्षयकृतिहेतुत्वात् । पुनः किंविशिष्टम् ? । 'अमानसजन्मनःप्रियपदम्' अमानानि-अप्रमाणानि सजन्ति-संबध्यमानानि मनःप्रियाणि-हृदयाह्लादीनि पदानि-सुप्तिङन्तानि यत्र तत् । किंविशिष्टस्य जिनपतेः ? । 'अस्तजगत्त्रयीपरमतापदमानसजन्मनः' अस्तो-विध्वस्तो जगत्त्रय्याः परमतापदो-महासन्तापकारी मानसजन्मा-कामो येन तस्य । इति तृतीयवृत्तार्थः ॥ ३ ॥

श्रीअच्युतायाः स्तुतिः—

रसितमुच्चतुरं गमनाथ कं
दिशतु काञ्चनकान्तिरिताऽच्युता ।
धृतधनुःफलकासिशरा करै-
रसितमुच्चतुरङ्गमनायकम् ॥ ४ ॥

—द्रुत०

ज० वि०—रसितमिति । अच्युता-अच्युताख्या अच्छुप्तापरनाम्नी देवी कं-सुखं दिशतु-ददातु इति क्रियाकारकसम्बन्धः । अत्र 'दिशतु' इति क्रियापदम् ? । का कर्त्री 'अच्युता' ।

किं कर्मतापन्नम् ? 'कम्' । कथंभूता अच्युता ? 'इता' प्राप्ता, समारूढेति भावः । कं कर्मतापन्नम् ? 'उच्चतुरङ्गमनायकम्' उच्चः–प्रांशुः तुरङ्गमनायकः–तुरङ्गमप्रकाण्डो–घोटकोत्तमस्तं उच्चतुरङ्गमनायकम् । कथंभूतम् ? 'रसितं' शब्दायितं, हेषारवसंयुतमित्यर्थः । पुनः कथं०? 'उच्चतुरम्' उत्–प्राबल्येन चतुरं–गृहीतशिक्षम् । अथवा रसितमुच्चतुरमिति अखण्डमेवेदं विशेषणम् । तथाचायमर्थः–रसिते–ध्वनिते मुत्–प्रमोदो यस्य स रसितमुत् स चासौ चतुरश्च रसितमुच्चतुरस्तम् । पुनः कथं० ? 'असितं' नीलम् । कस्मै तमिता ? 'गमनाय' गत्यर्थम् । पुनः कथं० अच्युता ? 'काञ्चनकान्तिः' काञ्चनवत् कान्तिर्यस्याः सा काञ्चन० । पुनः कथं० ? 'धृतधनुःफलकासिशरा' धनुः–कार्मुकं फलकं–खेटकं असिः–तरवारिः शरः–बाणः, ततो धृता धनुःफलकासिशरा यया सा तथा । कैः कृत्वा ? 'करैः' पाणिभिः । चत्वार्यपि प्रहरणानि चतुर्भिः करैर्धृतानीत्यर्थः ॥

अथ समासः—उत्–प्राबल्येन चतुरः उच्चतुरः 'तत्पुरुषः' । तं उच्चतुरम् । अथवा रसिते मुद् यस्य स रसितमुत् 'बहुव्रीहिः' । रसितमुत् चासौ चतुरश्च रसित० 'कर्मधारयः' । तं रसित० । काञ्चनस्येव कान्तिर्यस्याः सा काञ्चन० 'बहुव्रीहिः' । धनुश्च फलकं च असिश्च शरश्च धनुःफलकासिशराः 'इतरेतरद्वन्द्वः' । धृता धनुःफलकासिशरा यया सा धृत० 'बहुव्रीहिः' । न सितः असितः 'तत्पुरुषः' । तं असितम् । तुरङ्गमानां तुरङ्गमेषु वा नायकः तुरङ्ग० 'तत्पुरुषः' । उच्चश्चासौ तुरङ्गमनायकश्च उच्चतु० 'कर्मधारयः' । तं उच्चतुरङ्गम० । इति काव्यार्थः ॥ ४ ॥

॥ इति श्रीशोभनस्तुतिवृत्तौ अनन्तजिनपतिस्तुतेर्व्याख्या ॥ १४ ॥

सि० वृ०—रसितमिति । अच्युता–अच्युताख्या अच्छुप्तापरनाम्नी देवी कं–सुखं दिशतु ददात्विति सम्बन्धः । 'दिश अतिसर्जने' धातोः आशीःप्रेरणयोः ( सा० सू० ७०३ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप् । 'तुदादेरः' ( सा० सू० १००७ ), 'स्वरहीनं०' ( सा० सू० ३६ ) । तथाच 'दिशतु' इति सिद्धम् । अत्र 'दिशतु' इति क्रियापदम् । का कर्त्री ? । अच्युता । किं कर्मतापन्नम् ? । कम् । "कं शिरो जलमाख्यातं, कं सुखं परिकीर्तितं" इति केशवः । "कं शीर्षेऽप्सु सुखं" इत्यनेकार्थः । कीदृशी अच्युता ? । इता–प्राप्ता, समारूढेत्यर्थः । कम् ? । उच्चः– प्रांशुः यः तुरङ्गमनायकः–तुरङ्गमप्रकाण्डः–घोटकश्रेष्ठस्तं उच्चतुरङ्गमनायकम् । कीदृशम् ? । रसितं–शब्दायितं, हेषारवसंयुतमित्यर्थः । "हेषा ह्रेषा तुरङ्गाणां" ( अभि० का० ६, श्लो० ४१ ), "स्तनितं गर्जितं मेघनिर्घोषे रसितादि च" इत्यमरः ( श्लो० १६१ ) । विशेषोऽत्र न विविक्तः । पुनः कीदृशम् ? । 'उच्चतुरं' उत्–प्राबल्येन चतुरं–गृहीतशिक्षम् । अथवा रसितमुच्चतुरं इत्यखण्डमेवेदं विशेषणम् । तथाचायमर्थः—रसिते–ध्वनिते मुत्–प्रमोदो यस्य (स) रसितमुत्, स चासौ चतुरश्च रसितमुच्चतुरस्तम् । पुनः कथंभूतम् ? । असितं–नीलम् । कस्मै ? । गमनाय–गत्यर्थम् । पुनः कथंभूता अच्युता ? । 'काञ्चनकान्तिः' काञ्चनं–कनकं तदिव कान्तिर्यस्याः सा । पुनः कथंभूता ? । 'धृतधनुःफलकासिशरा' धनुः–कार्मुकं फलकं–खेटकं असिः–करवालः शरः–बाणः, धनुश्च फलकं

च असिश्च शरश्च धनुःफलकासिशराः ' इतरेतरद्वन्द्वः ', ततः धृता धनुःफलकासिशरा यया सा ततः ? ' नित्यबहुव्रीहिः ' । कैः कृत्वा ? । करैः—हस्तैः । देव्याश्चतुर्भुजत्वेन प्रतिकरं एकैकायुधग्रहणादिति भावः । " धनुश्चापोऽस्त्रमिष्वासं( सः ), कोदण्डं धन्व कार्मुकं " इति हैमः ( का० ३, श्लो० ४३९ ) । द्रुतविलम्बितं छन्दः । " द्रुतविलम्बितमत्र नभौ भरौ " इति च तल्लक्षणम् ॥ ४ ॥

॥ इति महोपाध्यायश्रीभानुचन्द्र० श्रीअनन्तजिनस्तुतिवृत्तिः ॥ १४ ॥

सौ० वृ०—रसितमिति । अच्युता—अच्छुतानाम्नी देवी कं—सुखं दिशत्वित्यन्वयः । ' विशतु ' इति क्रियापदम् । का कर्त्री ? । ' अच्युता ' । दिशतु ' ददातु । किं कर्मतापन्नम् ? । ' कं ' सुखम् । किंविशिष्टा अच्युता ? । 'काञ्चनकान्तिः' सुवर्णप्रभा, पीतवर्णेत्यर्थः। पुनः किं० अच्युता ?। 'इता' प्राप्ता । कं कर्मतापन्नम् ?। 'उच्च०' उच्चम्—उन्नतं तुरङ्गमनायकम्—अश्वरत्नप्रधानम् । कस्मै ?। 'गमनाय ' गत्यर्थम्, अश्ववाहनप्राप्त्यर्थम् । किंवि० ( उच्च )तुरङ्गमनायकम् ? । 'असितं' श्यामवर्णमित्यर्थः । पुनः किं० ( उच्च )तुरङ्गमनायकम् ? । रसितेन—शब्देन कृत्वा या मुत्—हर्षः तेन चतुरः—कुशलः तं ' रसितमुच्चतुरम् ', यद्वा रसितमुद् इति भिन्नं पदं देवीविशेषणम्, चतुरमिति अश्वविशेषणम् । पुनः किं० अच्युता ? । धृतं—गृहीतं धनुः—कोदण्डं फलकं—खेटकं असिः—खड्गः शरो—बाणो यया सा ' धृतधनुःफलकासिशरा ' । कैः कृत्वा ?। ' करैः ' हस्तैः कृत्वा । चतुर्ष्वपि हस्तेषु चत्वारि शस्त्राणि धृतानि । इति पदार्थः ॥

अथ समासः—रसितेन—हर्षारवेण—अश्वशब्देन मुद्—यस्याः सा रसितमुद्, यद्वा रसितस्य मुत् रसितमुत्, रसितमुदा चतुरः रसितमुच्चतुरः, तं रसितमुच्चतुरम् । गम्यते—ईप्सितदेशः प्राप्यते येन कृत्वा तद् गमनम्, तस्मै गमनाय । काञ्चनवत् कान्तिः यस्याः सा काञ्चनकान्तिः । धनुश्च फलकं च असिश्च शरश्च धनुःफलकासिशराः, धृता धनुःफलकासिशरा यया सा धृतधनुःफलकासिशरा । न सितः असितः, तम् असितम् । उच्चाश्च ते तुरङ्गमाश्च उच्चतुरङ्गमाः, उच्चतुरङ्गमेषु—अष्टादशजातीयाश्वेषु नायकः—श्रेष्ठः उच्चतुरङ्गमनायकः, तं उच्चतुरङ्गमनायकम् । आद्यन्तपदयमका स्तुतिरियम् ॥ इति चतुर्थवृत्तार्थः ॥४॥

श्रीअनन्तजिनेशस्य, स्तुतेरर्थः स्फुटीकृतः ।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना ॥

॥ इति अनन्तजिनस्तुतिः ॥ १४ ॥ ४ ॥ ५६ ॥

दे० व्या०—रसितमिति । अच्युता देवी—अच्छुप्ता देवी कं—सुखं दिशतु—देयादित्यन्वयः । ' दिश अतिसर्जने ' धातुः । ' दिशतु ' इति क्रियापदम् । का कर्त्री ? । अच्युता । किं कर्मतापन्नम् ? । कं—सुखम् । " कं शिरो जलमाख्यातं, कं सुखं परिकीर्तितम् " इत्यनेकार्थः । किंविशिष्टा अच्युता देवी ? । इता—प्राप्ता । कम् ? । तुरङ्गमनायकं—तुरङ्गमप्रकाण्डम् । किंविशिष्टम् ? । रसितं—शब्दायमानम् । पुनः किंविशिष्टम् ? । ' उच्चतुरं ' उत्—प्राबल्येन चतुरं—दक्षम् । यद्वा रसिते मुद्—प्रमोदो यस्य स चासौ चतुरश्च तम् । गमनाय—गत्यर्थम् । पुनः किंविशिष्टम् ? । असितं—नीलवर्णम् । किंविशिष्टा देवी ? । ' काञ्चनकान्तिः ' काञ्चनवत् कान्तिः—दीप्तिः यस्याः सा । पुनः किंविशिष्टा ? । " धृतधनुःफलकासिशरा ' धृताः चापावरणखड्गबाणा यया सा । कैः ? । करैः—हस्तैः । " पञ्चशाखः शयः शमः । हस्तः पाणिः करः " इत्यभिधानचिन्तामणिः ( का० ३, श्लो० २५५ ) । इति तुरीयवृत्तार्थः ॥ ४ ॥

## १५ श्रीधर्मजिनस्तुतयः

**अथ श्रीधर्मनाथाय प्रणामः—**

**नमः श्रीधर्म ! निष्कर्मो—दयाय महितायते ! ।**
**मर्त्यामरेन्द्रनागेन्द्रै—र्दयायमहिताय ते ॥ १ ॥**

**—अनुष्टुप्**

**ज० वि०**—नम इति । हे श्रीधर्म !—श्रिया—चतुस्त्रिंशदतिशयसमृद्धिरूपयोपलक्षितधर्माभिधतीर्थपते ! ते तुभ्यं नमः—नमस्कारः । अस्तु इति क्रियाऽध्याह्रियते । अत्र 'अस्तु' इति क्रियापदम् । किं कर्तृ ? 'नमः' । कस्मै ? 'ते' । कथंभूताय ते ? 'निष्कर्मोदयाय' निर्गतः कर्मोदयः—मलोत्पादो यस्मात् स तथा तस्मै । पुनः कथं० ? 'दयायमहिताय' दया—कारुण्यं यमा—अहिंसासूनृतादयः तेषां हिताय, वृद्धिजनकत्वात् । अत्रशिष्टं चैकं श्रीधर्मनाथस्य सम्बोधनं, तद्व्याख्या यथा—हे 'महितायते !' महिता—पूजिता आयतिः—प्रभुता उत्तरः कालो वा आ—समन्ताद् यतयः—साधवो वा यस्य स तथा तत्सम्बो० हे महि० । कैः ? 'मर्त्यामरेन्द्रनागेन्द्रैः' मर्त्या—नराः अमरा—देवाः तेषामिन्द्राः—प्रभवः नागा—भवनविशेषास्तेषामिन्द्राश्च तैः तत्सम्बो० ॥

**अथ समासः**—श्रियोपलक्षितो धर्मः श्रीधर्मः 'तत्पुरुषः' । तत्सम्बो० हे श्रीधर्म ! । कर्मणामुदयः कर्मोदयः 'तत्पुरुषः' । निर्गतः कर्मोदयो यस्मात् स निष्क० 'बहुव्रीहिः' । तस्मै निष्क० । महिता आयतिर्यस्य स महि० 'बहुव्रीहिः' । यद्वा आ—समन्ताद् यतय आयतयः 'तत्पुरुषः' । महिता आयतयो यस्य स महि० 'बहुव्रीहिः' । तत्सम्बो० हे महि० । मर्त्याश्च अमराश्च मर्त्यामराः 'इतरेतरद्वन्द्वः' । मर्त्यामराणां इन्द्रा मर्त्या० 'तत्पुरुषः' । नागानामिन्द्राः नागेन्द्राः 'तत्पुरुषः' । मर्त्यामरेन्द्राश्च नागेन्द्राश्च मर्त्या० 'इतरेतरद्वन्द्वः' । तैः मर्त्या० । दया च यमाश्च दयायमाः 'इतरेतरद्वन्द्वः' । दयायमानां हितो दया० 'तत्पुरुषः' । तस्मै दया० ॥ इति काव्यार्थः ॥ १ ॥

**सि० वृ०**—नम इति । दुर्गतौ प्रपतन्तं सत्त्वसङ्घातं धारयतीति धर्मः, गर्भस्थेऽस्मिन् माता दानादिधर्मपरा जातेति वा धर्मः, तस्य सम्बोधनं हे श्रीधर्म ! श्रिया—चतुस्त्रिंशदतिशयसमृद्धिरूपयोपलक्षित ! धर्माभिधतीर्थपते ! ते—तुभ्यं नमः—नमस्कारः अस्तु इत्यर्थः । तत्र नमः इति नैपातिकं पदं[1] द्रव्यभावसङ्कोचार्थमाह च—'नेवाईयं पयं दव्वभावसंकोयणपयत्थो' । नमः—करचरणमस्तकसुप्रणिधानरूपो नमस्कारो भवत्वित्यर्थः । अत्र 'अस्तु' इति क्रियापदम् । किं कर्तृ ? । नमः । कस्मै ? । ते । कथंभूताय ते ? । 'निष्कर्मोदयाय' निर्गतः कर्मणां ज्ञानावरणादीनां उदय—उत्पादो यस्मात् स तथा तस्मै । पुनः कथंभूताय ? । 'दयायमहिताय' दया—कारुण्यं यमाः—पञ्चमहाव्रतानि, "अहिंसासत्यमस्तेय—ब्रह्माकिञ्चनता

[1] नैपातिकं पदं द्रव्यभावसंकोचनपदार्थः ।

यमाः " इति चिन्तामणि( का० १, श्लो० ८१ )नाममालाया वचनात्, दया च यमाश्च दयायमाः 'इतरेतरद्वन्द्वः', तेषां हिताय—हितकारकाय, वृद्धिजनकत्वात्। अवशिष्टं चैकं श्रीधर्मस्य सम्बोधनम्। तव्याख्या चैवं—हे 'महितायते!' महिता—पूजिता आयतिः—प्रभावः—उत्तरकालो वा यस्य स तथा तस्य सम्बोधनं हे महि०। " आयतिः संयमे दैर्घ्ये,प्रभावागामिकालयोः " इति विश्वः। कैः?।' मर्त्यामरेन्द्रनागेन्द्रैः ' मर्त्या—मनुष्याः अमरा—गीर्वाणाः मर्त्याश्च अमराश्च मर्त्यामराः ' इतरेतरद्वन्द्वः '॥ १ ॥

सौ० वृ०—योऽनन्तदोषजित् अनन्तगुणवान् भवति स साक्षात् मूर्तिमान् धर्म एव भवति। अनेन सम्बन्धेनायातस्य पञ्चदशश्रीधर्मजिनस्य स्तुतेरर्थो लिख्यते। नम इति।

श्रीशब्दः पूज्यार्थे। हे श्रीधर्म!—पञ्चदशजिन! ( ते ) तुभ्यं नमः अस्तु इत्यन्वयः। 'अस्तु' इति क्रियापदम्। किं कर्तृ?। 'नमः'। 'अस्तु' भवतु। कस्मै?। 'ते' तुभ्यम्। किंविशिष्टाय ते?। निर्गतः कर्मणां—ज्ञानावरणीयादीनाम् उदयो यस्मात् स निष्कर्मोदयः तस्मै 'निष्कर्मोदयाय'। महितः—पूजितः आयतिः—उत्तरकालो यस्य स महितायतिः तस्मै 'महितायते'। पुनः किंविशिष्टाय ते [ तुभ्यं ]?। 'महिताय' पूजिताय। कैः?। मर्त्या—मनुष्याः अमरा—देवाः तेषां इन्द्राः—स्वामिनः नागेन्द्राः—असुरकुमारेन्द्रादयः तैः 'मर्त्यामरेन्द्रनागेन्द्रैः'। पुनः किं० ते [ तुभ्यम् ]?। दया—सकलप्राणिनाम् अवनं यमा—महाव्रतानि तेषां हिताय—हितकारिणे 'दयायमहिताय'। यद्वा आङ् मर्यादया यतयो यस्य स आयतिः तस्य सं० हे आयते! महिता—पूजिता आयतयो यस्य स महितायतिः। तस्य सं० हे महितायते!। ते—तुभ्यम् नमोऽस्तु। इति पदार्थः॥

अथ समासः—दुर्गतौ प्रपतत्प्राणिधारणाद् धर्मः। यद्वा स्वस्वभावं निर्मलतया धारणाद् धर्मः। यद्वा भगवति गर्भस्थे मातुर्धर्मकरणे दोहदानुमानेन नाम्ना धर्मः। श्रिया युक्तो धर्मः ( श्रीधर्मः ), तस्य सं० हे श्रीधर्म!। कर्मणां उदयः कर्मोदयः, निर्गतः कर्मोदयो यस्माद् यस्य वा तस्मै निष्कर्मोदयाय। महिता आयातिः उत्तरकालो यस्य स महितायतिः, तस्य सं० हे महितायते!। यद्वा आङ् मर्यादया यतयः आयतयः, महिताः—पूजिता [ वन्तो वा ] आयतयो यस्य स महितायतिः, तस्य सं० महितायते!। मर्त्याश्च अमराश्च मर्त्यामराः, मर्त्यामराणां इन्द्राः मर्त्यामरेन्द्राः, नागानां इन्द्राः नागेन्द्राः, मर्त्यामरेन्द्राश्च नागेन्द्राश्च मर्त्यामरेन्द्रनागेन्द्राः, तैः मर्त्यामरेन्द्रनागेन्द्रैः। दया च यमाश्च दयायमाः, दयायमानां दयायमेषु वा हितं यस्य स दयायमहितः, तस्मै दयायमहिताय। अनुष्टुप्छन्दसा स्तुतिरियम्। मध्यान्तपदयमकाः।

" पञ्चमं लघु सर्वत्र, सप्तमं द्विचतुर्थयोः।
षष्ठं गुरु विजानीया-देतत् पद्यस्य लक्षणम्॥ "

इति प्रथमपद्यार्थः॥ १ ॥

दे० व्या०—नम इति। हे श्रीधर्मनाथ! ते-तुभ्यं नमः अस्तु इत्यन्वयः। 'नमः' इत्यव्ययम्। धर्मशब्देनात्र धर्मनाथ एव गृह्यते। पदैकदेशे पदसमुदायोपचाराद् भीमो भीमसेन इतिवत्। किंविशिष्टाय तुभ्यम्?। 'निष्कर्मोदयाय' निर्गतः कर्मणां—ज्ञानावरणादीनां उदयः—उत्पत्तिर्यस्मात् स तस्मै, अकर्मकायेरयर्थः। पुन किंविशिष्टाय?। 'दयायमहिताय' दया—कृपा यमा—महाव्रतानि ( अनयोः ) पूर्वं 'द्वन्द्वः', तेषु हितंआनुकूल्यं यस्य स तस्मै। "अहिंसासत्यमस्तेय—ब्रह्माकिञ्चनता यमाः" इत्यभिधानचिन्तामणिः (का० १, श्लो० ८१ )। 'महितायते!' इति। महिताः—पूजिता आ—समन्तात् यतयो—मुनयो यस्य स तस्यामन्त्रणं हे महितायते!। भगवत्सम्बोधनम्। कैः?। 'मर्त्यामरेन्द्रनागेन्द्रैः' मर्त्या—मनुष्याः अमरेन्द्राः—शक्रा( दयः ) नागेन्द्राधरणेन्द्रादयः एतेषां द्वन्द्वः तैः॥ इति प्रथमवृत्तार्थः॥ १ ॥



जिनसमूहस्य स्तुतिः—

जीयाज्जिनौघो ध्वान्तान्तं, ततान लसमानया।
भामण्डलत्विषा यः स, ततानलसमानया ॥ २ ॥

—अनु०

ज० वि०—जीयादिति । स जिनौघो–जिनसमूहः जीयात्–जयतात् इति क्रियाकारकसण्टङ्कः । अत्र ' जीयात् ' इति क्रियापदम् । कः कर्ता ? ' जिनौघः ' । स इति तच्छब्दसम्बन्धाद् यच्छब्दघटनामाह—यो जिनौघो भामण्डलत्विषा–भामण्डलकान्त्या ध्वान्तान्तं–तमोविनाशं ततान–विस्तारितवान् । अत्रापि ' ततान ' इति क्रियापदम् । कं कर्मतापन्नम् ? ' ध्वान्तान्तम् ' । कया ? ' भामण्डलत्विषा ' । कथंभूतया ? ' लसमानया ' विलसन्त्या वर्धमानया वा । पुनः कथंभूतया ? ' ततानलसमानया ' ततः–प्रसृतो योऽनलो–वह्निस्तेन समानया–सदृश्या ॥

अथ समासः—जिनानामोघो जिनौघः 'तत्पुरुषः'। ध्वान्तस्यान्तो ध्वान्तान्तः 'तत्पुरुषः'। तं ध्वान्तान्तम् । भाया मण्डलं भामण्डलं ' तत्पुरुषः ' । भामण्डलस्य त्विट् भामण्डल० ' तत्पुरुषः ' । तया भामण्डल० । ततश्चासावनलश्च ततानलः ' कर्मधारयः ' । ततानलेन समाना तता० ' तत्पुरुषः ' । तया तत० ॥ इति काव्यार्थः ॥ २ ॥

सि० वृ०—जीयादिति । स जिनौघः–जिनसमूहः जीयात्–जयतादित्यर्थः । ' जि जये ' धातोः आशिषि कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं यात् । ' ये ' ( सा० सू० ७७९ ) इति दीर्घः । तथाच ' जीयात् ' इति सिद्धम् । अत्र ' जीयात् ' इति क्रियापदम् । कः कर्ता ? । ' जिनौघः ' जिनानां ओघो जिनौघः । उह्यते वहति वा ओघः न्यङ्क्वादौ साधुः । "ओघो वृन्देऽम्भसां रये" इत्यमरः ( श्लो० ११८८ ) । यत्तदोर्नित्यसंबन्धात् सः कः ? । यो जिनौघो भामण्डलत्विषा–भामण्डलकान्त्या ध्वान्तस्य–तमसः अन्तं–विनाशं ततान–विस्तारितवान् । ' तनु विस्तारे ' धातोः परोक्षे कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं णप् । ' द्विश्च ' ( सा० सू० ७१० ) इति धातोर्द्वित्वम् । ' अत उपधायाः ' ( सा० सू० ७५७ ) इति वृद्धिः, ' स्वरहीनं० ' ( सा० सू० ३६ ) । तथाच ' ततान ' इति सिद्धम् । अत्रापि 'ततान' इति क्रियापदम् । कः कर्ता ? । यः । कं कर्मतापन्नम् ? । ध्वान्तान्तम् । " अन्तः प्रान्तान्तिके नाशे, स्वरूपेऽतिमनोहरे " इति विश्वः । कया ? । ' भामण्डलत्विषा ' भामण्डलो[1] देवनिर्मितो भगवत्पृष्ठे प्रभामण्डलस्तस्य त्विट्–कान्तिः तया । कथंभूतया ? । लसमानया–लसन्त्या वर्धमानया वा । पुनः कथंभूतया ? । ' ततानलसमानया ' ततो–विस्तृतो यः अनलः–वह्निः तेन समानया–सदृश्या ॥ २ ॥

सौ० वृ०—जीयादिति । स जिनौघः–तीर्थंकरसमूहः जीयात् इत्यन्वयः । ' जीयात् ' इति क्रियापदम् । कः कर्ता ? । ' जिनौघः ' । ' जीयात् ' जयतात् । किंवि० जिनौघः । ' सः ' प्रसिद्धः । प्रसिद्धार्थः तच्छब्दो यच्छब्दमपेक्षते । सः कः ? । यो जिनौघः ध्वान्तान्तं ततान इत्यन्वयः । ' ततान ' इति क्रियापदम् ।

1 मण्डलशब्दस्य पुंल्लिङ्गे प्रयोगो विचारणीयः ।

कः कर्ता ? । 'यो जिनौघः' । 'ततान' । विस्तारयामास । कं कर्मतापन्नम् ? । 'ध्वान्तान्तं' ध्वान्तं-अज्ञानतमः तस्य अन्तो-विनाशस्तं ध्वान्तान्तम् । कया ? । भा-प्रभा तस्या मण्डलम् यद्वा भामण्डलं-सुरकृतप्रातिहार्यरूपं तस्य त्विट्-कान्तिः तया 'भामण्डलत्विषा' । किंविशिष्टया भामण्डलत्विषा ? । 'लसमानया' देदीप्यमानया । पुनः किं० भामण्डलत्विषा ? । ततो-विस्तीर्णो यः अनलः-वह्निः तत्सदृशया 'ततानलसमानया । यद्वा ततो-विस्तृतः अत एव अनलसः—अमन्दः मानः-प्रमाण यस्याः सा ततानलसमाना तया ततानलसमानया । इति पदार्थः ॥

अथ समासः—जिनानां ओघः जिनौघः । ध्वान्तस्य अन्तो ध्वान्तान्तः, तं ध्वान्तान्तम् । लसति-दीप्यतीति लसमाना, तया लसमानया । भाया मण्डलं भामण्डलं, भामण्डलस्य त्विट् भामण्डलत्विट्, तया भामण्डलत्विषा । ततश्चासौ अनलश्च ततानलः, ततानलवत् ( तेन ) समाना ततानलसमाना, तया ततानलसमानया । न अलसः अनलसः, अनलसश्चासौ मानश्च अनलसमानः, ततोऽनलसमानो यस्याः सा ततानलसमाना, तया ततानलसमानया । इति द्वितीयवृत्तार्थः ॥ २ ॥

दे० व्या०—जीयादिति । स 'जिनौघः' जिनानां ओघः-समूहः जीयात्-जयतात् इत्यन्वयः । 'जि जये' धातुः । 'जीयात्' इति क्रियापदम् । कः कर्ता ? । जिनौघः । किंविशिष्टो जिनौघः ? । यत्तदोर्नित्याभिसम्बन्धाद् यो जिनौघः भामण्डलत्विषा ध्वान्तान्तं ततान इति सम्बन्धः । 'तनु विस्तारे' धातुः । 'ततान' इति क्रियापदम् । कः कर्ता ? । यः । कं कर्मतापन्नम् ? । 'ध्वान्तान्तं' अज्ञानं अन्धकारं वा तस्य अन्तं-नाशम् । "ध्वान्तं भूच्छायान्धकारम्" इत्यभिधानचिन्तामणिः ( का० १, श्लो० ६० ) । कया ? । 'भामण्डलत्विषा' । ( किंविशिष्टया ? ) । लसमानया-विलसन्त्या । पुनः किंविशिष्टया ? । 'ततानलसमानया' ततो-विस्तारं प्राप्तः यः अनलः-वह्निः तेन समानया-सदृशया । इति द्वितीयवृत्तार्थः ॥ २ ॥

---

भारत्याः संकीर्तना—

भारति ! द्राग् जिनेन्द्राणां, नवनौरक्षतारिके ।
संसाराम्भोनिधावस्मा-नवनौ रक्ष तारिके ! ॥ ३ ॥

—अनु०

ज० वि०—भारतीति । हे जिनेन्द्राणां भारति !-तीर्थकृतां वाणि ! हे तारिके-निर्वाहिके ! त्वं अस्मान्-नः अवनौ-भुवि द्राक्-शीघ्रं रक्ष-त्रायस्व इति क्रियाकारकसम्बन्धः । अत्र 'रक्ष' इति क्रियापदम् । का कर्त्री ? 'त्वम्' । कान् कर्मतापन्नान् ? 'अस्मान्' । कथम् ? 'द्राक्' । कस्याम् ? 'अवनौ' । त्वं कथंभूता ? 'नवनौः' नवा-प्रत्यग्रा नौः-नाविका । कस्मिन् ? 'संसाराम्भोधौ' भवसागरे । कथंभूते संसाराम्भोनिधौ ? 'अक्षतारिके' अक्षता-अनुपहता ये अरयः-शत्रवः तद्रूपं कं-जलं यस्मिन् स तथा तस्मिन् । संसारो ह्यम्भोनिधेरुपमया वर्णितः, तत्र तु जलं भवति तेनात्र अक्षतारिरूपं जलमस्तीति तात्पर्यम् । इदं विशेषणं सम्बोधनत्वेन व्याख्येयम् ॥

अथ समासः—जिनानां जिनेषु वा इन्द्रा जिनेन्द्राः 'तत्पुरुषः' । तेषां जिनेन्द्राणाम् । नवा चासौ नौश्च नवनौः 'कर्मधारयः' । न क्षता अक्षताः 'तत्पुरुषः' । अक्षताश्च तेऽरयश्च

अक्षतारयः 'कर्मधारयः'। अक्षतारय एव कं यस्मिन् सोऽक्षतारिकः 'बहुव्रीहिः'। तस्मिन् अक्षतारिके। अम्भसां निधिः अम्भोनिधिः 'तत्पुरुषः'। [ अम्भोनिधिरिवाम्भोनिधिः। ] संसारश्चासावम्भोनिधिश्च संसाराम्भोनिधिः 'कर्मधारयः'। तस्मिन् संसा० ॥ इति काव्यार्थः ॥ ३ ॥

सि० वृ०—भारतीति। जिनेन्द्राणां भारति!—तीर्थकृतां वाणि! हे तारके—निर्वाहिके! त्वं अस्मान्—नः अवनौ—भुवि द्राक्—शीघ्रं रक्ष—त्रायस्वेत्यर्थः। 'रक्ष रक्षणे' धातोः 'आशीःप्रेरणयोः' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनं हिः। 'अप्०' ( सा० सू० ६९१ ), 'अतः' ( सा० सू० ७०९ ) इति हेर्लुक्। अत्र 'रक्ष' इति क्रियापदम्। का कर्त्री?। त्वम्। कान् कर्मतापन्नान्?। अस्मान्। कथम्?। द्राक्। कस्याम्?। अवनौ। कथंभूता त्वम्?। 'नवनौः' नवा—प्रत्यग्रा चासौ नौश्च नवनौः इति 'कर्मधारयः'। "स्त्रियां नौस्तरणिस्तरिः" इत्यमरः ( श्लो० ४८७ )। कस्मिन्?। 'संसाराम्भोनिधौ' संसरणं संसारः स एव अम्भो निधीयतेऽस्मिन् इत्यम्भोनिधिः—समुद्रस्तस्मिन्। 'कर्मण्यधिकरणे च' ( पा० अ० ३, पा ३, सू० ९३ ) इति किः। कथंभूते संसाराम्भोनिधौ?। 'अक्षतारिके' अक्षता—अनुपहता ये अरयः—शत्रवः त एव कं—जलं यस्मिन् स तस्मिन् ॥

सौ० वृ०—भारतीति। हे भारति!-जिनेन्द्राणां वाणि! हे तारिके! द्राक्-शीघ्रं अवनौ-पृथिव्यां अस्मान् रक्ष इत्यन्वयः। 'रक्ष' इति क्रियापदम्। का कर्त्री?। 'त्वम्'। 'रक्ष' अव। कान् कर्मतापन्नान्?। 'अस्मान्'। कथम्?। 'द्राक्' शीघ्रम्। कस्याम्?। 'अवनौ' पृथिव्याम्। किंविशिष्टा त्वम्?। नवा—नूतना नौरिव नौः—तरणिः 'नवनौः'। कस्मिन्?। संसारः—चतुर्गतिभ्रमणलक्षणः स एवाम्भोनिधिः—समुद्रस्तस्मिन् ( संसाराम्भोनिधौ। कथंभूते संसा०? अक्षता—अनुपहता अरयः—शत्रवस्त एव कं—जलं यस्मिन् सः ) अक्षतारिकस्तस्मिन् अक्षतारिके। यद्वा नवनौरिति भारत्या आमन्त्रणम्। इति पदार्थः ॥

अथ समासः—जिनानां इन्द्रा जिनेन्द्राः, तेषां जिनेन्द्राणाम्। नवा नौरिव नौर्नवनौः। न क्षता अक्षताः, अक्षताश्च ते अरयश्च अक्षतारयः, अक्षतारय एव कं—जलं यस्मिन् सः अक्षतारिकः, तस्मिन् अक्षतारिके। संसरणं संसारः, अम्भांसि निधीयन्ते अस्मिन्निति अम्भोनिधिः, संसार एव अम्भोनिधिः संसाराम्भोनिधिः, तस्मिन् संसाराम्भोनिधौ। तारा एव तारिका तस्याः सं० हे तारिके!—निर्मले! त्वं प्रधाना (?)। इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या०—भारतीति। हे जिनेन्द्राणां भारति! त्वं अवनौ-पृथिव्यां अस्मान् अव-रक्ष-पालयेत्यन्वयः। 'रक्ष रक्षणे' धातुः। 'रक्ष' इति क्रियापदम्। का कर्त्री?। त्वम्?। कान् कर्मतापन्नान्?। अस्मान्। कस्याम्?। अवनौ। कथम्?। द्राक्—शीघ्रं यथा स्यात् तथेति क्रियाविशेषणम्। किंविशिष्टा त्वम्?। 'नवनौः' नवा—नूतना नौः—नौका। भारत्याः संबोधनपदं वा। कस्मिन्?। 'संसाराम्भोनिधौ'। ( किंविशिष्टे?। ) 'अक्षतारिके' अक्षता—अनुपहता ये अरयः—शत्रवः त एव कं—जलं यत्र स तस्मिन्। "कं शिरो जलमाख्यातम्" इत्यनेकार्थः। 'तारिके!' इति। तारयतीति तारिका, तस्याः सम्बोधनं हे तारिके! इदमपि भारत्या एव सम्बोधनपदम्। इति तृतीयवृत्तार्थः ॥ ३ ॥

**श्रीप्रज्ञप्तिदेव्याः स्तुतिः—**

केकिस्था वः क्रियाच्छक्ति–करा लाभानयाचिता ।
प्रज्ञप्तिर्नूतनाम्भोज–करालाभा नयाचिता ॥ ४ ॥

—अनु०

ज० वि०—केकिस्थेति । प्रज्ञप्तिः–प्रज्ञप्तिनाम्नी देवी वः–युष्माकं लाभान्–अभीष्टार्थागमान् क्रियात्–विधेयात् इति क्रियाकारकसंयोगः । अत्र 'क्रियात्' इति क्रियापदम् । का कर्त्री ? 'प्रज्ञप्तिः' । कान् कर्मतापन्नान् ? 'लाभान्' । केषाम् ? 'वः' । प्रज्ञप्तिः कथंभूता ? 'केकिस्था' मयूरे स्थिता, मयूरवाहनेत्यर्थः । पुनः कथं० ? 'शक्तिकरा' शक्तिः–प्रहरणविशेषः करे–हस्ते यस्याः सा तथा । यद्वा शक्तौ करो यस्याः सा तथा । पुनः कथं० ? 'अयाचिता' अप्रार्थिता, कस्यापि पुरतोऽयाचनेत्यर्थः । पुनः कथं० ? 'नूतनाम्भोजकरालाभा' नूतनं–नवीनं यदम्भोजं–कमलं तद्वत् कराला–अत्युल्बणा भा–दीप्तिर्यस्याः सा तथा । पुनः कथं० ? 'नयाचिता' नयेन–नीत्या आ–समन्तात् चिता–व्याप्ता ॥

अथ समासः—केकिनि तिष्ठतीति केकिस्था 'तत्पुरुषः' । शक्तिः करे यस्याः सा शक्तिकरा 'बहुव्रीहिः' । यद्वा शक्तौ करो यस्याः सा शक्तिकरा 'बहुव्रीहिः' । न विद्यते याचितं यस्याः सा अयाचिता 'बहुव्रीहिः' । नूतनं च तदम्भोजं च नूतनाम्भोजं 'कर्मधारयः' । नूतनाम्भोजवत् कराला नूत० 'तत्पुरुषः' । नूतनाम्भोजकराला आभा यस्याः सा नूत० 'बहुव्रीहिः' । नयेनाचिता नयाचिता 'तत्पुरुषः' । इति काव्यार्थः ॥ ४ ॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीधर्मनाम्नो जिनस्य स्तुतेर्व्याख्या ॥ १५ ॥

सि० वृ०—केकिस्थेति । प्रज्ञप्तिः–प्रज्ञप्तिनाम्नी देवी वो–युष्माकं लाभान्–वाञ्छितार्थान् क्रियात्–विधेयात् इत्यर्थः । 'डुकृञ् करणे' धातोः आशिषि परस्मैपदे प्रथमपुरुषैकवचनं यात् । 'यादादौ' (सा० सू० ८१४) इति रिङादेशः । तथाच 'क्रियात्' इति सिद्धम् । अत्र 'क्रियात्' इति क्रियापदम् । का कर्त्री ? । 'प्रज्ञप्तिः' प्रकृष्टा ज्ञप्तिः–बुद्धिरस्याः (सा) प्रज्ञप्तिः, क्तिच् । न च प्रज्ञप्ती तिङ्चन्तो नदीवादिति ज्ञेयम् । कथंभूता प्रज्ञप्तिः ? । 'केकिस्था' केकिनि–मयूरे तिष्ठतीति केकिस्था, मयूरवाहिनीत्यर्थः । तस्यास्तद्वाहनत्वादिति भावः । पुनः कथंभूता ? । 'शक्तिकरा' शक्तिः–प्रहरणविशेषः करे–हस्ते यस्याः सा तथा । "शक्तिरस्त्रान्तरे गौर्या–मुत्साहादौ बले स्त्रियाम्" इति मेदिनी । पुनः कथंभूता ? । 'नूतनाम्भोजकरालाभा' नूतनं–नवीनं यदम्भोजं–कमलं तद्वत् कराला–अत्युल्बणा भा–

१ 'राऽलाभा' इत्यपि पाठः ।

दीप्तिर्यस्याः सा तथा । पुनः कथंभूता ? । ‘ अयाचिता ’ न विद्यते याचितं यस्याः सा अयाचिता । पुनः कथंभूता ? । ‘ नयाचिता ’ नयेन—नीत्या आ—समन्तात् चिता—व्याप्ता ॥ अनुष्टुप्छन्दः । तल्लक्षणं चेदम्—

“ श्लोके षष्ठं गुरु ज्ञेयं, सर्वत्र लघु पञ्चमम् ।
द्विचतुःपादयोर्ह्रस्व—मेतच्छ्लोकस्य लक्षणम् ॥ ”

॥ इति श्रीमन्महोपाध्यायभानुचन्द्र० श्रीधर्मनाथस्य स्तुतिवृत्तिः ॥ १५ ॥

सौ० वृ०—केकिस्थेति । प्रज्ञप्तिर्देवी वो—युष्माकं लाभान्—वाञ्छितार्थान् क्रियादित्यन्वयः । ‘क्रियात्’ इति क्रियापदम् । का कर्त्री ? । ‘ प्रज्ञप्तिः ’ । ‘ क्रियात् ’ कुर्यात् । कान् कर्मतापन्नान् ? । ‘ लाभान् ’ बोधिलाभलक्षणान् । केषाम् ? । ‘ वः ’ युष्माकम् । किंविशिष्टा प्रज्ञप्तिः ? । ‘ अयाचिता ’ अप्रार्थिता । पुनः किंविशिष्टा ? । केकी-मयूरस्तत्र तिष्ठतीति ‘ केकिस्था ’ । पुनः किंविशिष्टा ? । शक्तिः-शस्त्रविशेषः सा करे यस्याः सा ‘ शक्तिकरा ’ । पुनः किंविशिष्टा प्रज्ञप्तिः ? । नूतनं-नवीनं यदम्भोजं-कमलं तद्वत् कराला-उग्रा दीप्ता वा कान्तिर्यस्याः सा, अलाभा इत्यप्यर्थः । पुनः किंविशिष्टा प्रज्ञप्तिः ? । नयैः-व्यवहारादिभिरा-समन्तात् चिता-व्याप्ता ‘ नयाचिता ’ । इति पदार्थः ॥

अथ समासः—केकावागस्यास्तीति केकी, केकिनि तिष्ठतीति केकिस्था । शक्तिः करे यस्याः सा शक्तिकरा । लभ्यन्ते प्राप्यन्ते इति लाभास्तान् लाभान् । न याचिता अयाचिता । प्रकृष्टा ज्ञप्तिर्यस्याः सा प्रज्ञप्तिः । अम्भसि जायते तदम्भोजं, नूतनं च तदम्भोजं च नूतनाम्भोजं, नूतनाम्भोजं करे यस्याः सा नूतनाम्भोजकरा । नयैः आ-समन्तात् आत्मधिया वा चिता-व्याप्ता नयाचिता । इति चतुर्थवृत्तार्थः ॥ ४ ॥

श्रीमद्धर्मजिनेन्द्रस्य, स्तुतेरर्थो लिवीकृतः ।
सौभाग्यसागराख्येण, सूरिणा सौख्यकारिणा ॥ १ ॥

॥ इति पञ्चदशमधर्मजिनस्य स्तुतेरर्थः समाप्तः ॥ १५ । ४ । ६० ॥

दे० व्या०—केकिस्थेति । प्रज्ञप्तिनाम्नीदेवी वो-युष्माकं लाभान्-वाञ्छितार्थान् क्रियात्-कुर्यात् इत्यन्वयः । ‘ डुकृञ् करणे ’ धातुः । ‘ क्रियात् ’ इति क्रियापदम् । का कर्त्री ? । प्रज्ञप्तिः । कान् कर्मतापन्नान् ? । लाभान् । केषाम् ? । वः । किंविशिष्टा प्रज्ञप्तिः ? । ‘ अयाचिता ’ न याचितं यस्याः सा तथा, सर्वेषां प्रार्थितार्थपूरकत्वेन स्वस्या अयाचकत्वात् । पुनः किंविशिष्टा ? । ‘ शक्तिकरा ’ शक्तिः-शस्त्रविशेषः करे-हस्ते यस्याः सा तथा । पुनः किंविशिष्टा ? । ‘ केकिस्था ’ केकिनि-मयूरे तिष्ठतीति केकिस्था, केकिवाहनत्वात् । पुनः किंविशिष्टा ? । ‘ नूतनाम्भोजकरालाभा ’ नूतनं-प्रत्यग्रं यद् अम्भोजं-कमलं तद्वत् कराला-उत्कटा भा-कान्तिः यस्याः सा तथा । पुनः किंविशिष्टा ? । ‘ नयाचिता ’ नयो-नीतिपन्थाः तेन आ-समन्तात् चिता-व्याप्ता । इति तुरीयवृत्तार्थः ॥ ४ ॥

# १६ श्रीशान्तिजिनस्तुतयः

अथ श्रीशान्तिनाथस्य स्तुतिः—

राजन्त्या नवपद्मरागरुचिरैः पादैर्जिताष्टापदा–
द्रेऽकोप ! द्रुतजातरूपविभया तन्वाऽऽर्य ! धीर ! क्षमाम् ।
बिभ्रत्याऽमरसेव्यया जिनपते ! श्रीशान्तिनाथास्मरो–
द्रेकोपद्रुत ! जातरूप ! विभयातन्वार्यधी ! रक्ष माम् ॥ १ ॥

—शार्दूल०

ज० वि०—राजन्त्येति । हे श्रीशान्तिनाथ ! श्रियोपलक्षितशान्तिनाथ ! श्रीशान्तिनाथ जिन ! त्वं मां रक्ष–त्रायस्व इति क्रियाकारकसम्बन्धः । अत्र 'रक्ष' इति क्रियापदम् । कः कर्ता ? 'त्वम्' । कं कर्मतापन्नम् ? 'माम्' । अवशिष्टानि श्रीशान्तिनाथस्य सम्बोधनानि, तेषां व्याख्या यथा–हे 'जिताष्टापदाद्रे !' जितः–तुलितोऽष्टापदाद्रिः–कनकशैलो येन स तथा, तत्सम्बो० हे जिता० । कया ? 'तन्वा' मूर्त्या करणभूतया । किं कुर्वन्त्या तन्वा ? 'राजन्त्या' विराजमानया । कैः कृत्वा 'पादैः' आङ्घ्रिभिः । कथंभूतैः पादैः ? 'नवपद्मरागरुचिरैः' नवस्य पद्मस्य यो रागः–रक्तिमा तद्वद् रुचिरैः–चारुभिः । पुनः किं कुर्वन्त्या तन्वा ? 'बिभ्रत्या' दधत्या । कां कर्मतापन्नाम् ? 'क्षमां' क्षान्तिम् । कथंभूतया तन्वा ? 'द्रुतजातरूपविभया' द्रुतं–उत्तप्तं यत् जातरूपं–कनकं तद्वद् विभा–प्रभा यस्याः सा तया । पुनः कथं० 'अमरसेव्यया' अमरैः–देवैः सेव्यया–सेवनीयया । तन्वा जिताष्टापदाद्रे ! इत्यनेन तनुमेर्वोः साधर्म्यमूचे, तेन तनुविशेषणानि मेरोरपि मिलन्ति । तथाहि–मेरुरपि नवपद्मरागरुचिरैः नवाः–प्रत्यग्रा ये पद्मरागा–लोहिताख्या मणिविशेषास्तै रुचिरैः–चारुभिः पादैः–प्रत्यन्तपर्वतै राजमानो भवति, तथा क्षमां–पृथिवीं च बिभ्रद् भवति, तथा अमरसेव्योऽपि भवति, तथा द्रुतजातरूपविभोऽपि च स्यादिति । हे 'अकोप !' कोपरहित ! । हे 'आर्य !' स्वामिन् ! । हे 'धीर !' धैर्ययुक्त ! यद्वा हे 'धीर !' मेधाविन् ! । हे 'जिनपते !' जिनेन्द्र ! । हे 'अस्मरोद्रेकोपद्रुत !' स्मरस्य–कन्दर्पस्य उद्रेकः–वेगः तेनोपद्रुतः–खलीकृतः, न स्मरोद्रेकोपद्रुतस्तस्यामन्त्रणं हे अस्मरोद्रेकोपद्रुत ! । हे 'जातरूप !' प्रादुर्भूतसौन्दर्य ! । हे 'विभय !' विगतत्रास ! । हे 'अतन्वार्यधीः !' अतनुः– अकृशा आर्या–प्रशस्या धीः–बुद्धिर्यस्य स तथा, तत्संबो० हे अतन्वार्यधीः । इदं प्रथमान्तविशेषणमपि ॥

अथ समासः—नवं च तत् पद्मं च नवपद्मं 'कर्मधारयः' । नवपद्मस्य रागो नवपद्मरागः 'तत्पुरुषः' । नवपद्मरागवद् रुचिरा नव० 'तत्पुरुषः' । तैर्नवपद्म० । मेरुपक्षे तु नवाश्च ते पद्मरागाश्च नव० 'कर्मधारयः' । नवपद्मरागैः रुचिरा नव० 'तत्पुरुषः' । तैर्नव० ।

अष्टापदस्याद्रिः अष्टापदाद्रिः 'तत्पुरुषः'। जितोऽष्टापदाद्रिर्येन स जिताष्टा० 'बहुव्रीहिः'। तत्सम्बो० हे जिताष्टा०। न विद्यते कोपो यस्य सः अकोपः 'बहुव्रीहिः'। द्रुतं च तत् जातरूपं च द्रुतजात० 'कर्मधारयः'। द्रुतजातरूपस्येव विभा यस्याः सा द्रुतजा० 'बहुव्रीहिः'। तया द्रुतजा०। अमरैः सेव्या अमरसेव्या 'तत्पुरुषः'। तया अमरसेव्यया। जिनानां पतिः जिनपतिः 'तत्पुरुषः'। तत्सम्बो० हे जिनपते!। शान्तिश्चासौ नाथश्च शान्तिनाथः 'कर्मधारयः'। श्रियोपलक्षितः शान्तिनाथः श्रीशान्ति० 'तत्पुरुषः'। तत्सम्बो० हे श्रीशान्ति०। स्मरस्योद्रेकः स्मरोद्रेकः 'तत्पुरुषः'। स्मरोद्रेकेणोपद्रुतः स्मरोद्रे० 'तत्पुरुषः'। न स्मरोद्रेकोपद्रुतोऽस्मरोद्रे० तत्पुरुषः। तत्सम्बो० हे अस्मरो०। जातं रूपं यस्मिन् स जातरूपः 'बहुव्रीहिः'। तत्सम्बो० हे जातरूप०। विगतं भयं यस्मात् स विभयः 'बहुव्रीहिः'। तत्सम्बो० हे विभय!। न तनुः अतनुः 'तत्पुरुषः'। अतनुश्चासौ आर्या च अतन्वार्या 'कर्मधारयः'। अतन्वार्या धीर्यस्य सः अतन्वार्यधीः 'बहुव्रीहिः'। तत्सम्बो० हे अत०॥ इति काव्यार्थः॥ १॥

सि० वृ०—राजन्त्येति। शान्त्यात्मकत्वात् शान्तिकर्तृकत्वाद् वा गर्भस्थेऽस्मिन् पूर्वोत्पन्नाशिवस्य शान्तिर्जातेति वा शान्तिः, स चासौ श्रियोपलक्षितो नाथः श्रीशान्तिनाथः, तस्य संबोधनं हे श्रीशान्तिनाथ! त्वं मां रक्ष—त्रायस्वेत्यर्थः। 'रक्ष रक्षणे' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनम्। अत्र 'रक्ष' इति क्रियापदम्। कः कर्ता?। त्वम्। कं कर्मतापन्नम्?। माम्। अवशिष्टानि श्रीशान्तिनाथस्य संबोधनानि, तेषां व्याख्या यथा—हे 'जिताष्टापदाद्रे!' जितः—अवगणितः अष्टापदाद्रिः—कनकशैलो येन स तस्य संबोधनम्।

"अष्टापदं स्यात् कनके, सारीणां फलकेऽपि च।
अष्टापदश्च शरभे चन्द्रमल्ल्यां च मर्कटे॥"

इति विश्वः। कया?। तन्वा—मूर्त्या करणभूतया। किं कुर्वत्या तन्वा?। राजन्त्या—विराजमानया। कैः कृत्वा?। पादैः—चरणैः प्रत्यन्तपर्वतैश्च। "पादा रश्म्यङ्घ्रितुर्यांशाः", "पादाः प्रत्यन्तपर्वताः" इत्यमरः (श्लो० ६४६)। 'नवपद्मरागरुचिरैः' नवं—नवीनं यत् पद्मं—कमलं शोणरत्नं वा, "शोणरत्नं लोहितकं (कः), पद्मरागोऽथ मौक्तिकम्" इत्यमरः (श्लो० १८९१), तस्य रागो—रक्तिमा तद्वद् रुचिरैः—चारुभिः, पादयोः रक्तवर्णत्वादिति भावः। भगवत्पक्षे पादैरित्यत्र बहुवचनं विचारणीयमिव प्रतिभाति। पुनः किं कुर्वत्या तन्वा?। बिभ्रत्या—दधता। काम्?। क्षमां—शान्तिम्। कथंभूतया तन्वा?। 'द्रुतजातरूपविभया' द्रुतं—विलीनं यज्जातरूपं—सुवर्णं तद्वद् विभा—प्रभा यस्याः सा तथा तया। "चामीकरं जातरूपं, महारजतकाञ्चने" इत्यमरः (श्लो० १८९६)। पुनः कथंभूतया?। 'अमरसेव्यया' अमरैः—देवैः सेव्यया—सेवनीयया। तन्वा जिताष्टापदाद्रे! इत्यनेन तनुमेर्वोः साधर्म्यमूचे, तेन तनुविशेषणानि मेरोरपि संभवन्ति। तथाहि—मेरुरपि 'नवपद्मरागरुचिरैः' नवाः—प्रत्यग्रा ये पद्मरागा—लोहितमणयस्तैः रुचिरैः—चारुभिः पादैः—प्रत्यन्तपर्वतैः राजमानो भवति, तथा क्षमां—पृथिवीं च बिभ्रद् भवति, अमरसेव्योऽपि भवति, तथा द्रुतजातरूपविभोऽपि च स्यात् इति। हे 'अकोप!' नास्ति कोपः—क्रोधो यस्य सः

अकोपः, तस्य संबोधनम् । हे आर्य !—स्वामिन् ! अमरस्तु " अर्यः स्वामिवैश्ययोः " ( श्लो० २६२८ ) इत्याह । हे धीर !—धैर्ययुक्त ! यद्वा हे धीर !—मेधाविन् । दधाति धियं इति धीरः । ' डुधाञ् धारणपोषणयोः ' ' सुसूधागृधिभ्यः क्रन् ' ( उणा० सू० ), ' घुमास्था० ' ( पा० अ०६, पा०४, सू० ६६ ) इतीत्वम् । धियं ईरयति प्रेरयति वा । ' ईर गतिप्रेरणयोः ' ' कर्मण्यण् ' (पा० अ० ३, पा०२, सू० १) । संशयविपर्ययरहिता धियं राति—आदत्त इति वा । ' रा दाने ' ' आतोऽनुपसर्गे कः ' ( पा०अ०३, पा०२, सू०३ ), ' आतो लोपः० ' ( पा० अ०६, पा०४, सू० ६४ ) इत्यालोपः । हे ' जिनपते ! ' पाति—रक्षति इति पतिः ' पातेर्डतिः ' ( उणा० सू० ) इति डतिप्रत्ययः । डित्त्वाट्टिलोपः । जिनाना पतिः जिनपतिः, तस्य संबोधनं क्रियते । हे 'अस्मरोद्रेकोपद्रुत ! ' स्मरस्य—कामस्य उद्रेक—आधिक्यं तेन उपद्रुतः—खलीकृतः, न स्मरोद्रेकोपद्रुतः अस्मरोद्रेकोपद्रुतः, तस्य संबो० । हे ' जातरूप ! ' जातं—प्रादुर्भूतं रूपं—सौन्दर्यं यस्य स तथा तस्य संबोधनम् । हे 'विभय ! ' विगतं भयं यस्य यस्माद् वा स तथा तस्य संबोधनं हे विभय ! । हे ' अतन्वार्यधीः ! ' अतनुः—अकृशा सा चासौ आर्या—प्रशस्या धीः—बुद्धिः यस्य स तथा तस्य संबो० । ध्यायतीति धीः ' ध्यै चिन्तायाम् ' 'ध्यायतेः (क्विपि) संप्रसारणं (दीर्घता) च वक्तव्या' (सा० सू० १२९९) इति क्विप् संप्रसारणं च ॥ १ ॥

**सौ० वृ०**—यो मूर्तिमान् धर्मो भवति स सर्वप्राणिनां शान्तिकृदेव भवति । अनेन सम्बन्धेनायातस्य षोडशमश्रीशान्तिनाथस्य स्तुतेरर्थो व्याख्यायते—राजन्त्येति ।

श्रीशब्दः पूज्यार्थे । श्रिया—चतुस्त्रिंशदतिशयलक्ष्म्या युक्त ! हे श्रीशान्तिनाथ ! त्वं मां रक्ष इत्यन्वयः । ' रक्ष ' इति क्रियापदम् । कः कर्ता ? । ' त्वं ' भवान् । ' रक्ष ' पालय । कं कर्मतापन्नम् ? । 'माम्' । अन्यानि विशेषणानि भगवतः सम्बोधनरूपाणि व्याचक्षते । जितः—निर्जितः अष्टापदं—सुवर्णं तस्य अद्रिः—पर्वतो मेरुर्येन स जिताष्टापदाद्रिः तस्य सं० हे ' जिताष्टापदाद्रे ! ' । कया ? । ' तन्वा ' मूर्त्या । किंविशिष्टया तन्वा ? । ' राजन्त्या ' शोभमानया । कैः कृत्वा ? । ' पादैः ' किरणैः । किंविशिष्टैः पादैः ? । नवं—नवीनं यत् पद्मं—कमलं तस्य रागः—रक्तिमा तद्वत् रुचिरा—मनोहरास्तैः ' नवपद्मरागरुचिरैः ' । हे 'अकोप !' अक्रोध ! । पुनः किंविशिष्टया तन्वा ? । द्रुतं—उत्तप्तं जातरूपं—सुवर्णं तद्वद् विशिष्टा भा-प्रभा यस्याः सा द्रुतजातरूपविभा तया ' द्रुतजातरूपविभया ' । कथंभूतस्त्वम् ? । अतनुः—अकृशा आर्या—प्रधाना धीः—बुद्धिर्यस्य स ' अतन्वार्यधीः ' । यद्वा संबोधनमपीदं हे ' अतन्वार्यधीः ! ' । पुनः किंविशिष्टया तन्वा ? । ' बिभ्रत्या ' धारयन्त्या । कां कर्मतापन्नाम् ? । ' क्षमां ' क्षान्तिम् । पुनः किंविशिष्टया तन्वा ? । अमरा—देवास्तैः सेव्या—सेवनीया अमरसेव्या तया । जिनाः—सामान्यकेवलिनस्तेषां पतिर्जिनपतिः तस्य सं० हे 'जिनपते !' । स्मरः—कामः तस्य उद्रेक—आधिक्यं स नास्ति यस्य सः अस्मरोद्रेकः तस्य सं० हे 'अस्मरोद्रेक' ! । हे 'उपद्रुत !' उप—समीपे द्रुतं—चारित्रं यस्य (स) उपद्रुतः, तस्य सं० हे उपद्रुत ! । जातं—प्राप्तं रूपं—परमात्मरूपं यस्य येन वा स जातरूपः तस्य सं० हे 'जातरूप !' । विगतं भयं यस्मात् स विभयः तस्य सं० हे 'विभय !' । हे 'आर्य !' हे श्रेष्ठ ! । हे 'धीर !' धियं ईरयतीति धीरः, यद्वा धियं—बुद्धिं राति—ददातीति धीरः, यद्वा धिया—बुद्ध्या राजते इति धीरः तस्य सं० हे धीर ! । त्वं मां रक्ष इति पदार्थः॥

अथ समासः—राजते सा राजन्ती, तया राजन्त्या । नवानि च तानि पद्मानि च नवपद्मानि, नवपद्मानां रागो नवपद्मरागः, नवपद्मरागवद् रुचिरा नवपद्मरागरुचिराः, तैर्नवपद्मरागरुचिरैः । अष्टापदस्य अद्रिः अष्टापदाद्रिः, जितः अष्टापदाद्रिर्येन स जिताष्टापदाद्रिः, तस्य सं० हे जिताष्टापदाद्रे ! । नास्ति कोपो यस्य सः अकोपः, तस्य सं० हे अकोप ! । द्रुतं च तत् जातरूपं च द्रुतजातरूपं, द्रुतजातरूपवद् विभा यस्याः सा द्रुतजातरूपविभा, तया द्रुतजातरूपविभया । न तनुः अतनुः, आर्या चासौ धीश्च आर्यधीः, अतनुः आर्यधीर्यस्य स अतन्वार्यधीः । बिभर्ति सा बिभ्रती, तया बिभ्रत्या । सेवितुं योग्या सेव्या,

अमरैः सेव्या अमरसेव्या, तया अमरसेव्यया। जिनानां पतिर्जिनपतिः, तस्य सं० हे जिनपते!। श्रिया युक्तः शान्तिनाथः श्रीशान्तिनाथः, तस्य सं० हे श्रीशान्तिनाथ!। स्मरस्य उद्रेकः स्मरोद्रेकः, न विद्यते स्मरोद्रेको यस्य सः अस्मरोद्रेकः (तस्य सं० हे अस्म०)। उप द्रुतं-चारित्रं यस्य स उपद्रुतः, तस्य सं० हे उपद्रुत!। "द्रुतं स्थिरे चारित्रे च, ध्रौव्येऽनेकार्थभस्मनोः" इत्यनेकार्थतिलकः। उप-समीपे जातं रूपं यस्य स तस्य सं० हे जातरूप!। विगतं भयं यस्मात् स विभयः, तस्य सं० हे विभय!। आरात्-पापाद् रितो-गतः आर्यः, तस्य सं० हे आर्य!। हे धीर!। इति प्रथमवृत्तार्थः॥ १॥

शार्दूलविक्रीडितच्छन्दसा स्तुतिरियम्। तथा तनुशब्दः स्त्रीलिङ्गे दीर्घोऽप्यस्ति तन्वेति सिद्धम्। तनुमेर्वोः सादृश्यमुक्तमतो मेरुरपि अमरसेव्यो भवति, नवपद्मरागरुचिरैः पदैः राजितो भवति, उत्तप्तसुवर्ण-कान्तिर्भवति इत्युभयोः सादृश्यम्। इति छायार्थः॥

दे० व्या०--राजन्त्येति। हे श्रीशान्तिनाथ! त्वं मां रक्ष-पालयेत्यन्वयः। 'रक्ष रक्षणे' धातुः। 'रक्ष' इति क्रियापदम्। कः कर्ता?। त्वम्। कं कर्मतापन्नम्?। माम्। हे 'जिताष्टापदाद्रे!' जितः-अधरीकृतः अष्टापदाद्रिः येन स तस्यामन्त्रणम्। "स्वर्गिकाश्चनजो(तो) गिरिः" इत्यभिधानचिन्तामणिः (का०४, श्लो० ९८)। कया?। तन्वा-शरीरेण। किं कुर्वत्या तन्वा?। राजन्त्या-शोभमानया। कैः?। चरणैः। "पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः (श्लो० १२१६)। किंविशिष्टैः पादैः?। 'नवपद्मरागरुचिरैः' नवं-नूतनं यत् पद्मं-कमलं तस्य रागो-रक्तिमा, यद्वा नवः-प्रत्यग्रो यः पद्मरागमणिः तद्वद् रुचिरैः-मनोज्ञैः, माञ्जिष्ठवर्णत्वात्। पुनः किं कुर्वत्या तन्वा?। बिभ्रत्या-धारयन्त्या। काम्?। क्षमां-तितिक्षाम्। "तितिक्षा सहनं क्षमा" इत्याभिधानचिन्तामणिः (का० ३, श्लो० ५५)। किंविशिष्टया तन्वा?। 'द्रुतजातरूपविभया' द्रुतं-बिलीनं यत् जातरूपं-सुवर्णं तद्वद् विभा-कान्तिः यस्याः सा तया। पुनः किंविशिष्टया?। 'अमरसेव्यया' अमरा-देवाः तेषां सेवनार्हा सेव्या तया। हे 'अकोप!' न विद्यते कोपः-क्रोधो यस्य स तस्यामन्त्रणम्, ध्वस्तक्रोधत्वात्। हे आर्य!-हे स्वामिन्!। हे 'धीर!' धियं-बुद्धिं राति-दत्ते इति धीरः, यद्वा परीषहाद्यक्षोभ्यत्वेन धीरः स तस्यामन्त्रणम्। हे 'जिनपते!' जिनाः-सामान्यकेवलिनः तेषां पतिः-स्वामी यः स तस्यामन्त्रणं, तीर्थप्रवर्तकत्वात्। हे 'अस्मरोद्रेकोपद्रुत!' स्मरः-कामः तस्य उद्रेकः-आधिक्यं तेन उपद्रुतः-पीडितः न भवति यः स तस्यामन्त्रणम्। हे 'जातरूप!' जातं-प्रादुर्भूतं रूपं-सौन्दर्यं यस्य स तस्यामन्त्रणम्, तीर्थकरनामकर्मोदयात्' हे 'विभय!' विगतं भयं-दरो यस्मात् स तस्यामन्त्रणं, शरीरादपि निःस्पृहत्वात्। हे 'अतन्वार्यधीः!', अतन्वी-प्रचुरा आर्या-प्रशस्या धीः बुद्धिर्यस्य स तस्यामन्त्रणं, प्रतिसमयं परहितचिन्तनात्। एतानि सर्वाणि भगवतः सम्बोधनपदानि। अत्र भगवत्तनोरष्टापदाद्रिणा श्लेषः। सोऽपि नवपद्ममणिरागरुचिरैः पादैः-मूलप्रदेशैः राजति द्रुतजातरूपविभवं बिभर्ति अमरसेव्यश्च स्यात्॥ इति प्रथमवृत्तार्थः॥ १॥



जिनवराणां विजयः—

ते जीयासुरविद्विषो जिनवृषा मालां दधाना रजो-
राज्या मेदुरपारिजातसुमनःसन्तानकान्तां चिताः।
कीर्त्या कुन्दसमत्विषेषदपि ये न प्राप्तलोकत्रयी-
राज्या मेदुरपारिजातसुमनःसन्तानकान्ताश्चिताः॥ २॥

—शार्दूल०

ज० वि०—ते जीयासुरिति । ते जिनवृषा—जिनवृषभा जीयासुः—जयन्तु इति क्रियाकारकप्रयोगः । अत्र 'जीयासुः' इति क्रियापदम् । के कर्तारः ? 'जिनवृषाः'। कथंभूता जिनवृषाः ? 'अविद्विषः' गतविद्वेषाः । जिनवृषाः किं कुर्वाणाः ? 'दधानाः' बिभ्रतः । कां कर्मतापन्नाम् ? 'मालां' स्रजम् । कथंभूतां मालाम् ? 'रजोराज्या मेदुरपारिजातसुमनःसन्तानकान्ताम्' रजांसि—पुष्परागाः तेषां राज्या—श्रेण्या मेदुराः—पीवराः पारिजातसुमनसः—पारिजातकुसुमानि सन्तानककुसुमानि च तेषां अन्ता—अवयवा यस्याः सा तथा ताम् । जिनवृषाः पुनः कथं० ? 'चिताः' सम्बद्धाः व्याप्ता इतियावत् । कया ? 'कीर्त्या' प्रख्यात्या। कथंभूतया ? 'कुन्दसमत्विषा' कुन्दकुसुमोपमदीप्त्या । त इति तच्छब्दसम्बद्धत्वाद् यच्छब्दघटनामाह—ये जिनवृषाः ईषदपि—मनागपि न मेदुः—न मदं गतवन्तः । अत्रापि 'मेदुः' इति क्रियापदम् । के कर्तारः ? 'ये'। कथम् ?। 'न'। नेति निषेधपदम् । कथम् ? 'ईषदपि'। ये कथंभूताः सन्तः ? 'प्राप्तलोकत्रयीराज्याः' लब्धजगत्त्रयैश्वर्याः। पुनः कथं० ? 'अपारिजातसुमनःसन्तानकान्ताश्रिताः' अपारिजाताः—अपगतवैरिसमूहा ये सुमनःसन्ताना—देवानां समूहाः तेषां कान्ता—मुख्याः शिरःप्रान्ता वा प्रणामप्रान्ताः स्त्रियो वा तैः आश्रिताः—पूजिताः । अपेर्गम्यमानत्वाद् ये एतादृशाः सन्तोऽपि न मेदुरिति ॥

अथ समासः—न विद्यन्ते विद्विषो येषां ते अविद्विषः 'बहुव्रीहिः'। जिनानां जिनेषु वा वृषाः जिनवृषाः 'तत्पुरुषः'। रजसां राजी रजोराजी 'तत्पुरुषः'। तया रजोराज्या । पारिजातस्य सुमनसः पारि० 'तत्पुरुषः'। पारिजातसुमनसश्च सन्तानकानि च पारिजा० 'इतरेतरद्वन्द्वः'। पारिजातसुमनसःसन्तानकानामन्ताः पारि० 'तत्पुरुषः'। मेदुराः पारिजातसुमनःसन्तानकान्ता यस्याः सा मेदुरपा० 'बहुव्रीहिः'। तां मेदु० । कुन्दस्य समा कुन्दसमा 'तत्पुरुषः'। कुन्दसमा त्विट् यस्याः सा कुन्द० 'बहुव्रीहिः'। तया कुन्द० । लोकानां त्रयी लोकत्रयी 'तत्पुरुषः'। लोकत्रय्या राज्यं लोक० 'तत्पुरुषः'। प्राप्तं लोकत्रयीराज्यं यैस्ते प्राप्तलो० 'बहुव्रीहिः'। अरीणां जातं अरिजातं 'तत्पुरुषः'। अपगतं अरिजातं येभ्यस्ते अपारिजाताः 'बहुव्रीहिः'। सुमनसां सन्तानाः सुमनःसन्तानाः 'तत्पुरुषः'। अपारिजाताश्च ते सुमनःसन्तानाश्च अपारि० 'बहुव्रीहिः'। अपारिजातसुमनःसन्तानानां कान्ताः अपारि० 'तत्पुरुषः'। अपारिजातसुमनःसन्तानकान्तैराश्रिता अपारि० 'तत्पुरुषः'। शिरःप्रान्तपक्षे कानामन्ताः कान्ता इति समस्यते । स्त्रीपक्षे च कान्ताभिरिति स्त्रीनिर्देशेन समस्यते । इति काव्यार्थः ॥ २ ॥

सि० वृ०—ते जीयासुरिति । ते जिनवृषा—जिनवृषभा जीयासुः—जयन्तु इत्यर्थः । 'जि जये' धातोराशिषि कर्तरि परस्मैपदे प्रथमपुरुषबहुवचनं यासुस् । 'ये' ( सा० सू० ७७९ ) इति दीर्घः ।

स्रोर्विसर्गः ( सा० सू० १२४ ) । तथा च ' जीयासुः ' इति सिद्धम् । अत्र ' जीयासुः ' इति क्रियापदम् । के कर्तारः ? । ' जिनवृषाः ' जिनानां जिनेषु वा वृषाः—श्रेष्ठाः जिनवृषा इत्यर्थः ।

" वृषः स्याद् वासके धर्मे, सौरभेये च शुक्रले ।
पुंराशिभेदयोः शृङ्ग्या, मूषकश्रेष्ठयोरपि ॥ "

इति **विश्वः** । कथंभूता जिनवृषाः ? । ' अविद्विषः ' न सन्ति विद्विषो येषां ते अविद्विषः । जिनवृषा किं कुर्वाणः ? । दधानाः—बिभ्रतः । काम् ? । मालां—स्रजम् । कथंभूता मालाम् ? । ' रजोराज्या मेदुरपारिजातसुमनःसन्तानकान्तां ' रजसां—पुष्परागाणां राजिः—श्रेणिः तया मेदुराः—पीवरा ये पारिजातसुमनःसन्तानाः पारिजातस्य—कल्पवृक्षस्य सुमनःसन्तानाः—पुष्पसमूहाः तैः कान्तं—मनोहरम् । अन्ये तु पारिजातस्य कुसुमानि सन्तानकानि सन्तानककुसुमानि च तेषामन्ताः—अवयवा यस्यामिति व्याख्यान्ति । पुनः कथंभूता जिनवृषाः ? । चिता—व्याप्ताः । कया ? । कीर्त्या । कथंभूतया ? । ' कुन्दसमत्विषा ' कुन्दः—पुष्पविशेषः तेन समाना त्विट्—प्रभा यस्याः सा तथा तया । ते इति ते के इत्याह—ये जिनवृषा ईषदपि—मनागपि न मेदुः—न मदं गतवन्त इत्यर्थः । ' मदी हर्षे ' इति धातोः कर्तरि परस्मैपदे परोक्षे प्रथमपुरुषबहुवचनं उस् । ' द्विश्च ' (सा० सू० ७१० ) इति धातोर्द्वित्वम् । ' णादिः कित ' ( सा० सू० ७०९ ) इत्यनेन कित्वम् । ' लोपः पचा कित्ये चास्य' (सा० सू० ७६२) इत्यनेन पूर्वस्य लोपः, अकारस्य चैकहसस्य एकारः । तथाच 'मेदुः' इति सिद्धम् । अत्र ' न मेदुः ' इति क्रियापदम् । के कर्तारः ? । ये । कथम् ? । न 'न' इति निषेधपदम् । कथम् ? । ईषदपि । कथंभूता ये ? । ' प्राप्तलोकत्रयीराज्याः ' प्राप्तं—लब्धं लोकत्रय्याः लोकानां त्रयी तस्याः राज्यं—ऐश्वर्यं यैस्ते तथा । पुनः कथंभूताः ? । ' अपारिजातसुमनःसन्तानकान्ताञ्चिताः ' अपारिजाताः—अपगतवैरिसमूहा ये सुमनःसन्ताना—देवसमूहाः तेषां कानां अन्ताः कान्ताः—शिरःप्रान्ताः कान्ताः—स्त्रियो वा ताभिश्च अञ्चिताः—पूजिताः । अपेगम्यमानत्वाद् ये एतादृशाः सन्तोऽपि न मेदुरिति भावः ॥ २ ॥

**सौ० वृ०—ते जीयासुरिति । ते जिनवृषाः—तीर्थकरश्रेष्ठाः जीयासुरित्यन्वयः । ' जीयासुः ' इति क्रियापदम् । के कर्तारः ? । ' जिनवृषाः ' । ' जीयासुः ' जयन्तु । किंविशिष्टा जिनवृषाः ? । ' ते ' प्रसिद्धाः । प्रकान्तप्रसिद्धार्थस्तच्छब्दो यच्छब्दमपेक्षते । ते के जिनाः ? । प्राप्तलोकत्रयीराज्या अपि ईषत् न मेदुरित्यन्वयः । ' मेदुः ' इति क्रियापदम् । ये जिनाः न मेदुः मदं न प्रापुः । कथम् ? । ' ईषत् ' स्तोकमात्रमपि । किंविशिष्टा जिनवृषाः ? । ' प्राप्तलोकत्रयीराज्या अपि ' सम्प्राप्तत्रिभुवनसाम्राज्या अपि । पुनः किंविशिष्टा जिनवृषाः ? । 'अविद्विषः' गतशत्रवः । पुनर्जिनवृषाः किं कुर्वाणाः ? । 'दधानाः' धार्यमाणाः । कां कर्मतापन्नाम् ? । ' मालां ' कुसुमस्रजम् । किंविशिष्टां मालाम् ? । रजः-परागः तस्य राजिः-श्रेणिः रजोराजिस्तया रजोराज्या कृत्वा मेदुराः-पुष्टाः पारिजाताः-कल्पवृक्षास्तेषां सुमनसः-पुष्पाणि तेषां सन्तानाः-समूहास्तैः कृत्वा कान्ताः-मनोज्ञाः [ अन्ता-मध्यभागा यस्याः सा ] मेदुरपारिजातसुमनःसन्तानकान्ता तां 'मेदुरपारिजातसुमनःसन्तानकान्ताम्' । [पुनः किंविशिष्टा जिनवृषाः? । 'पीनाः' पुष्टाः ।] कया ? । 'कीर्त्या' यशसा । किंविशिष्टया कीर्त्या ? । मुचकुन्दपुष्पाणि तैः समा-सदृशी त्विट्-कान्तिर्यस्याः सा कुन्दसमत्विट् तया 'कुन्दसमत्विषा' । पुनः किंविशिष्टा जिनवृषाः ? । अपगतं अरीणां-शत्रूणां**

जातं-समूहो येभ्यस्ते तादृशाः सुमनसो-विबुधाः पण्डिता वा तेषां सन्तानाः-समुदायास्तेषां कान्ताः-स्वामिनस्तैरश्रिताः-पूजिता 'अपारिजातसुमनःसन्तानकान्ताश्रिताः'। इति पदार्थः ॥

अथ समासः—विशेषेण द्विषन्तीति विद्विषः, न सन्ति विद्विषो येषां ते अविद्विषः। जिनेषु वृषाः जिनवृषाः। "वृषो धर्मे पशौ दासे, श्रेष्ठे शब्दे स्थितेतरे" इत्यनेकार्थसंग्रहः। रजसां राजिः रजोराजिः, तया रजोराज्या। मेदुरश्चासौ पारिजातश्च मेदुरपारिजातः, मेदुरपारिजातस्य सुमनांसि मेदुरपारिजातसुमनांसि, मेदुरपारिजातसुमनांसि च सन्तानाश्च मेदुरपारिजातसुमनःसन्तानाः, मेदुरपारिजातसुमनःसन्तानैः कान्ता मेदुरपारिजातसुमनःसन्तानकान्ता, (ताम्)। कुन्दस्य समा कुन्दसमा, कुन्दसमा त्विट् यस्याः सा कुन्दसमत्विट्, तया कुन्दसमत्विषा। लोकानां त्रयी लोकत्रयी, लोकत्रय्या राज्यं (लोकत्रयीराज्यं), लोकत्रयीराज्यं प्राप्तं यैस्ते प्राप्तलोकत्रयीराज्याः। अरीणां जातं अरिजातं, अपगतं अरिजातं येभ्यस्ते अपारिजाताः, सुमनसां सन्तानाः सुमनःसन्तानाः, अपारिजाताश्च ते सुमनःसन्तानाश्च अपारि०, अपारिजातसुमनःसन्तानानां कान्ता अपारिजातसुमनःसन्तानकान्ताः, अपारिजातसुमनःसन्तानकान्तैः अश्रिता अपारिजातसुमनःसन्तानकान्ताश्रिताः। पारिजात-सन्तान-मन्दार-हरिचन्दन-कल्पाद्याः पञ्चापि कल्पवृक्षाः सन्ति। "सुमनाः पण्डिते पुष्पे, देवे सज्जने सभितौ" इत्यनेकार्थः ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥

दे० व्या०—ते जीयासुरिति। ते जिनाः-तीर्थंकराः जीयासुः इति संबन्धः। 'जि जये' धातुः। 'जीयासुः' इति क्रियापदम्। के कर्तारः?। 'जिनवृषाः' जिनाः-सामान्यकेवलिनः तेषु वृषाः-श्रेष्ठाः। "धर्मो वृषो वृषश्रेष्ठो, वृषण्डो मूर्षको वृषः" इत्यनेकार्थः। किंविशिष्टा जिनवृषाः?। 'अविद्विषः' नास्ति विद्वेषो येषां ते तथा। तदुक्तं-"वासीचंदणकप्पे, समाणे लेट्ठुकं चणे"[1] इति। जिनाः किं कुर्वाणाः?। दधाना -धारयन्तः। काम्?। मालां-स्रजम्। किंविशिष्टां मालाम्?। 'रजोराज्या मेदुरपारिजातसुमनःसन्तानकान्ताम्' 'रजसां-पुष्परेणूनां राजिः-श्रेणिस्तया मेदुराः-पीवराः ये पारिजाताः-कल्पपादपाः तेषां सुमनःसन्तानाः-पुष्पसमूहाः तैः कान्तां-भूषिताम्। "गुलुञ्छोऽथ रजः पौष्पं, परागोऽथ रसो मधु" इत्यभिधानाचिन्तामणिः (का० ४, श्लो० १९२)। संतानः-तरुविशेषः तस्य पुष्पाणि संतानकानि तेषां अन्ता-अवयवा यस्यां सा तथेति प्राञ्चः। पुनः किंविशिष्टाः?। चिताः-व्याप्ताः। कया?। कीर्त्या-यशसा। "श्लोकः कीर्तिर्यशोऽभिख्या" इत्यभिधानाचिन्तामणिः (का० २, श्लो० १८७)। किंविशिष्टया कीर्त्या?। 'कुन्दसमत्विषा' कुन्दः-कुसुमविशेषः तेन सदृशा त्विट्-कान्तिः यस्याः सा तया। पुनः किंविशिष्टाः?। यत्तदोर्नित्याभिसम्बन्धाद् ये जिनवृषाः प्राप्तलोकत्रयीराज्या अपि ईषत्-मनाक् न मेदुः-न मदं गतवन्तः। 'न मेदुः' इति क्रियापदम्। के कर्तारः?। जिनवृषाः। किं कर्मतापन्नम्?। ईषत्। किंविशिष्टा जिनवृषाः?। 'प्राप्तलोकत्रयीराज्याः' प्राप्तं-लब्धं लोकत्रय्याः-त्रिभुवनस्य राज्यं-साम्राज्यं यैस्ते तथा। पुनः किंविशिष्टाः?। 'अपारिजातसुमनःसन्तानकान्ताञ्चिताः' अपगता अरिजाताः-शत्रुसमूहा येषां ते अपारिजाताः ते च ते सुमनःसन्तानाश्च-देवसमूहास्तेषां कान्ता-योषितः ताभिः अश्रिताः-पूजिताः। "वृन्दारकाः सुमनसस्त्रिदशा अमर्त्याः" इत्यभिधानचिन्तामणिः (का० २, श्लो० २) ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥

---

१ वासीचन्दनकल्पः समानो लेष्टुकाञ्चने।



जिनमतस्य स्तुतिः—

जैनेन्द्रं मतमातनोतु सततं सम्यग्दृशां सद्गुणा-
लीलाभं गमहारि भिन्नमदनं तापापहृद् यामरम् ।
दुर्निर्भेदनिरन्तरान्तरतमोनिर्नाशि पर्युल्लस-
ल्लीलाभङ्गमहारिभिन्नमदनन्तापापहृद्यामरम् ॥ ३ ॥
—शार्दूल०

ज० वि०—जैनेन्द्रमिति । जैनन्द्रं—जिनेन्द्रसम्बन्धि मतं—दर्शनं सम्यग्दृशां—सम्यग्दृष्टीनां 'सद्गुणालीलाभं' सन्तः—शोभना ये गुणास्तेषां ( आली—पङ्क्तिस्तस्या ) लाभं—प्राप्तिं सततं—निरन्तरं आतनोतु— समन्ताद् विस्तारयतु इति क्रियाकारकसंयोजनम् । अत्र 'आतनोतु' इति क्रियापदम् । किं कर्तृ ? 'मतम्' । कं कर्मतापन्नम् ? 'सद्गुणालीलाभम्' । केषाम् ? 'सम्यग्दृशाम्' । कथम् ? 'सततम्' । मतं किमीयम्? 'जैनेन्द्रम्'। कथंभूतं मतम् ? 'गमहारि' गमैः—सदृशपाठैर्हारि—मनोहरम् । पुनः कथं० ? 'भिन्नमदनम्' विदारितमारम् । पुनः कथं० ? 'तापापहृत्' तापमपहरतीति तापापहृत् । पुनः कथं० ? 'यामरं' यामानि—व्रतानि राति—ददातीति यामरम् । पुनः कथं० ? 'दुर्निर्भेदनिरन्तरान्तरतमोनिर्नाशि' दुर्निर्भेदं—दुरवच्छेद्यं निरन्तरं—निर्विवरं आन्तरं—मनोऽन्तर्भवं एतादृशां यत् तमो—मोहस्तं निर्नाशयतीत्येवंशीलम् । पुनः कथं० ? 'पर्युल्लसल्लीलाभङ्गमहारिभित्' पर्युल्लसल्लीलाः—प्रोद्यद्विलासा अभङ्गा—अजेया ये महारयो—महाप्रतिपक्षा अर्थात् रागद्वेषादयस्तान् भिनत्ति यत् तत् तथा । पुनः कथं० ? 'नमदनन्तापापहृद्यामरं' नमन्तः—नमस्कुर्वन्तः अनन्ता—अन्तरहिता अपापाः—पापरहिता हृद्या—मनोज्ञा अमरा—देवा यस्य तत् तथा ॥

अथ समासः—जिनानां जिनेषु वा इन्द्रः जिनेन्द्रः 'तत्पुरुषः' । जिनेन्द्रस्येदं जैनेन्द्रम् । सम्यग् दृशौ येषां ते सम्यग्दृशः 'बहुव्रीहिः' । तेषां सम्यग्दृशाम् । सन्तश्च ते गुणाश्च सद्गुणाः 'कर्मधारयः' । सद्गुणानां आली सद्गुणाली 'तत्पुरुषः' । सद्गुणाल्या लाभः सद्गु० 'तत्पुरुषः' । तं सद्गुणा० । गमैर्हारि गमहारि 'तत्पुरुषः' । भिन्नो मदनो येन तद् भिन्नमदनं 'बहुव्रीहिः' । तापमपहरतीति तापापहृत् 'तत्पुरुषः' । यामानि रातीति यामरं 'तत्पुरुषः' । दुःखेन निर्भेदो यस्य तद् दुर्निर्भेदं 'बहुव्रीहिः' । न विद्यते अन्तरं यस्मिन् तत् निरन्तरं 'बहुव्रीहिः' । दुर्निर्भेदं च तत् निरन्तरं च दुर्निर्भेदनिरन्तरं 'कर्मधारयः' । आन्तरं च तत् तमश्च आन्तरतमः 'कर्मधारयः । दुर्निर्भेदनिरन्तरं च तद् आन्तरतमश्च दुर्निर्भेदनिर० 'कर्मधारयः' । दुर्निर्भेदनिरन्तरान्तरतमो निर्नाशयतीत्येवंशीलं दुर्निर्भेद० 'तत्पुरुषः' । पर्युल्लसन्ती लीला येषां ते

पर्युल्ल० ' बहुव्रीहिः '। न विद्यते भङ्गो येषां ते अभङ्गाः ' बहुव्रीहिः '। महान्तश्च ते अरयश्च महारयः ' कर्मधारयः '। पर्युल्लसल्लीलाश्च ते अभङ्गाश्च पर्युल्ल० ' कर्मधारयः '। पर्युल्लसल्लीला-भङ्गाश्च ते महारयश्च पर्युल्लस० ' कर्मधारयः ' । पर्युल्लसल्लीलाभङ्गमहारीन् भिनत्तीत्येवंशीलं पर्युल्लस० ' तत्पुरुषः ' । न विद्यते अन्तो येषां ते अनन्ताः ' बहुव्रीहिः ' । हृद्याश्च ते अमराश्च हृद्यामराः ' कर्मधारयः ' । न विद्यते पापं येषां ते अपापाः ('बहुव्रीहिः') । अपापाश्च ते हृद्यामराश्च अपापहृद्यामराः ('कर्मधारयः') । अनन्ताश्च ते अपापहृद्यामराश्च अनन्ता० 'कर्मधारयः'। नमन्तोऽनन्तापापहृद्यामरा यस्य तन्नमद० ' बहुव्रीहिः ' ॥ इति काव्यार्थः ॥ ३ ॥

सि० वृ०—जैनेन्द्रमिति । जिनेन्द्रस्येदं जैनेन्द्रं—जिनेन्द्रसंबन्धि मतं—दर्शनं सम्यग्दृशो येषां ते सम्यग्दृशः तेषां सम्यग्दृशां—सम्यग्दृष्टीनां सद्गुणालीलाभं—सद्गुणश्रेणीप्राप्तिं सततं—निरन्तरं ' आतनोतु ' आ—समन्ताद् विस्तारयतु इत्यर्थः। आङ्पूर्वक ' तनु विस्तारे ' धातोः 'आशीःप्रेरणयोः' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनम् । अत्र ' आतनोतु ' इति क्रियापदम् । किं कर्तृ ? । मतम् । कं कर्मतापन्नम् ? । ' सद्गुणालीलाभं ' सन्तः—शोभना ये गुणास्तेषां ( आली—पङ्क्तिस्तस्या ) लाभः—प्राप्तिः तम् । केषाम् ? । सम्यग्दृशाम् । कथम् ? । सततम् । मतं किमात्मीयम् ? । जैनेन्द्रम् । कथंभूतम् ? । ' गमहारि ' गमाः—सदृशपाठाः तैर्हारि—मनोहरम् । पुनः कथंभूतम् ? । ' भिन्नमदनं ' भिन्नो—विदारितो मदनो येन तत्, तदुच्छेदपरत्वेनास्य सिद्धत्वात् । पुनः कथंभूतम् ? । ' तापापहृत् ' तापं अर्थात् संसारजनितं अपहरतीति तापापहृत् । पुनः कथंभूतम् ? । ' यामरं ' यामानि—अहिंसाद्यात्मकानि महाव्रतानि राति—ददातीति यामरम् । पुनः कथंभूतम् ? । ' दुर्निर्भेदनिरन्तरान्तरतमोनिर्नाशि ' दुर्निर्भेदं—दुःखेन दूरीकर्तुं शक्यं तन्निरन्तरं- निर्विवरं आन्तरं—अन्तर्भवं एतादृशं यत् तमः—अज्ञानं तन्निर्नाशयतीत्येवंशीलम् । दुर्निर्भेदं च निरन्तरं च दुर्निर्भेदनिरन्तरं इति ' कर्मधारयः', आन्तरं च तत् तमश्चान्तरतमः 'कर्मधारयः', दुर्निर्भेदनिरन्तरं च तद् आन्तरतमश्च दुर्निर्भेदनिरन्तरान्तरतमः, दुर्निर्भेदनिरन्तरान्तरतमो निर्नाशयतीत्येवंशीलं दुर्निर्भेदनिरन्तरान्तरतमोनिर्नाशि, सर्वत्र ' कर्मधारयः ' । पुनः कथंभूतम् ? । ' पर्युल्लसल्लीलाभङ्गमहारिभित् ' पर्युल्लसन्ती लीला येषां ते पर्युल्लसल्लीलाः, न विद्यते भङ्गः—पराजयो येषां ते अभङ्गाः महान्तः—प्रकृष्टाश्च ते अरयश्च महारयः, ततः पर्युल्लसल्लीलाश्च ते अभङ्गाश्च ते महारयश्च ते तथा तान् भिनत्तीत्येवंशीलम् । पुनः कथंभूतम् ? । ' नमदनन्तापापहृद्यामरं ' नमन्तः—प्रणामं कुर्वन्तः अनन्ताः—अपरिमिताः ( अपापाः—गतपापाः ) ते च ते हृद्याः—मनोज्ञाः अमरा—देवाः यस्य तत् ॥ ३ ॥

सौ० वृ०—जैनेन्द्रमिति । जैनेन्द्रं मतं-तीर्थकरप्रवचनं सम्यग्दृशां-सम्यग्दृष्टीनां सततं-निरन्तरं ' सद्गुणालीलाभं ' सन्तः-शोभना ये गुणाः-क्षमामार्दवार्जवादयः तेषां आली-श्रेणिः तस्या लाभः-प्राप्तिः तं [सद्गुणालीलाभं] आतनोतु इत्यन्वयः । ' आतनोतु ' इति क्रियापदम् । किं कर्तृ ? । ' मतं ' प्रवचनम् । ' आतनोतु ' विस्तारयतु । कं कर्मतापन्नम् ? । ' सद्गुणालीलाभम् ' । केषाम् ? । ' सम्यग्दृशाम् ' । कथम् ? । ' सततं ' निरन्तरम् । किंविशिष्टं मतम् ? । 'जैनेन्द्रं' तीर्थकरसत्कम् । पुनः किंविशिष्टं मतम् ? । गमाः-सदृशपाठाः तैः कृत्वा हारि-मनोहरं 'गमहारि' । पुनः किंविशिष्टं मतम् ? । तापः-संसारभ्रमणलक्षणः तं अपहरतीति ' तापापहृत् '। पुनः किंविशिष्टं मतम् ? । यामा-महाव्रतानि राति-ददातीति तत् ' यामरम् ' । पुनः किंविशिष्टं मतम् ? । दुःखेन नितरां भिद्यते इति 'दुर्निर्भेदं तादृशं यत् निरन्तरं-

निश्छिद्रं-घनं आन्तरं-चेतोवृत्ति तमो-मोहान्धकारं अज्ञानं वा निश्चितं नाशयतीति 'दुर्निर्भेदनिरन्तरान्तरतमोनिर्नाशि'। पुनः किंविशिष्टं मतम्?। पर्युल्लसती-दीप्यमाना या लीला-विलासः तस्या भङ्गो-विविधरचना येषां ते तादृशा ये महान्तोऽरयः-शत्रवो रागद्वेषादयः तान् भिनत्तीति 'पर्युल्लसल्लीलाभङ्गमहारिभित्'। किंविशिष्टं मतम्?। नमन्तः-प्रणमन्तः अनन्ता-अप्रमाणा अपापा-गतपापा हृद्या-मनोज्ञा अमरा-देवा यस्य यस्मिन् वा तत् 'नमदनन्तापापहृद्यामरम्'। एतादृशं प्रवचनं सम्यग्दृशां सद्गुणालीलाभं आतनोतु। इति पदार्थः॥

अथ समासः—जिनेन्द्राणामिदं जैनेन्द्रम्। सम्यक्-अविपरीता दृग् येषां ते सम्यग्दृशः, तेषां सम्यग्दृशाम्। सन्तश्च ते गुणाश्च सद्गुणाः, सद्गुणानामाली सद्गुणाली, सद्गुणाल्या लाभः सद्गुणा०, तं सद्गुणालीलाभम्। हरति चित्तं तत् हारि, गमैर्हारि गमहारि। भिन्नो मदनो येन तद् भिन्नमदनम्। तापं अपहरतीति तापापहृत्। यामं राति-ददातीति यामरम्। दुःखेन निरन्तरं भेदो यस्य तत् दुर्निर्भेदम्, अन्तरे भवं आन्तरं, आन्तरं च तत् तमश्च आन्तरतमः, निरन्तरं च आन्तरतमश्च निरन्तरान्तरतमः, दुर्निर्भेदं च तत् निरन्तरान्तरतमश्च दुर्निर्भेदनिरन्तरान्तरतमः, दुर्निर्भेदनिरन्तरान्तरतमो नि-निश्चितं नाशयतीति दुर्निर्भेदनिरन्तरान्तरतमोनिर्नाशि। पर्युल्लसन्ती चासौ लीला च पर्युल्लसल्लीलात्या, पर्युल्लसल्लीला भङ्गा येषां ते पर्युल्लसल्लीलाभङ्गाः, महान्तश्च ते अरयश्च महारयः, पर्युल्लसल्लीलाभङ्गाश्च ते महारयश्च पर्युल्लसल्लीलाभङ्गमहारयः, पर्युल्लसल्लीलाभङ्गमहारीन् भिनत्तीति पर्युल्लसल्लीलाभङ्गमहारिभित्। नमन्तश्च ते अनन्ताश्च नमदनन्ताः, नास्ति पापं येषां ते अपापाः, नमदनन्ताश्च ते अपापाश्च नमदनन्तापापाः, हृद्याश्च ते अमराश्च हृद्यामराः, ( नमदन्तापापाश्च हृद्यामराश्च नमद० ) नमदनन्तापापहृद्यामरा यस्मिन् तत् नमदनन्तापापहृद्यामरं-प्रणमदनेकनिष्पापमनोज्ञदेववृन्दवन्द्यम्। तादृशं प्रवचनं बोधिलाभमातनोतु॥ इति तृतीयवृत्तार्थः॥ ३॥

दे० वृ०—जैनेन्द्रमिति। जिनेन्द्रस्य इदं जैनेन्द्रं मतं-प्रवचनं सम्यग्दृशां सततं-निरन्तरं यथा स्यात् तथा सद्गुणालीलाभं आतनोतु-विस्तारयतु इत्यन्वयः। 'तनु विस्तारे' धातुः। 'आतनोतु' इति क्रियापदम्। किं कर्तृ?। मतम्। कं कर्मतापन्नम्?। 'सद्गुणालीलाभं' सती-शोभना या गुणाली-गुणपरम्परा तस्या लाभो-लब्धिस्तम्। केषाम्?। सम्यग्दृशां-सम्यग्दृष्टीनाम्। तदुक्तम्—

"या देवे देवताबुद्धि-र्गुरौ च गुरुतामतिः।
धर्मे च धर्मधीः शुद्धा, सम्यक्त्वमिदमुच्यते॥"

इति योगशास्त्रे ( प्र० २, श्लो० २ )। तथा—

"[1]जीवाइनवपयत्थे जो जाणइ तस्स होइ सम्मत्तं।
भावेण सद्दहंतो अयाणमाणोवि सम्मत्तं॥"

इति नवतत्त्वग्रन्थे। किंविशिष्टं मतम्?। 'गमहारि' गमाः-सदृशपाठाः तैः हरतीत्येवंशीलं गमहारि। पुनः किंविशिष्टम्?। 'भिन्नमदनं' भिन्नः-पाटितो मदनः-कन्दर्पो येन तत्, तदुच्छेदपरत्वेनास्य सिद्धत्वात्। पुनः किंविशिष्टम्?। 'तापापहृत्' तापः-संसारखेदः तं अपहरतीति तापापहृत्। पुनः किंविशिष्टम्?। 'यामरं' यामा-महाव्रतानि तान् राति-दत्ते इति यामरम्। पुनः किंविशिष्टम्?। 'पर्युल्लसल्लीलाभङ्गमहारिभित्' परि-सामस्त्येन उल्लसन्त्यः-उल्लासं प्राप्नुवन्त्यः लीला-विलासा येषां ते पर्युल्लसल्लीलाः, "लीला विलासो विच्छित्तिः" इत्यभिधानचिन्तामणिः ( का० ३, श्लो० १७१ ), ते च ते अभङ्गमहारयः-अजेयशत्रवः तान् भिनत्ति विदारयतीति तत्। अभङ्गाश्च ते महारयश्चेति पूर्वं 'कर्मधारयः'। पुनः किंविशिष्टम्?। 'दुर्निर्भेदनिरन्तरान्तरतमोनिर्नाशि'। पुनः किंविशिष्टम्?। 'नमदनन्तापापहृद्यामरम्' नमन्तः-प्रणामं कुर्वन्तः अपापाः-पापरहिताः अनन्ता-असंख्याता हृद्या-मनोहरा अमरा-देवा यस्य तत्॥ इति तृतीयवृत्तार्थः॥ ३॥

---

१ जीवादिनवपदार्थान् यो जानाति तस्य भवति सम्यक्त्वम्।
भावेन श्रद्दधानस्य अजानानस्यापि सम्यक्त्वम्॥




निर्वाणकलिकायाम्—

"ब्रह्मशान्ति पिङ्गवर्णं दंष्ट्राकरालं जटामुकुटमण्डितं पादुकारूढं भद्रासनस्थितं उपवीतालङ्कृतस्कन्धं चतुर्भुजं अक्षसूत्रदण्डकान्वित-दक्षिणपाणिं कुण्डिकाच्छत्रालङ्कृतवामपाणिं चेति ।"

 

श्रीब्रह्मशान्तियक्षस्य स्तुतिः—

दण्डच्छत्रकमण्डलूनि कलयन् स ब्रह्मशान्तिः क्रियात्
सन्त्यज्यानि शमी क्षणेन शमिनो मुक्ताक्षमाली हितम् ।
तप्ताष्टापदपिण्डपिङ्गलरुचिर्योऽधारयन्मूढतां
संत्यज्यानिशमीक्षणेन शमिनो मुक्ताक्षमालीहितम् ॥ ४ ॥
—शार्दूल०

ज० वि०—दण्डच्छत्रेति । स ब्रह्मशान्तिः–ब्रह्मशान्तिनामा यक्षः शं–सुखं क्रियात्–विधेयात् इति क्रियाकारकसण्टङ्कः । अत्र ' क्रियात् ' इति क्रियापदम् । कः कर्ता ? ' ब्रह्मशान्तिः ' । किं कर्मतापन्नम् ? ' शम् ' । कथम् ? ' क्षणेन ' सपदि । ब्रह्मशान्तिः किं कुर्वन् ? ' कलयन् ' । कानि कर्मतापन्नानि ? ' दण्डच्छत्रकमण्डलूनि ' दण्डो–यष्टिः छत्रं–आतपत्रं कमण्डलुः–कुण्डिका तानि । ( दण्ड० ) कथंभूतानि ? ' सन्ति ' शोभनानि । पुनः कथंभूतानि ? ' अज्यानि ' अहीनानि । ब्रह्मशान्तिः कथंभूतः ? ' इनः ' प्रभुः । पुनः कथंभूतः ? ' मुक्ताक्षमाली ' मुक्ताक्षमालावान् । पुनः कथं० ? ' तप्ताष्टापदपिण्डपिङ्गलरुचिः ' तप्तः–उत्तप्तः यः अष्टापदपिण्डः–कनकगोलः तद्वत् पिङ्गलरुचिः—कपिलच्छविः । पुनः किंविशिष्टः ? ' शमी ' शमवान् । स इति तच्छब्दसाहचर्यार्थं यच्छब्दघटनामाह–यो ब्रह्मशान्तिः शमिनः–मुनेः कस्यापि हितं–परिणामसुखं ' मुक्ताक्षमालीहितं ' मुक्ता अक्षमा यैस्ते तथा ( अर्थात् ) साधवस्तेषामाली–श्रेणी तस्या ईहितं–चेष्टितं हितं–परिणामसुखम् अधारयद्– धृतवान् । अत्रापि ' अधारयत् ' इति क्रियापदम् । कः कर्ता ? ' यः ' । किं कर्मतापन्नम् ? ' हितम् ' । हितं कथंभूतम् ? 'मुक्ताक्षमालीहितम्' । केन कृत्वा ?' ईक्षणेन ' विलोकनेन । कथम् ? ' अनिशम् ' अनवरतम् । किं कृत्वा ? ' संत्यज्य ' त्यक्त्वा । कां कर्मतापन्नाम् ? ' मूढतां ' अज्ञताम् ॥

अथ समासः—दण्डश्च छत्रं च कमण्डलुश्च दण्डच्छत्रकमण्डलूनि ' इतरेतरद्वन्द्वः ' । तानि दण्ड० । मुक्तानामक्षमाला मुक्ताक्षमाला ' तत्पुरुषः ' । मुक्ताक्षमालाऽस्यास्तीति मुक्ता० । अष्टापदस्य पिण्डोऽष्टापदपिण्डः ' तत्पुरुषः ' । तप्तश्चासावष्टापदपिण्डश्च तप्ताष्टा० ' कर्मधारयः ' । तप्ताष्टापदपिण्डवत् पिङ्गला तप्ताष्टा० ' तत्पुरुषः ' । तप्ताष्टापदपिण्डपिङ्गला रुचिर्यस्य स तप्ताष्टा० ' बहुव्रीहिः ' । न क्षमा अक्षमा ' तत्पुरुषः ' । मुक्ता अक्षमा यैस्ते मुक्ताक्षमाः ' बहुव्रीहिः ' । मुक्ताक्षमाणामाली मुक्ताक्षमाली ' तत्पुरुषः ' । मुक्ताक्षमाल्या ईहितं मुक्ताक्ष० ' तत्पुरुषः ' । तत् मुक्ता० ॥ इति काव्यार्थः ॥ ४ ॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीशान्तिनाथस्य स्तुतेर्व्याख्या ॥ १६ ॥

सि० वृ०—दण्डच्छत्रेति । स ब्रह्मशान्तिः—ब्रह्मशान्तिनामा यक्षः शं—सुखं क्रियात्—विधेयात् इत्यर्थः । 'डुकृञ् करणे' धातोः आशिषि कर्तरि परस्मैपदे प्रथमपुरुषैकवचनम् । क्रियानिष्पत्तिप्रकारस्तु पूर्वमेवोक्तः । अत्र 'क्रियात्' इति क्रियापदम् । कः कर्ता ? । ब्रह्मशान्तिः । किं कर्मतापन्नम् ? । शम् । कथम् ? । क्षणेन—सपदि । ब्रह्मशान्तिः किं कुर्वन् ? । कलयतीति 'कलयन्' धारयन् । कानि ? । 'दण्डच्छत्रकमण्डलूनि' दण्डो—दण्डः छत्रं—आतपत्रं कमण्डलुः—कुण्डिका तानि । दण्डश्च छत्रं च कमण्डलुश्च दण्डच्छत्रकमण्डलूनि 'इतरेतरद्वन्द्वः' । कथंभूतानि ? । सन्ति—शोभनानि । पुनः कथंभूतानि ? । अज्यानि—अहीनानि । ब्रह्मशान्तिः कथंभूतः ? । 'शमी' शमः—उपशमः सोऽस्यास्तीति शमी, प्रशमवानित्यर्थः । पुनः कथंभूतः ? । इनः—प्रभुः, कतिपयदेवदेवाङ्गनानां प्रभुत्वात् । "इनः सूर्ये प्रभौ राजा" इत्यमरः (श्लो०२९९७) । पुनः कथंभूतः ? । 'मुक्ताक्षमाली' मुक्तानां—मुक्ताफलानां अक्षमाला—जपमालिका सा अस्यास्तीति मुक्ताक्षमाली । पुनः कथंभूतः ? । 'तप्ताष्टापदपिण्डपिङ्गलरुचिः' तप्तं—द्रुतं यद् अष्टापदं—सुवर्णं तस्य पिण्डो—गोलकः तद्वत् पिङ्गला—पीतरक्ता रुचिः—कान्तिः यस्य स तथा । "पीतरक्तस्तु पिञ्जरः । कपिलः पिङ्गलः श्यावः" ( अभि० का० ६, श्लो० ९२ ), "पिङ्गलः स्वर्णवर्णवत्" इति तु शब्दार्णवः । तथाच सितपीतहरिद्रक्तः पिङ्गल इत्यर्थः । स इति स कः ? । यो ब्रह्मशान्तिः शमिनः—कस्यापि मुनेर्हितं—परिणतिसुखं अहर्निशं—निरन्तरं ईक्षणेन—विलोकनेन कृत्वा अधारयत्—धारयामासेत्यर्थः । 'धृञ् धारणे' धातोरनद्यतने अतीते कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं दिप् । 'दिबादावट्' (सा० सू० ७०७), 'चुरादेः' (सा० सू० १०३१) इति ञिः, 'गुणः' (सा० सू० ६९२) इति गुणः, 'ए अय्' (सा० सू० ४१), 'स्वरहीनम्' (सा० सू० ३१) । (तथाच) 'अधारयत्' इति सिद्धम् । अत्र 'अधारयत्' इति क्रियापदम् । कः कर्ता ? । यः । किं कर्मतापन्नम् ? । हितम् । कस्य ? । 'शमिनः' शमोऽस्यास्तीति शमी तस्य शमिनः । । केन कृत्वा ? । ईक्षणेन । कथम् ? । अनिशम् । कीदृशं हितम् ? । 'मुक्ताक्षमालीहितं' मुक्ता अक्षमा—क्षमारहिता (?) यैस्ते तथा अर्थात् साधवस्तेषां आली-पङ्क्तिः तस्या ईहितं—चेष्टितम् । किं कृत्वा ? । संत्यज्य—त्यक्त्वा । काम् ? । मूढस्य भावो मूढता तां मूढतां, अज्ञतामित्यर्थः ॥ ४ ॥ शार्दूलविक्रीडितं छन्दः । तल्लक्षणं तु प्रथमस्तुतौ पूर्वमेवोक्तम् ॥

॥ इति महामहोपाध्यायश्रीभानुचन्द्रगणि० श्रीशान्तिनाथस्य स्तुतिवृत्तिः ॥ १६ ॥

सौ० वृ०—दण्डच्छत्रेति । स ब्रह्मशान्तिर्नाम यक्षः शं-सुखं क्षणेन-वेगेन क्रियादित्यन्वयः । 'क्रियात्' इति क्रियापदम् । कः कर्ता ? 'ब्रह्मशान्तिः' । 'क्रियात्' कुर्यात् । किं कर्मतापन्नम् ? । 'शं' सुखम् । "शं सुखे बलवति( त ? ) सुष्ठु" इति हैमः ( का० ६, श्लो० १७१ ) । ब्रह्मशान्तिः किं कुर्वन् ? । 'कलयन्' । कानि कर्मतापन्नानि ? । दण्डो-यष्टिः छत्रं-आतपवारणं कमण्डलुः-कुण्डिका तानि 'दण्डच्छत्रकमण्डलूनि' । कथंभूतानि दण्डच्छत्रकमण्डलूनि ? । 'सन्ति' शोभनानि, विद्यमानानि वा । अत एव ज्या-हानिः सा न विद्यते येषु तानि 'अज्यानि', शाश्वतानीत्यर्थः । किंविशिष्टो ब्रह्मशान्तिः ? । 'शमी' उपशमवान् । पुनः किंविशिष्टो ब्रह्मशान्तिः ? । मुक्तानां-मौक्तिकानां अक्षमाला-स्नानजाप्यमाला अस्यास्तीति 'मुक्ताक्षमाली' । पुनः कथंभूतो ब्रह्मशान्तिः ? । तप्तं-तापितं यद् अष्टापदं-सुवर्णं तस्य पिण्डो-गोलः तद्वत् पिङ्गला-पीता रुचिः-कान्तिर्यस्य स 'तप्ताष्टापदपिण्डपिङ्गलरुचिः' । पुनः किंविशिष्टो ब्रह्मशान्तिः ? । 'सः' प्रसिद्धः । तच्छब्दो यच्छब्दमपेक्षते । सः कः ? । यो ब्रह्मशान्तिः शमिनः-शमवतः साधोः सज्जनस्य वा अनिशं-

निरन्तरं ईक्षणेन-विलोकनेन कृत्वा हितं अधारयत् इत्यन्वयः । 'अधारयत्' इति क्रियापदम् । कः कर्ता ? । 'यः' ब्रह्मशान्तिः । 'अधारयत्' अदधत् । किं कर्मतापन्नम् ? । 'हितं' शुभम् । केन ? । 'ईक्षणेन' । कस्य । 'शमिनः' । कथम् ? । 'अनिशं' निरन्तरम् । किं कृत्वा ? । 'सन्त्यज्य' त्यक्त्वा । कां कर्मतापन्नाम् ? । 'मूढतां' अज्ञानताम् । किंविशिष्टं हितम् ? । मुक्ता-त्यक्ता अक्षमा-कोपो यैस्ते मुक्ताक्षमाः-साधवस्तेषां आली-श्रेणिस्तस्या ईहितं-वाञ्छितं सिद्धिपदं यस्मिन् तत् 'मुक्ताक्षमालीहितम्' । इति पदार्थः ॥

अथ समासः—दण्डश्च छत्रं च कमण्डलुश्च दण्डच्छत्रकमण्डलूनि, तानि दण्डच्छत्रकमण्डलूनि । ब्रह्मणा-ज्ञानेन शान्तिः ब्रह्मशान्तिः । ज्या-हानिः, नास्ति ज्या येषु तानि अज्यानि । [ सन्ति च तानि अज्यानि च सन्त्यज्यानि] । शमः अस्यास्तीति (शमी) । पुनः ब्रह्मशान्तिः इनः-स्वामी । अक्षाणां माला अक्षमाला, मुक्तानां अक्षमालाऽस्यास्तीति मुक्ताक्षमाली । तप्तं च तद् अष्टापदं च तप्ताष्टापदं, तप्ताष्टापदस्य पिण्डः तप्ताष्टापदपिण्डः, तप्ताष्टापदपिण्डवत् पिङ्गला रुचिर्यस्य स तप्ताष्टापदपिण्डपिङ्गलरुचिः । मूढस्य भावो मूढता, तां मूढताम् । शमोऽस्यास्तीति शमी, तस्य शमिनः । न क्षमा अक्षमा, मुक्ता अक्षमा यैस्ते मुक्ताक्षमाः, मुक्ताक्षमानां आली मुक्ताक्षमाली, मुक्ताक्षमाल्या ईहितं यस्मिन् तत् मुक्ताक्षमालीहितम् ॥ इति चतुर्थवृत्तार्थः ॥ ४ ॥

श्रीमच्छान्तिजिनेशस्य, स्तुतेरर्थो लिवीकृतः ।
सौभाग्यसागराख्येण, सूरिणा ज्ञानधारिणा ॥ १ ॥

॥ इति षोडशमजिनशान्तिनाथस्य स्तुतेरर्थो लिवीकृतः ॥ ४।१६।६४॥

दे० व्या०—दण्डच्छत्रेति । स ब्रह्मशान्तिर्यक्षः क्षणेन-वेगेन यथा भवति तथा शं-सुखं क्रियात्-कुर्यात् इत्यन्वयः । 'डुकृञ् करणे' धातुः । 'क्रियात्' इति क्रियापदम् । कः कर्ता ? । स ब्रह्मशान्तिः । किं कर्मतापन्नम् ? । शम् । कथम् ? । क्षणेन । अव्ययमेतत् । "सहसैकपदे सद्योऽकस्मात् सपदि तत्क्षणे" इत्यभिधानचिन्तामणिः (का० ६, श्लो० १६८) । किं कुर्वन् यक्षः ? । कलयन्-उद्वहन्, धारयन्नितियावत् । कानि ? । 'दण्डच्छत्रकमण्डलूनि' दण्डः-प्रहरणविशेषः छत्रं-आतपत्रं कमण्डलुः-कुण्डिका, एतेषां 'द्वन्द्वः' । तानि किंविशिष्टानि ? । सन्ति-शोभनानि । पुनः किंविशिष्टानि ? । 'अज्यानि' नास्ति ज्या[निः]-जरा येषां तानि, देवताधिष्ठितत्वेन तत्सम्भवात् । यत्तदोर्नित्याभिसम्बन्धाद् यो ब्रह्मशान्तिः कस्यापि शमिनः-तपस्विनः ईक्षणेन-विलोकनेन हितं-पथ्यम् अधारयत्-धारयामासेत्यन्वयः । 'डुधाञ् धारणपोषणयोः' इति धातुः । किं कृत्वा ? । संत्यज्य-परिहृत्य । काम् ? । 'अज्ञतां' अज्ञस्य भावः अज्ञता तां, मूर्खस्य भावतामित्यर्थः । 'भावे तत्वयणः' (सा० सू०५९१) इति तप्रत्ययः । किंविशिष्टं हितम् ? । 'मुक्ताक्षमालीहितम्' मुक्ता-त्यक्ता अक्षमा यैस्ते मुक्ताक्षमा-मुमुक्षवः तेषां आली-परम्परा तस्या ईहितं-वाञ्छितं, अक्षमा-क्रोधः । यत् तु किंविशिष्टं शम् ? । ईहितं-चेष्टितम् । किंविशिष्टो यक्षः ? । 'मुक्ताक्षमाली' मुक्ता अक्षमायाः आली-परम्परा येन स तथेति पृथक् पदद्वयमिति कश्चित् तन्न, अर्थानवबोधात् । किंविशिष्टो यक्षः ? । 'शमी' शमोऽस्यास्तीति शमी-उपशमवान् । पुनः किंविशिष्टः ? । इनः-स्वामी, सर्वेषां रक्षाकरणत्वात् । पुनः किंविशिष्टः ? । 'मुक्ताक्षमाली' मुक्तायाः-मुक्ताफलस्य अक्षमाला-जपमाला विद्यते यस्यासौ मुक्ताक्षमाली । "शुक्तिजं मौक्तिकं मुक्ता" इत्यभिधानचिन्तामणिः (का०४, श्लो० १३४) । पुनः किंविशिष्टः ? । 'तप्ताष्टापदपिण्डपिङ्गलरुचिः' तप्तं-द्रुतं यद् अष्टापदं-सुवर्णं तस्य पिण्डः-समुदायः तद्वत् पिङ्गला-कपिला पीतरक्ता इतियावत् रुचिः-कान्तिर्यस्य स तथा । "कपिलः पिङ्गलः श्यावः" इत्यभिधानचिन्तामणिः (का० ६, श्लो०३१) । इति तुरीयवृत्तार्थः ॥ ४ ॥ शार्दूलविक्रीडितच्छन्दः । अस्य भेदकत्वा( त्वमा ? )द्यस्तुतौ पूर्वमेवोद्दिष्टमिति ॥

# १७ श्रीकुन्थुजिनस्तुतयः

अथ श्रीकुन्थुनाथाय वन्दनम्—

भवतु मम नमः श्रीकुन्थुनाथाय तस्मा-
यमितशमितमोहायामितापाय हृद्यः ।
सकलभरतभर्ताऽभूज्जिनोऽप्यक्षपाशा-
यमितशमितमोहायामितापायहृद् यः ॥ १ ॥

—मालिनी ( ८, ७ )

ज० वि०—भवत्विति । श्रीकुन्थुनाथाय—श्रीकुन्थुनाथनाम्ने जिनाय, श्रीशब्दः प्राग्वत्, मम—मे नमस्कारो भवतु—अस्तु इति क्रियाकारकप्रयोगः । अत्र 'भवतु' इति क्रियापदम् । किं कर्तृ ? 'नमः' । कस्मै ? 'श्रीकुन्थुनाथाय' । कस्य ? 'मम' । कथंभूताय श्रीकुन्थुनाथाय ? 'अमितशमितमोहायामितापाय' अमितः—अपरिमितः शमितः—शमं नीतः मोहः—मोहनीयं (कर्म) स एव आयामितापो—दीर्घदवथुर्येन स तथा तस्मै । पुनः कथं० ? 'अक्षपाशायमितशमितमोहाय' अक्षपाशैः—इन्द्रियरज्जुभिः अयमिता—अबद्धा ये शमिनो—मुनयस्तेषां तमोहाय—अज्ञानघातिने । तस्मै इति तच्छब्दसाहचर्याद् यच्छब्दघटनामाह—यः श्रीकुन्थुनाथः सकलभरतभर्ता—सकलभारतस्वामी चक्रवर्तीत्यर्थः, जिनोऽपि—तीर्थंकरोऽपि अभूत् । अपिशब्दः समुच्चयार्थः । अत्रापि 'अभूत्' इति क्रियापदम् । कः कर्ता ? 'यः' । कथंभूतोऽभूत् ? 'सकलभरतभर्ता' । पुनः कथं० ? 'जिनः' । कथम् ? 'अपि' । यः कथंभूतः ? 'हृद्यः' मनोहरः । पुनः कथं० ? 'अमितापायहृत्' अमितान्—अपरिमितान् अपायान् हरतीत्यमितापायहृत् ॥

अथ समासः—कुन्थुश्चासौ नाथश्च कुन्थुनाथः 'कर्मधारयः' । श्रियोपलक्षितः कुन्थुनाथः श्रीकुन्थु० 'तत्पुरुषः' । तस्मै श्रीकुन्थु० । अमितश्चासौ शमितश्च अमित० 'कर्मधारयः' । आयामी चासौ तापश्च आया० 'कर्मधारयः' । मोहश्चासावायामितापश्च मोहाया० 'कर्मधारयः' । अमितशमितो मोहायामितापो येन सोऽमित० 'बहुव्रीहिः' । तस्मै अमित० । सकलं च तद् भरतं च सक० 'कर्मधारयः' । सकलभरतस्य भर्ता सक० 'तत्पुरुषः' । अक्षाण्येव पाशाः अक्षपाशाः 'कर्मधारयः' । न यमिता अयमिताः 'तत्पुरुषः' । अक्षपाशैरयमिता अक्षपा० 'तत्पुरुषः' । अक्षपाशायमिताश्च ते शमिनश्च अक्षपा० 'कर्मधारयः' । तमो हन्तीति तमोहः 'तत्पुरुषः' । अक्षपाशायमितशमिनां तमोहः अक्षपा० 'तत्पुरुषः' । तस्मै अक्षपा० । अमितश्चासावपायश्च अमितापायः 'कर्मधारयः' । अमितापायं हरतीत्यमितापायहृत् 'तत्पुरुषः' ॥ इति काव्यार्थः ॥ १ ॥

सि० वृ०—भवत्विति । कुन्थुनाथः कौ–पृथिव्यां स्थितिमान् इति कुन्थुः, "क्षितिः क्षोणिः क्षमाऽनन्ता, ज्या कुर्वसुमतिर्मही" इति हैमः ( अभि० का० ४, श्लो० २ ), पृषोदरादित्वात् सकारलोपः, गर्भस्थेऽस्मिन् माता विचित्रं कुन्थुरूपं दृष्टवतीति वा कुन्थुः,स चासौ श्रियोपलक्षितो नाथः श्रीकुन्थुनाथः तस्मै मम नमस्कारो भवतु इति संबन्धः । 'भू सत्तायाम्' धातुः अग्रे 'आशीःप्रेरणयोः' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप् । 'अप् कर्तरि' ( सा० स० ९९१ ) इत्यप्, 'गुणः' ( सा० सू० ९९२ ), 'ओ अव्' ( सा० सू० ४२ ), 'स्वरहीनं०' ( सा० सू० ३६ ) । तथाच 'भवतु' इति सिद्धम् । अत्र 'भवतु' इति क्रियापदम् । किं कर्तृ ? । नमः । कस्मै ? । श्रीकुन्थुनाथाय । कथंभूताय श्रीकुन्थुनाथाय ? । 'अमितशमितमोहायामितापाय' अमितः—अप्रमाणः शमितः—शमं नीतो मोहो—मोहनीयं स एव आयामितापो–( दीर्घ )दवथुर्येन स तथा तस्मै । अमितश्चासौ शमितश्च अमितशमितः, आयामी चासौ तापश्च आयामितापः इति 'कर्मधारयः' । पुनः कथंभूताय ? । 'अक्षपाशायमितशमितमोहाय' अक्षाण्येव—इन्द्रियाण्येव पाशा—रज्जवः तैः अयमिता—अबद्धा ये शमिनो—मुनयः तेषां तमोहाय—अज्ञानघातिने । पुनः कथंभूताय ? । तस्मै । तस्मै कस्मै ? । यः कुन्थुनाथः सकलभरतभर्ता—समस्तभारतस्वामी, चक्रवर्तीत्यर्थः । बिभर्ति षट्खण्डानीति 'भरतः' । 'डुभृञ् धारणादौ' भृमृदृशियजिपर्विपच्यमिनमितमिनमिहर्यिभ्योऽतच्' ( उणा० सू० ३९० ) तस्य भर्ता जिनोऽपि—तीर्थंकरोऽपि अभूद्—अभवदित्यर्थः । अपिः समुच्चयार्थे । यद्वा अपिशब्दोऽत्र यः सकलभरतभर्ता स कथं जिनः स्यात् इति विरोधसूचकः । 'भू सत्तायाम्' धातोः भूते सौ कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं दिप् । इकार उच्चारणार्थः 'भूते सिः' ( सा० सू० ७२४ ), 'दिबादावट्' ( सा० सू० ७०७ ), अभू सद् इति स्थिते 'दादेः पे' ( सा० सू० ७२९ ) इति सेर्लोपः । अत्र 'अभूत्' इति क्रियापदम् । कः कर्ता ? । यः सकलभरतभर्ता सकलं—समग्रं षट्खण्डलक्षणं यद् भरतं—भरतक्षेत्रं तस्य भर्ता—स्वामी धारको वा । "भर्ता स्वामिनि धारके" इति विश्वः । पुनः कथंभूतः ? । यो जिनो हृद्यः—मनोहरः । पुनः कथंभूतः ? । 'अमितापायहृत्' अमितान—अपरिमितान् अपायान्—कष्टान् हरतीत्यमितापायहृत् ॥ १ ॥

**सौ० वृ०—यः शान्तिकृद् भवति स कौ–पृथिव्यां स्थावरजङ्गमप्राणिनां रक्षको भवति । अनेन सम्बन्धेनायातस्य श्रीकुन्थुनामसप्तदशमाजिनस्य स्तुतिव्याख्यानं व्यक्तीकरोमि–भवत्विति ।**

**तस्मै श्रीकुन्थुनाथाय मम नमः भवतु इत्यन्वयः । 'भवतु' इति क्रियापदम् । किं कर्तृ ? । 'नमः' प्रणामः । 'भवतु' अस्तु । कस्य ? । 'मम' मत्सम्बन्धी । कस्मै ? । श्रीशब्दः पूज्यार्थे 'श्रीकुन्थुनाथाय' कुन्थुनाथस्वामिने । किंविशिष्टाय श्रीकुन्थुनाथाय ? । अमितः–अपरिमितः शमितः–शमं नीतः तादृशो यो मोहो–मोहनीयकं कर्म तस्य आयामी–दीर्घविस्तारी तापो–दवथुर्येन स ( तस्मै ) 'अमितशमितमोहायामितापाय' । पुनः किंविशिष्टाय श्रीकुन्थुनाथाय ? । 'तस्मै' प्रसिद्धाय । प्रक्रान्तप्रसिद्धार्थस्तच्छब्दो यच्छब्दमपेक्षते । तस्मै कस्मै ? । यः कुन्थुनाथः सकलं–संपूर्णं यद् भरतं–भरतक्षेत्रं षट्खण्डलक्षणं तस्य भर्ता–स्वामी चक्रवर्ती अपि जिनः–तीर्थंकरः अभूदित्यन्वयः । 'अभूत्' इति क्रियापदम् । कः कर्ता ? । यः श्रीकुन्थुनाथः अभूत्–जातः । किंविशिष्टो यः ? । 'जिनः' तीर्थंकरः । पुनः किंविशिष्टो यः । 'सकलभरतभर्ता' । अपिशब्दः समुच्चयार्थे । चक्रवर्ती भूत्वा जिनो जात इत्यर्थः । पुनः किंविशिष्टो यः । 'हृद्यः' मनोहरः । पुनः किंविशिष्टाय ? । अक्षाणि–इन्द्रियाणि तान्येव पाशा–**

रज्जवः तैरयमिता-असम्बद्धा ये शमिनः-साधवः तेषां तमः-अज्ञानं तत् हन्तीति ( स तस्मै ) 'अक्षपाशायमितशमितमोहाय' । इदमपि कुन्थुनाथायपदस्य विशेषणम् । पुनः किंविशिष्टो यः ? । [आयामिनः-विस्तारिणः ] ( अमितान्-अपरिमितान् ) ये अपाया-विघ्नास्तान् हरतीति 'आयामि( अमिता )-तापायहृत् ' । एतादृशाय कुन्थुनाथाय नमः । इति पदार्थः ॥

अथ समासः—कौ-पृथिव्यां स्वामित्वेन तिष्ठतीति कुन्थुः, कुन्थुश्चासौ नाथश्च कुन्थुनाथः, श्रिया [युक्तः]-चतुस्त्रिंशदतिशयलक्ष्म्या युक्तः कुन्थुनाथः श्रीकुन्थुनाथः, तस्मै श्रीकुन्थुनाथाय । न मितः अमितः, शमं-उपशमं इतः-प्राप्तः शमितः, अमितश्चासौ शमितश्च अमितशमितः, अमितशमितश्चासौ मोहश्च अमितशमितमोहः, आयामः अस्यास्तीति आयामी, आयामी चासौ तापश्च आयामितापः, अमितशमितमोहश्च (?) आयामितापो येन सः अमितशमितमोहायामितापस्तस्मै अमितशमितमोहायामितापाय । सकलं च तद् भरतं च सकलभरतं, सकलभरतस्य भर्ता सकलभरतभर्ता । रागादीन् शत्रून् जयतीति जिनः । अक्षाण्येव पाशाः अक्षपाशाः, न यमिता अयमिताः, अक्षपाशैरयमिता अक्षपाशायमिताः, अक्षपाशायमिताश्च शमिनश्च अक्षपाशायमितशमिनः, अक्षपाशायमितशमिनां तमांसि अक्षपाशायमितशमितमांसि, तानि हन्तीति अक्षपाशायमितशमितमोहः, तस्मै अक्षपाशायमितशमितमोहाय । न मित अमितः, अमितश्चासौ अपायश्च अमितापायः, अमितापायं हरतीति अमितापायहृत् ॥ मालिनी-च्छन्दसा स्तुतिरियम् ॥ इति प्रथमवृत्तार्थः ॥ १ ॥

दे० व्या०—भवत्विति । तस्मै (श्री)कुन्थुनाथाय मम नमः-नमस्कारो भवतु इत्यन्वयः । 'भू सत्तायाम्' धातुः । 'भवतु' इति क्रियापदम् । कः कर्ता ? । नमः । कस्मै ? । (श्री )कुन्थुनाथाय । कस्य ? मम । किंविशिष्टाय श्रीकुन्थुनाथाय ? । 'अमितशमितमोहायामितापाय' अमितः-अप्रमाणः शमितो-विनाशं नीतः मोहस्य आयामितापः-आनाहसन्तापो येन स तस्मै । "दैर्घ्यं आयाम आनाहः" इत्यभिधानचिन्तामणिः ( का० ६, श्लो० ६७ ) । यत्तदोर्नित्याभिसम्बन्धाद् यः कुन्थुनाथः सकलभरतभर्ताऽपि जिनः-तीर्थङ्करः अभूत्-आसीत् इति अन्वयः । 'भू सत्तायाम्' धातुः । 'अभूत्' इति क्रियापदम् । कः कर्ता ? । कुन्थुनाथो 'जिनः' रागादिजेतृत्वात् जिनः । पुनः किंविशिष्टः ? । 'सकलभरतभर्ता' सकलं-समग्रं यद् भरतक्षेत्रं तस्य भर्ता-प्रभुः । अपिशब्दो विरोधाभासालङ्काराय । पुनः किंविशिष्टः ? । हृद्यः-प्रियः । कस्मै ? 'अक्षपाशायमितशमितमोहाय' अक्षाणि-इन्द्रियाणि तेषां पाशैः-बन्धनैः अयमिता-अबद्धाः ते च ते शमितमोहाश्चेति विग्रहः तस्मै । "पाशस्तु बन्धनग्रन्थिः" इत्यभिधानचिन्तामणिः ( का० ३, श्लो० ५९५ ) । पुनः किंविशिष्टः ? । 'अमितापायहृत्' अमितान्-अप्रमाणान् अपायान्-कष्टान् हरतीति अमितापायहृत् ॥ इति प्रथमवृत्तार्थः ॥ १ ॥

---

**सकलतीर्थपतिभ्यः प्रणतिः—**

सकलजिनपतिभ्यः पावनेभ्यो नमः सन्-
नयनरवरदेभ्यः सारवादस्तुतेभ्यः ।
समधिगतनुतिभ्यो देववृन्दाद् गरीयो-
नयनरवरदेभ्यः सारवादस्तु तेभ्यः ॥ २ ॥

—मालिनी

ज० वि०—सकलेति । तेभ्यः सकलजिनपतिभ्यः–समस्ततीर्थकरेभ्यः नमः अस्तु इति क्रियाकारकान्वयः । अत्र 'अस्तु' इति क्रियापदम् । किं कर्तृ ? 'नमः' । केभ्यः ? 'सकलजिनपतिभ्यः' । कथंभूतेभ्यः ? 'तेभ्यः' प्रसिद्धेभ्यः । अयं तच्छब्दः प्रसिद्धार्थवाचकत्वाद् यच्छब्दं नापेक्षते । यदुक्तम्–"प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यदुपादानं नापेक्षते" इति । पुनः कथंभूतेभ्यः ? 'पावनेभ्यः' पवित्रताजनकेभ्यः । पुनः कथं० ? 'सन्नयनरवरदेभ्यः' नयने–लोचने रवः–शब्दः रदा–दन्ताः, सन्तः–शोभना नयनरवरदा येषां ते तथा तेभ्यः । पुनः कथं० ? 'सारवादस्तुतेभ्यः' सारः–अर्थप्रधानः वादः–उक्तिर्येषां तैः स्तुतेभ्यः–वन्दितेभ्यः, यदिवा सारेण वादेन कृत्वा स्तुतेभ्यः । पुनः कथं० ? 'समधिगतनुतिभ्यः' समधिगता–प्राप्ता नुतिः–प्रणामो यैस्ते तथा तेभ्यः । कस्मात् ? 'देववृन्दात्' सुरसमूहात् । कथंभूताद् देववृन्दात् ? 'सारवात्' आरवेण–शब्देन सह वर्तमानात्, स्तुतिपरादित्यर्थः । पुनः कथं० सकलजिनपतिभ्यः ? 'गरीयोनयनरवरदेभ्यः' गरीयोनयाः–गरिष्ठनीतयो ये नरा–मानवाः तेषां वरदेभ्यः–प्रार्थितार्थप्रदेभ्यः ॥

अथ समासः—जिनानां जिनेषु वा पतयो जिनप० 'तत्पुरुषः' । सकलाश्च ते जिनपतयश्च सकल० 'कर्मधारयः' । तेभ्यः सकल० । नयने च रवश्च रदाश्च नयन० 'इतरेतरद्वन्द्वः' । सन्तो नयनरवरदा येषां ते सन्नयन० 'बहुव्रीहिः' । तेभ्यः सन्नयन० । सारो वादो येषां ते सारवादाः 'बहुव्रीहिः' । सारवादैः स्तुताः सार० 'तत्पुरुषः' । तेभ्यः सार० । यदिवा सारश्चासौ वादश्च सारवादः 'कर्मधारयः' । सारवादेन स्तुताः सार० 'तत्पुरुषः' । तेभ्यः सार० । समधिगता नुतिर्यैस्ते सम० 'बहुव्रीहिः' । तेभ्यः सम० । देवानां वृन्दं देववृन्दं 'तत्पुरुषः' । तस्माद् देववृन्दात् । गरीयांसो नया येषां ते गरीयोनयाः 'बहुव्रीहिः' । गरीयोनयाश्च ते नराश्च गरीयो० 'कर्मधारयः' । वरं ददतीति वरदाः 'तत्पुरुषः' । गरीयोनयनराणां वरदाः गरीयो० 'तत्पुरुषः' । तेभ्यो गरीयो० । सह आरवेण वर्तते यत् तत् सारवम् 'तत्पुरुषः (?)' । तस्मात् सारवात् ॥ इति काव्यार्थः ॥ २ ॥

सि० वृ०—सकलेति । तेभ्यः सकलजिनपतिभ्यः–समस्ततीर्थकरेभ्यः नमोऽस्तु । 'अस्तु' इति क्रियापदमध्याह्रियते । किं कर्तृ ? । नमः । केभ्यः ? । 'सकलजिनपतिभ्यः' सकलाश्च ते जिनपतयश्च सकलजिनपतयस्तेभ्यः । कथंभूतेभ्यः ? । तेभ्यः–प्रसिद्धेभ्यः । तच्छब्दोऽत्र प्रसिद्धार्थवाचकः, तेन यच्छब्दस्यानापेक्षेति मन्तव्यम्, यदाह–"प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यदुपादानं नापेक्षते" इति । पुनः कथंभूतेभ्यः ? । पावनेभ्यः–पवित्रेभ्यः । पुनः कथंभूतेभ्यः ? । 'सन्नयनरवरदेभ्यः' नयने–लोचने रवः–शब्दः रदा–दन्ताः, नयने च रवश्च रदाश्च नयनरवरदं 'इतरेतरद्वन्द्वः, 'प्राण्यङ्गतूर्यसेनाङ्गानाम्' इति एकवद्भावः, सत्–शोभनं नयनरवरदं येषां ते तथा तेभ्यः । इन्दीवरश्रीतिरस्कारित्वेन नयनयोः स्निग्धगंभीर-

१ 'सत् नयनरवरदं' इति प्रतिभाति । २ 'प्राणितूर्याङ्गानाम्' इति सिद्धहैमे ( अ० ३, पा० १, सू० १३७ ) ।

घोषत्वेन योजनगामित्वेन च रवस्य हीरकादिन्यक्कारित्वेन च रदानां शोभनत्वं स्वयं ज्ञातव्यम् । पुनः कथंभूतेभ्यः ? । 'सारवादस्तुतेभ्यः' सारः–अर्थप्रधानो वादः–उक्तिर्येषां ते तैः स्तुतेभ्यः–स्तोत्रीकृतेभ्यः वन्दितेभ्यो वा । पुनः कथंभूतेभ्यः ? । 'समधिगतनुतिभ्यः' समधिगता–प्राप्ता नुतिः–प्रणामो यैस्ते तथा तेभ्यः । कस्मात् ? । देववृन्दात्–सुरसमूहात् । "स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकं" इत्यमरः ( श्लो० १०६८ ) । कथंभूताद् देववृन्दात् ? । 'सारवात्' आरवेण–शब्देन सह वर्तमानात्, स्तुतिपरादित्यर्थः । पुनः कथंभूतेभ्यः सकलजिनपतिभ्यः ? । 'गरीयोनयनरवरदेभ्यः' अतिशयेन गुरवो–गरीयांसो नया येषु ते गरिष्ठनीतयो ये नरा–मानवाः तेषां वरं ददति ते वरदास्तेभ्यः । "देवाद् वृते वरः श्रेष्ठे, त्रिषु क्लीबं मनाक् प्रिये" इत्यमरः ( श्लो० २६८१ ) । 'ईयस्विष्ठौ ( डितावििति वक्तव्यौ )' ( सा० सू० ६९४ ) इति ईयसुस् । 'गुर्वादेरिष्ठेमेयस्सु ( गरादिष्टचलोपश्च )' ( सा० सू० ६९६ ) इति गुरोर्गरादेशः ष्टचलोपश्च ॥ २ ॥

सौ० वृ०—सकलेति । तेभ्यः सकलजिनपतिभ्यः–समस्ततीर्थकृद्भ्यः नमः अस्तु । 'अस्तु' इति क्रियापदम् । किं कर्तृ ? । 'नमः' । 'अस्तु' भवतु । नमस् इत्यव्ययं प्रणामार्थे । केभ्यः ? । 'सकलजिनपतिभ्यः' । किंविशिष्टेभ्यः सकलजिनपतिभ्यः ? । 'पावनेभ्यः' पवित्रेभ्यः । पुनः किंविशिष्टेभ्यः सकलजिनपतिभ्यः ? । सन्तः–शोभमाना नयनानि–लोचनानि रवाः–शब्दा रदा–दन्ता येषां ते सन्नयनरवरदास्तेभ्यः 'सन्नयनरवरदेभ्यः' । पुनः किंविशिष्टेभ्यः सकलजिनपतिभ्यः ? । सारः–श्रेष्ठः वादो–वाक्चातुर्यलक्षणः तेन स्तुताः–स्ताविताः सारवादस्तुताः तेभ्यः 'सारवादस्तुतेभ्यः' । पुनः किंविशिष्टेभ्यः सकलजिनपतिभ्यः ? । सं–सम्यक् प्रकारेण अधिगता–प्राप्ता नुतिः–स्तुतिः पूजा वा यैस्ते समधिगतनुतयः तेभ्यः 'समधिगतनुतिभ्यः' । कस्मात् ? । 'देववृन्दात्' । किंविशिष्टेभ्यः सकलजिनपतिभ्यः ? । 'तेभ्यः' यमकान्त्यपदगतस्तच्छब्दः यच्छब्दं नापेक्षते, तेभ्यः–प्रसिद्धेभ्यः । पुनः किंविशिष्टेभ्यः सकलजिनपतिभ्यः ? । गरीयांसो–महान्तो ये नया–नैगमाद्या येषां ते तादृशा ये नरा–मनुष्याः तेषां वरदा–अभीष्टदायकाः गरीयोनयनरवरदाः, तेभ्यः 'गरीयोनयनरवरदेभ्यः' । तादृशेभ्यः सकलजिनपतिभ्यः नमोऽस्तु । इति पदार्थः ॥

अथ समासः—जिनानां पतयः जिनपतयः, सकलाश्च ते जिनपतयश्च सकलजिनपतयः, तेभ्यः सकलजिनपतिभ्यः । नयनानि च रवाश्च रदाश्च नयनरवरदाः, सन्तः–शोभमानाः प्रशस्ता या नयनरवरदा येषां ते सन्नयनरवरदाः, तेभ्यः सन्नयनरवरदेभ्यः । वदनं वादः, सार(रो) वादो येषां ते सारवादाः, सारवादैः स्तुताः सारवादस्तुताः, यद्वा सारश्चासौ वादश्च सारवादः–शास्त्रं, सारवादेन स्तुताः सारवादस्तुताः, तेभ्यः सारवादस्तुतेभ्यः । समधिगता नुतिर्यैस्ते समधिगतनुतयः, तेभ्यः समधिगतनुतिभ्यः । देवानां वृन्दं देववृन्दं, तस्माद् देववृन्दात् । अतिशयेन गुरुर्गरीयान्, गरीयांसो नया येषां ते गरीयोनयाः, गरीयोनयाश्च ते नराश्च गरीयोनयनराः, वरं ददतीति वरदाः, गरीयोनयनराणां वरदा गरीयोनयनरवरदाः, तेभ्यः गरीयोनयनरवरदेभ्यः । आरवैः सहितं सारवं, तस्मात् सारवात् ॥ इति द्वितीयवृत्तार्थः ॥२॥

दे० व्या०—सकलेति । सकलजिनपतिभ्यः नमः–नमस्कारः अस्तु–भवतु इति सबन्धः । 'अस् भुवि' धातुः । 'अस्तु' इति क्रियापदम् । कः कर्ता ? । ( नमः– ) नमस्कारः । केभ्यः ? । 'सकलजिनपतिभ्यः' सकलाः–समस्ता ये जिनाः–सामान्यकेवलिनः तेषां पतयः–स्वामिनः तेभ्यः, तीर्थप्रवर्तकत्वेन तेषां पतित्वमत्रावसेयम् । किंविशिष्टेभ्यः सकलजिनपतिभ्यः ? । पावनेभ्यः–पवित्रेभ्यः । "पवित्रं पावनं पूतं" इत्यभिधानचिन्तामणिः ( का० ६, श्लो० ७१ ) । पुनः किंविशिष्टेभ्यः ? । 'सन्नयनरवरदेभ्यः' नयनं–लोचनं रवो–देशनाध्वनिः रदा–दन्ताः एतेषां 'द्वन्द्वः', ततः सन्तः–शोभना नयनरवरदा येषां ते तथेति समासः । अत्रेन्दीवरश्रीतिरस्कारत्वेन

१ 'नयनरवरदं' इति प्रतिभाति । २ 'गुरवो गरीयांसः' इति प्रतिभाति ।

नयनयोः, स्निग्धगम्भीरघोषत्वेन योजनगामित्वेन च देशनाध्वनेः, हीरकादिन्यक्कारित्वेन च रदानां शोभनत्वमवसेयम्। पुनः किंविशिष्टेभ्यः ? । 'सारवादस्तुतेभ्यः' सारः-प्रधानो वादो-वाग्विलासो येषां ते सारवादाः -पण्डिताः तैः स्तुतेभ्यः-स्तोत्रीकृतेभ्यः । पुनः किंविशिष्टेभ्यः ? । 'समधिगतनुतिभ्यः' समधिगता-प्राप्ता नुतिः-स्तुतिः यैस्ते तथा तेभ्यः। "स्तवः स्तोत्रं स्तुतिर्नुतिः" इत्यभिधानचिन्तामणिः ( का० २, श्लो० १८३ )। कस्मात् ? । 'देववृन्दात्' देवानां वृन्दं-समूहः तस्मात् । अत्र सामान्यदेवशब्दग्रहणेन देवाश्चातुर्निकाया बोध्याः । किंविशिष्टाद् देववृन्दात् ? । सारवात्-सशब्दात् । समारब्धस्तुतित्वादिति भावः । पुनः किंविशिष्टेभ्यः ? । 'गरीयोनयनरवरदेभ्यः' गरीयांसः नया-नीतयो येषु ते च ते नरा-मनुष्यास्तेषां वरं-वाञ्छितं ददतीति वरदाः तेभ्यः ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥



## सिद्धान्तस्मरणम्—

स्मरत विगतमुद्रं जैनचन्द्रं चकासत्-
कविपदगमभङ्गं हेतुदन्तं कृतान्तम् ।
द्विरदमिव समुद्यद्दानमार्गं धुताघै-
कविपदगमभङ्गं हे तुदन्तं कृतान्तम् ॥ ३ ॥

—मालिनी

ज० वि०—स्मरतेति । हे लोकाः ! यूयं जैनचन्द्रं-जिनचन्द्रसम्बन्धिनं कृतान्तं-सिद्धान्तं स्मरत-ध्यायत इति क्रियाकारकसम्बन्धः । अत्र 'स्मरत' इति क्रियापदम् । के कर्तारः ? 'यूयम्' । कं कर्मतापन्नम् ? 'कृतान्तम्' । कथंभूतम् ? 'जैनचन्द्रम्' । कृतान्तं कमिव ? 'द्विरदमिव' हस्तिनमिव, हस्तितुल्यमित्यर्थः । पुनः कथं० कृतान्तम् ? 'विगतमुद्रम्' अपर्यन्तम् । पुनः कथं० ? 'चकासत्कविपदगमभङ्गम्' कविपदानि-कवियोग्यशब्दाः गमाः-सदृशपाठा भङ्गाः-एकद्वित्र्यादिपदसंयोगोत्थाः, चकासन्तः-शोभमानाः कविपदगमभङ्गा यस्मिन् स तथा तम् । पुनः कथंभूतम् ? 'हेतुदन्तम्' हेतवः प्रतिपक्षभेदकत्वाद् दन्तौ-विषाणौ यस्य स तथा तम् । पुनः कथंभूतम् ? 'समुद्यद्दानमार्गम्' समुद्यत्-समुल्लसद् दानमार्गो-ज्ञानादीनां वितरणक्रमो यत्र स तथा तम् । पुनः कथं० ? 'धुताघैकविपदगम्' अघं-पापं तदेवैका-अद्वितीया विपद्-आपत् सैव दुःखफलदायकत्वाद् अगो-वृक्षः, धुतो-निरस्तः अघैकविपदगो येन स तथा तम् । पुनः कथं० ? 'अभङ्गम्' अजेयम् । किं कुर्वन्तं जैनचन्द्रं कृतान्तम् ? 'तुदन्तम्' पीडयन्तम् । कं कर्मतापन्नम् ? 'कृतान्तं' मरणम् । अत्र द्विरदमिवेत्यनेन जिनसिद्धान्तगजयोः साम्यं प्रत्यपादि । यथाहि-गजोऽपि विगतमुद्रः-अपेतमर्यादः स्वच्छन्दो भवति तथा तस्यापि कविपदगमभङ्गाः कविना वर्णयितुं योग्याः पदचारक्रमाश्चकासति दन्ताश्च भवन्ति, दान-

मार्गो–मदप्रवाहश्च समुदेति तथा सोऽपि वृक्षं धुनोति अभङ्गश्च भवति तथा सोऽपि कृतान्तं–कृतविनाशं विपक्षादिकं तुदतीति ॥

अथ समासः—विगता मुद्रा यस्मात् स विगत० 'बहुव्रीहिः'। तं विग०। जिनानां जिनेषु वा चन्द्रो जिनचन्द्रः 'तत्पुरुषः'। जिनचन्द्रस्यायं जैन०। तं जैनचन्द्रम्। कवीनां योग्यानि पदानि कवि० 'तत्पुरुषः'। कविपदानि च गमाश्च भङ्गाश्च कविपद० 'इतरेतरद्वन्द्वः'। चकासन्तः कविपदगमभङ्गा यस्मिन् स चकासत्क० 'बहुव्रीहिः'। तं चकासत्क०। द्विरदपक्षे तु गमस्य भङ्गा गमभङ्गाः 'तत्पुरुषः'। पदानां गमभङ्गाः पदगम० 'तत्पुरुषः'। शेषं प्राग्वत्। हेतव एव दन्ता यस्य स हेतु० 'बहुव्रीहिः'। तं हेतु०। द्वौ रदौ यस्य स द्विरदः 'बहुव्रीहिः'। तं द्विरदम्। दानस्य मार्गो दानमार्गः 'तत्पुरुषः'। समुद्यद् दानमार्गो यस्मिन् स समुद्य० 'बहुव्रीहिः'। तं समुद्य०। एका चासौ विपत् च एकविपत् 'कर्मधारयः'। अघमेवैकविपद् अघै० 'कर्मधारयः'। अग इव अगः। अघैकविपच्चासावगश्च अघैकवि० 'कर्मधारयः'। धुतोऽघैकविपदगो येन स धुताघै०। तं धुता०। न विद्यते भङ्गो यस्यासौ अभङ्गः 'बहुव्रीहिः'। तं अभङ्गम्। कृतः अन्तो येन स कृतान्तः 'बहुव्रीहिः'। तं कृतान्तम् ॥ इति काव्यार्थः ॥ ३ ॥

सि० वृ०—स्मरतेति। हे लोकाः! यूयं जिनचन्द्रस्येमं जैनचन्द्रं कृतान्तं–सिद्धान्तं स्मरत–ध्यायतेत्यर्थः। 'स्मृ चिन्तायाम्' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि परस्मैपदे मध्यमपुरुषबहुवचनं त। 'अप्०' (सा०सू०६९१), 'गुणः' (सा०सू०६९२), 'स्वरहीनं' (सा० सू० ३६)। तथाच 'स्मरत' इति सिद्धम्। अत्र 'स्मरत' इति क्रियापदम्। के कर्तारः?। यूयम्। कं कर्मतापन्नम्?। कृतान्तम्। कमिव?। द्विरदमिव। द्वौ रदौ–दन्तौ यस्य स द्विरदस्तमिव, हस्तितुल्यमित्यर्थः। कथंभूतं कृतान्तम्? 'विगतमुद्रं' विगता मुद्रा–इयत्ता मानमितियावद् यस्मात् स तम्। पुनः कथंभूतम्?। 'चकासत्कविपदगमभङ्गम्' कविपदानि–उत्प्रेक्षा(द्य)लङ्कारव्यङ्ग्यसूचकानि गमाः–सदृशपाठाः भङ्गाः–विकल्पसमूहाः, कविपदानि च गमाश्च भङ्गाश्च कविपदगमभङ्गाः 'इतरेतरद्वन्द्वः', चकासन्तः–शोभमानाः कविपदगमभङ्गा यस्मिन् स तथा तम्। पुनः कथंभूतम्?। 'हेतुदन्तं' हेतव एव प्रतिपक्षभेदकत्वाद् दन्तौ–विषाणौ यस्य स तम्। "अङ्कुलिः कर्णिका दन्त–विषाणौ स्कन्ध आसनं" इति हैमः (का० ४, श्लो० २९०)। पुनः कथंभूतम्?। 'समुद्यद्दानमार्गं' समुद्यन्–समुल्लसन् दानमार्गो–ज्ञानादीनां वितरणक्रमो यत्र स तम्। पुनः कथंभूतम्?। 'धुताघैकविपदगं' अघं–पापं तदेवैका–अद्वितीया विपद्–आपत् सैव दुःखफलदायकत्वाद् अगो–वृक्षः, धुतो–निरस्तः अघैकविपदगो येन स तथा तम्। एका चासौ विपच्च एकविपत् इति 'कर्मधारयः'। पुनः कथंभूतम्?। 'अभङ्गं' न विद्यते भङ्गो यस्य स तम्, अजेयमित्यर्थः। किं कुर्वन्तं जैनचन्द्रं कृतान्तम्?। तुदन्तं–पीडयन्तम्। कम्?। कृतान्तं–मरणं, एतत्प्रतिपादितानुष्ठानकृतो भवग्रहणाभावेन

मरणाभावादिति भावः । अत्र द्विरदेन सह सिद्धान्तस्य श्लेषः । सोऽपि विगतमुद्रो—गतमर्यादः स्वच्छन्द इति प्रलम्बश्च भवति । तस्यापि कवेर्वर्णयितुं योग्याः पदप्रचारक्रमाश्चकासते दन्ताश्च भवन्ति । दानमार्गो—मद-प्रवाहश्च समुदेति । सोऽपि वृक्षं धुनोति अभङ्गश्च भवति । कृतान्तं—कृतविनाशं विपक्षादिकं तुदतीति ॥ ३ ॥

सौ० वृ०—स्मरतेति । हे लोकाः ! यूयं कृतान्तं-सिद्धान्तं स्मरत इत्यन्वयः । 'स्मरत' इति क्रियापदम् । के कर्तारः ? । 'यूयम्' । 'स्मरत' ध्यायत । कं कर्मतापन्नम् ? । 'कृतान्तं' सिद्धान्तम् । "राद्धसिद्धकृतेभ्योऽन्तः" इति हैमः (का० १, श्लो० १५६) । किंविशिष्टं कृतान्तम् ? । 'विगतमुद्रं' अपास्तपर्यन्तम् । पुनः किंविशिष्टं कृतान्तम् ? । 'जैनचन्द्रं' तीर्थकरसत्कम् । पुनः किंविशिष्टं कृतान्तम् ? । चकासन्तो-दीप्यमानाः कवीनां-पण्डितानां पदानि-पदरचना गमाः-सदृशपाठाः भङ्गा-एकद्वित्र्यादयः येषु स चकासत्कविपदगमभङ्गः तं 'चकासत्कविपदगमभङ्गम्' । पुनः किंविशिष्टं कृतान्तम् ? । हेतवः [ दृष्टान्ताः ] एव प्रतिपक्षदुर्गभेदनत्वाद् दन्ता इव दन्ता यस्मिन् स हेतुदन्तः तं हेतुदन्तम् । पुनः किंविशिष्टं कृतान्तम् ? । समुद्यत्-सम्यक्प्रकारेण उद्यद्-विलसद् दानं-ज्ञानदर्शनचारित्रादीनां वितरणं तस्य मार्गः-पन्थाः यस्मिन् स समुद्यद्दानमार्गः तं 'समुद्यद्दानमार्गम्' । पुनः किंविशिष्टं कृतान्तम् ? । धुतो-निराकृतः अघं-पापं तदेव एका-अद्वितीया विपद्-आपत् सैव अगो-वृक्षो येन स धुताघैकविपदगः तं 'धुताघैकविपदगम्' । पुनः किंविशिष्टं कृतान्तम् ? । 'अभङ्गं' अजेयम् । कृतान्तं किं कुर्वन्तम् ? । 'तुदन्तं' पीडयन्तम् । कं कर्मतापन्नम् ? । 'कृतान्तम्' यमं मरणं [ कृतान्तं-सिद्धान्तं वा ] । कमिव ? । 'द्विरदमिव' हस्तिनमिव । हस्तिकृतान्तयोः सादृश्यम् । द्विरदोऽपि विगतमुद्रो-मुक्तमर्यादो भवति, दीप्यमानकविवर्णनीयपदगमनभङ्गो भवति, दन्तैः कृत्वा दुर्गभेद्यो भवति, समुद्यद्दानमदमार्गो भवति, निराकृतदुष्टवृक्षोऽपि भवति, (अभङ्गश्च भवति) अरिवर्गं व्यथयन् भवति इति द्विरदेन सह कृतान्तस्य-सिद्धान्तस्य छायार्थः । इति पदार्थः ॥

अथ समासः—विगता मुद्रा यस्य स विगतमुद्रः, तं विगतमुद्रम् । जिनेषु चन्द्राः जिनचन्द्राः, जिनचन्द्राणामयं जैनचन्द्रः, तं जैनचन्द्रम् । पदानि च गमाश्च भङ्गाश्च पदगमभङ्गाः, चकासन्तः कविभिः कृत्वा पदगमभङ्गा यस्मिन् स यस्य वा चकासत्कविपदगमभङ्गः, तं चकासत्कविपदगमभङ्गम् । हेतव एव दन्ता यस्य स हेतुदन्तः, तं हेतुदन्तम् । द्वौ रदौ यस्य स द्विरदः, तं द्विरदम् । समुद्यद् दानमार्गो यस्य स समुद्यद्दानमार्गः, तं समुद्यद्दानमार्गम् । एका चासौ विपच्च एकविपत्, अघेनैव एकविपत् अघैकविपत् सैव अगः अघैकविपदगः, गच्छतीति गः, न गः अगः, धुतः अघैकविपदगो येन स धुताघैकविपदगः, तं धुताघैकविपदगम् । नास्ति भङ्गः-पराजयो यस्य सः अभङ्गः, तं अभङ्गम् । तुदतीति तुदन्, तं तुदन्तम् । हे इत्यामन्त्रणे भिन्नपदम् । इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या०—स्मरतेति । हे भव्यजनाः ! यूयं द्विरदमिव-हस्तिनमिव जैनचन्द्रं कृतान्तं स्मरत-स्मृतिविषयीकुरुत इत्यन्वयः । 'स्मृ चिन्तायाम्' धातुः । 'स्मरत' इति क्रियापदम् । के कर्तारः ? । यूयम् । कं कर्मतापन्नम् ? । कृतान्तं-सिद्धान्तम् । "राधसिद्धकृतेभ्योऽन्त, आप्तोक्तिः समयागमौ" इत्यभिधानचिन्तामणिः (का०१, श्लो० १५६) । कमिव ? । द्विरदमिव-हस्तिनमिव । किंविशिष्टं कृतान्तम् ? । 'जैनचन्द्रम्' जिनचन्द्रस्य इदं(मं) जैनचन्द्रम् । पुनः किंविशिष्टम् ? । 'विगतमुद्रम्' विगता मुद्रा-इयत्ता यस्य स तम्, अपरिमितमित्यर्थः । पुनः किंविशिष्टम् ? । 'चकासत्कविपदगमभङ्गम्' कविपदानि-उत्प्रेक्षाद्यलङ्कारव्यङ्ग्यसूचकानि पदानि [कविपदानि], गमाः-सदृशपाठाः, भङ्गाः-विकल्पसमूहाः, एतेषां पूर्वं 'द्वन्द्वः', ततः चकासन्तः-शोभमानाः कविपदगमभङ्गा यस्मिन् स तम् । पुनः किंविशिष्टम् ? । 'हेतुदन्तम्' हेतवः-साध्यगमकाः प्रतिपक्षदुर्गभेदकत्वात् त एव दन्ता-विषाणा यस्य स तम् । "अङ्कुलिः कर्णिका दन्त-विषाणौ स्कन्ध आसनम्" इत्यभि-

धानचिन्तामणिः (का० ४, श्लो० २९०)। पुनः किंविशिष्टम्?। 'समुद्यद्दानमार्गम्' समुद्यत्-समुल्लसन् दानस्य-वितरणस्य मार्गः-क्रमो यत्र स तम्, सम्यग्ज्ञानद्वारा मुक्तिप्रदायकत्वात्। पुनः किंविशिष्टम्?। 'धुताधिकविपदगम्'। पुनः किंविशिष्टम्?। अभङ्गं-अजेयम्। परैरिति शेषः। किं कुर्वन्तं कृतान्तम्?। तुदन्तं-पीडयन्तम्। कम्?। कृतान्तं-यमम्। एतत्प्रतिपादितानुष्ठानकृतो भवग्रहणाभावेन मरणाभावात्। "यमः कृतान्तः पितृदक्षिणाशा-प्रेतात्पतिर्दण्डधरोऽर्कसूनुः" इत्यभिधानचिन्तामणिः (का० २, श्लो० ९८)। अत्र द्विरदेन सह सिद्धान्तस्य श्लेषः। सोऽपि विगतमुद्रो-गतमर्यादः प्रलम्बो भवति, तस्यापि पदगमभङ्गः-पदप्रकारक्रमाश्चकासति दन्ताश्च भवन्ति दानमार्गो-मदप्रवाहः, सोऽप्यगं धुनोति अभङ्ग(श्च) कृतान्तं च-विपक्षादिकं च तुदति ॥ इति तृतीयवृत्तार्थः ॥ ३ ॥

---

**श्रीपुरुषदत्तायै प्रार्थना—**

प्रचलदचिररोचिश्चारुगात्रे! समुद्यत्-
सदसिफलकरामेऽभीमहासेऽरिभीते!।
सपदि पुरुषदत्ते! ते भवन्तु प्रसादाः
सदसि फलकरा मेऽभीमहासेरिभीते ॥ ४ ॥

—मालिनी

**ज० वि०—**प्रचलदचिरेति। हे पुरुषदत्ते!-पुरुषदत्ताभिधे! ते-तव सम्बन्धिनः प्रसादाः-अनुग्रहाः मे-मम सदसि-सभायां सपदि-तत्क्षणं फलकराः-सिद्धिकारिणः भवन्तु-सम्पद्यन्ताम् इति क्रियाकारकप्रयोगः। अत्र 'भवन्तु' इति क्रियापदम्। के कर्तारः? 'प्रसादाः'। कथंभूता भवन्तु? 'फलकराः'। कथम्? 'सपदि'। कस्य? 'मे'। कस्मिन् 'सदसि'। अवशिष्टानि पुरुषदत्ताया देव्याः सम्बोधनानि। तद्व्याख्यानं त्वेवम्-हे 'प्रचलदचिररोचिश्चारुगात्रे!' प्रचलन्ती-स्फुरन्ती या अचिररोचिः-तडित् तद्वत् चारु-मनोहरं गात्रं-देहो यस्याः सा तथा तत्सम्बो० हे प्रचल०। हे 'समुद्यत्सदसिफलकरामे'! समुद्यती-प्रोल्लसन्ती सती-शोभने असिफलके-खड्गखेटके ताभ्यां रामे!-रमणीये!। हे 'अभीमहासे!' अभीमः-सौम्यः हासो-हसनं यस्याः सा तथा तत्सम्बो० हे अभी०। हे 'अरिभीते!' अरिभ्यो-वैरिभ्यो या भीः-भयं तस्या ईते!-ईतिभूते!। हे 'अभीमहासेरिभीते!' अभीः-भीवर्जिता या महासेरिभी-महामहिषी तां इते!-गते!, महिष्यारूढे इत्यर्थः ॥

**अथ समासः—**अचिरा रोचिर्यस्याः सा अचिररोचिः 'बहुव्रीहिः'। प्रचलन्ती चासावचिररोचिश्च प्रचल० 'कर्मधारयः'। प्रचलदचिररोचिवत् चारु प्रचल० 'तत्पुरुषः'। प्रचलदचिररोचिश्चारु गात्रं यस्याः सा प्रचल० 'बहुव्रीहिः'। तत्सम्बो० हे प्रचल०। असिश्च

---

१ अत्र त्रुटिरिति प्रतिभाति।




निर्वाणकलिकायाम् —

"पुरुषदत्तां कनकावदातां महिषीवाहनां चतुर्भुजां वरदवज्रयुक्तदक्षिणकरां मातुलिङ्गशक्तियुक्तवामहस्तां चेति ।"

नि. सा. प्रेस

फलकं च असिफलके ' इतरेतरद्वन्द्वः ' । सती च ते असिफलके च सदसि० ' कर्मधारयः ' । समुद्यती च ते सदसिफलके च समुद्यत्स० ' कर्मधारयः ' । समुद्यत्सदसिफलकाभ्यां रामा समुद्यत्स० ' तत्पुरुषः ' । तत्सम्बो० हे समुद्यत्स० । न भीमः अभीमः ' तत्पुरुषः ' । अभीमो हासो यस्याः सा अभी० ' बहुव्रीहिः ' । तत्सम्बो० हे अभी० । अरिभ्यो भीः अरिभीः ' तत्पुरुषः ' । अरिभिय ईतिः अरिभीतिः ' तत्पुरुषः ' । तत्सम्बो० हे अरिभीते ! । फलं कुर्वन्तीति फलकराः 'तत्पुरुषः' । न विद्यते भीर्यस्याः सा अभीः 'बहुव्रीहिः' । महती चासौ सेरिभी च महा० ' कर्मधारयः ' । अभीश्चासौ महासेरिभी च अभी० ' कर्मधारयः ' । अभीमहासेरिभीं इता अभी० ' तत्पुरुषः ' । तत्सम्बो० हे अभीम० ॥ इति काव्यार्थः ॥ ४ ॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीकन्थुनाथस्य स्तुतेर्व्याख्या ॥ १७ ॥

सि० वृ०—प्रचलदचिरेति । पुरुषेषु दत्तं यस्याः सा पुरुषदत्ता तस्याः संबोधनं हे पुरुषदत्ते ! ते—तव प्रसादा—अनुग्रहाः मे—मम सदसि—सभायां सपदि—तत्क्षणं फलकराः—कार्यसिद्धिकारिणो •भवन्तु—सम्पद्यन्तामित्यर्थः । ' भू सत्तायाम् ' धातोः ' आशीःप्रेरणयोः ' (सा०सू०७०३) कर्तरि परस्मैपदे प्रथमपुरुषबहुवचनम् । अत्र ' भवन्तु ' इति क्रियापदम् । के कर्तारः ? । प्रसादाः । " प्रसादोऽनुग्रहे काव्य-गुणस्वास्थ्यप्रसत्तिषु " इति विश्वः । कस्याः ? । ते—तव संबन्धिनः । कथंभूताः प्रसादाः ? । फलकराः । कथम् ? । सपदि । कस्य ? । मे । कस्मिन् ? । सदसि । "समाजः परिषत् सदः" इति हैमः (का०३,श्लो० १४९) । अवशिष्टानि पुरुषदत्तायाः संबोधनानि, तद्व्याख्यानं त्वेवम्—हे ' प्रचलदचिररोचिश्चारुगात्रे ! ' प्रचलन्ती—प्रकर्षेण चलन्ती—इतस्ततः स्फुरन्ती या ' अचिररोचिः ' अचिरा रोचिर्यस्याः सा अचिररोचिः—विद्युत् तद्वत् चारु—मनोज्ञं गात्रं—देहो यस्याः सा तस्याः संबोधनं हे प्रचल० । हे ' समुद्यत्सदसिफलकरामे ! ' समुद्यती—प्रोल्लसन्ती सती—शोभने असिफलके—खड्गखेटके ताभ्यां रामा—रमणीया तस्याः संबोधनम् । असिश्च फलकं च असिफलके ' इतरेतरद्वन्द्वः ', सती च ते असिफलके च सद० ' कर्मधारयः ', समुद्यती च ते सदसिफलके च समुद्यत्सदसिफलके ' कर्मधारयः ', ततः समुद्यत्सदसिफलकाभ्यां रामा इति ' तत्पुरुषः ' । हे ' अभीमहासे ! ' न भीमः अभीमः ' तत्पुरुषः ' । अभीमः—अरौद्रो हासो—हसनं यस्याः सा तथा तस्याः संबोधनं हे अभीम० । हे ' अरिभीते ! ' अरिभ्यो भीः—भयं तस्या ईतिरिव ईतिः अरिभीतिः तस्याः संबोधनं हे अरि० । ! " ईतिः प्रवासे डिम्बे स्या—दतिवृष्ट्यादिषट्सु च " इति विश्वः । ' उपमितं व्याघ्रा०'(पा० अ० २, पा० १, सू० ५६ ) इति समासः । हे 'अभीमहासेरिभीते ! ' अभीः—भीवर्जिता या महासेरिभी—महामहिषी तां इते !—गते ! महिष्यारूढे ! इत्यर्थः । न विद्यते भीर्यस्याः सा अभीः इति ' बहुव्रीहिः ', महती चासौ सेरभी च महासेरभी ' कर्मधारयः ' । " लुलायो महिषो वाह—द्विषत्कासरसेरिभाः " इत्यमरः ( श्लो० ९९१ ) ॥ ४ ॥

॥ इति श्रीमहामहोपाध्याय० श्रीकुन्थुनाथस्तुतिवृत्तिः ॥ १७ ॥

सौ० वृ०—प्रचलदचिरेति। हे पुरुषदत्ते!–पुरुषदत्तानाम्नि देवि! ते–तव प्रसादाः–प्रसन्नगुणाः सदसि–सभायां मे–मम फलकराः–फलदायकाः सपदि–शीघ्रं भवन्तु इत्यन्वयः। 'भवन्तु' इति क्रियापदम्। के कर्तारः?। 'प्रसादाः'। 'भवन्तु' सन्तु। कस्याः?। 'ते' भवत्याः। किंविशिष्टाः प्रसादाः?। 'फलकराः' फलदायिनः। कस्य?। 'मे' मम। कस्याम्?। 'सदसि' सभायाम्। कथम्?। 'सपदि' शीघ्रम्। शेषाणि सम्बोधनपदानि पुरुषदत्ताया ज्ञेयानि। तानि व्याचक्ष्महे वयम्। प्रचलन्ती–इतस्ततः झात्कारायमाणा या अचिररोचिः–विद्युत् तद्वत् चारु–मनोज्ञं गात्रं–शरीरं यस्याः सा प्रचलदचिररोचिश्चारुगात्रा, तस्याः सं० हे 'प्रचलदचिररोचिश्चारुगात्रे!'। समुद्यत्–तेजोजाग्रत् सन्–शोभनः असिः–खड्गः फलकं–खेटकं ताभ्यां रामा–अभिरामा समुद्यत्सदसिफलकरामा, तस्याः सं० हे 'समुद्यत्सदसिफलकरामे!'। पुनः अभीमं–अरौद्रं–सौम्यं हासं यस्याः सा अभीमहासा, तस्याः सं० हे 'अभीमहासे!'। पुनः अरयः–शत्रवः तेषां भीः–भयं तेषु ईतिरिव ईतिः अरिभीतिः, तस्याः सं० हे 'अरिभीते!'। पुनः अभीः–निर्भया महती सैरिभी–महिषी तां प्रति इता–प्राप्ता अभीमहासैरिभीता, तस्याः सं० हे 'अभीमहासैरिभीते!'। 'निर्भयमहामहिष्यारूढे! इत्यर्थः। इति पदार्थः॥

अथ समासः—न चिरं अचिरं, अचिरं रोचिर्यस्याः सा अचिररोचिः, प्रचलन्ती चासौ अचिररोचिश्च प्रचलदचिररोचिः, प्रचलदचिररोचिर्वत् चारु गात्रं यस्याः सा प्रचलदचिररोचिश्चारुगात्रा, तस्याः सं० हे प्रचलदचिररोचिश्चारुगात्रे!। असिश्च फलकं च असिफलके, सती च ते असिफलके च सदसिफलके, समुद्यती च ते सदसिफलके च समुद्यत्सदसिफलके, समुद्यत्सदसिफलकाभ्यां रामा समुद्यत्सदसिफलकरामा, तस्याः सं० हे समुद्यत्सदसिफलकरामे!। न भीमं अभीमं, अभीमं हासं यस्याः सा अभीमहासा, तस्याः सं० हे अभीमहासे!। अरीणां भीः अरिभीः, अरिभियां ईतिरिव ईतिस्तस्याः सं० हे अरिभीते!। फलानि कुर्वन्ति ते फलकराः। न (विद्यते) भीः (यस्याः सा) अभीः, महती चासौ सैरिभी च महासैरिभी, अभीश्चासौ महासैरिभी च अभीमहासैरिभी, अभीमहासैरिभीं इता अभीमहासैरिभीता, तस्याः सं० हे अभीमहासैरिभीते!। इति चतुर्थवृत्तार्थः॥ ४॥

श्रीमत्कुन्थुजिनेन्द्रस्य, स्तुतेरर्थो लिवीकृतः।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना॥ १॥
॥ इति कुन्थुजिनस्तुतिः॥ ४।१७।६८॥

दे० व्या०—प्रचलदचिरेति। हे पुरुषदत्ते! ते–तव प्रसादाः–अनुग्रहाः सदसि फलकराः–कार्यकारिणो मे–मम भवन्तु इति सम्बन्धः। 'भू सत्तायाम्' धातुः। 'भवन्तु' इति क्रियापदम्। के कर्तारः?। प्रसादाः। किंविशिष्टाः प्रसादाः?। फलकराः। कस्याम्?। सदसि–सभायाम्। "समाजः परिषत् सदः" इत्यभिधानचिन्तामणिः (का० ३, श्लो० १४५)। कथम्?। सपदि–शीघ्रं यथा स्यात् तथेति क्रियाविशेषणम्। 'प्रचलदचिररोचिश्चारुगात्रे!' इति। प्रकर्षेण चलन्ती–इतस्ततः स्फुरन्ती या अचिररोचिः–विद्युत् तद्वत् (चारु)–कान्तं गात्रं–शरीरं यस्याः सा तस्याः संबोधनम्। "चला शम्पाऽचिरप्रभा" इत्यभिधानचिन्तामणिः (का०४, श्लो० १७०)। 'समुद्यत्सदसिफलकरामे!' इति। (विलसद्भ्यां असिफलकाभ्यां रामा–रमणीया तस्याः संबोधनम्)। 'अभीमहासे!' इति। अभीमः–अरौद्रः हासो–हसनं यस्याः सा तस्याः संबोधनम्। हासस्तु हसनं हसः" इत्यभिधानचिन्तामणिः (का० २, श्लो० २१०)। 'अरिभीते!' इति। अरयो–विपक्षाः तेभ्यो भीः–भयं तस्या ईते!–ईतिभूते! इति प्राञ्चः। 'अभीमहासैरिभीते!' इति। अभीः–निर्भया महासैरिभी–प्रौढमाहिषी तां इते! अर्थादारूढे!। "लुलायः सैरिभो महः" इत्यभिधानचिन्तामणिः (का० ४, श्लो० ३४८)। एतानि सर्वाण्यपि देव्याः संबोधनपदानि॥ इति तुरीयवृत्तार्थः॥ ४॥

---

१ हासशब्दस्य नपुंसकलिङ्गं चिन्त्यम्।

# १८ श्रीअरजिनस्तुतयः

**अथ श्रीअरनाथाय प्रणिपातः—**

व्यमुञ्चच्चक्रवर्तिलक्ष्मीमिह तृणमिव यः क्षणेन तं
सन्नमदमरमानसंसारमनेकपराजितामरम् ।
द्रुतकलधौतकान्तमानमतानन्दितभूरिभक्तिभाक्-
सन्नमदमरमानसं सारमनेकपराजितामरम् ॥ १ ॥

—द्विपदी

ज० वि०—व्यमुञ्चच्चक्रेति । भो भव्याः ! यूयं तं अरम्–अरनामानं जिनम् आनमत–प्रणमत इति क्रियाकारकसण्टङ्कः । अत्र 'आनमत' इति क्रियापदम् । के कर्तारः ? 'यूयम्' । कं कर्मतापन्नम् ? 'अरम्' । कथंभूतम् ? 'सन्नमदमरमानसंसारम्' मदः–जात्यादिकः मरः–मरणं मानः–अभिमानः संसारः–भवः, सन्नाः–क्षीणा मदमरमानसंसारा यस्य स तथा तम् । पुनः कथं० ? 'द्रुतकलधौतकान्तम्' द्रुतं–उत्तप्तं कलधौतं–सुवर्णं तद्वत् कान्तं–कमनीयम् । पुनः कथं० ? 'आनन्दितभूरिभक्तिभाक्सन्नमदमरमानसम्' आनन्दितम्–आह्लादितं भूरिभक्तिभाजां–प्रभूतभावजुषां सन्नमतां–प्रणमताम् अमराणां–देवानां मानसं–मनो येन स तथा तम् । पुनः कथं० ? 'सारम्' श्रेष्ठम् । पुनः कथं० ? 'अनेकपराजितामरम्' अनेके–अपरिमिताः पराजिता–निर्जिता अमरा–देवा येन स तथा तम् । इदं च विशेषणं दिग्विजयसमयापेक्षया ज्ञेयम् । तमिति तच्छब्दसहचारित्वाद् यच्छब्दघटनामाह—यः अरजिनः इह–अत्र जगति चक्रवर्तिलक्ष्मीं–चक्रधरश्रियं तृणमिव–तृणं वीरणादि तदिव क्षणेन–सपदि व्यमुञ्चत्–त्यक्तवान् । अत्रापि 'व्यमुञ्चत्' इति क्रियापदम् । कः कर्ता ? 'यः' । कां कर्मतापन्नाम् ? 'चक्रवर्तिलक्ष्मीम्' । किमिव ? 'तृणमिव' । कुत्र ? 'इह' । केन ? 'क्षणेन' । कथंभूतां चक्रवर्तिलक्ष्मीम् ? 'अनेकपराजिताम्' अनेकपाः–करिणः तैः राजिताम् । अनेकपराजितामरम् इति पदं यत् जिनविशेषणत्वेन व्याख्यातं तत् चक्रवर्तिलक्ष्म्या विशेषणत्वेन व्याख्येयम् । तथाहि–अनेकैः परैः–शत्रुभिः अजितां–अपरिभूताम्, अरं–शीघ्रम् ॥

**अथ समासः**—चक्रेण वर्तते इति चक्रवर्ती 'तत्पुरुषः' । चक्रवर्तिनो लक्ष्मीः चक्र० 'तत्पुरुषः' । तां चक्र० । मदश्च मरश्च मानश्च संसारश्च मदमर० 'इतरेतरद्वन्द्वः' । सन्ना मदमरमानसंसारा येन स सन्नमद० 'बहुव्रीहिः' । तं सन्नमद० । अनेकपैः राजिता अनेक० 'तत्पुरुषः' । तां अनेक० । द्रुतं च तत् कलधौतं च द्रुत० 'कर्मधारयः' । द्रुतकलधौतवत् कान्तः

द्रुत० ' तत्पुरुषः ' । तं द्रुत० । भूरिश्चासौ भक्तिश्च भूरिभक्तिः 'कर्मधारयः' । भूरिभक्तिं भजन्तीति भूरिभ० ' तत्पुरुषः ' । सन्नमन्तश्च ते अमराश्च सन्नम० ' कर्मधारयः ' । भूरिभक्तिभाजश्च ते सन्नमदमराश्च भूरिभ० 'कर्मधारयः' । भूरिभक्तिभाक्सन्नमदमराणां मानसं भूरिभ० 'तत्पुरुषः' । आनन्दितं भूरिभक्तिभाक्सन्नमदमरमानसं येन स आनन्दित० 'बहुव्रीहिः' । तं आनन्दित० । अनेके च ते पराजिताश्च अनेक० 'कर्मधारयः' । अनेकपराजिता अमरा येन सः अनेक० 'बहुव्रीहिः' । तं अनेक० । चक्रवर्तिलक्ष्मीपक्षे तु—अनेके च ते परे च अनेकपरे ' कर्मधारयः' । न जिता अजिता ' तत्पुरुषः ' । अनेकपरैः अजिता अनेक० ' तत्पुरुषः ' । तां अनेक० ॥ इति काव्यार्थः ॥ १ ॥

सि० वृ०——व्यमुञ्चचक्रेति । भो भव्याः ! यूयं तं अरं—अरनाथं आनमत—प्रणमतेत्यर्थः । आङ्पूर्वक- ' णम प्रह्वीभावे ' धातोः ' आशीःप्रेरणयोः ' ( सा० सू० ७०२ ) कर्तरि परस्मैपदे मध्यमपुरुषबहुवचनम् । अत्र ' नम ' इति क्रियापदम् । के कर्तारः ? । यूयम् । कं कर्मतापन्नम् ? । ' अरम् ' गर्भस्थेऽस्मिन् मात्रा सर्वरत्नमयोऽरो दृष्ट इत्यरः तम् ।

" सर्वोत्तमे महासत्त्व—कुले य उपजायते ।
तस्याभिवृद्धये वृद्धै—रसावर उदाहृतः ॥ "

इति हैम्यां नाममालावृत्तौ [ इति ] वचनाद् अरः । किंविशिष्टं अरम् ? । ' सन्नमदमरमानसंसारं ' मदः—जात्यादिकः मरः—मरणं मानः—अभिमानः संसारः—जन्मजरालक्षणः, मदश्च मरश्च मानश्च संसारश्च ' इतरेतरद्वन्द्वः ', सन्नाः—क्षीणा मदमरमानसंसारा यस्य स तथा तम् । पुनः कथंभूतम् ? । ' द्रुतकलधौतकान्तं ' द्रुतं—उत्तप्तं यत् कलधौतं—काञ्चनं तद्वत् कान्तं—कमनीयम् । " कलधौतं रूप्यहेम्नोः " इत्यमरः ( श्लो० २४८७ ) । पुनः कथंभूतम् ? । 'आनन्दितभूरिभक्तिभाक्सन्नमदमरमानसं' आनन्दितं—आनन्दं प्रापितं 'भूरिभक्तिभाजां' भूरिभक्तिं—अनुरागं भजन्ति ते भूरिभक्तिभाजः तेषाम्, ' भजां विण् '( सा० सू० १२३२) इति विण्, सन्नमतां—प्रणमतां अमराणां—देवाना मानसं—मनो येन स तथा तम् । सन्नमन्तश्च ते अमराश्च सन्नमदमराः, भूरिभक्तिभाजश्च ते सन्नमदमराश्च भूरिभक्तिभाक्सन्नमदमराः इति ' कर्मधारयः ', ततः आनन्दितं भूरिभक्तिभाक्सन्नमदमराणां मानसं येन इति ' बहुव्रीहिः ' । पुनः कथंभूतम् ? । सारं—श्रेष्ठम् । पुनः कथंभूतम् ? । ' अनेकपराजितामरं ' अनेके—अपरिमिताः पराजिताः—निर्जिताः दिग्विजये अमराः—मागधादिदेवाः येन स तथा तम् । तमिति तच्छब्दस्य यच्छब्दसापेक्षत्वात् तं कम् ? । यः अरजिनः इह—अत्र जगति चक्रवर्तिलक्ष्मीं—सार्वभौमश्रियं तृणमिव—यवसमिव क्षणेन—सपदि व्यमुञ्चत्—त्यक्तवानित्यर्थः । ' मुच्लृ मोक्षणे ' धातोरनद्यतने कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं दिप् । ' तुदादेरः' ( सा० सू० १००७) इत्यप्रत्ययः । ' मुचादेर्मुम् ' ( सा० सू० १०११ ) इति मुम् । ' नश्चापदान्ते झसे ' ( सा० सू० ९९) इति मस्यानुस्वारः । ' दिबादावट् ' ( सा० सू० ७०७ ) । अत्र ' व्यमुञ्चत् ' इति क्रियापदम् । कः

कर्ता ? । यः । कां कर्मतापन्नाम् ? । चक्रवर्तिलक्ष्मीम् । चक्रभूमण्डले—द्वादशराजमण्डले चक्रवर्तित्वं प्रभुत्वलक्षणां वृत्तिवण्टां कर्तुं शीलमस्य णिनिः चक्रे—राजसमूहे अवश्यं स्वामित्वेन वर्तते वा, आवश्यके णिनिः । चक्रवर्ती । " चक्रवर्ती बहुगणे चक्रवाके " इति विश्वः । चक्रेण—चक्रायुधरत्नेन वा वर्तत इति चक्रवर्ती तस्य लक्ष्मीः—श्रीः ताम् । नृपाणां चक्रे—समूहे वर्तते चक्रेण चक्रायुधबलेन वा वर्तत इति चक्रवर्ती । लक्षयति-पश्यति नीतिशालिनं इति लक्ष्मीः । 'लक्ष दर्शनाङ्कनयोः' । 'लक्षेर्मुट् च' (उणा० सू० ४४०) इतीकारप्रत्ययो मुडागमश्च । अत एव ङ्यन्तत्वाभावान्न सुलोपः । 'कृदिकारादक्तिनो वा ङीप्' इत्यत्र सावर्ण्यग्रहणात् ङीबतोऽपि मैवेयः (ज्ञेयः?) तेन लक्ष्मीशब्दस्य नदीवद् रूपाणि भवन्ति, 'कृदिकारात्' इति ङीषि लक्ष्मीत्यपि भवतीति, दुर्घटे रक्षित इत्युज्ज्वलदत्तः । लक्ष्मीः "लक्ष्मीर्हरेः स्त्रियाम्" इति शब्दप्रभेदः । "चक्रवर्ती सार्वभौमः" इति हैमः ( का०३, श्लो० ३५९ ) । " चक्रवर्ती सार्वभौमो, नृपोऽन्यो मण्डले स्त्रियाम्( श्वरः ? ) " इत्यमरः ( श्लो० १४७२ ) । किमिव ? । तृणमिव । कुत्र ? । इह । केन ? । क्षणेन । कथंभूतां चक्रवर्तिलक्ष्मीम् ? । ' अनेकपराजितां ' अनेकपा—द्विरदाः तैः राजितां—शोभिताम् । " दन्ती दन्तावलो हस्ती, द्विरदोऽनेकपो द्विपः " इत्यमरः ( श्लो० १५३५ ) । करेण मुखेन च पानात् न एकेन पिबतीत्यनेकपः । ' सुपि० ' ( पा० अ० ३, पा० २, सू० ४ ) इति योगविभागात् कः ॥

सौ० वृ०—यः कौ-पृथिव्यां षड्जीवनिकायरक्षको भवति स भवोदधेः अरं-परतटं प्राप्नोत्येव । अनेन सम्बन्धेनायातस्याष्टादशमश्रीअरजिनस्य स्तुतेरर्थो लिख्यते-व्यमुञ्चच्चक्रेति ।

हे जनाः ! यूयं तं अरनामानं जिनं आनमत इत्यन्वयः । 'आनमत' इति क्रियापदम् । के कर्तारः? । 'यूयम्' । 'आनमत' प्रणमत । कं कर्मतापन्नम् ? । 'अरम्' । " अरो जिनेऽरं चक्राङ्गे, शीघ्रगे सत्वरे तटे " इत्यनेकार्थः । किंविशिष्टं अरम् ? । 'तं' प्रसिद्धम् । तच्छब्दो यच्छब्दमपेक्षते । तं कम् ? । यो जिनः इह-संसारे चक्रवर्तिलक्ष्मीं-चक्रधरऋद्धिं सपदि-शीघ्रं क्षणेन-वेगेन तृणमिव-चारणमिव (?) व्यमुञ्चत् इत्यन्वयः । 'व्यमुञ्चत्' इति क्रियापदम् । कः कर्ता ? । 'यः' जिनः । 'व्यमुञ्चत्' विशेषेण अमुञ्चत्-अत्यजत् । कां कर्मतापन्नाम् ? । 'चक्रवर्तिलक्ष्मीम्' । कस्मिन् ? । 'इह' संसारे । कथम् ? । 'क्षणेन' वेगेन । किमिव ? । 'तृणमिव' । इव-यथा तृणं मुच्यते तद्वच्चक्रवर्तिलक्ष्मीं व्यमुञ्चत् । किंविशिष्टं तं अराजिनम् ? । सन्नः-क्षीणः मदो-दर्पः मरो-मरणं मानः-अहङ्कारः संसारो-भवः यस्मात् स सन्नमदमरमानसंसारस्तं 'सन्नमदमरमानसंसारम्' । किंविशिष्टां चक्रवर्तिलक्ष्मीम् ? । अनेकपा-गजास्तै राजिता-शोभिता अनेकपराजिता तां 'अनेकपराजिताम्' । पुनः किंविशिष्टं अरं जिनम् ? । द्रुतं-उत्तप्तं यत् कलधौतं-सुवर्णं तद्वत् कान्तः-मनोज्ञः द्रुतकलधौतकान्तस्तं 'द्रुतकलधौतकान्तम्' । पुनः किंविशिष्टं अरं जिनम् ? । आनन्दितं-आनन्दं प्रापितं भूरिः-प्रचुरा भक्तिर्येषां ते भूरिभक्तिभाजः तादृशा ये सन्तः-शोभनाः नमन्तः-प्रणमन्तः ये अमरा-देवास्तेषां मानसं-चित्तं येन स आनन्दितभूरिभक्तिभाक्सन्नमदमरमानसस्तं 'आनन्दितभूरिभक्तिभाक्सन्नमदमरमानसम्' । पुनः किंविशिष्टं अरं जिनम् ? । 'सारं' प्रधानम् । पुनः किंविशिष्टं अरं जिनम् ? । अनेके-बहवः पराजिताः-विजयीकृता अमराः-मागधवरदामादयो येन सः अनेकपराजितामरस्तं 'अनेकपराजितामरम्' । एतद् विशेषणं यात्रापेक्षया ज्ञेयम् । इति पदार्थः ॥

अथ समासः—चक्रं अनुवर्तत इति चक्रवर्ती, वा चक्रेण वर्तत इति । चक्रवर्तिनो लक्ष्मीः चक्रवर्तिलक्ष्मीः, तां चक्रवर्तिलक्ष्मीम् । मदश्च मरश्च मानश्च संसारश्च मदमरमानसंसाराः, सन्नाः-क्षीणा गता वा मदमरमानसंसारा यस्मात् स सन्नमदमरमानसंसारः, तं सन्नमदमरमानसंसारम् । न एकेन पिबन्ती-

त्यनेकपाः, यद्वा अनेकान् पान्तीत्यनेकपाः, अनेकपैः राजिताः अनेकपराजिताः, तां अनेकपराजिताम्। अरति-संसारसमुद्रस्य परतटं गच्छतीति अरः, तं अरम्। द्रुतं च तत् कलधौतं च द्रुतकलधौतं, द्रुतकलधौतवत् कान्तः द्रुतकलधौतकान्तः, तं द्रुतकलधौतकान्तम्। आनन्दः सञ्जातः अस्मिन्निति आनन्दितः, तम् (आनन्दितम्), भूरिश्चासौ भक्तिश्च भूरिभक्तिः, भूरिभक्तिं भजन्ति ते भूरिभक्तिभाजः, नमन्तश्च ते अमराश्च नमदमराः, सन्तश्च ते नमदमराश्च सन्नमदमराः, भूरिभक्तिभाजश्च ते सन्नमदमराश्च भूरिभक्तिभाक्सन्नमदमराः, भूरिभक्तिभाक्सन्नमदमराणां मानसं भूरिभक्तिभाक्सन्नमदमरमानसं, आनन्दितं भूरिभक्तिभाक्सन्नमदमरमानसं येन स आनन्दितभूरिभक्तिभाक्सन्नमदमरमानसः, तं आनन्दितभूरिभक्तिभाक्सन्नमदमरमानसम्। न एके अनेके, (अनेके) पराजिता अमरा येन सः अनेकपराजितामरः, तं अनेकपराजितामरम्। विंशतिवर्णमयी विषमच्छन्दसा [1]वैश्वदेवीनाम्ना स्तुतिरियम्॥ इति प्रथमवृत्तार्थः ॥१॥

दे० व्या०—व्यमुञ्चचक्रेति। हे जनाः! तं अरं-अरनाथं यूयं आनमत-प्रणमतेत्यन्वयः। 'णम प्रह्वीभावे' धातुः। 'आनमत' इति क्रियापदम्। के कर्तारः?। यूयम्। कं कर्मतापन्नम्?। अरम्। किंविशिष्टं अरम्?। 'सन्नमदमरमानसंसारं' मदः पूर्वोक्तः मरो-मरणं मानः-स्मयः संसारो-भवग्रहणं एतेषां पूर्वं 'द्वन्द्वः', ततः सन्नः-क्षीणो मदमरमानसंसारो यस्येति 'बहुव्रीहिः'। पुनः किंविशिष्टम्?। 'द्रुतकलधौतकान्तं' द्रुतं-गालितं यत् कलधौतं-सुवर्णं तद्वत् कान्तं-कमनीयम्। "कलधौतलौहोत्तमवह्निबीजा०" इत्यभिधानचिन्तामणिः (का० ४, श्लो० ११०)। पुनः किंविशिष्टम्?। 'आनन्दितभूरिभक्तिभाक्सन्नमदमरमानसं' भूरि-अतिशयेन भक्तिं-सेवां भजन्तीति भूरिभक्तिभाजः इति 'द्वितीयातत्पुरुषः', आराध्यत्वेन ज्ञानं भक्तिरिति वर्धमानचरणाः, ते च ते सम्-सम्यक् नमन्तश्च ते अमराश्चेति 'कर्मधारयः', ततः आनन्दितं-प्रीणितं भूरिभक्तिभाक्सन्नमदमराणां मानसं-हृदयं येनेति 'तृतीयाबहुव्रीहिः'। अरं-शीघ्रं यथा स्यात् तथेति क्रियाविशेषणम्। पुनः किंविशिष्टम्?। 'अनेकपराजितामरं' अनेके पराजिता-भग्ना दिग्विजयादौ अमरा-मगधादिदेवा येन स तम्। "जितो भग्नः पराजितः" इत्यभिधानचिन्तामणिः (का० ३, श्लो० ४६९)। यत्तदोर्नित्याभिसम्बन्धाद् यः अरनाथः चक्रवर्तिलक्ष्मीं तृणमिव क्षणेन-क्षणमात्रेण व्यमुञ्चत्-अत्याक्षीत्। 'मुञ्च मोचने' धातुः। 'व्यमुञ्चत्' इति क्रियापदम्। कः कर्ता?। अरनाथः। कां कर्मतापन्नाम्?। चक्रवर्तिलक्ष्मीम्। "चक्रवर्ती सार्वभौमः" इत्यभिधानचिन्तामणिः (का० ३, श्लो० ३५५)। किंविशिष्टां चक्रवर्तिलक्ष्मीम्?। 'अनेकपराजितां' अनेकपा-हस्तिनः तैः राजितां-भूषितां, चतुरशीतिलक्षगजानामधिपत्वात्। इति प्रथमवृत्तार्थः॥ १॥



जिनवरेभ्यो वन्दना—

स्तौति समन्ततः स्म समवसरणभूमौ यं सुरावलिः
सकलकलाकलापकलिताऽपमदाऽरुणकरमपापदम्।
तं जिनराजविसरमुज्ज्वासितजन्मजरं नमाम्यहं
सकलकला कलाऽपकलितापमदारुणकरमपापदम्॥ २॥

—द्विपदी

---

१ अयमुल्लेखो भ्रान्तिमूलक इति प्रतिभाति।

ज० वि०—स्तौतीति । अहं तं जिनराजविसरं-जिनपतिसमूहं नमामि-प्रणमामि इति क्रियाकारकप्रयोगः । अत्र ' नमामि ' इति क्रियापदम् । कः कर्ता ? ' अहम् ' । कं कर्मतापन्नम् ? ' जिनराजविसरम् ' । तं इति तच्छब्दसम्बन्धाद् यच्छब्दघटनामाचष्टे—यं जिनराजविसरं समवसरणभूमौ-समवसृतिक्षितौ सुरावलिः-त्रिदशसन्ततिः समन्ततः-सर्वतः स्तौति स्म-वन्दते स्म । अत्र ' स्म ' इति अतीतार्थद्योतको निपातः । अत्रापि ' स्तौति ' इति क्रियापदम् । का कर्त्री ? ' सुरावलिः ' । कं कर्मतापन्नम् ? ' यम् ' । कस्याम् ? ' समवसरणभूमौ ' । कथम् ? ' समन्ततः ' । कथंभूता सुरावलिः ? ' सकलकलाकलापकलिता ' सकलेन-समग्रेण कलाकलापेन-विज्ञाननिकरेण कलिता-युक्ता । पुनः कथं० ? ' अपमदा ' अपगतदर्पा । पुनः कथं० ? ' सकलकला ' कलकलेन-कोलाहलेन सहिता, बाढस्वरेण गुणानुचरन्तीत्यर्थः । पुनः कथं० ? ' कला ' मधुरा, मधुरस्वरधारित्वात् । कथंभूतं जिनराजविसरम् ? ' अरुणकरं ' आताम्रपाणिम् । पुनः कथं० ? ' अपापदं ' अपगतविपदम् । पुनः कथं० ? ' उज्जासितजन्मजरं ' उज्जासिते-प्रतिहते जन्मजरे-जननविस्रसे येन स तथा तम् । पुनः कथं० ? ' अपकलितापं ' अपगतौ कलितापौ-कलहसन्तापौ यस्मात् स तथा तम् । ( पुनः कथं० ? ' अदारुणकरं ' ) अदारुणं-अरौद्रं करोति यः स तथा तम् । पुनः कथं० ? ' अपापदं ' अपापं-पुण्यं ददाति यः स तथा तम् ॥

अथ समासः—समवसरणस्य भूमिः समव० ' तत्पुरुषः ' । तस्यां समव० । सुराणां आवलिः सुरावलिः ' तत्पुरुषः ' । सकलाश्च ताः कलाश्च सकल० ' कर्मधारयः ' । सकलकलानां कलापः सकल० ' तत्पुरुषः ' । सकलकलाकलापेन कलिता सकल० ' तत्पुरुषः ' । अपगतो मदो यस्याः सा अपमदा ' बहुव्रीहिः ' । अरुणौ करौ यस्य सः अरुणकरः ' बहुव्रीहिः ' । तं अरुण० । अपगता आपदो यस्मात् सः अपापत् ' बहुव्रीहिः ' । तं अपापदम् । जिनानां जिनेषु वा राजानो जिनराजाः 'तत्पुरुषः' । जिनराजानां विसरो जिनराज० ' तत्पुरुषः ' । तं जिनराज० । जन्म च जरा च जन्मजरे ' इतरेतरद्वन्द्वः ' । उज्जासिते जन्मजरे येन स उज्जासि० ' बहुव्रीहिः ' । तं उज्जासि० । सह कलकलेन वर्तत इति सकल० ' तत्पुरुषः ' । कलिश्च तापश्च कलितापौ ' इतरेतरद्वन्द्वः ' । अपगतौ कलितापौ यस्मात् सः अपक० ' बहुव्रीहिः ' । तं अपक० । न दारुणमदारुणं ' तत्पुरुषः ' । अदारुणं करोतीत्यदारुणकरः ' तत्पुरुषः ' । तं अदारुण० । न पापं अपापं ' तत्पुरुषः ' । अपापं ददातीत्यपापदः 'तत्पुरुषः' । तं अपापदम् ॥ इति काव्यार्थः ॥ १ ॥

सि० वृ०—स्तौतीति । अहं तं जिनराजविसरं-जिनपतिनिकरं नमामि-प्रणमामीत्यर्थः । ' णम प्रह्वत्वे शब्दे च ' धातोः कर्तरि वर्तमाने परस्मैपदे उत्तमपुरुषैकवचनं मिप् । ' अप् कर्तरि ' ( सा० सू० ६९१ ) इत्यप्, ' ऽमोरा ' ( सा० सू० ६९६ ) इत्यात्वम्, ' स्वरहीनं० ' ( सा०

सू० ३१)। तथा च ' नमामि ' इति सिद्धम्। अत्र ' नमामि ' इति क्रियापदम्। कः कर्ता ?। अहम्। कं कर्मतापन्नम् ?। ' जिनराजविसरम् ' जिनानां जिनेषु वा राजानो जिनराजाः तेषां विसरः—समूहः तम्। " समूहो निवहव्यूह—सन्दोहविसरव्रजाः " इत्यमरः ( श्लो० १०६९ )। तच्छब्दस्य यच्छब्दसापेक्षत्वात् तं कम् ?। यं जिनराजविसरं समवसरणभूमौ—समवसृतिभुवि सुरावलिः—देवपङ्क्तिः समन्ततः—सर्वतः स्तौति स्म—वन्दते स्म, अस्तावीदित्यर्थः। ' ष्टुञ् स्तुतौ ' धातोर्वर्तमाने कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तिप्। ' शप् कर्तरि ' ( सा० सू० ६९१ ) इत्यप्। ' अदादेर्लुक् ' ( सा० सू० ८८० ) इति लुक्। ' ओरौ ' ( सा० सू० १९३ ) इत्यौकारः। ' स्मयोगे भूतार्थता वक्तव्या ' ( सा० सू० ७३३ ) इति भूतार्थता। अत्र ' स्तौति स्म ' इति क्रियापदम्। का कर्त्री ?। ' सुरावलिः ' सुराणां—देवानां आवलिः—सुरावलिः। कं कर्मतापन्नम् ?। यम्। कस्याम् ?। ' समवसरणभूमौ ' समवसरणस्य भूमिः समवसरणभूमिः तस्यां समवसरणभूमौ। कथम् ?। समन्ततः। कथंभूता सुरावलिः ?। ' सकलकलाकलापकलिता ' सकलेन—समग्रेण कलाकलापेन कलायाः—विज्ञानस्य, " कला शिल्पे कालभेदे " इत्यमरः ( श्लो० २७३१ ), कलापेन—समूहेन कलिता—संयुता। " कलापो भूषणे बर्हे, तूणीरे संहतेऽपि च " इत्यमरः ( श्लो० २५९२ )। पुनः कथंभूता ?। 'अपमदा' अपगतो मदो—दर्पो यस्याः सा अपमदा। पुनः कथंभूता ?। 'सकलकला' कलकलेन—कोलाहलेन सहिता सकलकला, तारस्वरेण गुणानुचरन्तीत्यर्थः। पुनः कथंभूता ?। कला—मधुरा। कथंभूतं जिनराजविसरम् ?। ' अरुणकरं ' अरुणौ—रक्तौ करौ—हस्तौ यस्य स तथा तम्, सामुद्रिके सत्पुरुषाणां करचरणयो रक्तत्वेन वर्णनात्। पुनः कथंभूतम् ?। ' अपापदं ' अपगता आपद्—विपत्तिः—दुर्दशेतियावत् यस्मात् स तम्। पुनः कथंभूतम् ?। ' उज्जासितजन्मजरं ' जन्म च जरा च जन्मजरे ' इतरेतरद्वन्द्वः ', उज्जासिते—प्रतिहते जन्मजरे—जननविस्रसे येन स तथा तम्। ' जरायाः स्वरादौ जरस् वा वक्तव्यः ' ( सा० सू० २०९ ) इति विकल्पपक्षे अमि रूपम्। पुनः कथंभूतम् ?। ' अपकलितापं ' अपगतौ कलितापौ—कलहसन्तापौ यस्मात् स तम्। यद्वा अपगतः कलेः—कलिकालस्य [कलेः—] कलहस्य वा तापो यस्मादित्यर्थः। पुनः कथंभूतम् ?। ' अदारुणकरं ' करोतीति करः, दारुणस्य करो दारुणकरः, पश्चान्नञ्समासः, तं अदारुणकरम्। पुनः कथंभूतम् ?। 'अपापदं' अपापं—पुण्यं ददातीत्यपापदः तं अपापदं, पुण्यप्रदमित्यर्थः॥

सौ० वृ०—स्तौतीति। अहं तं जिनराजविसरं—तीर्थंकरसमूहं नमामि इत्यन्वयः। ' नमामि ' इति क्रियापदम्। कः कर्ता ?। 'अहम्'। 'नमामि' (वन्दे)। कं कर्मतापन्नम् ?। ' जिनराजविसरम्।' किंविशिष्टं जिनराजविसरम् ?। उज्जासिता—त्रासिता जन्म—जातिर्जरा—वयोहानिर्मरणादिरूपा येन स उज्जासितजन्मजरः, तं ' उज्जासितजन्मजरम् '। पुनः किंविशिष्टं जिनराजविसरम्।? अरुणा-रक्ता हस्ता यस्य सः अरुणकरः, तं ' अरुणकरम् ' रक्तकमलपाणिमित्यर्थः। पुनः किंविशिष्टं जिनराजविसरम् ?। ' तं ' प्रसिद्धम्। तं कम् ?। सुरावलिः—देवश्रेणिः समवसरणभूमौ—समवसरणभूमिकायाम् समन्ततः—चतुर्दिशं यं जिनराजविसरं स्तौति स्म इत्यन्वयः। 'स्तौति' इति क्रियापदम्। का कर्त्री ?। 'सुरावलिः'। स्तौति' स्तुतिं करोति। स्म इति पदं अतीतार्थद्योतकम्। 'अस् भुवि ' इत्यस्य धातोः उत्तमपुरुषार्थस्य क्रियावहुत्वप्रयोगः। कं कर्मतापन्नम् ?। 'यं जिनराजविसरम्'। कस्याम् ?। 'समवसरणभूमौ'। कथम् ?। 'समन्ततः' चतुर्दिशं यथा स्यात् तथा। किंविशिष्टा सुरावलिः ?। सकलाः-संपूर्णा याः कला-ज्ञानविज्ञानादिकाः तासां कलापः

–समूहः तेन कलिता–युक्ता 'सकलकलाकलापकलिता'। पुनः किंविशिष्टा सुरावलिः ?। 'अपमदा' गतदर्पा। पुनः किंविशिष्टं जिनराजविसरम् ?। अपापं–पुण्यं ददातीति अपापदस्तं 'अपापदम्'। यद्वा अपगता आपत्–विपत् यस्मात् स अपापत्, तं अपापदम्। पुनः किंविशिष्टं जिनराजविसरम् ?। 'अपकलितापं' (अपगतः) कलितापः–कलहदाघो यस्य सः अपकलितापः तं 'अपकलितापम्'। पुनः किंविशिष्टं जिनराजविसरम् ?। अदारुणं–सौम्यं करोतीति अदारुणकरः, तं 'अदारुणकरम्'। पुनः किंविशिष्टा सुरावलिः ?। कलो–मधुरः कलशब्दः–कलकलस्तेन सहिता 'सकलकला'। एतावता मधुरध्वनिना तीर्थंकरगुणगायिनीत्यर्थः। पुनः किंविशिष्टा सुरावलिः ?। 'कला' प्रधाना। इति पदार्थः॥

अथ समासः—समन्तादिति समन्ततः। समवसरणस्य भूमिः समवसरणभूमिः, तस्यां समवसरणभूमौ। सुराणां आवलिः सुरावलिः। सकलाश्च ताः कलाश्च सकलकलाः, सकलकलानां कलापः सकलकलाकलापः, सकलकलाकलापेन कलिता सकलकलाकलापकलिता। अपगतो मदो यस्याः सा अपमदा। अरुणाः करा यस्य सः अरुणकरः, तं अरुणकरम्। न पापं अपापं, अपापं ददातीति अपापदः, तं अपापदम्। जिनानां राजानो जिनराजाः, जिनराजानां विसरो जिनराजविसरः, तं जिनराजविसरम्। जन्म च जरा च जन्मजरसी, उज्जासिते जन्मजरसी यस्मात् स उज्जासितजन्मजरः, तं उज्जासितजन्मजरम्। कलश्चासौ कलश्च कलकलः, कलकलेन सहिता सकलकला। कलिश्च तापश्च कलितापौ, यद्वा कलेस्तापः कलितापः, अपगतः कलितापो यस्य सः अकलितापः, तं अकलितापम्। न दारुणं अदारुणं, अदारुणं करोतीति अदारुणकरः, तं अदारुणकरम्। अपगता आपद् यस्मात् सः अपापत्, तं अपापदम्॥ इति द्वितीयवृत्तार्थः॥ २॥

दे० व्या०—स्तौतीति। तं जिनराजविसरं–तीर्थंकरसमूहं अहं नमामि–नमस्कारविषयीकरोमीत्यन्वयः। 'णम नमने' धातुः। 'नमामि' इति क्रियापदम्। कः कर्ता ?। अहम्। कं कर्मतापन्नम् ?। जिनराजविसरम्। "सन्दोहः समुदायराशिविसरव्राताः कलापो व्रजः" इत्यभिधानचिन्तामणिः (का० ६, श्लो० ४७)। किंविशिष्टं जिनराजविसरम् ?। 'उज्जासितजन्मजरं' जननं–जन्म जरा–विस्रसा अनयोः 'द्वन्द्वः', ततः उज्जासिते–नाशिते जन्मजरे येन स तम्। "प्रोज्जासनं प्रशमनं प्रतिघातनं वधः" इत्यभिधानचिन्तामणिः (का० ३, श्लो० ३४)। पुनः किंविशिष्टम् ?। 'अरुणकरं' अरुणौ–रक्तौ करौ–हस्तौ यस्य स तम्। पुनः किंविशिष्टम् ?। 'अपकलितापं' अपगतः कलेः–कलिकालस्य कलहस्य वा तापः–सन्तापो यस्माद् यस्य वा स तम्। पुनः किंविशिष्टम् ?। 'अदारुणकरं' दारुणं–रौद्रं तन्न करोतीत्यदारुणकरस्तम्, रुद्रकर्माकारकमित्यर्थः। यद्वा नास्ति दारुणा–रुद्रा करा–प्रभा यस्य स तम्। पुनः किंविशिष्टम् ?। 'अपापदं' पापं न दत्ते इत्यपापदस्तम्, पुण्यप्रदमित्यर्थः। यत्तदोर्नित्याभिसम्बन्धाद् यं जिनराजविसरं 'सुरावलिः' सुराणां–देवानां आवलिः–श्रेणिः समन्ततः–सर्वदिक्षु समवसरणभूमौ स्तौति स्म–अस्तवीत्। 'स्तुञ् स्तुतौ' धातुः। 'स्तौति स्म' इति क्रियापदम्। का कर्त्री ?। सुरावलिः। कं कर्मतापन्नम् ?। जिनराजविसरम्। कस्याम् ?। 'समवसरणभूमौ' समवसरणस्य–वप्रत्रयस्य भूमिः–भूमिका तस्याम्। कथम् ?। समन्ततः। अव्ययमेतत्। किंविशिष्टा सुरावलिः ?। 'सकलकलाकलापकलिता' सकला–समस्ता या कला–विज्ञानं तस्याः कलापः–समूहः तेन कलिता–व्याप्ता। पुनः किंविशिष्टा ?। 'अपापत्' अपगता आपद्–विपत्तिर्यस्याः सा तथा। जिनराजविसरविशेषणमेतदिति कश्चित् तच्चिन्त्यम्। पुनः किंविशिष्टा ?। 'अपमदा' अपगतो मदो यस्याः सा तथा। "मदो मुन्मोहसंभेदः" इत्यभिधानचिन्तामणिः (का० २, श्लो० २२६)। पुनः किंविशिष्टा ?। कला–मनोहरा॥ इति द्वितीयवृत्तार्थः॥ २॥

**जिनागमाय नमः—**

भीममहाभवाब्धिभवभीतिविभेदि परास्तविस्फुरत्-
परमतमोहमानमतनूनमलं घनमघवतेऽहितम् ।
जिनपतिमतमपारमर्त्यामरनिर्वृतिशर्मकारणं
परमतमोहमानमत नूनमलङ्घनमघवतेहितम् ॥ ३ ॥

—द्विपदी

ज० वि०—भीमेति । भो भव्याः! यूयं जिनपतिमतं–सर्वज्ञप्रवचनं नूनं–निश्चयेन आनमत–प्रणमत इति क्रियाकारकयोजना । 'आनमत' इति क्रियापदम् । के कर्तारः? 'यूयम्' । किं कर्मतापन्नम्? 'जिनपतिमतम्' । जिनपतिमतं कथंभूतम्? 'भीममहाभवाब्धिभवभीतिविभेदि' भीमो–भयङ्करः यो (महान्) भवाब्धिः–संसारसागरस्तत्र भवा या भीतयः–भियस्तासां विभेदि–भेदनशीलम् । पुनः कथं०? 'परास्तविस्फुरत्परमतमोहमानं' परमतानि–अन्यप्रवचनानि मोहो–मिथ्यात्वं मानः–अहङ्कारः, परास्ता–निक्षिप्ता विस्फुरन्तः–विजृम्भमाणा परमतमोहमाना येन तत् तथा तत् । अथवा विस्फुरन् परमतानां 'मोहमानः' मोहाद्–अज्ञानात् मानः–मिथ्याभिमानः स 'परास्तः' परं प्रकृष्टं यथा स्यात् तथा अस्तो येन तथा तत् । पुनः कथं०? 'अतनूनं' तनु–कृशं ऊनं च शब्दार्थादिभिर्न्यूनं यन्न भवति तत् । पुनः कथं०? 'घनं' निबिडं, प्रमेयगाढमित्यर्थः । कथं? 'अलं' अत्यर्थम् । पुनः कथं०? 'अहितं' न श्रेयस्कारि । कस्मिन्? 'अघवते' पापान्विताय । पुनः कथं०? 'अपारमर्त्यामरनिर्वृतिशर्मकारणम्' अपाराणि–अपर्यन्तानि यानि मर्त्यामराणां निर्वृतेः–निर्वाणस्य शर्माणि–सुखानि तेषां कारणं–हेतुः । पुनः कथं०? 'परमतमोहं' परमं–प्रकृष्टं तमो हन्ति यत् तत् । यदिवा अतिशयेन परमाः–परमतमा ऊहा–विचारणा यस्मिन् तत् तथा तत् । पुनः कथं०? ईहितम्' अभिलषितम् । केन? 'अलङ्घनमघवता' नास्ति लङ्घनम्–अभिभवो यस्य तेन मघवता–इन्द्रेण, सामर्थ्यादच्युतस्वर्गनाथेन ॥

अथ समासः—अब्धिरिवाब्धिः । भवश्चासावब्धिश्च भवाब्धिः 'कर्मधारयः' । महांश्चासौ भवाब्धिश्च महा० 'कर्मधारयः' । भीमश्चासौ महाभवाब्धिश्च भीम० 'कर्मधारयः । भीममहाभवाब्धेर्भवा भीमम० 'तत्पुरुषः' । भीममहाब्धिभवाश्च ता भीतयश्च भीम० 'कर्मधारयः । भीममहाभवाब्धिभवभीतीनां विभेदि भीमम० 'तत्पुरुषः' । तत् भीमम० । परेषां मतानि परमतानि 'तत्पुरुषः' । परमतानि च मोहश्च मानश्च परमत० 'इतरेतरद्वन्द्वः' । विस्फुरन्तश्च ते परमतमोहमानाश्च विस्फु० 'कर्मधारयः' । परास्ता विस्फुरत्परमतमोहमाना येन तत् परास्त० 'बहुव्रीहिः' । अथवा मोहात् मानो मोहमानः 'तत्पुरुषः ।' परमतानां मोहमानः परमत० 'तत्पुरुषः' ।

विस्फुरंश्चासौ परमतमोहमानश्च विस्फु० 'कर्मधारयः'। परं अस्तः परास्तः ' तत्पुरुषः '। परास्तो विस्फुरत्परमतमोहमानो येन तत् परास्त० 'बहुव्रीहिः'। (तत् परास्त०)। तनु च तदूनं च तनूनं 'कर्मधारयः'। न तनूनं अतनूनं 'तत्पुरुषः'। तत् अतनूनम्। न हितं अहितं 'तत्पुरुषः'। तत् अहितम्। जिनानां जिनेषु वा पतिः जिनपतिः 'तत्पुरुषः'। जिनपतेर्मतं जिनप० ' तत्पुरुषः '। तत् जिन०। मर्त्याश्च अमराश्च मर्त्यामराः 'इतरेतरद्वन्द्वः'। निर्वृतेः शर्माणि निर्वृतिशर्माणि ' तत्पुरुषः'। मर्त्यामराणां निर्वृतिशर्माणि मर्त्या० 'तत्पुरुषः'। न विद्यते पारो येषां तान्यपाराणि ' बहुव्रीहिः'। अपाराणि च तानि मर्त्यामरनिर्वृतिशर्माणि च अपार० ' कर्मधारयः '। अपारमर्त्यामरनिर्वृतिशर्मणां कारणं अपार० तत्पुरुषः। तदपारमर्त्या०। परमं च तत् तमश्च परम० ' कर्मधारयः '। परमतमो हन्तीति परम० ' तत्पुरुषः '। तत् परम०। यदिवा परमतमा ऊहा यस्मिन् तत् परम० ' बहुव्रीहिः '। तत् परम०। न विद्यते लङ्घनं यस्य सः अलङ्घनः ' बहुव्रीहिः '। अलङ्घनश्चासौ मघवांश्च अलङ्घन० ' कर्मधारयः '। तेनालङ्घन०॥ इति काव्यार्थः॥ ३॥

सि० वृ०—भीमेति। भो भव्यलोकाः! यूयं जिनपतिमतं—तीर्थेशप्रवचनं नूनं—निश्चयेन आनमत—प्रणमतेत्यर्थः। आङ्पूर्वक ' णम प्रह्वीभावे ' धातोः ' आशीःप्रेरणयोः ' ( सा० सू० ७०२ ) कर्तरि परस्मैपदे मध्यमपुरुषबहुवचनम्। अत्र ' आनमत ' इति क्रियापदम्। के कर्तारः?। यूयम्। किं कर्मतापन्नम्?। ' जिनपतिमतं ' जिनपतेर्मतं जिनपतिमतं इति ' तत्पुरुषः '। कथंभूतं जिनपतिमतम्?।' भीममहाभवाब्धिभवभीतिविभेदि ' भीमो—भयङ्करो यो भव एव अब्धिः भवाब्धिः—संसारसागरः तत्र भवा या भीतयो—भियस्तासां विभेदि—भेदनशीलम्। पुनः कथंभूतम्?।' परास्तविस्फुरत्परमतमोहमानम् ' परेषां—बौद्धादीनां मतानि परमतानि, अन्यप्रवचनानीत्यर्थः, मोहो—मिथ्यात्वं मानः—अभिमानः, परमतानि च मोहश्च मानश्च परमतमोहमानाः ' इतरेतरद्वन्द्वः ', परास्ता—दूरीकृताः विस्फुरन्तो—विजृम्भमाणाः परमतमोहमाना येन तत् तथा तत्। पुनः कथंभूतम्?।' अतनूनम् ' तनु च ऊनं च यन्न भवतीति अतनूनम्। पुनः कथंभूतम्?। घनं—निबिडं, प्रमेयगाढमित्यर्थः। कथम्?। अलम्-अत्यर्थम्। पुनः कथंभूतम्?। अहितं—न श्रेयस्कारि। कस्मै?। ' अघवते' अघं—पापं विद्यते यस्य स अघवान् तस्मै। पुनः कथंभूतम्?। ' अपारमर्त्यामरनिर्वृतिशर्मकारणम् ' मर्त्याश्च अमराश्च मर्त्यामराः ' इतरेतरद्वन्द्वः ', अपाराणि—पाररहितानि अमर्यादानीत्यर्थः यानि मर्त्यामराणां निर्वृतेः—निर्वाणस्य शर्माणि—सुखानि तेषां कारणं—हेतुः (तत्), तत्त्वज्ञानद्वारा मुक्तिसुखजनकत्वात्। पुनः कथंभूतम्?। ' परमतमोहं ' परमं—प्रकृष्टं तमो हन्ति यत् तत्। अथवा अतिशयेन परमाः—परमतमाः ऊहा—विचारणा यस्मिन् तत् तथा तत्। पुनः कथंभूतम्?। ईहितं—अभिलषितम्। केन?। 'अलङ्घनमघवता' नास्ति लङ्घनं—अभिभवो यस्य तादृशेन मघवता—इन्द्रेण, सामर्थ्यादच्युतस्वर्गनाथेनेत्यर्थः। अलङ्घनश्चासौ मघवा चेति ' कर्मधारयः '॥ ३॥

सौ० वृ०—भीमेति। भो भव्याः! यूयं जिनपतिमतं–तीर्थकरप्रवचनम् आनमत इत्यन्वयः। 'आनमत' इति क्रियापदम्। के कर्तारः?। 'यूयम्'। 'आनमत' प्रणमत। किं कर्मतापन्नम्?। 'जिनपतिमतम्'। भीमो–रौद्रो [महा–]महान् यो भवाब्धिः–( संसार )समुद्रः तस्माद् भवा–उत्पन्नाः या भीतयो–भयाः तान् भिनत्तीति तद् 'भीममहाभवाब्धिभवभीतिविभेदि'। पुनः किंविशिष्टं जिनपतिमतम्?। परास्ताः–तिरस्कृताः विस्फुरन्तो–दीप्यन्तो–झगझगायमानाः परेषां–कुतीर्थानां मतानि–शासनानि मोहः–अज्ञानं तथा ( यद्वा?) मोहाद्–अज्ञानात् माना–गर्वा येन तत् 'परास्तविस्फुरत्परमतमोहमानम्'। पुनः किंविशिष्टं जिनपतिमतम्?। 'घनं' निबिडम्। कथम्?। 'अलम्' अत्यर्थम्, अप्रमेयप्रमेयमित्यर्थः। पुनः किंविशिष्टं जिनपतिमतम्?। तनु–कृशं ऊनं–न्यूनं तद्द्वयं न इति 'अतनूनम्'। एतावता महत्, सम्पूर्णमित्यर्थः। पुनः किंविशिष्टं जिनपतिमतम्?। अपारा–अनेके मर्त्या–मनुष्याः अमरा–देवाः तेषां निर्वृतिः–मोक्षस्तस्याः शर्माणि–सुखानि तेषां कारणं–हेतुः( तत्) 'अपारमर्त्यामरनिर्वृतिशर्मकारणम्'। किंविशिष्टं जिनपतिमतम्?। परमं–प्रकृष्टं तमः–अज्ञानं तत् प्रति हन्तीति 'परमतमोहम्,' यद्वा परमतमः–उत्कृष्टः ऊहो–वितर्कः यस्मिंस्तत् परमतमोहम्। पुनः किंविशिष्टं जिनपतिमतम्?। 'ईहितं' वाञ्छितम्। केन?। अलङ्घनः–अनुल्लङ्घनीयो मघवा–इन्द्रः तेन 'अलङ्घनमघवता', अच्युतेन्द्रेण ईप्सि(हि)तं–वाञ्छितम्। एवंविधं जिनपतिमतं नूनं–निश्चितं आनमत॥ इति पदार्थः॥

अथ समासः—अपो निधीयन्ते यस्मिन् स अब्धिः, भव एवाब्धिः भवाब्धिः, महांश्चासौ भवाब्धिश्च महाभवाब्धिः, भीमश्चासौ महाभवाब्धिश्च भीममहाभवाब्धिः, भीममहाभवाब्धेर्भवा भीममहाभवाब्धिभवाः, भीममहाब्धिभवाश्च ता भीतयश्च भीममहाभवाब्धिभवभीतयः, विशेषेण भेदितुं शीलमस्यास्तीति विभेदि, भीममहाभवाब्धिभवभीतानां विभेदि, यद्वा भीममहाभवाब्धिभवा भीश्च ईतयश्च भीममहाभवाब्धि(भव)भीतयः इत्यपि। परेषां मतं परमतं, विस्फुरच्च तत् परमतं च विस्फुरत्परमतं, विस्फुरत्परमतस्य मोहः विस्फुरत्परमतमोहः, विस्फुरत्परमतमोहश्च मानश्च विस्फुरत्परमतमोहमानः, परास्तो–ध्वस्तः विस्फुरत्परमतमोहमानो येन तत् परास्तविस्फुरत्परमतमोहमानं तत्। तनु च ऊनं च तनूने, न स्तः तनूने यस्मिन् तद् अतनूनम्। अघं विद्यते यस्यासौ अघवान्, तस्मै अघवते। न हितं अहितं, तद् अहितम्। जिनानां पतिः जिनपतिः, तस्य मतं जिनपतिमतं, तत् जिनपतिमतम्। मर्त्याश्च अमराश्च मर्त्यामराः, अपाराश्च ते मर्त्यामराश्च अपारमर्त्यामराः, अपारमर्त्यामराणां निर्वृतिः अपारमर्त्यामरनिर्वृतिः, अपारमर्त्यामरनिर्वृतेः शर्माणि अपारमर्त्यामरनिर्वृतिशर्माणि, अपारमर्त्यामरनिर्वृतिशर्मणां कारण अपारमर्त्यामरनिर्वृतिशर्मकारणम्। परमं च तत् तमश्च परमतमः, परमतमो हन्तीति परमतमोहं, यद्वा 'अतिशयेन परमाः परमतमाः, परमतमा ऊहा यस्मिन् तत् परमतमोहम्। लङ्घ्यते–उल्लङ्घ्यते इति लङ्घनः, न लङ्घनः अलङ्घनः, अलङ्घनश्चासौ मघवा च अलङ्घनमघवा, तेन अलङ्घनमघवता। इति तृतीयवृत्तार्थः॥ ३॥

दे० व्या०—भीमेति। हे भव्यजनाः! यूयं जिनपतिमतं–प्रवचनं नूनं–निश्चितं आनमत–प्रणमतेत्यन्वयः। 'णम प्रह्वीभावे' धातुः। 'आनमत' इति क्रियापदम्। के कर्तारः?। यूयम्। किं कर्मतापन्नम्?। जिनपतिमतं–तीर्थकरमतम्। किंविशिष्टं जिनपतिमतम्?। 'भीममहाभवाब्धिभवभीतिविभेदि' भीमः–भयोत्पादकोऽत्र इतियावद् यो महाभवाब्धिः–प्रकृष्टसंसारसमुद्रः तस्मिन् भवा–उत्पन्ना या भीतिः–साध्वसं तस्या विभेदि–भेदनशीलम्। पुनः किंविशिष्टम्?। 'परास्तविस्फुरत्परमतमोहमानं' विस्फुरन्तश्च ते परमतमोहमानाश्चेति पूर्वं 'कर्मधारयः', परमतं–बौद्धादिशासनं मोहः–अज्ञानं मानः–स्मयः एतेषां पूर्वं 'द्वन्द्वः', ततः परास्ता–विध्वस्ताः(विस्फुरत्)परमतमोहमाना येन तत्। पुनः किंविशिष्टम्?। 'अतनूनं' तनु–स्वल्पं ऊनं–अपूर्णं, अथविवक्षया ताभ्यां रहितम्। पुनः किंविशिष्टम्?। अलङ्घनं–केनाप्यनातिक्रमणीयम्। पुनः किंविशिष्टम्?। अहितं–

अपथ्यम् । कस्मै ? । 'अघवते' अघं-पापं विद्यते यस्यासौ अघवान् तस्मै । पुनः किंविशिष्टम् ? । 'अपारमर्त्यामरनिर्वृतिशर्मकारणं' मर्त्याश्च ते अमराश्चेति पूर्वं 'द्वन्द्वः', निर्वृतेः शर्माणि निर्वृतिशर्माणि इति 'षष्ठीतत्पुरुषः', ततः अपाराणि च तानि मर्त्यामरनिर्वृतिशर्माणि चेति 'कर्मधारयः,' तेषां कारणं-हेतुभूतम्, तत्त्वज्ञानद्वारा मुक्तिसुखजनकत्वात् । पुनः किंविशिष्टम् ? । 'परमतमोहं' परमं-प्रकृष्टं यत् तमः-अज्ञानं तस्य हन्तृ-नाशकम् । यद्वा परमतमा-अत्युत्कृष्टा ऊहाः-तर्काः यत्र तत् । पुनः किंविशिष्टम् ? । 'अलङ्घ्यघनमघवनेहितं' अलङ्घ्यघनः-अनतिक्रमणीयो यो मघवा-इन्द्रः तेन ईहितं-वाञ्छितम् ॥ इति तृतीयवृत्तार्थः ॥३॥



श्रीचक्रधरायाः स्तुतिः—

याऽत्र विचित्रवर्णविनतात्मजपृष्ठमधिष्ठिता हुतात्-
समतनुभागविकृतधीरसमदवैरिव धामहारिभिः ।
तडिदिव भाति सान्ध्यघनमूर्धनि चक्रधराऽस्तु मुदे-
ऽसमतनुभा गवि कृतधीरसमदवैरिवधा महारिभिः ॥ ४ ॥

—द्विपदी

ज० वि०—याऽत्रेति । सा चक्रधरा-अप्रतिचक्रा देवी मुदे-प्रीत्यै अस्तु-भवतु इति क्रियाकारकसम्बन्धः । अत्र 'अस्तु' इति क्रियापदम् । का कर्त्री ? 'चक्रधरा' । कस्यै ? 'मुदे' । सेति तच्छब्दसाहचर्याद् यच्छब्दयोजनामाह—या चक्रधरा अत्र-अस्मिञ्जगति भाति-शोभते । अत्रापि 'भाति' इति क्रियापदम् । का कर्त्री ? 'या' । कुत्र ? 'अत्र' । या कथंभूता ? 'अधिष्ठिता' अधिरूढा । किं कर्मतापन्नम् ? 'विचित्रवर्णविनतात्मजपृष्ठं' विचित्रवर्णो-नानाविधवर्णसहितः, "आजानु कनकगौरम् आनाभेः शङ्खकुन्दहरधवलम्, आकण्ठतो नवदिवाकरकान्तितुल्यम्, आमूर्धतोऽञ्जननिभं गरुडस्वरूपम्" इतिस्वरूपो यो विनतात्मजो-गरुत्मान् तस्य पृष्ठं-गात्रापरिभागम् । पुनः कथं० ? 'हुतात्समतनुभाक्' हुतं अत्तीति हुतात्-वह्निस्तेन समां-तुल्यां मूर्तिं भजन्तीति हुतात्समतनुभाक् । कस्मिन् केव भाति ? 'सान्ध्यघनमूर्ध्नि' सान्ध्यः-सन्ध्यासम्बन्धी यो घनः-मेघः स च विचित्रवर्णो भवति तस्य मूर्धनि-शिरसि 'तडिदिव' विद्युदिव । अत्र चक्रधरा तडित्स्थानीया, गरुडो घनस्थानीय इति ज्ञेयम् । पुनः कथंभूता चक्रधरा ? 'अविकृतधीः' अविकृता-न विकारं प्राप्ता धीः-बुद्धिर्यस्याः सा तथा । पुनः कथं० ? 'असमतनुभा' समा-सामान्या तनुः-कृशा, न समतनुः असमतनुः, असाधारणमहतीत्यर्थः, एतादृशी भा-कान्तिर्यस्याः सा तथा । कस्याम् ? 'गवि' पृथिव्यां स्वर्गे वा । पुनः कथं० ? 'कृतधीरसमदवैरिवधा' कृतः-विहितः धीराणां-शूराणां समदानां-मदान्वितानां वैरिणां-रिपूणां वधः-विनाशो यया सा तथा । कैः कृत्वा ? ('महारिभिः'[1]) महद्भिः-बृहद्भिररिभिः-चक्रैः ।

[1] अयं पाठः श्रीसौभाग्यसागरकृतवृत्त्यामेव ।

कथंभूतैः ? ' धामहारिभिः ' धामभिः–तेजोभिः हारिभिः–कान्तैः । कैरिव ? ' असमदवैरिव ' असमैः–असदृशैः दवैः–वनवह्निभिरिव ॥

अथ समासः—विचित्रो वर्णो यस्य स विचित्र० 'बहुव्रीहिः'। विनतायाश्चात्मजो विनतात्मजः ' तत्पुरुषः ' । विचित्रवर्णश्चासौ विनतात्मजश्च विचित्र० ' कर्मधारयः ' । विचित्रवर्णविनतात्मजस्य पृष्ठं विचित्र० 'तत्पुरुषः'। (तद् विचित्र०)। हुतमत्तीति हुतात् 'तत्पुरुषः'। हुतादः समा हुतात्समा ' तत्पुरुषः ' । हुतात्समा चासौ तनुश्च हुता० ' कर्मधारयः ' । हुतात्समतनुं भजत इति हुता० ' तत्पुरुषः ' । न विकृता अविकृता ' तत्पुरुषः ' । अविकृता धीर्यस्याः सा अविकृतधीः ' बहुव्रीहिः ' । ( न समा असमाः 'तत्पुरुषः' ) । असमाश्च ते दवाश्च असम० ' कर्मधारयः ' । तैरसम० । धामभिर्हारीणि धाम० ' तत्पुरुषः ' । तैर्धाम० । सन्ध्यायां भवः सान्ध्यः (' तत्पुरुषः ') । सान्ध्यश्चासौ घनश्च सान्ध्यघनः ' कर्मधारयः ' । सान्ध्यघनस्य मूर्धा सान्ध्य० ' तत्पुरुषः ' । असमतनुः भा यस्याः सा असम० ' बहुव्रीहिः ' । धीराश्च ते समदाश्च धीरसमदाः ' कर्मधारयः ' । धीरसमदाश्च ते वैरिणश्च धीर० ' कर्मधारयः ' । धीरसमदवैरिणां वधो धीर० ' तत्पुरुषः ' । कृतो धीरसमदवैरिवधो यया सा कृतधीर० ( 'बहुव्रीहिः' ) । महान्ति च तान्यरीणि च महारीणि ' कर्मधारयः ' । तैर्महारिभिः ॥ इति काव्यार्थः ॥ ४ ॥

इति श्रीमद्वृद्धपण्डितश्रीदेवविजयगणिशिष्यपं०जयविजयगणिविरचितायां श्रीशोभनस्तुतिवृत्तौ श्रीअरजिनस्य स्तुतेर्व्याख्या ॥ १८ ॥

सि० वृ०—याऽत्रेति । सा ' चक्रधरा ' धरतीति धरा चक्रस्य धरा (?) अप्रतिचक्रा देवी मुदे–प्रीत्यै अस्तु–भवत्वित्यर्थः ' अस् भुवि ' धातोः ' आशीःप्रेरणयोः ' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप् । ' अप्० ' ( सा० सू० ६९१), ' अदादेः ' (सा० सू० ८८०) इति लुक् । अत्र ' अस्तु ' इति क्रियापदम् । का कर्त्री ? । चक्रधरा । कस्यै ? । मुदे । सेति तच्छब्दस्य यच्छब्दसाहचर्यात् सा का ? । या चक्रधरा अत्र–अस्मिन् जगति भाति–शोभते इत्यर्थः । ' भा दीप्तौ ' इति धातोः वर्तमाने कर्तरि परस्मैपदे प्रथमपुरुषैकवचनम् । अत्र ' भाति ' इति क्रियापदम् । का कर्त्री ? । या । कुत्र ? । अत्र । कथंभूता ? । अधिष्ठिता–आरूढा । किम् ? । ' विचित्रवर्णविनतात्मजपृष्ठम् ' विचित्रा वर्णा यस्मिन् स विचित्रवर्णः, कर्बुर इत्यर्थः । " आजानु कनकगौरम्, आनाभेः शङ्खकुन्दहरधवलम्, आकण्ठतो नवदिवाकरकान्तितुल्यम्, आमूर्धतोऽञ्जननिभं गरुडस्वरूपम् " इतिस्वरूपो यो विनतात्मजो–यो गरुडः तस्य पृष्ठं–पश्चाद्भागस्तत् । " पृष्ठं तु चरमं तनोः " इति हैमः ( का० ३, श्लो० २६९ ) । पुनः कथंभूता ? । ' हुतात्समतनुभाक् ' हुतं–होतव्यद्रव्यं अत्ति–भक्षतीति हुताद्–वन्हिः तेन समां–तुल्यां तनुं–मूर्तिं भजतीति हुतात्समतनुभाक् । कस्मिन् केव भातीति योज्यम् । सन्ध्यायां भवः सान्ध्यः, सन्ध्यासम्बन्धीत्यर्थः, यो घनः–

मेघः स च विचित्रवर्णो भवति तस्य मूर्ध्नि—मस्तके, आधारे सप्तमी, तडिदिव—विद्युदिव। यथा सान्ध्यघनशिरसि तडिद् भाति तथा देवी गरुडपृष्ठस्थिता शोभत इति भावः। पुनः कथंभूता चक्रधरा ?। 'अविकृतधीः' अविकृता—न विकारं प्राप्ता धीः—बुद्धिर्यस्याः सा। पुनः कथंभूता ?। 'असमतनुभा' समा—सामान्या तनुः—कृशा, समा चासौ तनुश्चेति 'कर्मधारयः', न समतनुरसमतनुरिति 'तत्पुरुषः', असाधारणमहतीत्यर्थः, एतादृशी भा—कान्तिर्यस्याः सा तथा। कस्याम् ?। गवि—पृथिव्यां स्वर्गे वा।

" गौः स्वर्गे वृषभे रश्मौ, वज्रे शीतकरे पुमान्।
अर्जुनीनेत्रदिग्बाण-भूवाग्वादिषु योषिति॥ "

इति मेदिनी। पुनः कथंभूता ?। 'कृतधीरसमदवैरिवधा' कृतो—विहितो धीराणां—सुराणां धैर्यवतां समदानां—मदसहितानां वैरिणां—रिपूणां वधो—विनाशो यया सा तथा। धीराश्च ते समदाश्च धीरसमदा इति 'कर्मधारयः'। कैः कृत्वा ?। 'महारिभिः' महान्ति च तानि अरीणि—चक्राणि च महारीणि तैः, बृहद्भिश्चक्रैरित्यर्थः। "रथाङ्गं रथपादोऽरि, चक्रं धारा पुनः प्रधिः" इति हैमः ( का० ३, श्लो० ४१९ )। कथंभूतैः ?। 'धामहारिभिः' धाम्ना—तेजसा हारीणि—मनोज्ञानि तैः। कैरिव ?। 'असमदवैरिव' असमैः—असदृशैः दवैः—वनवह्निभिरिवेत्युत्प्रेक्षा। अत्राभेदे रूपकम्। "दवदावौ वनवह्नौ" इत्यमरे हैमे ( का० ४, श्लो० १६७ ) च। न च समदवैः इत्यत्र समासे विभक्तिलोपः शंक्यः "इवेन नित्यं समासो विभक्त्यलोपश्च" इति वार्तिकात्। अत्रार्थे "वागर्थाविव संपृक्तौ, वागर्थप्रतिपत्तये" ( स० १, श्लो० १) इति रघुरेवोदाहरणं द्रष्टव्यम्॥ ४॥

॥ इति महोपाध्याय० श्रीअरजिनस्तुतेर्वृत्तिः॥ १८॥

सौ० वृ०—याऽत्रेति। सा (चक्रधरा-) अप्रतिचक्रा देवी मुदे-प्रीत्यै अस्तु इत्यन्वयः। 'अस्तु' इति क्रियापदम्। का कर्त्री ?। 'सा'। अस्तु' भवतु। कस्यै ?। 'मुदे'। किंविशिष्टा सा ?। चक्रं-नेमिं धरतीति 'चक्रधरा'। तच्छब्दो यच्छब्दमपेक्षते। सा का ?। या देवी अत्र-जगति भाति इत्यन्वयः। 'भाति' इति क्रियापदम्। का कर्त्री ?। 'सा'। 'भाति' शोभते। कुत्र ?। 'अत्र' [जगति]। किंविशिष्टा या देवी ?। 'अधिष्ठिता' आश्रिता। किं कर्मतापन्नम् ?। विचित्रो-विविधप्रकारो वर्णो यस्य सः तादृशो यो विनतात्मजो-गरुडः तस्य पृष्ठं-मध्यभागः तत् 'विचित्रवर्णविनतात्मजपृष्ठं', गरुडवाहनेत्यर्थः। "आजानु कनकगौरम्, आनाभेः शङ्खकुन्दहरधवलं" तथा "आकण्ठतो नवदिवाकरकान्तितुल्यम्, आमूर्धतोऽञ्जननिभं गरुडस्वरूपम्" इतिवचनात्। तथा-

" दितिर्माता च दैत्यानां, देवानामदितिस्तथा।
विनता पक्षिणां माता, कद्रुः पन्नगमातरि॥"

इति मातृ-प्रकरणे। अतो विनतात्मजो-गरुडः। पुनः किंविशिष्टा या ?। समा- सदृशी तनुः-शरीरं भजतीति समतनुभाक्। कस्मात् ?। 'हुतात्' हुतं अत्तीति हुताद्-वन्हिः तत्समानेत्यर्थः। पुनः किंविशिष्टा या ?। अविकृता—अविकारिणी धीः-बुद्धिर्यस्याः सा 'अविकृतधीः'। पुनः किंविशिष्टा या ?। असमा-अनन्यसदृशी तनुः-शरीरं तस्या भा-कान्तिर्यस्याः सा 'असमतनुभा'।

१ अशुद्धं स्थलमिदम्।

पुनः किंविशिष्टा या ? । कृतो-विहितो धीराः-युद्धे विकटाः मदेन सहिताः समदाः तादृशा ये वैरिणः-शत्रवः तेषां वधो-हननं यया सा 'कृतधीरसमदवैरिवधा'। कैः कृत्वा ? । महान्ति अरीणि-चक्राणि महारीणि तैः 'महारिभिः', महच्चक्रैरित्यर्थः । किंविशिष्टैर्महारिभिः ?। धाम-तेजः तेन हारिभिः-मनोहरैः 'धामहारिभिः'। दिवि का इव भाति !। 'तडिद् (इव)' विद्युदिव भाति इव-यथा तद्वत् । सान्ध्यसमयोत्पन्नो यो घनो-मेघः तस्य मूर्धा-मस्तकं तस्मिन् सान्ध्यघनमूर्धनि यथा भाति इत्यन्वयः । 'भाति' इति क्रियापदम् । का कर्त्री ? । 'तडित्' । 'भाति' शोभते । कस्मिन् ? । 'सान्ध्यघनमूर्धनि' । कैः कृत्वा ? । 'धाम[हारि]भिः' किरणैः । धाम[हारि]भिः कैरिव ?। असमा-असदृशाः दवा-वनवह्नयः असमदवाः, तैः 'असमदवैः'। अत्र तडित्स्थानीया देवी, सान्ध्यघनस्थानीयो गरुडः, धामस्थानीयं चक्रं, तद्वद् देवी भाति । कस्याम् ? । 'गवि' स्वर्गे पृथिव्यां वा । एतादृशी देवी प्रीत्यै अस्तु । इति पदार्थः ॥

अथ समासः—विचित्रा वर्णा यस्मिन् स विचित्रवर्णः, विनतायाः आत्मजो विनतात्मजः, विचित्रवर्णश्चासौ विनतात्मजश्च विचित्रवर्णविनतात्मजः, विचित्रवर्णविनतात्मजस्य पृष्ठं विचित्रवर्णविनतात्मजपृष्ठं, तत् विचित्रवर्णविनतात्मजपृष्ठम् । समा च सा तनुश्च समतनुः, हुतात्समतनुः हुतात्समतनुः, हुतात्समतनुं भजतीति हुतात्समतनुभाक् । न अविकृता अविकृता, अविकृता धीर्यस्याः सा अविकृतधीः । न समा असमाः, असमाश्च ते दवाश्च असमदवाः, तैरसमदवैः । धामभिः हरन्तीत्येवंशीलानि धामहारीणि, तैः धामहारिभिः । सन्ध्यायां भवः सान्ध्यः, सान्ध्यश्चासौ घनश्च सान्ध्यघनः, सान्ध्यघनस्य मूर्धा सान्ध्यघनमूर्धा, तस्मिन् सान्ध्यघनमूर्धनि । चक्रं धरतीति चक्रधरा । असमाना (तनोः-) शरीरस्य भा-कान्तिर्यस्याः सा असमतनुभा । मदेन सहिताः समदाः, धीराश्च ते समदाश्च धीरसमदाः, धीरसमदाश्च ते वैरिणश्च धीरसमदवैरिणः, कृतो धीरसमदवैरिणां वधो यया सा कृतधीरसमदवैरिवधा । महान्ति च तानि अरीणि (च) [ विद्यन्ते येषु तानि ] महारीणि, तैः—महारिभिः । गवीति पदस्यार्थः—

"गौर्वज्रे सुवृषे धेनौ, वाचि दिग्बाणयोर्गिरि ।
भूमयूखसुखस्वर्गा—सत्यवन्ह्यक्षिमातृषु ॥"

इति महीपकोषः । इति चतुर्थवृत्तार्थः ॥ ४ ॥

अरनाथजिनेन्द्रस्य, स्तुतेरर्थो लिवीकृतः ।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना ॥ १ ॥

॥ इति श्रीअरनाथस्तुतिः सम्पूर्णा ॥ ४ । १८ । ७२ ॥

दे० व्या०—याऽत्रेति । सा चक्रधरा देवी मुदे अस्तु-भवतु इत्यन्वयः । 'अस् भुवि' धातुः । 'अस्तु' इति क्रियापदम् । का कर्त्री ? । चक्रधरा देवी । कस्यै ? । मुदे-हर्षाय । "मुत्प्रीत्यामोदसंमो(म)दाः" इत्यभिधानचिन्तामणिः (का० २, श्लो० २३०) । किंविशिष्टा देवी ? । 'हुतात्समतनुभाक्' हुतं-होमद्रव्यं अत्ति-भक्षयतीति हुताद्-वह्निः तेन समा-सदृशां तनुं भजतीति हुतात्समतनुभाक् । पुनः किंविशिष्टा ?' 'अविकृतधीः' अविकृता-अविकारिणी धीः- बुद्धिः यस्याः सा तथा । पुनः किंविशिष्टा ?। 'असमतनुभा' चिन्त्यं (?) पदम् । पुनः किंविशिष्टा ? । 'कृतधीरसमदवैरिवधा' धीराः-धैर्यवन्तः समदा-मदेन सह वर्तमानाः, धीराश्च ते मदाश्चेति 'द्वन्द्वः', ततः कृतः-सम्पादितो धीरसमदवैरिणां वधो-विनाशो यया सा तथा । कस्याम् ? । 'गवि' गौः-पृथ्वी तस्याम् । "गौर्गोत्रा भूतधात्री क्ष्मा" इत्यभिधानचिन्तामणिः ( का० ४, श्लो० १ ) । यत्तदोर्नित्याभिसम्बन्धात् या चक्रधरा देवी अत्र-जगति महारिभिः-महच्चक्रैः भाति-शोभते । 'भा दीप्तौ' धातुः । 'भाति' इति क्रियापदम् । का कर्त्री ? । चक्रधरा देवी । कैः ? महारिभिः । "रथाङ्गं रथपादोऽरि

१ इदमप्यशुद्धम् ।

चक्रं धारा पुनः प्रधिः " इत्यभिधानचिन्तामणिः ( का० ३, श्लो० ४१९ )। किंविशिष्टा देवी ?। अधिष्ठिता-अध्यारूढा। किम् ?। 'विचित्रवर्णविनतात्मजपृष्ठं' विचित्रवर्णो यो विनतात्मजो-गरुडः तस्य पृष्ठं-पृष्ठप्रदेशम्। विचित्रः-कर्बुरो वर्णो यस्येति 'बहुव्रीहिः'। "कर्बुरश्चित्रला (लः)" इति पारस्करः। केव ?। 'तडिदिव'। कस्मिन् ?। 'सान्ध्यघनमूर्ध्नि' सान्ध्यः-सन्ध्यायां भवो यो घनो-मेघः तस्य मूर्ध्नि-मस्तके। आधारे सप्तमी। यथा सान्ध्यघनशिरःस्थिता तडिद् भाति, तथा देवी गरुडपृष्ठारूढा चक्रैः शोभते इत्याशयः। किंविशिष्टैः महारिभिः ?। 'असमदवैरिव धामहारिभिः' असमा-अनन्यसदृशा ये दवाः-वनवह्नयः तैरिव धाम्ना-तेजसा हारिभिः-कान्तैः। "दवो दावो वनवह्निः" इत्यभिधानचिन्तामणिः ( का० ४, श्लो० १६७ )। न चात्र विभक्तिलोपः शङ्कनीयः " इवेन सह नित्यं समासो विभक्त्यलोपश्च " इति वार्तिकात् ॥ इति तुर्यवृत्तार्थः ॥ ४ ॥



# १९ श्रीमल्लिजिनस्तुतयः

**अथ श्रीमल्लिनाथस्य स्तुतिः—**

नुदंस्तनुं प्रवितर मल्लिनाथ ! मे
प्रियङ्गुरोचिररुचिरोचितां वरम् ।
विडम्बयन् वररुचिमण्डलोज्ज्वलः
प्रियं गुरोऽचिररुचिरोचिताम्बरम् ॥ १ ॥

—रुचिरा ( ४, ९ )

ज० वि०—नुदंस्तनुमिति । हे मल्लिनाथ !—मल्लिप्रभो ! हे गुरो !—महात्मन् ! त्वं मे—मम वरं—प्रार्थितार्थम्, अत्र बवयोरैक्यं तु यमकवशात् ज्ञेयम्, प्रवितर—देहि इति क्रियाकारकसम्बन्धः । अत्र ' प्रवितर ' इति क्रियापदम् । कः कर्ता ? ' त्वम् ' । कं कर्मतापन्नम् ? 'वरम्'। त्वं किं कुर्वन् ? ' नुदन् ' प्रेरयन् क्षिपन् । कां कर्मतापन्नाम् ? 'तनुं' शरीरम् । कथंभूतां तनुम् ? ' अरुचिरोचितां ' रुचिरा—मनोहरा उचिता—योग्या, एतादृशी न भवतीत्यरुचिरोचिता ताम् । पुनः किं कुर्वन् ? ' विडम्बयन् ' अवहेलयन् । किं कर्मतापन्नम् ? अचिररुचिरोचिताम्बरम् ' अचिररुच्या—विद्युता रोचितं—उद्भासितं यदम्बरं—नभस्तत् । कथंभूतः सन् ? वरं—प्रधानं यद् रुचिमण्डलं—प्रभामण्डलं तेनोज्ज्वलः—कान्तः सन् । त्वं कथंभूतः ? ' प्रियङ्गुरोचिः ' प्रियङ्गुः—वृक्षविशेषः तद्वद् रुचिः—द्युतिर्यस्य स तथा, नीलद्युतिरित्यर्थः । वरं कथंभूतम् ? ' प्रियं ' प्रीतिकरम् । इदं च विशेषणं अम्बरस्यापि घटते ॥

अथ समासः—मल्लिश्चासौ नाथश्च मल्लिनाथः ' कर्मधारयः ' । तत्सम्बो० हे मल्लि० । प्रियङ्गुवद् रोचिर्यस्य स प्रियङ्गु० ' बहुव्रीहिः ' । रुचिरा चासौ उचिता च रुचिरोचिता ' कर्मधारयः ' । न रुचिरोचिता अरुचिरोचिता ' तत्पुरुषः ' । तां अरुचि० । रुचीनां मण्डलं रुचि० ' तत्पुरुषः ' । वरं च तद् रुचिमण्डलं च वररुचि० ' कर्मधारयः ' । वररुचिमण्डलेनोज्ज्वलो वररुचि० ' तत्पुरुषः ' । न चिरं(रा) अचिरं(रा) ' तत्पुरुषः ' । अचिरं(रा) रुचिर्यस्याः सा अचिर० ' बहुव्रीहिः ' । अचिररुच्या रोचितं अचिर० ' तत्पुरुषः ' । अचिररुचिरोचितं च तदम्बरं च अचिर० ' कर्मधारयः ' । तदचिर० ॥ इति काव्यार्थः ॥ १ ॥

सि० वृ०—नुदंस्तनुमिति । परीषहादिमल्लजयात् मल्लिः । निरुक्तात् गर्भस्थेऽस्मिन् मातुः सर्वर्तुकुसुममाल्यशयनीयदोहदो देवतयाऽपूरीति वा मल्लिः । स चासौ नाथश्च मल्लिनाथः तस्य संबोधनं हे मल्लिनाथ ! । हे ' गुरो ! ' गृणाति धर्मोपदेशं यथार्थोपदेष्टा वा गुरुः तस्य संबोधनं हे गुरो ! । [ गृणाति हिताहितत्वं इति

१ ' प्रवितनु ' इत्यपि पाठः ।

गुरुः तस्य सं० हे गुरो !—हे धर्मोपदेशक ] !'गॄ शब्दे' 'कृग्रोरुच'( उणा० सू० २४ ) इति उप्रत्ययः। ऋकारस्य च उकारः 'उरणरपरः' (पा० अ० १, पा० १, सू० ५१ )। त्वं मे—मम वरं—समीहितं प्रवितर—प्रदेहीत्यर्थः। प्रविपूर्वक 'तॄ प्लवनतरणयोः' इति धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनम्। अत्र 'प्रवितर' इति क्रियापदम्। कः कर्ता?। त्वम्। किं कर्मतापन्नम्?। वरम्।'वृङ् वरणे' अप्रत्यये वरो देवेभ्यः, स्वसमीहितप्रार्थनमित्यर्थः। यदाह—"तपोभिरिष्यते यत् तु, देवेभ्यः स वरो मतः" इति कात्यः। वरमिति मान्तमव्ययमित्येके।

"वरो जामातरि वृतौ, देवतादेरभीप्सिते।
षिड्गे पुंसि त्रिषु श्रेष्ठे, कुङ्कुमे तु नपुंसकम् ॥ १ ॥
वरी प्रोक्ता शतावर्यां, वरा च स्यात् फलत्रिके।
मनागिष्टे वरं क्लीबं, केचिदाहुस्तदव्ययम् ॥ २ ॥"

इति रायमुकुटाख्यायाममरटीकायाम्। कथंभूतं वरम्?। प्रियं—वल्लभम्, प्रीतिकरमित्यर्थः। इदं अम्बरस्यापि विशेषणं घटते। त्वं किं कुर्वन्?। नुदन्—क्षिपन्। काम्?। तनुं—देहम्। "त्वग्देहयोरपि तनुः" इत्यमरः(?)। कथंभूतां तनुम्?। 'अरुचिरोचिताम्' रुचिरा—मनोहरा उचिता—योग्या, रुचिरा चासौ उचिता च रुचिरोचिता इति 'कर्मधारयः', एतादृशी न भवतीत्यरुचिरोचिता तां, लघुकर्मणा स्तोककालेनैव मुक्तिगमनेन तत्त्यागसम्भवाद् बहुलकर्मणामेव तत्सम्भवेनारुचिरोचितत्वमिति भावः। पुनः किं कुर्वन्?। 'विडम्बयन्' विडम्बयतीति विडम्बयन्—अवहेलयन्। किं कर्मतापन्नम्?। 'अचिररुचिरोचिताम्बरम्' अचिररुच्या—तडिता रोचितं—उद्भासितं यदम्बरं—नभः तत्। "अम्बरं व्योम्नि वाससि" इत्यमरः (?)। किंविशिष्टः त्वम्?। 'वररुचिमण्डलोज्ज्वलः' सन् वरः—प्रधानो यो रुचिमण्डलो—भामण्डलस्तेन उज्ज्वलः—अवदातः सन्। त्वं कथंभूतः?। 'प्रियङ्गुरोचिः' प्रियङ्गुः—फलिनी तद्वद् रोचिः—कान्तिः यस्य सः, नीलद्युतिरित्यर्थः। यदाहुः ( अभि० का० १, श्लो० ४९ )—

"रक्तौ च पद्मप्रभवासुपूज्यौ
शुक्लौ च चन्द्रप्रभपुष्पदन्तौ।
कृष्णौ पुनर्नेमिमुनी विनीलौ
श्रीमल्लिपार्श्वौ कनकत्विषोऽन्ये ॥"—इन्द्रवज्रा

इति श्रीहेमसूरिणः। "प्रियङ्गुः फलिनीकङ्गुपिप्पलीराजिकासु च" इति विश्वः। अत्र भामण्डलविद्युतोः भगवत्तनुव्योम्नोश्च साधर्म्यादुपमानोपमेयभावः प्रदर्शितः ॥ १ ॥

**सौ० वृ०—यो भवाम्भोधेररं-तटं प्राप्तः स कामादिषडन्तररिपूणां विजये मल्ल इव मल्लः तथा गर्भस्थे भगवति मातुर्मल्लिकामालादोहदोत्पन्नत्वेन नाम्ना मल्ली (?)। अनेन सम्बन्धेनायातस्य मल्लिजिनस्य स्तुतेर्व्याख्यानं लिख्यते नुदंस्तनुरिति।**

हे मल्लिनाथ !-हे मल्लिस्वामिन् ! हे गुरो !-महन् ! मे-मम मह्यं वा त्वं वरं-मनोऽभिलषितं प्रवितर इत्यन्वयः। 'प्रवितर' इति क्रियापदम्। कः कर्ता ?। 'त्वम्'। 'प्रवितर' ददस्व। कं कर्मतापन्नम् ?। 'वरं' इत्यत्र बवयोरैक्यं यमकत्वात्। 'प्रवितनु' इत्यपि पाठः। 'प्रवितनु' विस्तारय। त्वं किं कुर्वन् ?। 'नुदन्' पीडयन्। कां कर्मतापन्नाम् ?। 'तनुम्'। ( किंविशिष्टाम् ?। ) रुचिरा-मनोज्ञा उचिता-योग्या तद्द्वयं नास्ति सा अरुचिरोचिता, तां 'अरुचिरोचिताम्'। किंविशिष्टं वरम् ?। 'प्रियं' इष्टम्। पुनस्त्वं किं कुर्वन् ?। 'विडम्बयन्' तिरस्कुर्वन्। किं कर्मतापन्नम् ?। अचिररुचिः-विद्युत् [ तस्या रोचिः-त्विट् कान्तिः ते-तव ] ( तया रोचितं ) अम्बरं-आकाशं 'अचिररुचिरोचिताम्बरम्'। पुनः त्वं किंविशिष्टः ?। वरं-प्रधानं यद् रुचिमण्डलं-प्रभामण्डलं तेन तद्वद् वा उज्ज्वलो-निर्मलः-कान्तः 'वररुचिमण्डलोज्ज्वलः'। पुनः किंविशिष्टस्त्वम् ?। प्रियङ्गुः-वृक्षविशेषः फलिनीनामा तद्वद् रोचिः-कान्तिर्यस्य स 'प्रियङ्गुरोचिः', नीलवर्ण इत्यर्थः। एतादृशो मल्लिर्मम प्रियं वरं वितर। इति पदार्थः ॥

अथ समासः—नुदतीति नुदन्। मल्लिश्चासौ नाथश्च मल्लिनाथः, तस्य सं० हे मल्लिनाथ !। प्रियङ्गुवद् रोचिर्यस्य स प्रियङ्गुरोचिः। रुचिरा च उचिता च रुचिरोचिते, न विद्येते रुचिरोचिते यस्याः सा अरुचिरोचिता, तां अरुचिरोचिताम्। विडम्बयतीति विडम्बयन्। रुचेर्मण्डलं रुचिमण्डलं, वरं च तद् रुचिमण्डलं च वररुचिमण्डलं, वररुचिमण्डलेन उज्ज्वलः वररुचिमण्डलोज्ज्वलः। न विद्यते चिरा-चिरकालस्थायिनी रो(रु)चिर्यस्याः सा अचिररो(रु)चिः, अचिररोचिषा( रुच्या ) रोचितं अचिर(रु)चिरोचितं, अचिररो(रु)चिरोचितं च तद् अम्बरं च अचिररुचिरोचिताम्बरम्। इति प्रथमवृत्तार्थः ॥ १ ॥ इन्द्रवज्रोपजात्युपजातिवंशस्थच्छन्दसा स्तुतिरियम् ॥

दे० व्या०—नुदन्निति। हे मल्लिनाथ ! त्वं मे-मम वरं प्रवितर-दद्याद् इत्यन्वयः। 'तॄ प्लवनतरणयोः' इति धातुः। 'प्रवितर' इति क्रियापदम्। कः कर्ता ?। त्वम्। कं कर्मतापन्नम् ?। वरं-वाञ्छितम्। बवयोरैक्याद् वकारस्थाने बकारग्रहणम्[1]। 'गुरो !' इति। गृणाति धर्मं इति गुरुः तस्यामन्त्रणम्। "गुरुर्ज्ञानो-(धर्मो)पदेशकः" इत्यभिधानचिन्तामणिः ( का० १, श्लो० ७७ )। "हिताहितप्राप्तिपरिहारोपदेष्टा गुरुः" इति नैयायिकाः। किंविशिष्टं वरम् ?। प्रियं-वल्लभम्। त्वं किं कुर्वन् ?। नुदन्-परिक्षिपन्। काम् ?। तनुं-शरीरम्। किंविशिष्टां तनुम् ?। 'अरुचिरोचितां' अरुचिरा-बहुलकर्माणः तेषां उचिता-योग्या या सा ताम्, लघुकर्माणां स्तोककालेनैव मुक्तिगमनेन तत्त्यागात्[2]। पुनः किं कुर्वन् ?। विडम्बयन्-हसन्। किम् ?। 'अचिररुचिरोचिताम्बरं' अचिररुचिः-विद्युत् तया रोचितं-उद्भासितं यद् अम्बरं-आकाशं तत्। किंविशिष्टस्त्वम् ?। 'वररुचिमण्डलोज्ज्वलः' वरः-प्रधानो यो रुचिमण्डलो-भामण्डलः तेन उज्ज्वलः-अवदातः। पुनः किंविशिष्टः ?। 'प्रियङ्गुरोचिः' प्रियङ्गुः-वृक्षभेदः तद्वत् रोचिः-कान्तिर्यस्य स तथा। "प्रियङ्गुः फलिनी श्यामा" इत्यभिधानचिन्तामणिः ( का० ४, श्लो० २१५ )। इति प्रथमवृत्तार्थः ॥ १ ॥



१ इदं चिन्त्यम्। २ इदमपि चिन्त्यम्।

जिनपतीना स्तुतिः—

जवाद् गतं जगदवतो वपुर्व्यथा–
कदम्बकैरवशतपत्रसं पदम् ।
जिनोत्तमान् स्तुत दधतः स्रजं स्फुरत्–
कदम्बकैरवशतपत्रसम्पदम् ॥ २ ॥
—रुचिरा

ज० वि०—जवादिति । भो भव्याः ! यूयं जिनोत्तमान्—जिनवरान् स्तुत—प्रणमतेति क्रिया-कारकसंयोजनम् । अत्र ‘ स्तुत ’ इति क्रियापदम् । के कर्तारः ? ‘ यूयम् ’ । कान् कर्मतापन्नान् ? ‘ जिनोत्तमान् ’ । किं कुर्वतो जिनोत्तमान् ? ‘ अवतः ’ रक्षतः । किं कर्मतापन्नम् ? ‘ जगत् ’ विश्वम् । कस्मात् ? ‘ जवात् ’ वेगात् । कथंभूतं जगत् ? ‘ गतं ’ यातम् । किं कर्मतापन्नम् ? ‘ पदं ’ स्थानम् । पदं कथंभूतम् ? ‘ अवशतपत्रसम् ’ अवशाः—परवशाः तपन्तः—तापमनुभवन्तः त्रसाः—सत्त्वा यस्मिन् तथा । कैः कृत्वा ? ‘ वपुर्व्यथाकदम्बकैः ’ वपुःपीडोत्पीडैः । नरकादिगतं जगदवत इति समुदायार्थः । पुनः किं कुर्वतः ? ‘ दधतः ’ धारयतः । कां कर्मतापन्नाम् ? ‘स्रजं’ मालाम् । कथंभूतां स्रजम् ? ‘ स्फुरत्कदम्बकैरवशतपत्रसम्पदम् ’ स्फुरन्ती—दीप्यमाना कदम्बानां—वृक्षविशेषकुसुमानां कैरवाणां—कुमुदानां शतपत्राणां—कमलानां सम्पत्—समृद्धिर्यस्यां सा तथा ताम् ॥

अथ समासः—वपुषो व्यथा वपुर्व्यथाः ‘तत्पुरुषः’ । वपुर्व्यथानां कदम्बकानि वपुर्व्यथा० ‘तत्पुरुषः’ । तैर्वपुर्व्यथा० । न वशा अवशाः ‘तत्पुरुषः’ । अवशाश्च ते तपन्तश्च अवश० ‘कर्मधारयः’ । अवशतपन्तस्त्रसा यस्मिन् तद् अवश० ‘बहुव्रीहिः’ । जिनानां जिनेषु वा उत्तमा जिनोत्तमाः ‘तत्पुरुषः’ । तान् जिनो० । कदम्बाश्च कैरवाणि च शतपत्राणि च कदम्ब० ‘ इतरेतरद्वन्द्वः ’ । कदम्बकैरवशतपत्राणां सम्पत् कदम्ब० ‘ तत्पुरुषः ’ । स्फुरन्ती कदम्बकैरवशतपत्रसम्पद् यस्यां सा स्फुर० ‘ बहुव्रीहिः । ’ तां स्फुर० ॥ इति काव्यार्थः ॥ २ ॥

सि० वृ०—जवादिति । भो भव्याः ! यूयं जिनोत्तमान्—जिनवरान् स्तुत—प्रणमतेत्यर्थः । ‘ ष्टुञ् स्तुतौ ’ धातोः ‘ आशीःप्रेरणयोः ’ ( सा० सू० ७०३ ) कर्तरि परस्मैपदे मध्यमपुरुषबहुवचनम् । ‘ अप् कर्तरि ’ ( सा० सू० ६९१ ) इत्यप्, ‘ अदादेर्लुक् ’ ( सा० सू० ८८० ) इति लुक् । अत्र ‘ स्तुत ’ इति क्रियापदम् । के कर्तारः ? । यूयम् । कान् कर्मतापन्नान् ? । ‘ जिनोत्तमान् ’ जिनेषु उत्तमाः जिनोत्तमाः तान् । किं कुर्वतः जिनोत्तमान् ? । ‘अवतः’ अवन्ति—रक्षन्ति ते अवन्तः तान् । किम् ? । जगत्—विश्वम् । कथम् ? । जवात्—वेगात् । “ जवो वेगस्त्वरिस्तूर्णिः ” इत्यमरः ( ? ) । कथंभूतं जगत् ? । गतं—प्राप्तम् । किम् ? । पदं—स्थानम् । पदं कथंभूतम् ? । ‘ अवशतपत्रसं ’ न वशाः अवशाः—पराधीनाः परमाधार्मिकायत्ता इतियावत् तपन्तः—तापमनुभवन्तः त्रसाः—सत्त्वाः यस्मिन् तत् तथा । कैः कृत्वा ? । ‘ वपुर्व्यथा-

कदम्बकैः ' वपुषो—देहस्य व्यथा—यातना तस्याः कदम्बकैः—समूहैः । नरकादिगतं जगदवतीति समुदायार्थः । पुनः किं कुर्वतो जिनोत्तमान् ? । दधतो—धारयतः । काम् ? । स्रजं—मालाम् । कथंभूतां स्रजम् ? । ' स्फुरत्कदम्बकैरवशतपत्रसम्पदं ' स्फुरन्ती—दीप्यमाना कदम्बानां—वृक्षविशेषकुसुमाना कैरवाणां—कुमुदानां शतपत्राणां—कमलानां सम्पत्—समृद्धिर्यस्याः सा ताम् । " सहस्रपत्रं कमलं शतपत्रं कुशेशयं " इत्यमरः ( श्लो० ९४६ ) । कदम्बो—नीपः । " नीपः कदम्बः सालस्तु " इति हैमः ( का० ४, श्लो० २०४ ) । कैरवं—श्वेतकमलम् । " श्वेते तु तत्र कुमुदं, कैरवं गर्दभाह्वयम् " इति हैमः (का० ४, श्लो० २३०) । शतपत्रं—कमलम् । कदम्बश्च कैरवं च शतपत्रं च कदम्बकैरवशतपत्राणि ' इतरेतरद्वन्द्वः ' ॥ २ ॥

सौ० वृ०—जवादिति । भो भव्याः ! यूयं जिनोत्तमान्—तीर्थंकरप्रधानान् स्तुत इत्यन्वयः । ' स्तुत ' इति क्रियापदम् । के कर्तारः ? । ' यूयम् ' । ' स्तुत ' प्रणमत । कान् कर्मतापन्नान् ? । ' जिनोत्तमान् ' । किं कुर्वतो जिनोत्तमान् ? । ' अवतः ' रक्षतः । किं कर्मतापन्नम् ? । ' जगत् ' विश्वम् । कथम् ? । ' जवात् ' वेगेन । किंविशिष्टं जगत् ? । ' गतं ' प्राप्तम् । किं कर्मतापन्नम् ? । ' पदं ' स्थानम् । कैः कृत्वा ? । वपुः—शरीरं तस्य व्यथाः—चिन्ताः पीडादयः तासां कदम्बकानि—वृन्दानि तैः ' वपुर्व्यथाकदम्बकैः ' । पुनः किंविशिष्टं जगत् ( पदं ? ) ? । अवशाः—परवशाः तपन्तः—संसारसुखाभिलाषेण तापं प्राप्नुवन्तो ये त्रसाः—सत्त्वा यस्मिन् तद् ' अवशतपत्त्रसम् ' । जिनोत्तमान् किं कुर्वतः ? ' दधतः ' धारयतः । कां कर्मतापन्नाम् ? । ' स्रजं ' मालाम् । किंविशिष्टां स्रजम् ? । स्फुरन्तः—दीप्यन्तः कदम्बा—नीपवृक्षविशेषाः कैरवाः—कुमुदादयः शतपत्राणि—कमलादीनि तेषां सम्पत्—ऋद्धिः यस्यां सा ' स्फुरत्कदम्बकैरवशतपत्रसम्पदम् ' । इति पदार्थः ॥

अथ समासः—अवन्ति—रक्षन्तीति अवन्तः, तान् अवतः । वपुषां व्यथाः वपुर्व्यथाः, वपुर्व्यथानां कदम्बकानि वपुर्व्यथाकदम्बकानि, तैर्वपुर्व्यथाकदम्बकैः । न वशा अवशाः, तपन्ति ते तपन्तः, अवशाः तपन्तस्त्रसा यस्मिन् तत् अवशतपत्त्रसं, तत् अवशतपत्त्रसम् । जिनेषु उत्तमा जिनोत्तमाः, तान् जिनोत्तमान् । दधति ते दधन्तः, तान् दधतः । कदम्बाश्च कैरवाश्च शतपत्राणि च कदम्बकैरवशतपत्राणि, स्फुरन्ति च तानि कदम्बकैरवशतपत्राणि च स्फुरत्कदम्बकैरवशतपत्राणि, स्फुरत्कदम्बकैरवशतपत्राणां सम्पद् यस्यां सा स्फुरत्कदम्बकैरवशतपत्रसम्पदम् । इति द्वितीयवृत्तार्थः ॥ २ ॥

द० व्या०—जवादिति । हे भव्यलोकाः ! यूयं जिनोत्तमान्—जिनेषु उत्तमान्—श्रेष्ठान् तीर्थंकरानित्यर्थः स्तुत—स्तुतिविषयीकुरुत इत्यन्वयः । ' ष्टुञ् स्तुतौ ' धातुः । ' स्तुत ' इति क्रियापदम् । के कर्तारः ? । यूयम् । कान् ? । जिनोत्तमान् । किं कुर्वतो जिनोत्तमान् ? । दधतो—धारयतः । काम् ? । स्रजं—मालाम् । किंविशिष्टां स्रजम् ? । ' स्फुरत्कदम्बकैरवशतपत्रसम्पदं ' कदम्बो—नीपः, " नीपः कदम्बः सालस्तु " इत्यभिधानचिन्तामणिः ( का० ४, श्लो २०४ ), कैरवं—श्वेतकमलं, " श्वेते तु तत्र कुमुदं, कैरवं गर्दभाह्वयम् " इत्यभिधानचिन्तामणिः (का० ४, श्लो० २३० ), शतपत्रं—कमलं सेवन्तीति लोकप्रसिद्धं पुष्पं वा, एतेषां पूर्वं 'द्वन्द्वः', ततः स्फुरन्ती कदम्बकैरवशतपत्राणां सम्पद् यस्यामिति ' बहुव्रीहिः ' । पुनः किं कुर्वतो जिनोत्तमान् ? । ' अवतः ' रक्षतः । किम् । जगत्—विष्टपम् । कस्मात् ? । जवात् । किंविशिष्टं जगत् ? । गतं—प्राप्तम् । किम् । पदं—नरकादिस्थानम् किंविशिष्टं पदम् ? । अवशतपत्त्रसम् ' अवशाः—परतन्त्राः परमाधार्मिकाधीना इति यावत् तपन्तः—तापमनुभवन्तः त्रसाः—प्राणिनो यत्र तत् । कैः ? । ' वपुर्व्यथाकदम्बकैः ' वपुषः शरीरस्य व्यथा—यातनाः तासां कदम्बकाः—समूहाः तैः । " वृन्दं चक्रकदम्बके समुदयः पुञ्जोत्करौ संहतिः " । इत्यभिधानचिन्तामणिः ( का० ६, श्लो० ४७ ) । इति द्वितीयवृत्तार्थः ॥ २ ॥



सिद्धान्तश्लाघनम्—

स सम्पदं दिशतु जिनोत्तमागमः
शमावहन्नतनुतमोहरोऽदिते ।
स चित्तभूः क्षत इह येन यस्तपः-
शमावहन्नतनुत मोहरोदिते ॥ ३ ॥

—रुचिरा

ज० वि०—स सम्पदमिति । स जिनोत्तमागमः—जिनपतिसिद्धान्तः सम्पदं—श्रियं दिशतु इति क्रियाकारकयोजना । अत्र ' दिशतु ' इति क्रियापदम् । कः कर्ता ? ' जिनोत्तमागमः ' । कां कर्मतापन्नाम् ? ' सम्पदम् ' । जिनोत्तमागमः किं कुर्वन ? ' आवहन् ' कुर्वन् । किं कर्मतापन्नम् ? ' शं ' सुखम् । जिनोत्तमागमः कथंभूतः ? ' अतनुतमोहरः ' अतनु—प्रभूतं तमो हरति यः स तथा । अथवा अतनुतमान्—प्रभूततमान् ऊहान् राति—ददातीति अतनुतमोहरः । स इति तच्छब्दसम्बन्धाद् यच्छब्द(घटना)माह—येन जिनोत्तमागमेन (इह—लोके) स चित्तभूः—मनोभवः क्षतः—ध्वस्तः । अत्रापि ' क्षतः ' इति क्रियापदम् । केन कर्त्रा ? ' येन ' । कः कर्मतापन्नः ? ' चित्तभूः ' । अत्रापि स इति तच्छब्दसाहचर्याद् यच्छब्दघटनामाह—यः चित्तभूः ' मोहरोदिते ' मोहः—अज्ञानं रोदितं—रोदनं एते द्वे अपि अतनुत—विस्तारयामास । अत्रापि च ' अतनुत ' इति क्रियापदम् । कः कर्ता ? ' यः ' । के कर्मतापन्ने ? ' मोहरोदिते ' । कथंभूते मोहरोदिते ? ' अदिते ' अखण्डिते । तथा यः चित्तभूः ' तपःशमौ ' तपः द्वादशविधं शमः—उपशमः तौ अहन्—हतवान् । अत्रापि च ' अहन् ' इति क्रियापदम् । कः कर्ता ? ' यः ' । कौ कर्मतापन्नौ ? ' तपःशमौ ' ॥

अथ समासः—जिनानां जिनेषु वा उत्तमाः जिनोत्तमाः ' तत्पुरुषः ' । जिनोत्तमानां आगमो जिनोत्तमागमः ' तत्पुरुषः ' । न तनु अतनु ' तत्पुरुषः ' । अतनु च तत् तमश्च अतनु० ' कर्मधारयः ' । अतनुतमो हरतीति अतनु० ' तत्पुरुषः ' । अथवा अतिशयेनातनवो अतनुतमाः । अतनुतमाश्च ते ऊहाश्च अतनु० ' कर्मधारयः ' । अतनुतमोहान् रातीत्यतनु० ' तत्पुरुषः ' । न दिते अदिते ' तत्पुरुषः ' । ते अदिते । चित्ते भवतीति चित्तभूः ' तत्पुरुषः ' । तपश्च शमश्च तपःशमौ ' इतरेतरद्वन्द्वः ' । तौ तपःशमौ । मोहश्च रोदितं च मोहरोदिते ' इतरेतरद्वन्द्वः ' । ते मोहरोदिते ॥ इति काव्यार्थः ॥ ३ ॥

सि० वृ०—स सम्पदमिति । स जिनोत्तमागमः—जिनवरसिद्धान्तः सम्पदं—श्रियं दिशतु—दद्यात्वित्यर्थः । ' दिश अतिसर्जने ' धातोः ' आशीःप्रेरणयोः ' ( सा० सू० ७०२ ) कर्तरि परस्मैपदे

प्रथमपुरुषैकवचनं तुप् । 'तुदादेरः' ( सा० सू० १००७ ) । तथा च 'दिशतु' इति सिद्धम् । अत्र 'दिशतु' इति क्रियापदम् । कः कर्ता ? । स जिनोत्तमागमः । कां कर्मतापन्नाम् ? । सम्पदम् । जिनोत्तमागमः किं कुर्वन् ? । आवहन्—कुर्वन् । किं कर्मतापन्नम् ? । शं—सुखम् । कथंभूतो जिनोत्तमागमः ? । 'अतनुतमोहरः' अतनु—प्रभूतं तमो हरति—नाशयति यः स तथा । अथवा अतनुतमान्—प्रभूततमान् ऊहान् राति—ददातीत्यतनुतमोहरः । स इति तच्छब्दसम्बन्धाद् यच्छब्द( घटना )माह—येन जिनोत्तमागमेन इह—अत्र जगति स चित्तभूः—कंदर्पः क्षतः—क्षपितः, क्षयं नीत इत्यर्थः । अत्रापि 'क्षतः' इति क्रियापदम् । केन कर्त्रा ? । येन । कः कर्मतापन्नः ? । चित्तभूः । अत्रापि स इति तच्छब्दसाहचर्याद् यच्छब्द(घटना)माह—यः अवगणितहरिहरादिदेवश्चित्तभूः अदिते—अखण्डिते 'मोहरोदिते' मोहश्च रोदितं च मोहरोदिते अतनुत—अप्रथयतेत्यर्थः । 'तनु विस्तारे' धातोः कर्तरि आत्मनेपदे प्रथमपुरुषैकवचनं तत् । 'तनादेरुप्' ( सा० सू० ९९७ ) । 'दिबादावट्' ( सा० सू० ७०७ ) । तथा च 'अतनुत' इति सिद्धम् । अत्र 'अतनुत' इति क्रियापदम् । कः कर्ता ? । यः । के कर्मतापन्ने ? । मोहरोदिते—अज्ञानरोदने । रोदित इत्यत्र 'क्तो वा सेट्' ( सा० सू० १२७७ ) इति सेट् । क्तप्रत्ययस्य कित्वाभावपक्षे गुणः । तथा यश्चित्तभूः 'तपःशमौ' तपः—अनुष्ठानविशेषः द्वादशविधं वा धर्मविशेषो वा शमः—उपशमः तौ अहन्—हतवान् इत्यर्थः । 'हन हिंसागत्योः' इति धातोरनद्यतने कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं दिप् । 'अप् कर्तरि' (सा० सू० ६९१) इत्यप् । 'अदादेर्लुक्' (सा० सू० ८८०) । 'दिबादावट्' ( सा० सू० ७०७ ) । 'दिस्योर्हसात्' ( सा० सू० ८८९ ) इति दिपोलोपः । तथा च 'अहन्' इति सिद्धम् । अत्रापि 'अहन्' इति क्रियापदम् । कः कर्ता ? । यः । कौ कर्मतापन्नौ ? । 'तपःशमौ' तपश्च शमश्च तपःशमौ 'इतरेतरद्वन्द्वः' । "तपो लोकान्तरेऽपि च । चान्द्रायणादौ धर्मे च, पुमान् शिशिरमाघयोः" इति मेदिनी ॥ ३ ॥

**सौ० वृ०—स सम्पदमिति । स जिनोत्तमागमः—तीर्थकृत्सिद्धान्तः [ मे-मम ] सम्पदं—श्रियं दिशतु इत्यन्वयः । 'दिशतु' इति क्रियापदम् । कः कर्ता ? । 'जिनोत्तमागमः' । 'दिशतु' ददातु । कां कर्मतापन्नाम् ? । 'सम्पदम्' । [ कस्य ? । 'मम' ] । जिनोत्तमागमः किं कुर्वन् ? । 'आवहन्' प्रापयन् कथयन् वा । किं कर्मतापन्नम् ? । 'शं' सुखम् । पुनः किंविशिष्टः जिनोत्तमागमः ? । अतनुतमाः—प्रचुरा ऊहा—विचाराः तान् राति—ददातीति 'अतनुतमोहरः' । किंविशिष्टो जिनोत्तमागमः ? । 'सः' प्रसिद्धः । तच्छब्दो यच्छब्दमपेक्षते । स कः ? । येन जिनोत्तमागमेन इह-संसारे चित्तभूः-कामः स दुर्धरः क्षतः इत्यन्वयः । 'क्षतः' इति क्रियापदम् । केन कर्त्रा ? । 'येन' जिनोत्तमागमेन । 'क्षतः' हतः । कः कर्मतापन्नः ? । 'चित्तभूः' । कस्मिन् ? । 'इह' संसारे । कथंभूतश्चित्तभूः ? । 'सः' । (स) कः ? । यः कामः मोहः-अज्ञानं रोदितं ते द्वे अतनुत इत्यन्वयः । 'अतनुत' इति क्रियापदम् । कः कर्ता ? । 'यः' कामः । 'अतनुत' विस्तारयत । के कर्मतापन्ने ? । 'मोहरोदिते' । किंविशिष्टे मोहरोदिते ? । 'अदिते' अखण्डिते-अच्छिन्ने । पुनः (यः) चित्तभूः-कामः तपःशमौ अहन् इत्यन्वयः । 'अहन्' इति क्रियापदम् । कः कर्ता ? । 'यः' चित्तभूः । 'अहन्' हन्ति स्म । कौ कर्मतापन्नौ ? । तपो बाह्याभ्यन्तररूपं शम-उपशमः, तौ द्वौ यो विनाशयति स चित्तभूर्येन जिनागमेन ध्वस्तः । इति पदार्थः ॥**

अथ समासः—जिनेषु उत्तमाः जिनोत्तमाः, जिनोत्तमानां आगमः जिनोत्तमागमः। अतिशयेन तनवः इति तनुतमाः, न तनुतमा अतनुतमाः, अतनुतमाश्च ते ऊहाश्च अतनुतमोहाः, अतनुतमोहान् राति-ददातीति अतनुतमोहरः। न दिते अदिते, ते अदिते। चित्ताद् भवतीति चित्तभूः। तपश्च शमश्च तपःशमौ ( तौ तपः० )। मोहश्च रोदितं च मोहरोदिते ( ते मोह० )। इति तृतीयवृत्तार्थः॥ ३॥

दे० व्या०—स सम्पदमिति। स जिनोत्तमागमः सम्पदं-लक्ष्मीं दिशतु-ददातु इत्यन्वयः। 'दिश अतिसर्जने' धातुः। 'दिशतु' इति क्रियापदम्। कः कर्ता ?। 'जिनोत्तमागमः' जिनेषु उत्तमाः-तीर्थंकराः तेषाम्, यद्वा जिनानां उत्तमः-श्रेष्ठो य आगमः-सिद्धान्तः। "आप्तोक्तिः समयागमौ" इत्यभिधानचिन्तामणिः ( का० २, श्लो० १५६ )। कां कर्मतापन्नाम् ?। सम्पदं-लक्ष्मीम्। किं कुर्वन् आगमः ?। आवहन्-प्रापयन्। किम् ?। शं-सुखम्। किंविशिष्ट आगमः ?। 'अतनुतमोहरः' न तनु अतनु इति नञ्समासः, एवंविधं यत् तमः-अज्ञानं हरतीति तथा, यद्वा अतनुतमान्-अत्युत्कृष्टान् ऊहान्-तर्कान् रातीति अतनुतमोहरः। यत्तदोर्नित्याभिसम्बन्धाद् येन-जिनोत्तमागमेन स-वक्ष्यमाणः चित्तभूः-कन्दर्पः क्षतः-क्षयं प्रापितः। स कः ?। यो चित्तभूः 'तपःशमौ' तपो द्वादशविधं शमः-उपशमः अनयो'र्द्वन्द्वः' तौ अहन्-हतवान्। 'हन हिंसागत्योः' इति धातुः। च-पुनः अदिते-अखण्डिते मोहरोदिते अतनुत अप्रथयत। 'तनु विस्तारे' धातुः। 'अतनुत' इति क्रियापदम्। कः कर्ता ?। चित्तभूः। के कर्मतापन्ने ?। 'मोहरोदिते' मोहो-मिथ्याभिनिवेशो रोदितं-विप्रलापः अनयो'र्द्वन्द्वः'॥ इति तृतीयवृत्तार्थः॥ ३॥



श्रीकपर्दिस्मरणम्—

द्विपं गतो हृदि रमतां दमश्रिया
प्रभाति मे चकितहरिद्विपं नगे।
वटाह्वये कृतवसतिश्च यक्षराट्
प्रभातिमेचकितहरिद् विपन्नगे॥ ४॥

—रुचिरा

ज० वि०—द्विपमिति। यक्षराट्-यक्षराजः कपर्दिनामा मे-मम हृदि-हृदये रमतां-क्रीडतु तिष्ठत्वितियावत् इति क्रियाकारकयोजनम्। अत्र 'रमतां' इति क्रियापदम्। कः कर्ता ? 'यक्षराट्'। कस्मिन् ? 'हृदि'। कस्य ? 'मे'। किं कुर्वति हृदि ? 'प्रभाति' शोभमाने। कया ? 'दमश्रिया' उपशमसम्पदा। कथंभूतो यक्षराट् ? 'द्विपं गतः' गजमारूढः। कथंभूतं द्विपम् ? चकितः-त्रस्तो हरिद्विपः-सुरेन्द्रहस्ती यस्मात् तथा तम्। यक्षराट् पुनः कथंभूतः ? 'कृतवसतिः' विहितवसतिः। चः समुच्चयार्थः। कस्मिन् ? 'नगे' वृक्षे। नगे कथं० ? 'वटाह्वये' न्यग्रोधनाम्नि। पुनः कथं० ? 'विपन्नगे' विगतसर्पे। यक्षराट् पुनः कथं० ? 'प्रभातिमेचकितहरित्' प्रभया-कान्त्या अतिशयेन मेचकिताः-श्यामीकृता हरितो-दिशो येन स तथा॥

अथ समासः—दमस्य श्रीः दमश्रीः 'तत्पुरुषः'। तया दमश्रिया। हरेर्द्विपो हरिद्विपः 'तत्पुरुषः'। चकितो हरिद्विपो यस्मात् स चकित० 'बहुव्रीहिः'। तं चकित०। वट इत्याह्वयो यस्य स वटाह्वयः 'बहुव्रीहिः'। तस्मिन् वटा०। कृता वसतिर्येन स कृत० 'बहुव्रीहिः'। यक्षाणां यक्षेषु वा राट् यक्षराट् 'तत्पुरुषः'। अतिशयेन मेचकिताः अतिमे० 'तत्पुरुषः'। अतिमेचकिता हरितो यन सोऽतिमे० 'बहुव्रीहिः'। प्रभयाऽतिमेचकितहरित् प्रभाति० 'तत्पुरुषः'। विगताः पन्नगा यस्मात् स विपन्नगः 'बहुव्रीहिः'। तस्मिन् विप०॥ इति काव्यार्थः॥ ४॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीमल्लितीर्थपतेः स्तुतेर्व्याख्या॥ १९॥

सि० वृ०—द्विपमिति। यक्षराट्—यक्षाधिपतिः कपर्दिनामा मे—मम हृदि—हृदये रमतां—क्रीडतु इत्यर्थः। 'रमु क्रीडायाम्' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि आत्मनेपदे प्रथमपुरुषैकवचनं ताम्। 'अप्०' (सा० सू० ६९१)। तथाच 'रमताम्' इति सिद्धम्। अत्र 'रमताम्' इति क्रियापदम्। कः कर्ता?। 'यक्षराट्' यक्षेषु राजतीति यक्षराट्। क्विबन्तः 'ऋटुरषाणां मूर्धा' इति सावर्ण्येन 'षो डः' (सा० सू० २७७) इति षस्य डत्वम्। कस्मिन्?। हृदि। कस्य?। मे। किं कुर्वति हृदि?। प्रभाति—शोभमाने। कया?। 'दमश्रिया' दमस्य—उपशमस्य श्रीः दमश्रीः तया, उपशमसम्पदा। कथंभूतो यक्षराट्?। गतः—प्राप्तः, अर्थादारूढः। कम्?। 'द्विपं' द्वाभ्यां शुण्डाग्राभ्यां पिबतीति द्विपः तम्। 'सुपि स्थः' (पा० अ० ३, पा० २, सू० ४) इति योगविभागात् कः। कथंभूतं द्विपम्?। चकितः—त्रस्तो हरेः—इन्द्रस्य द्विपो—हस्ती यस्मात् स तथा तम्। अतिशयबलवत्त्वेन ऐरावणस्यापि बलोत्पादकत्वादिति भावः। पुनः कथंभूतो यक्षराट्?। 'कृतवसतिः' कृता—विहिता वसतिः—स्थानं गृहमितियावत् येन स तथा। "वसती रात्रिवेश्मनोः" इत्यमरः (श्लो० २४१८)। चः समुच्चयार्थः। कस्मिन्?। 'नगे' न गच्छतीति नगः- वृक्षः तस्मिन् नगे। कथंभूते?। 'वटाह्वये' वट इत्याह्वयः—अभिधानं यस्य स तथा तस्मिन्। "उदन्तोऽथाह्वयोऽभिधा। गोत्रसंज्ञानामधेया०" इति हैमः (का० २, श्लो० १७४)। पुनः किंविशिष्टे?। 'विपन्नगे' विगताः पन्नगाः—सर्पा यस्मिन् तथा तस्मिन्। पुनः किंविशिष्टो यक्षराट्?। 'प्रभातिमेचकितहरित्' प्रभया—कान्त्या अतिशयेन मेचकः सञ्जातो यासां ताः अतिमेचकिता—अतिश्यामीकृता हरितो—दिशो येन स तथेति 'बहुव्रीहिः'। "मेचकः कृष्णनीलः स्यात्, अतसीपुष्पसन्निभः" इति शब्दार्णवः। "मेचकः शितिकण्ठाभः" इति तु दुर्गः। रुचिराच्छन्दः। "चतुर्ग्रहैरिह रुचिरा जभौ जसौ" इति च तल्लक्षणम्॥ ४॥

॥ इति महामहोपाध्यायश्रीभानु० श्रीमल्लिनाथजिनस्य स्तुतिवृत्तिः॥ १९॥

सौ० वृ०—द्विपमिति। स यक्षराट्—कपर्दिनामा यक्षराट् मे—मम हृदि—चित्ते रमतां इत्यन्वयः। 'रमतां' इति क्रियापदम्। कः कर्ता?। 'यक्षराट्'। 'रमतां' क्रीडताम्। 'कस्मिन्?। 'हृदि'। कस्य?। 'मे'। किंविशिष्टो यक्षराट्?। 'कृतवसतिः' कृतनिवासः। कस्मिन्?। 'नगे' वृक्षे। किंविशिष्टे नगे?। 'वटाह्वये' न्यग्रोधनामनि। पुनः किंविशिष्टो यक्षराट्?। 'गतः' प्राप्तः, अधिरूढः। किं कर्मता-

पन्नम् ?। 'द्विपं' गजम्। गजवाहन इत्यर्थः। किंविशिष्टं द्विपम्?। चकितः-त्रासितः हरेः-इन्द्रस्य द्विपो-हस्ती येन स चकितहरिद्विपस्तं 'चकितहरिद्विपं', ऐरावणजित्वरमित्यर्थः। किंविशिष्टे हृदि ?। 'प्रभाति' प्रकर्षेण भासनशीले। कया ?। 'दमश्रिया' विषयजयलक्षणशोभया। पुनः किंविशिष्टो यक्षराट् ?। प्रभया-कान्त्या अतिशयेन मेचकिताः-चित्रिताः पिञ्जरीकृता हरितो-दिशो येन सः 'प्रभातिमेचकित-हरित्'। किंविशिष्टे नगे ?। विगता-दूरं गताः पन्नगाः-सर्पा यस्मिन् स विपन्नगः तस्मिन् 'विपन्नगे'। एतादृशो यक्षो मे-मम प्रसन्ने हृदि रमताम्। इति पदार्थः॥

अथ समासः—द्वाभ्यां मुखशुण्डाभ्यां पिबतीति द्विपः, तं द्विपम्। दमस्य श्रीः दमश्रीः, तया दमश्रिया। प्रकर्षेण भातीति प्रभात्, तस्मिन् प्रभाति। हरेर्द्विपः हरिद्विपः, चकितो हरिद्विपो यस्मात् स चकितहरि-द्विपः, तं चकितहरिद्विपम्। वट इत्याह्वयो यस्य स वटाह्वयः, तस्मिन् वटाह्वये। कृता वसतिर्येन स कृतवसतिः। यक्षाणां राजा(ट्) इति यक्षराट्। प्रभया अतिमेचकिता हरितो येन स प्रभातिमेचकितहरित्। विगताः पन्नगा यस्मिन् स विपन्नगः, तस्मिन् विपन्नगे॥ इति तुर्यवृत्तार्थः॥ ४॥

श्रीमन्मल्लिजिनेन्द्रस्य, स्तुतेरर्थो लिखीकृतः।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना॥ १॥

॥ इति श्रीएकोनविंशतितममल्लिजिनस्तुतिः॥ ४। १९। ७६॥

दे० व्या०—द्विपमिति। यक्षराट्-यक्षाधिपतिः मे-मम हृदि-हृदये रमतां-परिक्रीडतामित्यर्थः। 'रमु क्रीडायां' धातुः। 'रमताम्' इति क्रियापदम्। कः कर्ता ?। यक्षराट्। कस्मिन् ?। हृदि। कस्य ?। मे। किंविशिष्टे हृदि ?। प्रभाति-शोभमाने। कया ?। 'दमश्रिया' दमः-उपशमः तस्य श्रीः-लक्ष्मीः तया। किंविशिष्टो यक्षः( यक्षराट् ) ?। गतः-प्राप्तः, अर्थादारूढः। कम् ?। द्विपं-हस्तिनम्। किंविशिष्टं द्विपम् ?। 'चकितहरिद्विपम्' चकितः-त्रासितः हरिद्विपः-ऐरावणो यस्मात् स तम्। बलाधिक्यादिति भावः। पुनः किंविशिष्टः ?। 'कृतवसतिः' कृता-विहिता वसतिः-आश्रमो येन स तथा। कस्मिन् ?। नगे-वृक्षे। किंविशिष्टे नगे ?। 'वटाह्वये' वट इति आह्वयः-अभिधानं यस्य स तस्मिन्। "उदन्तोऽथाह्वयोऽभिधा" इत्यभिधानचिन्तामणिः (का० २, श्लो० १७४)। पुनः किंविशिष्टे ?। 'विपन्नगे' विगता पन्नगा-द्विजिह्वा यत्र स तस्मिन्। पुनः किंविशिष्टः ?। 'प्रभातिमेचकितहरित्' प्रभा-कान्तिः तया अतिशयेन मेचकिताः-श्यामीकृताः हरितः-दिशो येन स तथा। "काष्ठाऽऽशा दिक् हरित् ककुप्" इत्यभिधानचिन्तामणिः (का० २, श्लो० ८०)। इति तुरीयवृत्तार्थः॥ ४॥ उपेन्द्रवज्राच्छन्दः॥ लक्षणं तु पूर्वमेवोद्दिष्टमिति॥



# २० श्रीमुनिसुव्रतजिनस्तुतयः

अथ श्रीमुनिसुव्रतनाथस्य संस्तवनम्—

जिनमुनिसुव्रतः समवताज्जनतावनतः
स मुदितमानवा धनमलोभवतो भवतः ।
अवनिविकीर्णमादिषत यस्य निरस्तमनः-
समुदितमानबाधनमलो भवतो भवतः ॥ १ ॥

—नर्कुटकम् ( ७, १० )

ज० वि०—जिनमुनीति । स जिनमुनिसुव्रतः—मुनिसुव्रतनामा जिनः भवतः—युष्मान् भवतः—संसारतः समवतात्—सम्यग् रक्षतु इति क्रियाकारकसम्बन्धः । अत्र 'समवतात्' इति क्रियापदम् । कः कर्ता ? 'जिनमुनिसुव्रतः' । कान् कर्मतापन्नान् ? 'भवतः' । कुतः ? 'भवतः' । जिनमुनिसुव्रतः कथंभूतः ? 'जनतावनतः' जनतया—जनसमूहेन अवनतः—प्रणतः । पुनः कथं० ? 'निरस्तमनःसमुदितमानबाधनमलः' निरस्ता—अपकीर्णा मनःसमुदिता—हृदयसमुद्गताः संहिता वा मानः—गर्वः बाधनं—बाधा मलः—कर्मरूपः, ततो निरस्ताः मनःसमुदितमानबाधनमला येन स तथा । स इति तच्छब्दाभिसम्बन्धाद् यच्छब्दमाह—यस्य भगवतः धनं—द्रव्यं समुदितमानवाः—हृष्टनराः आदिषत—गृहीतवन्तः । अत्रापि 'आदिषत' इति क्रियापदम् । के कर्तारः ? 'समुदितमानवाः' । किं कर्मतापन्नम् ? 'धनम्' । मानवेत्यत्र बवयोरैक्यं यमकवशाज्ज्ञेयम् । धनं कथंभूतम् ? 'अवनिविकीर्णं' भुवि राशीकृतम् । यस्य किं कुर्वतः ? 'भवतः' जायमानस्य । कथंभूतस्य भवतः ? 'अलोभवतः' लोभरहितस्य । दीक्षां कक्षीकुर्वत इति हृदयम् ॥

अथ समासः—शोभनानि व्रतानि यस्य स सुव्रतः 'बहुव्रीहिः' । मुनिवत् सुव्रतः मुनि० 'तत्पुरुषः' । यदिवा मुनिश्चासौ सुव्रतश्च मुनि० 'कर्मधारयः' । जिनश्चासौ मुनिसुव्रतश्च जिन० 'कर्मधारयः' । जनतयाऽवनतो जन० 'तत्पुरुषः' । मुदिताश्च ते मानवाश्च मुदित० 'कर्मधारयः' । न लोभवान् अलोभवान् 'तत्पुरुषः' । तस्य अलोभवतः । अवनौ विकीर्णं अवनि० 'तत्पुरुषः' । मानश्च बाधनं च मलश्च मान० 'इतरेतरद्वन्द्वः' । मनसि समुदिताः मनःसमु० 'तत्पुरुषः' । मनःसमुदिताश्च ते मानबाधनमलाश्च मनःसमु० 'कर्मधारयः' । निरस्ता मनःसमुदितमानबाधनमला येन स निरस्त० 'बहुव्रीहिः' । इति काव्यार्थः ॥ १ ॥

---

१ 'समुदित०' इत्यपि पाठः ।

सि० वृ०—जिनमुनीति । मन्यते जगतस्त्रिकालावस्थामिति मुनिः ' मनेरुच ' ( उणा० सू० ९६२ ) इति ईः । सुष्ठु व्रतानि अस्येति सुव्रतः । मुनिश्चासौ सुव्रतश्च मुनिसुव्रतः । गर्भस्थेऽस्मिन् माता मुनिवत् सुव्रता जाता इति वा मुनिसुव्रतः । जिनश्चासौ मुनिसुव्रतश्च जिनमुनिसुव्रतः इति ' कर्मधारयः ' । स जिनमुनिसुव्रतः भवतः—युष्मान् भवतः—संसारात् समवतात्—सम्यग् रक्षतु इत्यर्थः । संपूर्वक 'अव रक्षणे' धातोः 'आशीःप्रेरणयोः ' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप् । ' अप्० ' ( सा० सू० ६९१ ) । तुपस्तातङादेशः । तथाच 'समवतात्' इति सिद्धम् । अत्र 'समवतात् ' इति क्रियापदम् । कः कर्ता ? । जिनमुनिसुव्रतः । कान् कर्मतापन्नान् ? । ' भवतः ' भवच्छब्दस्य द्वितीयाबहुवचनम् । कुतः ? । ' भवतः ' भवात् इति भवतः । सार्वविभक्तिकस्तस् । कथंभूतो जिनमुनिसुव्रतः ? । ' जनतावनतः ' जनानां समूहो जनता ' ग्रामजनबन्धुसह ' इति तल् तलन्तं च स्त्रीलिङ्गं भवति, जनतया अवनतः—प्रणतो जनतावनतः । पुनः कथंभूतः ? । ' निरस्तमनःसमुदितमानबाधनमलः ' निरस्ता—दूरीकृता मनः-समुदिताः—हृदये समुद्भूताः संहिता वा मानबाधनमला येन स तथा । मानश्च बाधनं च मलश्च मान-बाधनमलाः ' इतरेतरद्वन्द्वः ', मनःसमुदिताश्च ते मानबाधनमलाश्च मनःसमुदितमानबाधनमलाः इति ' कर्मधारयः ' । तच्छब्दाभिसम्बन्धाद् यच्छब्दमाह—यस्य भगवतो धनं—द्रव्यं ' मुदितमानवाः ' मुदिताः—हर्षिताश्च ते मानवाश्च—मर्त्याः आदिषत—गृहीतवन्तः । आङ्पूर्वक ' डुदाञ् दाने ' धातोः कर्तरि आत्मनेपदे प्रथमपुरुषबहुवचनं अन्त । ' भूते सिः ' ( सा० सू० ७२४ ) । ' आतोऽन्तोदनतः ' इत्यन्त-स्यातादेशः । ' दिबादावट् ' ( सा० सू० ७०७ ) । ' दादेः ' ( सा० सू० ११११२ ) इतीत्वम् । ' किशत० ' ( सा० सू० १४१ ) इति षत्वम् । तथा च ' आदिषत ' इति सिद्धम् । अत्र ' आदिषत ' इति क्रियापदम् । के कर्तारः ? । मुदितमानवाः । किं कर्मतापन्नम् ? । धनम् । मानवेत्यत्र बवयोरैक्यं यमकवशादिति ज्ञेयम् । कथंभूतं धनम् ? । ' अवनिविकीर्णं ' अवनौ—भुवि विकीर्णं—परिक्षिप्तं, राशीकृतमिति-यावत् । ' कॄ विक्षेपे ' । ' ॠत इर् ' ( सा० सू० ८९० ) । ' य्वोर्विहसे ' ( सा० सू० ११६ ) इति दीर्घः । यस्य किं कुर्वतः ? । ' भवतः ' जायमानस्य । कीदृशस्य भवतः ? । ' अलोभवतः ' न लोभो—गार्ध्यं विद्यते यस्य स अलोभवान् तस्य अलोभवतः । दीक्षा कक्षीकुर्वत इत्यर्थः ॥ १ ॥

सौ० वृ०—यः कर्मशत्रुजयेन मल्लो भवति स मुनिवत् सुव्रतो भवति । तथा गर्भस्थे भगवति जननी सुव्रता जाता । अनेन सम्बन्धेनायातस्य विंशतितमश्रीमुनिसुव्रतजिनस्य स्तुतिव्याख्यानं व्याख्यायते—जिनमुनीति ।

स जिनमुनिसुव्रतः–मुनिसुव्रतनामा तीर्थकृत् भवतः–युष्मान् भवतः–संसारात् ( समवतात् इत्यन्वयः । ' समवतात् ' इति क्रियापदम् । कः कर्ता ? । ' जिनमुनिसुव्रतः ' । ' समवतात् ' संरक्षतु । कान् कर्मतापन्नान् ? । ' भवतः ' । कुतः ? । ' भवतः ' ) । किंविशिष्टः जिनमु-निसुव्रतः ? । जनतया–जनसमूहेन अवनतः–प्रणतः ' जनतावनतः ' । पुनः किंविशिष्टः जिन-मुनिसुव्रतः ? । निरस्तः–निराकृतः मनसि–चित्ते समुदितः–उदयं प्राप्तः मानः–अहंकारः बाधनं-पीडा ( मलः– ) कर्ममलो येन स ' निरस्तमनःसमुदितमानबाधनमलः ' । यमकत्वादत्र बवयोरैक्यम् । किं-

१ ' ग्रामजनबन्धुभ्यस्तल् ' इति पाणिनीये ( ४।२।४३ ), सिद्धहेमे तु 'ग्रामजनबन्धुगजसहायात् तल्' ( ६।२।२८ ) ।

विशिष्टान् भवतः ? । न विद्यते लोभः-चतुर्थकषायो येषां ते अलोभवन्तः तान् 'अलोभवतः'। पुनः किंविशिष्टः जिनमुनिसुव्रतः ? । 'सः' स-प्रसिद्धः । तच्छब्दो यच्छब्दमपेक्षते । यत्तदोर्नित्यसम्बन्धः । स कः ? । यस्य जिनमुनिसुव्रतस्य धनं-द्रव्यं मुदितमानवा-हृष्टजना आदिषत इत्यन्वयः । 'आदिषत' इति क्रियापदम् । के कर्तारः ?। 'मुदितमानवाः' । 'आदिषत' गृहीतवन्तः । किं कर्मतापन्नम् ? । 'धनम्' । कस्य ? । 'यस्य' जिनमुनिसुव्रतस्य । किंविशिष्टं धनम् ? । 'अवनिविकीर्णं' अवनौ-पृथिव्यां विकीर्णं-विस्तारितम् । किंविशिष्टस्य यस्य ?। 'भवतः' वार्षिकदानोद्यतजायमानस्य धनं समुदितमानवैर्गृहीतम् । इति पदार्थः ॥

अथ समासः—जयति रागादीन् शत्रूनिति जिनः, मनुते तत्त्वमिति मुनिः, सुष्ठु शोभनानि व्रतानि यस्य स सुव्रतः, मुनिश्चासौ सुव्रतश्च मुनिसुव्रतः, मुनिसुव्रतश्चासौ जिनः मुनिसुव्रतजिनः (?) । सम्यक् प्रकारेण अवतात् समवतात् । जनानां समूहो जनता, जनतया अवनतः जनतावनतः । मुत् सञ्जाता येषां ते मुदिताः, मुदिताश्च ते मानवाश्च मुदितमानवाः । नास्ति लोभो येषां ते अलोभवन्तः, तान् अलोभवतः । अवनौ विकीर्णं अवनिविकीर्णं, तद् अवनिविकीर्णम् । मानश्च बाधनं च मलश्च मानबाधनमलाः, समुदिताश्च ते मानबाधनमलाश्च समुदितमानबाधनमलाः, मनसि समुदिताः मानबाधनमलाः मनःसमुदितमानबाधनमलाः, निरस्ता मनःसमुदितमानबाधनमला येन स निरस्तमनःसमुदितमानबाधनमलः । इति प्रथमवृत्तार्थः ॥ १ ॥ इति सप्तदशवर्णमयी विषमाक्षरवृहत्तिका(?)च्छन्दसा स्तुतिरियम् ॥

दे० व्या०—जिनमुनीति । स जिनमुनिसुव्रतो भवतो-युष्मान् भवतः-संसारात् समवतात्-रक्षतात् इत्यन्वयः । 'अव रक्षणे' धातुः । 'समवतात्' इति क्रियापदम् । कः कर्ता ? । 'जिनमुनिसुव्रतः' जिनश्चासौ मुनिसुव्रतश्चेति 'कर्मधारयः' । कान् कर्मतापन्नान् ? । भवतः । किंविशिष्टो जिनमुनिसुव्रतः ? । 'जनतावनतः' जनानां समूहो जनता तया अवनतः-प्रणतः । पुनः किंविशिष्टः ? । 'निरस्तमनःसमुदितमानबाधनमलः' मानः-अहंकृतिः बाधनं बाधा-पीडा मलो-दुरध्यवसायः एतेषां पूर्वं 'द्वन्द्वः', मनसि समुदिताः-उदयं प्राप्ताः मनःसमुदिताः, ततः ते च ते मानबाधनमलाश्चेति 'कर्मधारयः', ततः निरस्ताः-परिक्षिप्ताः मनःसमुदितमानबाधनमला येनेति 'तृतीयाबहुव्रीहिः' । यत्तदोर्नित्याभिसम्बन्धाद् यस्य मुनिसुव्रतस्य धनं-द्रव्यं मुदितमानवा आदिषत-गृहीतवन्तः । 'आदिषत' इति क्रियापदम् । के कर्तारः ? । 'मुदितमानवाः' मुत् जाता येषां ते मुदिताः, ते च ते मानवाश्चेति 'कर्मधारयः'। किं कर्मतापन्नम् ?। धनम् । कस्य ? । 'यस्य' मुनिसुव्रतस्य । किं कुर्वतो जिनस्य ? । 'अलोभवतो भवतः' अलोभिनो जायमानस्य, दीक्षां ग्रहीतुकामत्वात् । किंविशिष्टं धनम् ? । 'अवनिविकीर्णम्' अवनौ-पृथिव्यां विकीर्णं-विक्षिप्तम् ॥ इति प्रथमवृत्तार्थः ॥ १ ॥

---

जिनसमुदायप्रणामः—

प्रणमत तं जिनव्रजमपारविसारिरजो-
दलकमलानना महिमधाम भयासमरुक् ।
यमतितरां सुरेन्द्रवरयोषिदिलामिलनो-
दलकमला ननाम हिमधामभया समरुक् ॥ २ ॥

—नर्कु०

ज० वि०—प्रणमतेति । भो भव्याः ! यूयं तं जिनव्रजं—तीर्थङ्करसमूहं प्रणमत—नमत इति क्रियाकारकयोजना । अत्र 'प्रणमत' इति क्रियापदम् । के कर्तारः ? 'यूयम्' । कं कर्मतापन्नम् ? 'जिनव्रजम्' । कथंभूतं जिनव्रजम् ? 'महिमधाम' महत्त्वस्थानम् । पुनः कथंभूतम् ? 'भयासं' भयं अस्यति—क्षिपतीति भयासस्तम् । तमिति तच्छब्दसाहचर्याद् यच्छब्दमाह—यं जिनव्रजं सुरेन्द्रवरयोषित्—देवेन्द्रस्य प्रधानभूता स्त्री शची अतितराम्—अत्यर्थं ननाम—प्रणतवती । अत्रापि 'ननाम' इति क्रियापदम् । का कर्त्री ? 'सुरेन्द्रवरयोषित्' । कं कर्मतापन्नम् ? 'यम्' । कथंभूता सुरेन्द्रवरयोषित् ? 'अपारविसारिरजोदलकमलानना' अपाराणि—अपर्यन्तानि विसारीणि—प्रसरणशीलानि रजोदलानि—परागकणा यस्मिन् तादृशं यत् कमलं—पद्मं तद्वदाननं—मुखं यस्याः सा तथा । पुनः कथं० ? 'अरुक्' नीरोगा । पुनः कथं० ? 'इलामिलनोदलकमला' इलामिलनेन—क्षितिघट्टनेन उद्गतः अलकेषु—कुरलेषु मलः—रजो यस्याः सा तथा । अनेन विशेषणेन भक्तेः प्राबल्यमसूचि । पुनः कथं० ? 'समरुक्' सदृशरुचिः । कया ? 'हिमधामभया' हिमधामा—चन्द्रः तस्य भया—दीप्त्या ॥

अथ समासः—जिनानां व्रजो जिनव्रजः 'तत्पुरुषः' । तं जिन० । रजसां दलानि रजोद० 'तत्पुरुषः । विसारीणि च तानि रजोदलानि च विसारि० 'कर्मधारयः' । अपाराणि विसारिरजोदलानि यत्र तदपार० 'बहुव्रीहिः' । अपारविसारिरजोदलं च तत् कमलं च अपार० 'कर्मधारयः' । अपारविसारिरजोदलकमलवद् आननं यस्याः सा अपार०'बहुव्रीहिः' । महतः भावः महिमा । महिम्नो धाम महिम० 'तत्पुरुषः' । तं महिम० । भयमस्यतीति भयासः 'तत्पुरुषः । तं भयासम् । न विद्यन्ते रुजो यस्याः सा अरुक् 'बहुव्रीहिः' । सुराणामिन्द्रः सुरेन्द्रः 'तत्पुरुषः' । वरा चासौ योषित् च वरयोषित् 'कर्मधारयः' । सुरेन्द्रस्य वरयोषित् सुरे० 'तत्पुरुषः' । इलायां मिलनं इलामिलनं 'तत्पुरुषः' । अलकेषु मलः अलकमलः 'तत्पुरुषः' । उद्गतोऽलकमलो यस्याः सा उदल० 'बहुव्रीहिः' । इलामिलनेन उदलकमला इलामि० 'तत्पुरुषः' । हिमानि धामानि यस्य स हिमधामा 'बहुव्रीहिः' । हिमधाम्नः भा हिम० 'तत्पुरुषः' । तया हिम० । समा रुक् यस्याः सा समरुक् 'बहुव्रीहिः' । इति काव्यार्थः ॥ २ ॥

सि० वृ०—प्रणमतेति । भो भव्याः ! यूयं तं जिनव्रजं—तीर्थंकरसमूहं प्रणमत—नमतेत्यर्थः । प्रपूर्वक-'णम प्रह्वीभावे' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०१) कर्तरि परस्मैपदे मध्यमपुरुषबहुवचनम् । अत्र 'प्रणमत' इति क्रियापदम् । के कर्तारः ? । यूयम् । कं कर्मतापन्नम् ? । 'जिनव्रजं' जिनानां व्रजो जिनव्रजस्तम् । कथंभूतं जिनव्रजम् ? । 'महिमधाम' महिम्नो—महत्त्वस्य धाम—स्थानम् । धीयते इति धाम । 'डुधाञ् धातोः' मनिन् । "धाम देशे गृहे रश्मौ, चिह्ने स्थानापराधयोः" इति विश्वः । पुनः किंविशिष्टम् ? । 'भयासं' भयं—भीतिं अस्यति—क्षिपतीति भयासः तं भयासं, भयनाशकमित्यर्थः । तमिति

तच्छब्दसाहचर्याद् यच्छब्दमाह—यं जिनवरं 'सुरेन्द्रवरयोषित्' सुरन्ति—ऐश्वर्यमनुभवन्तीति सुराः 'सुर प्रसवैश्वर्ययोः' 'इगुपधज्ञाप्रीकिरः कः' ( पा० अ० ३, पा० १, सू० १३५ ), क्षीरादौ(दु)त्था सुरा एषा अस्ति इत्यागमः 'अर्शआदिभ्योऽच्' ( पा० अ० ५, पा० २, सू० १२७ )। सुरापरिग्रहाद् वा सुराः। तथाच **रामायणे**—

" सुरापरिग्रहाद् देवाः, सुराख्या इति विश्रुताः।
अपरिग्रहणात् तस्या, दैतेयाश्चासुराः स्मृताः॥ १ ॥"

इति तथेति। सुष्ठु राजन्त इति वा 'राज़ दीप्तौ' 'अन्येभ्योऽपि' (पा० अ०३,पा०२,सू०१३०) तिङ्। यद्वा सुन्वन्ति—खण्डयन्ति सेवकदुःखमिति वा 'षुञ् अभिषवे' अभिषवः—स्नपनं पीडनं स्नानसन्धानादिः (?)। सुन्वन्ति—अभिषुण्वन्ति समुद्रमिति वा 'सुसूधागृधिभ्यः क्रन्' ( उणा० सू० १८२ ) इति क्रन्। भक्तदन्तं (?) सुष्ठु रान्ति—आददते वा 'रा दाने' 'आतोऽनुपसर्गे कः' ( पा० अ० ३,पा० २, सू० ३ ) सुराः। इन्दति—परमैश्वर्यं अनुभवतीति इन्द्रः। 'इदि परमैश्वर्ये' 'ऋज्रेन्द्राग्रवज्रविप्रकुप्र(ब्र)चुप्र(ब्र) क्षुरखुरभद्रोग्रभेरमेलशुक्रतीव्रवर्णोर( शुक्लगौरवन्देरा )मालाः' ( उणा० सू० १८६ ) इति सूत्रेण रन्-प्रत्ययान्तो निपातितः। योषति—गच्छति पुरुषमिति योषित्। सुराणां—देवानामिन्द्रः सुरेन्द्रः—शक्रः तस्या वरा—प्रधाना सा चासौ योषिच्च सुरेन्द्रवरयोषित्। 'युष भोजने' सौत्रः 'हृसृरुहियुषिभ्य इतिः' ( उणा० सू० ९७ ) इति इत्प्रत्ययः। देवेन्द्रस्य प्रधानभूता स्त्री शचीत्यर्थः। अतितरां—अत्यर्थं ननाम—प्रणतवतीत्यर्थः। णमधातोः कर्तरि परोक्षे परस्मैपदे प्रथमपुरुषैकवचनम्। 'णम प्रह्वत्वे' अग्रे णप्। 'आदेः ष्णः स्नः' ( सा० सू० ७४८ ) इति णकारस्य नकारः। 'द्विश्च' ( सा० सू० ७१० ) इति द्विर्भावः। 'अत उपधायाः' ( सा० सू० ७५७ ) इति वृद्धिः। तथाच 'ननाम' इति सिद्धम्। अत्र 'ननाम' इति क्रियापदम्। का कर्त्री ?। 'सुरेन्द्रवरयोषित्' सुराणामिन्द्रः—शक्रः तस्य वरा—प्रधाना सा चासौ योषिच्च सुरेन्द्र-वरयोषित्। कं कर्मतापन्नम् ?। यम्। कथंभूता सुरेन्द्रवरयोषित् ?। 'अपारविसारिरजोदलकमलानना' अपाराणि—इयत्तानवच्छिन्नानि विसारीणि—प्रसरणशीलानि यानि रजांसि—परागरेणूनि दलानि—पर्णानि च, अथवा रजोदलानि-परागकणा एव यस्मिन् तादृशं यत् कमलं—पद्मं तदिव आननं—मुखं यस्याः सा तथा। रजांसि च दलानि च रजोदलानि इति 'द्वन्द्वः', अथवा रजसां दलानि रजोदलानीति 'तत्पुरुषः', विसारीणि च तानि रजोदलानि च विसारिरजोदलानीति 'कर्मधारयः', अपाराणि विसारिरजोदलानि च अपारविसारिरजोदलानीति 'कर्म-धारयः', अपारविसारिरजोदलानि यस्मिन् तत् अपारविसारिरजोदलं इति 'बहुव्रीहिः,' अपारविसारिरजो-दलं च तत् कमलं च अपारविसारिरजोदलकमलमिति 'कर्मधारयः', अपारविसारिरजोदलकमलमिव आननं यस्येति 'बहुव्रीहिकर्मधारयौ (?)'। पुनः कथंभूता ?। 'अरुक्' न विद्यते रुक्—रोगो यस्याः सा तथा। पुनः कथंभूता ?। 'इलामिलनोद्गलकमला' इलायाः—पृथिव्याः मिलनं—संघट्टनं तेन उद्गतो—विलग्नः अलकेषु—चूर्णकुन्तलेषु मलो यस्याः सा तथा। अनेन विशेषणेन तस्या भक्त्यतिशयो ध्वनितः। पुनः कथंभूता ?। 'समरुक्,

१ 'षुर ऐश्वर्यदीप्त्योः' इति **पाणिनीय**धातुपाठे। २ 'स्नाने सुरासन्धाने च' इति प्रतिभाति।

समा–तुल्या रुक्–कान्तिर्यस्याः सा तथा । कया ? । 'हिमधामभया' हिमं–शीतलं धाम–तेजो यस्य स हिमधामा–चन्द्रः तस्य भा–प्रभा तया हिमधामभया ॥ २ ॥

सौ० वृ०—प्रणमतेति । भो भव्याः ! तं जिनव्रजं–तीर्थङ्करसमूहं प्रणमत इत्यन्वयः । 'प्रणमत' इति क्रियापदम् । के कर्तारः ? । 'यूयम्' । 'प्रणमत' प्रणामं कुरुत । कं कर्मतापन्नम् ? । 'जिनव्रजम्' । किंविशिष्टं जिनव्रजम् ? । 'महिमधाम' महत्त्वगृहम् । पुनः किंविशिष्टं जिनव्रजम् ? । भयानि–इहलोकपरलोकादीनि अस्यति–क्षिपतीति भयासः तं 'भयासम्' । पुनः किंविशिष्टं जिनव्रजम् ? । 'अरुक्' रोगरहितमित्यर्थः । पुनः किंविशिष्टं जिनव्रजम् ? । 'तं' प्रसिद्धम् । प्रक्रान्तप्रसिद्धार्थे तच्छब्दो यच्छब्दमपेक्षते । तं कम् ? । सुरेन्द्रवरयोषित्–इन्द्रप्रधानशची यं जिनव्रजं अतितरां ननाम इत्यन्वयः । 'ननाम' इति क्रियापदम् । का कर्त्री ? । 'सुरेन्द्रवरयोषित्' । 'ननाम' प्रणमति स्म । कं कर्मतापन्नम् ? । 'यं' जिनव्रजम् । कथम् ? । 'अतितराम्' । किंविशिष्टा सुरेन्द्रवरयोषित् ? । अपाराणि–अपर्यन्तानि विसारीणि–विसरणशीलानि रजांसि–परागा येषु तानि तादृशानि दलानि–पत्राणि येषु तानि कमलानि–पद्मानि तद्वत् सुगन्धि आननं यस्याः सा 'अपारविसारिरजोदलकमलानना' । पुनः किंविशिष्टा सुरेन्द्रवरयोषित् ? । इला–पृथ्वी तस्या मिलनं–सङ्गमस्तेन ऊर्ध्वीभूता अलकाः–केशास्तेषां मलो यस्याः सा 'इलामिलनोदलकमला' । भक्तिबाहुल्येन पृथिव्यां शिरोनमनत्वादित्यर्थः । पुनः किंविशिष्टा सुरेन्द्रवरयोषित् ? । 'समरुक्' तुल्यकान्तिः । कया सह ? । हिमधामा–चन्द्रस्तस्य भा तया 'हिमधामभया' । इति पदार्थः ॥

अथ समासः—जिनानां व्रजः जिनव्रजः, तं जिनव्रजम् । (न) पाराणि अपाराणि, विसरणशीलानि विसारीणि, अपाराणि च तानि विसारीणि अपारविसारीणि, अपारविसारीणि च तानि रजांसि च अपारविसारिरजांसि, अपारविसारिरजांसि च तानि दलानि च अपारविसारिरजोदलानि, अपारविसारिरजोदलानि च तानि कमलानि च अपारविसारिरजोदलकमलानि, अपारविसारिरजोदलकमलवत् आननं यस्याः सा अपारविसारिरजोदलकमलानना । महिम्नां धाम महिमधाम, तत् महिमधाम । भयानि अस्यतीति भयासः, तं भयासम् । न विद्यन्ते रुजः–रोगा यस्य सः अरुक् । सुराणां इन्द्रः सुरेन्द्रः, वरा चासौ योषिच्च वरयोषित्, सुरेन्द्रस्य वरयोषित् सुरेन्द्रवरयोषित् । अत्र जातावेकवचनम् । इलायां मिलनं इलामिलनं, [इलामिलने उत्–उद्गतः] अलकानां मलः अलकमलः, इलामिलनेन उत्–प्रकटीभूतः अलकमलो यस्याः सा इलामिलनोदलकमला । हिमवद् धाम यस्याः सा हिमधामा, हिमधाम्नो भा हिमधामभा, तया हिमधामभया । समा–सदृशी रुग् यस्याः सा समरुक् । इति द्वितीयवृत्तार्थः ॥ २ ॥

दे० व्या०—प्रणमतेति । तं 'जिनव्रजम्' जिनानां–तीर्थंकराणां व्रजं–समूहं यूयं प्रणमत–नमस्कारविषयीकुरुत इत्यन्वयः । 'णम प्रह्वीभावे' धातुः । 'प्रणमत' इति क्रियापदम् । के कर्तारः ? । यूयम् । किं कर्मतापन्नम् ? । जिनव्रजम् । किंविशिष्टं जिनव्रजम् ? । 'महिमधाम' महिमा–माहात्म्यं तस्य धाम–गृहम् । "धामागारं निशान्तं च" इत्यभिधानचिन्तामणिः ( का० ४, श्लो० ५८ ) । पुनः किंविशिष्टम् ? । 'भयासं' भयं अस्यति–क्षिपतीति तम् । पुनः किंविशिष्टम् ? । 'अरुक्' नास्ति रुक्–रोगो यस्य तम् (?) । यत्तदोर्नित्याभिसम्बन्धाद् यं जिनव्रजं अतितराम्–अतिशयेन यथा भवति तथा सुरेन्द्रवरयोषित्–इन्द्रमहिषी ननाम–अनंसीत् । '[प्र]णम प्रह्वीभावे' धातुः । 'ननाम' इति क्रियापदम् । का कर्त्री ? । 'सुरेन्द्रवरयोषित्' सुराणां इन्द्रः सुरेन्द्रः इति 'षष्ठीतत्पुरुषः', ततः सुरेन्द्रस्य वरा चासौ योषिच्चेति 'कर्मधारयः' । "योषा योषिद्विशेषास्तु" इत्यभिधानचिन्तामणिः ( ( का० ३, श्लो० १६८ ) । किंविशिष्टा सुरेन्द्रवरयोषित् ? । 'अपारविसारिरजोदलकमलानना' अपाराणि–अपर्यन्तानि विसारीणि–प्रसरणशीलानि रजांसि–परागाः

दलानि-पर्णानि च यस्य एवंविधं यत् कमलं-तामरसं तद्वदाननं-मुखं यस्याः सा तथा । "बर्हं पर्णं छदं दलं" इत्यभिधानचिन्तामणिः ( का० ४, श्लो० १८९ )। पुनः किंविशिष्टा ?। 'इलामिलनोदलकमला' इलायाः—पृथिव्याः मिलनं-सम्पर्कः तेन उत्-उत्थितः अलकेषु-कुन्तलेषु मलो यस्याः सा तथा। पुनः किंविशिष्टा ?। 'समरुक्' समा-सदृशा रुक्-कान्तिः यस्याः सा तथा। कया ?।'हिमधामभया' हिमधामा-चन्द्रः तस्य भा-कान्तिस्तया। एतेन शरीरस्य सौन्दर्यातिशयः सूचितः। इति द्वितीयवृत्तार्थः ॥ २ ॥



सिद्धान्तस्तवनम्---

त्वमवनताञ्जिनोत्तमकृतान्त ! भवाद् विदुषो-
ऽव सदनुमानसङ्गमन ! याततमोदयितः ।
शिवसुखसाधकं स्वभिदधत् सुधियां चरणं
वसदनुमानसं गमनयातत ! मोदयितः ! ॥ ३ ॥

—नर्कु०

ज० वि०—त्वमवेति। हे जिनोत्तमकृतान्त !—तीर्थकृत्सिद्धान्त ! त्वं—भवान् अवनतान्—प्रणतान् विदुषः—सम्यग्ज्ञानवतः भवात्—संसारात् अव—रक्षेति क्रियाकारकसण्टङ्कः। अत्र 'अव' इति क्रियापदम्। कः कर्ता ? 'त्वम्'। कान् कर्मतापन्नान् ? 'विदुषः'। कथंभूतान् ? 'अवनतान्'। कस्मात् ? 'भवात्'। कथंभूतस्त्वं ? 'याततमोदयितः' याततमसः—गतमोहाः मुनय इत्यर्थः, तेषां दयितः—प्रियः। त्वं किं कुर्वन् ? ''स्वभिदधत्' सुष्ठु अभिदधानः। किं कर्मतापन्नम् ? 'चरणं' अनुष्ठानम्। कथंभूतम् ? 'शिवसुखसाधकं' मुक्तिसुखावर्जकम्। पुनः किं कुर्वन् ? 'वसत्' तिष्ठत्। कथम् ? 'अनुमानसं' मानसमनुलक्षीकृत्य। केषाम् ? 'सुधियां' धीमताम्। अवशिष्टानि सिद्धान्तस्य सम्बोधनानि, तद्व्याख्या त्वेवम्—हे 'सदनुमानसङ्गमन !' सद्—विद्यमानं शोभनं वा अनुमानसङ्गमनं—अनुमानस्य सङ्गतिर्यस्य स तथा तत्सम्बो० हे सदनु०। हे 'गमनयातत !' गमाः—सदृशपाठाः नयाः—नैगमादयः तैः आतत !—विस्तीर्ण !। हे 'मोदयितः !' मोदयतीति मोदयिता, तत्सम्बो० हे मोदयितः ! ॥

अथ समासः—जिनानां जिनेषु वा उत्तमाः जिनोत्तमाः 'तत्पुरुषः'। जिनोत्तमानां कृतान्तः जिनोत्तम० 'तत्पुरुषः'। तत्सम्बो० हे जिनोत्त०। अनुमानस्य सङ्गमनं अनुमा० 'तत्पुरुषः'। सद् अनुमानसङ्गमनं यस्य स सदनु० 'तत्पुरुषः'। तत्सम्बो० हे सदनु०। यातं तमो येषां ते यात० 'बहुव्रीहिः'। याततमसां दयितः यात० 'तत्पुरुषः'। शिवस्य सुखं शिव० 'तत्पुरुषः'। शिवसुखस्य साधकं शिव० 'तत्पुरुषः'। तत् शिव०। मानसमनु अनुमानसं 'अव्ययीभावः'। गमाश्च नयाश्च गमनयाः 'इतरेतरद्वन्द्वः'। गमनयैः आततः गम० 'तत्पुरुषः'। तत्सम्बो० हे गम०। इति काव्यार्थः ॥ ३ ॥

सि० वृ० —त्वमवेति । जिनेषु उत्तमाः–प्रधानाः तीर्थङ्कराः तेषां कृतान्तो–राद्धान्तः तस्य संबोधनं हे जिनोत्तमकृतान्त ! त्वं–भवान् अवनतान्–प्रणतान् विदुषः–पण्डितान् भवात्–संसारात् अव–रक्षेत्यर्थः । 'अव रक्षणे' धातोः 'आशीःप्रेरणयोः' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनम् । क्रियायाः साधनिका तु पूर्ववत् । अत्र 'अव' इति क्रियापदम् । कः कर्ता ? । त्वम् । कान् कर्मतापन्नान् ? । 'विदुषः' विदन्तीति विद्वांसः तान् विदुषः । 'विदेः शतुर्वसुः' ( पा० अ० ७, पा० १, सू० ३६ ), 'वसोर्व उः' ( सा० सू० ३०२ ) इति वकारस्योकारः, 'अम्शसोरस्य' ( सा० सू० १२६ ) इत्यकारलोपे, 'किशात्०' ( सा० सू० १४१ ) इति षत्वं, 'वसोः सम्प्रसारणं' ( पा० अ० ६, पा० ४, सू० १३१ ) इति वकारस्योकारः पूर्वरूपत्वं चाकारस्य । कथंभूतान् विदुषः ? । अवनतान् । कस्मात् ? । भवात् । कथंभूतस्त्वम् ? । 'याततमोदयितः' यातं–गतं तमो–मोहो येषां ते याततमा–मुनयः तेषां दयितो–वल्लभः, अज्ञानवर्जितानां प्रिय इत्यर्थः । त्वं किं कुर्वन् ? । 'स्वभिदधत्' सुष्ठु अभिदधानः । किं कर्म ? । चरणं–अनुष्ठानम् । कथंभूतम् ? । 'शिवसुखसाधकं' शिवं–निःश्रेयसं तस्य सुखं–शर्म तस्य साधकं–जनकम् । पुनः किं कुर्वन् ? । वसत्–तिष्ठत् । कथम् ? । 'अनुमानसं' मानसमनु–लक्षीकृत्य, मानसं मानसं अनु इति अनुमानसं 'अव्ययीभावः' । केषाम् ? । 'सुधियां' सुष्ठु–शोभना धीर्येषां ते सुधियः तेषाम् । अवशिष्टानि सिद्धान्तस्य सम्बोधनपदानि, तद्व्याख्या चैवम्—हे 'सदनुमानसङ्गमन !' सद्–विद्यमानं शोभनं वा यद् अनुमानं तस्य सङ्गमनं–सङ्गतिर्यस्मिन् यस्य वा स तथा तस्य संबोधनं हे सद० । "लिङ्गपरामर्शोऽनुमानम्" इति **मणिकृतः** । "परामृश्यमाणं लिङ्गमनुमानम्" इत्युदयनाचार्याः । हे 'गमनयातत !' गमाः–सदृशपाठाः नया–नैगमादयः, गमाश्च नयाश्च गमनयाः 'इतरेतरद्वन्द्वः', गमनयैः आ–समन्तात् ततो–विस्तृतो गमनयाततः, तस्य संबोधनं० हे गम० ! । हे 'मोदयितः !' मोदयतीति मोदयिता, तस्य संबोधनं हे मोदयितः ! ॥ ३ ॥

**सौ० वृ०—त्वमवेति । हे जिनोत्तमकृतान्त !–हे तीर्थकरप्रधानसिद्धान्त ! । हे सदनुमानसङ्गमन !–हे प्रधानानुमानप्रसङ्ग ! । हे गमाः–सदृशपाठाः नया–नैगमाद्यास्तैः कृत्वा आतत !–विस्तीर्ण ! हे 'गमनयातत !' । मोदयतीति मोदयिता तस्य सं० हे मोदयितः !–हे हर्षकारक ! । त्वं भवात्–संसारात् विदुषः–पण्डितान् अव इत्यन्वयः । 'अव' इति क्रियापदम् । कः कर्ता ? । 'त्वम्' । 'अव' रक्ष । कान् कर्मतापन्नान् ? । 'विदुषः' । कस्मात् ? । 'भवात्' । किंविशिष्टान् विदुषः ? । 'अवनतान्' प्रणतान् । किंविशिष्टस्त्वम् ? । यातं–गतं तमः–अज्ञानं येषां ते याततमसो–मुनयः तेषां दयितो–वल्लभो 'याततमोदयितः' । पुनस्त्वं किं कुर्वन् ? । 'वसत्'(?) वासं कुर्वन् । किं कर्मतापन्नम् ? । 'अनुमानसं' मानसं–चित्तं अनु–लक्ष्यीकृत्य । केषाम् ? । 'सुधियां' पण्डितानाम् । पुनस्त्वं किं कुर्वन् ? । 'स्वभिदधत्' सुष्ठु–शोभनं अभिदधत्–कथयत् । कं कर्मतापन्नम् ? । 'चरणं' चारित्रम् । किंविशिष्टं चरणम् ? । शिवो–मोक्षः तस्य सुखं स्वाभाविकं अचलमक्षयमव्याबाधरूपं तस्य साधकं–परमकारणम् । एतादृश हे जिनोत्तमकृतान्त ! त्वं अव–रक्ष । इति पदार्थः ॥**

**अथ समासः—जिनानां उत्तमः जिनोत्तमः, जिनोत्तमस्य कृतान्तः जिनोत्तमकृतान्तः, तस्य सं० हे जिनोत्तमकृतान्त ! । विदन्ति ते विद्वांसः, तान् विदुषः । सत् च तत् अनुमानं (च) सदनुमानं, सदनुमानस्य सङ्गमनं–मिलनं यस्य स सदनुमानसङ्गमनः, तस्य सं० हे सदनुमानसङ्गमन ! । यातं तमो येषां ते यात-**

तमसः, याततमसां दयितो याततमोदयितः। शिवस्य सुखानि शिवसुखानि, शिवसुखानां साधकं शिवसुखसाधकं, तत् शिवसुखसाधकम्। सुष्ठु-शोभनं अभिदधत् स्वभिदधत् । सु-शोभना धीर्येषां ते सुधियः, तेषां सुधियाम् । चर्यते-संसारतीरं प्राप्यते अनेन इति चरणम्। मानसं अनु-लक्षीकृत्य इत्यनुमानसम्। गमाश्च नयाश्च गमनयाः, गमनयैः आततः गमनयाततः, तस्य सं० हे गमनयातत!। मोदयतीति मोदयिता, तस्य सं० हे मोदयितः! । इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या०—त्वमवेति । हे 'जिनोत्तमकृतान्त!' जिनोत्तमाः-तीर्थंकराः तेषां कृतान्तः-सिद्धान्तः, तस्यामन्त्रणम्। त्वं भवात्-संसारात् विदुषः-पण्डितान् अव-रक्षेत्यन्वयः। 'अव रक्षणे' धातुः। 'अव' इति क्रियापदम्। कः कर्ता ?। त्वम्। कान् कर्मतापन्नान् ?। विदुषः। कस्मात् ?। भवात्। किंविशिष्टान् विदुषः। अवनतान्-प्रणतान्। किंविशिष्टस्त्वम् ?। 'याततमोदयितः' यातं-गतं तमः-अज्ञानं पापं येषां ते याततमाः अर्थान्मुनयः तेषां दयितो-वल्लभः। त्वं किं कुर्वन् ?। स्वभिदधत्-धारयन्। किम् ?। चरणम्-चारित्रम्। "चारित्रचरणे अपि" इत्यभिधानचिन्तामणिः (का० ३, श्लो० ५०७)। किंविशिष्टं चरणम् ?। 'शिवसुखसाधकम्' शिवसुखं-मुक्तिसुखं तस्य साधकं-प्रापकम्। शिवस्य सुखं शिवसुखमिति 'षष्ठीतत्पुरुषः'। पुनः किं कुर्वत् ?। वसत्-निवसत्। किम् ?। 'अनुमानसम्' मानसं मानसं प्रति अनुमानसम्, (मानसं) लक्षीकृत्येत्यर्थः। केषाम् ?। 'सुधियाम्' सुष्ठु-शोभना धीः-बुद्धिः येषां ते तथा तेषाम्। 'सदनुमानसङ्गमन!' इति। सत्-शोभनं यद् अनुमानं तस्य संगमनं-संघटनं यस्मिन् तस्यामन्त्रणम्। "लिङ्गपरामर्शोऽनुमानम्" इति नैयायिकाः। 'गमनयातत!' इति। गमाः-सदृशपाठाः नयाः-प्रमाणैकदेशाः एतेषां 'द्वन्द्वः', तैः आ-समन्तात् ततो-विस्तीर्णः यः स तस्यामन्त्रणम्। 'मोदयितः!' इति। मोदं-हर्षं कारयतीति मोदयिता तस्यामन्त्रणम्। एतानि सर्वाणि जिनसिद्धान्तस्य सम्बोधनपदानि। इति तृतीयवृत्तार्थः ॥ ३ ॥



श्रीगौरीसंस्तवः—

अधिगतगोधिका कनकरुक् तव गौर्युचिता-
ङ्कमलकंराजि तामरसभास्यतुलोपकृतम्।
मृगमदपत्रभङ्गतिलकैर्वदनं दधती
कमलकरा जितामरसभाऽस्यतु लोपकृतम् ॥ ४ ॥ २० ॥

—नर्कु०

ज० वि०—अधिगतेति। भो भव्यात्मन्! गौरी—गौर्याख्या देवता तव—भवतः लोपकृतं—विनाशकृतं अर्थात् विपक्षादिकं अस्यतु—क्षिपतु अथवा विनाशयतु इति क्रियाकारकयोगः। अत्र 'अस्यतु' इति क्रियापदम्। का कर्त्री? 'गौरी'। कं कर्मतापन्नम्? 'लोपकृतम्'। कस्य? 'तव'। गौरी कथंभूता? 'अधिगतगोधिका' अधिगता—प्राप्ता गोधा—देववाहनविशेषो यया सा तथा। अत्र स्वार्थे कः प्रत्ययः। पुनः कथं०? 'कनकरुक्' सुवर्णच्छविः। गौरी किं कुर्वती? 'दधती' बिभ्राणा। किं कर्मतापन्नम्? 'वदनं' मुखम्। कथंभूतं वदनम्? 'उचिताङ्कं' उचिता—योग्या अङ्का—लाञ्छनानि यस्य तत् तथा। किं कृत्वा?

१ '०राजितामरस०' इत्यपि सम्भवति।




निर्वाणकलिकायाम—

"गौरीं देवीं कनकगौरीं गोधावाहनां चतुर्भुजां वरदमुसलयुतदक्षिण-करां अक्षमालाकुवलयालङ्कृतवामहस्तां चेति ।"

 

'मृगमदपत्रभङ्गतिलकैः' मृगमदेन–कस्तूरिकया ये पत्रभङ्गतिलकाः–पत्रच्छेदोपलक्षितविशेषकास्तैः कृत्वा। पुनः कथं० ? 'अलकराजि' कुरलोद्भासि। "कुरलो भ्रमरालकः" इत्यभिधानचिन्तामणौ (का० ३, श्लो० २३३)। पुनः कथं० ? 'तामरसभासि' पद्मवद् भासनशीलम्। पुनः कथं० ? 'अतुलोपकृतं' स्वकान्तिसम्भागप्रदानादिना अतुलं–असदृशं उपकृतं-उपकारो यस्य तत् तथा। अथवा अतुलं यथा स्यात् तथा उपकृतं–उपकारे स्थितम्। पुनः कथंभूता गौरी ? 'कमलकरा' कमलं करे यस्याः सा तथा, अथवा कमलवत् करौ यस्याः सा तथा। पुनः कथं० 'जितामरसभा' जिता–निष्प्रभीकृता रूपनेपथ्यप्रागल्भ्यादिभिः अमराणां सभा यया सा तथा ॥

अथ समासः—अधिगता गोधा यया सा अधिगतगोधिका 'बहुव्रीहिः'। कनकवद् रुक् यस्याः सा कनक० 'बहुव्रीहिः'। उचिता अङ्का यस्मिन् तत् उचिताङ्कं० 'बहुव्रीहिः'। (तत् उचि०।) अलकै राजि अल० 'तत्पुरुषः'। तदल०। तामरसवद् भासि तामर० 'तत्पुरुषः'। तत् ताम०। अतुलं उपकृतं यस्य तदतुलो० 'बहुव्रीहिः'। अथवा अतुलं उपकृतं येन तदतुलो० 'बहुव्रीहिः'। तदतुलो०। मृगस्य मदो मृगमदः 'तत्पुरुषः'। पत्रभङ्गैरुपलक्षितास्तिलकाः पत्र० 'तत्पुरुषः'। मृगमदेन पत्रभङ्गतिलका मृगमद० 'तत्पुरुषः'। तैर्मृग०। कमलं करे यस्याः सा कमल०'बहुव्रीहिः'। अथवा कमलवत् करौ यस्याः सा कमल० 'बहुव्रीहिः'। अमराणां सभा अमर० 'तत्पुरुषः। जिता अमरसभा यया सा जिता० 'बहुव्रीहिः'। लोपं करोतीति लोपकृत् 'तत्पुरुषः'। तं लोपकृतम्। इति काव्यार्थः ॥ ४ ॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीमुनिसुव्रतजिनपतेः स्तुतेर्व्याख्या ॥ २० ॥

सि० वृ०—अधिगतेति। हे भव्यात्मन् ! गौरी–गौरीनाम्नी देवी तव–भवतो लोपकृतं–विनाशकृतं अर्थाद् विपक्षादिकं अस्यतु–क्षिपत्वित्यर्थः। 'असु क्षेपणे' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०१) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप्। 'दिवादेर्यः' (सा० सू० ९१३), 'स्वरहीनं' (सा० सू० ३१)। तथाच 'अस्यतु' इति सिद्धम्। अत्र 'अस्यतु' इति क्रियापदम्। का कर्त्री ? 'गौरी' गौरवर्णत्वाद् गौरी। कं कर्मतापन्नम् ?। 'लोपकृतम्' लोपं–विनाशं करोतीति लोपकृत् तम्। कस्य ?। तव। कथंभूता गौरी ?। 'अधिगतगोधिका' अधिगता–प्राप्ता गोधा–देववाहनविशेषो यया सा तथा। गोधा एव गोधिका, स्वार्थे कः। अन्ये तु गोधिकां अधिगता अधिगतगोधिका। क्वचिदमाद्यन्तस्य परत्वमिति गोधिकाशब्दस्य परनिपातः इति व्याख्यान्ति तच्चिन्त्यमिव प्रतिभाति। पुनः कथंभूता ?। 'कनकरुक्' कनकं–काञ्चनं तदिव रुक्–छविर्यस्याः सा कनकरुक्। गौरी किं कुर्वती ?। दधती–बिभ्राणा। किम् ?। वदनं–मुखम्। कथंभूतं वदनम् ?। 'उचिताङ्कं' उचिता अङ्का–लाञ्छनानि यस्य तत् तथा। "अङ्कः समीपे उत्सङ्गे, चिह्ने स्थानापराधयोः" इत्यमरः (?)। कैः कृत्वा ?। 'मृगमदपत्रभङ्गतिलकैः' मृगमदेन–कस्तूरिकया ये पत्रभङ्गतिलकाः–पत्रच्छेदोपलक्षितविशेषकाः तैः कृत्वा। पुनः कथंभू-

तम् ? । ' अलकराजि ' अलकैः—कुन्तलैः राजते इत्येवंशीलं अलकराजि । पुनः कथंभूतम् ? । ' तामरसभासि ' तामरसं—कमलं तद्वद् भासते इति तामरसभासि, पद्मवद् भासनशीलमित्यर्थः । पुनः कथंभूतम् ? । ' अतुलोपकृतं ' अतुलं—असदृशं उपकृतं—उपकारो यस्य तत् । कृपाकटाक्षमात्रेणैव सुखजनकत्वादिति भावः । कथंभूता गौरी ? । ' कमलकरा ' कमलं करे यस्याः सा, क्रीडायै तद्ग्रहणादिति भावः । यद्वा कमलवत् करौ यस्याः सा तथेत्यर्थः । पुनः कथंभूता ? । ' जितामरसभा ' जिता—निष्प्रभीकृता स्वरूपनेपथ्यादिभिः अमराणां सभा यया सा तथा ॥ नर्कुटकं छन्दः ॥ " यदि भवतो नजौ भजजला गुरुर्नर्कुटकम् " इति च तल्लक्षणम् ॥ ४ ॥

॥ इति महोपाध्यायश्रीभानुचन्द्र० श्रीमुनिसुव्रतजिनस्तुतिवृत्तिः ॥ २० ॥

सौ० वृ०—अधिगतेति । गौरी-गौरीनाम्नी देवी तव ' लोपकृतं ' लोपो-विघ्नाक्षेमादि कृतं-कर्तारं अस्यतु इत्यन्वयः । ' अस्यतु ' इति क्रियापदम् । का कर्त्री ? । ' गौरी ' । ' अस्यतु ' क्षिपतु-निराकरोतु । किं कर्मतापन्नम् ? । ' लोपकृतं ' विघ्नकर्तारम् । कस्य ? । ' तव ' ते । किंविशिष्टा गौरी ? । अधिगता-अधिश्रिता गोधिका-देववाहनविशेषो यया सा ' अधिगतगोधिका ', चन्दनगोधावाहनेत्यर्थः । पुनः किंविशिष्टा गौरी ? । ' कनकरुक् ' सुवर्णच्छविः । पुनः किं कुर्वती गौरी ? । ' दधती ' धारयन्ती । किं कर्मतापन्नम् ? । ' वदनं ' मुखम् । किंविशिष्टं वदनम् ? । ' उचितं ' योग्यम् अङ्कं-चिह्नरेखादिकं यस्मिन् तत् ' उचिताङ्कम् ' । कैः कृत्वा ? । मृगमदः-कस्तूरिका पत्रभङ्गाः-पत्रवल्लयः पियलि इति भाषा तिलकं-ललामं मृगमदपत्रभङ्गतिलकानि तैः ' मृगमदपत्रभङ्गतिलकैः ' । पुनः किंविशिष्टा गौरी ? । अलकाः-केशास्तेषां राजिः-श्रेणिः तस्यां तामरसानि-कमलानि तेषां भा-कान्तिर्यस्याः सा अलकराजितामरसभासी । पुनः किंविशिष्टा गौरी ? । ' कमलकरा ' कमलहस्ता । पुनः किंविशिष्टा गौरी ? । लावण्यादिगुणैः ' जितामरसभा ' निर्जितसुरपर्षत् । कथम् ? । अतुलः(लं)-अमेयः(यं) उपकृतं-उपकृतिगुणो यथा भवतीति तथा ' अतुलोपकृतम् । अमेयोपकारगुणाधिक्येन निर्जितसुरपर्षत् तादृशी गौरी देवी तव लोपकृतं क्षिपतु । इति पदार्थः ॥

अथ समासः—अधिगता गोधिका-देववाहनविशेषो यया सा अधिगतगोधिका । कनकवद् रुक् यस्याः सा कनकरुक् । उचितानि अङ्कानि-चिह्नानि रेखादीनि यस्मिन् तत् उचिताङ्कं, तत् उचिताङ्कम् । अलकानां राजिः अलकराजिः, अलकराज्यां तामरसानि अलकराजितामरसानि, अलकराजितामरसानां भा यस्यां सा अलकराजितामरसभासी । अतुलं उपकृतं यस्मिन् तत् अतुलोपकृतं यथा स्यात् तथा । अथवा वदनस्यापि विशेषणमिदम् । मृगमदश्च पत्रभङ्गाश्च तिलकानि च मृगमदपत्रभङ्गतिलकानि, तैः मृगमदपत्रभङ्गतिलकैः । कमलं करे यस्याः सा कमलकरा । अमराणां सभा अमरसभा, जिता अमरसभा यया सा जितामरसभा । लोपं करोतीति लोपकृत्, तं लोपकृतम् ॥ इति तुर्यवृत्तार्थः ॥ ४ ॥

श्रीकूर्माङ्कजिनेशस्य, स्तुतेरर्थो लिबीकृतः ।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना ॥ १ ॥
॥ इति श्रीविंशतितममुनिसुव्रतजिनस्तुतिः ॥ ४ । २० । ८० ॥

दे० व्या०—अधिगतेति । गौरी देवी तव लोपकृतं-विनाशकारकं अस्यतु-क्षिपतु इत्यन्वयः । ' अस क्षेपणे ' धातुः । ' अस्यतु ' इति क्रियापदम् । का कर्त्री ? । गौरी देवी । कं कर्मतापन्नम् ? । लोपकृतम् । कस्य ? । तव । किंविशिष्टा गौरी ? । ' अधिगतगोधिका ' अधिगता-आरूढा गोधिका यया सा तथा । गोधिका-देववाहन-

---

१ ' चिह्नं रेखादिकं ' इति प्रतिभाति ।

विशेषः। पुनः किंविशिष्टा ?। ‘कनकरुक्’ कनकं-सुवर्णं तद्वद् रुक्-कान्तिर्यस्याः सा तथा, सुवर्णवर्णा भावः। पुनः किंविशिष्टा ?। ‘कमलकरा’ कमलं-नलिनं करे-हस्ते यस्याः सा तथा, क्रीडायै तद्ग्रहणात् यद्वा कमलवत् करौ-हस्तौ यस्याः सा तथा। पुनः किंविशिष्टा ?। ‘जितामरसभा’ अमराणां सभा अमरस इति ‘षष्ठीतत्पुरुषः’, ततः जिता-पराजिता अमरसभा-देवपर्षद् यया सा तथा शरीरसौन्दर्यात् तादृशने थ्यादिपरिधानाद् वा। किं कुर्वती देवी ?। दधती-धारयन्ती। किम् ?। वदनं-वक्त्रम्। किंविशिष्टं वदनम् ? ‘उचिताङ्कम्’ उचितं-योग्यस्थाने कृतं अङ्कं-लाञ्छनं यस्य तत्। “कलङ्काङ्कौ लाञ्छनं च” इत्यम (श्लो० १७८)। कैः ?। ‘मृगमदपत्रभङ्गतिलकैः’ मृगमदो-मृगनाभिः, “मृगनाभिर्मृगमदः” इत्यभिधान चिन्तामणिः (का० ३, श्लो० ३०८), तस्य पत्रभङ्गाः—पत्रच्छेदाः तैरुपलक्षिता ये तिलकाः—पुण्ड्रविशेष तैः। पुनः किंविशिष्टम् ?। ‘अलकराजि’ अलकाः—कुरलाः तैः राजते इत्येवंशीलं अलकराजि। पुन किंविशिष्टम् ?। ‘तामरसभासि’ तामरसं-कमलं तद्वद् भासते इत्येवंशीलं तामरसभासि। पुनः किंविशिष्टम् ? ‘अतुलोपकृतम्’ अतुलं-असदृशं उपकृतं-उपकारो यस्य तत्॥ इति तुरीयवृत्तार्थः॥ ४॥



# २१ श्रीनमिजिनस्तुतयः

अथ श्रीनमिनाथस्य संकीर्तनम्—

स्फुरद्विद्युत्कान्ते ! प्रविकिर वितन्वन्ति सततं
ममायासं चारो ! दितमद ! 'नमे'ऽघानि लपितः ! ।
नमद्भव्यश्रेणीभवभयभिदां हृद्यवचसा—
ममायासञ्चारोदितमदनमेघानिल ! पितः ! ॥ १ ॥

—शिखरिणी ( ६,११ )

ज० वि०—स्फुरद्विद्युदिति । हे नमिनाथ ! जिनपते ! त्वं मम—मे सततं—सर्वदा अघानि—पापानि प्रविकिर—निरस इति क्रियाकारकसंयोजनम् । अत्र ' प्रविकिर ' इति क्रियापदम् । कः कर्ता ? ' त्वम् ' । कानि कर्मतापन्नानि ? ' अघानि ' पापानि । कस्य ? ' मम ' । कथम् ? ' सततम् ' । अघानि किं कुर्वन्ति ? ' वितन्वन्ति ' विस्तारयमाणानि । किं कर्मतापन्नम् ? ' आयासं ' श्रमम्, भवभ्रमणक्लेशमित्यर्थः । अवशिष्टानि सर्वाण्यपि श्रीनमेः सम्बोधनानि, तद्व्याख्या चैवम्—हे ' स्फुरद्विद्युत्कान्ते ! ' चञ्चलतडित्प्रभ ! । हे ' चारो ! ' दर्शनीय ! । हे ' दितमद ' ! खण्डितदर्प ! । हे ' लपितः ! ' लपति—कथयतीत्येवंशीलो लपिता तत्सम्बो० हे लपितः ! । केषाम् ? ' हृद्यवचसां ' हृदयङ्गमवचनानाम् । कथंभूतानां हृद्यवचसाम् ? ' नमद्भव्यश्रेणीभवभयभिदां ' प्रणमद्भव्यसन्ततेः संसारभीतिभेदकानाम् । हे ' अमायासञ्चार ! ' न विद्यते मायायाः—शाठ्यस्य सञ्चारः—प्रचारो यस्मिन् तत्सम्बो० हे अमा० ! । हे ' उदितमदनमेघानिल ! ' उदितः—उद्गतो यो मदनमेघः—कामरूपो जलदः तत्र अनिल !—समीर !, तद्विघटनहेतुत्वात् । हे ' पितः ! ' जनक !, निष्कारणहितकारित्वात् ॥

अथ समासः—स्फुरन्ती चासौ विद्युच्च स्फुर० 'कर्मधारयः' । स्फुरद्विद्युत्वत् कान्तिर्यस्य स स्फुर० ' बहुव्रीहिः ' । तत्सम्बो० हे स्फुर० । दितो मदो येन स दितमदः ' तत्पुरुषः ' । तत्सम्बो० हे दित० । भव्यानां श्रेणी भव्य० ' तत्पुरुषः ' । नमन्ती चासौ भव्यश्रेणी च नमद्भव्य० ' कर्मधारयः ' । भवस्य भयं भवभयं ' तत्पुरुषः ' । भवभयं भिदन्तीति भव० 'तत्पुरुषः' । नमद्भव्यश्रेण्या भवभयभिदो नमद्भव्य० ' तत्पुरुषः ' । तेषां नमद्भव्य० । हृद्यानि च तानि वचांसि हृद्य० ' कर्मधारयः ' । तेषां हृद्य० । मायायाः सञ्चारो माया० ' तत्पुरुषः ' । न विद्यते मायासञ्चारो यस्य सः अमाया० ' बहुव्रीहिः ' । तत्सम्बो० हे माया० । मेघ इव मेघः । मदनश्चासौ मेघश्च मदन० ' कर्मधारयः ' । उदितश्चासौ मदनमेघश्च उदित० ' कर्म-

१ प्रथमायां वा ।

धारयः'। अनिल इवानिलः। उदितमदनमेघेऽनिलः उदित० 'तत्पुरुषः'। तत्सम्बो० हे उदित०। इति काव्यार्थः॥ १॥

सि० वृ०—स्फुरद्विद्युदिति। परीषहादिनाऽनमनान्नमिः, गर्भस्थेऽस्मिन् वैरिनृपैः रुद्धे पुरे भगवत्पुण्यशक्तिप्रेरितां प्राकारोपरिस्थितां भगवन्मातरमालोक्य ते वैरिनृपाः प्रणता इति वा नमिः, तस्य संबोधनं हे नमे!—नमिनामजिनपते! त्वं मम सततं—सर्वदा अघानि—पापानि प्रविकिर—विक्षिपेत्यर्थः। प्रपूर्वक 'कृ विक्षेपे' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) मध्यमपुरुषैकवचनं हि। 'अप्०' (सा० सू० १९१), 'ऋत इर्' (सा० सू० ८२०), 'अतः' (सा० सू० ७०५) इति हेर्लुक्, 'स्वरहीनं' (सा० सू० ३६)। तथाच 'प्रविकिर' इति सिद्धम्। अत्र 'प्रविकिर' इति क्रियापदम्। कः कर्ता?। त्वम्। कानि कर्मतापन्नानि?। अघानि। "अघं तु व्यसने प्रोक्त—मघं दुरितदुःखयोः" इति विश्वः। कस्य?। मम। कथम्?। सततम्। अघानि किं कुर्वन्ति?। वितन्वन्ति। 'तनु विस्तारे' वितन्वन्ति तानि विस्तारयमाणानि। किम्?। आयासं—श्रमं, भवभ्रमणक्लेशमित्यर्थः। अवशिष्टानि सर्वाणि नमेः संबोधनानि, तेषां व्याख्या यथा—हे 'स्फुरद्विद्युत्कान्ते!' स्फुरन्ती—इतस्ततः चलन्ती या विद्युत्—तडित् तद्वत् कान्तिः—शरीरद्युतिर्यस्य स तस्य संबोधनं हे स्फुर०। हे 'चार!' चरतीति चरः चर एव चारः। प्रज्ञादित्वादण्। तस्य संबोधनं हे चार! दर्शनीय इत्यर्थः। हे 'दितमद!'। दितः—खण्डितो मदो—दर्पो मुन्मोहसंभेदो वा येन स तथा तस्य सं०। हे 'लपितः!' लपति—कथयतीत्येवंशीलः लपिता तस्य सं० हे लपितः!। 'लप परिभाषणे' कर्तरि क्तः। केषाम्?। 'हृद्यवचसां' हृद्यानि—हृदयंगमानि च तानि वचांसि च हृद्यवचांसि तेषां हृद्यवचसाम्। कथंभूतानां हृद्यवचसाम्?। 'नमद्भव्यश्रेणीभवभयभिदां' नमन्ती—नमस्कारं कुर्वन्ती या भव्यानां भवन्तीति भवन्त्येभिरिति वा भव्याः 'भव्यगेय०' (पा० अ० ३, पा० ४, सू० ६८) इति निपातः तेषां सम्यग्दृशामित्यर्थः श्रेणी—पंक्तिः तस्याः भवभयं भवस्य—संसारस्य भयं—भीतिं भिन्दन्ति—विदारयन्ति तानि तथोक्तानि तेषां नमद्भव्यश्रेणीभवभयभिदाम्। "श्रेणी लेखास्तु राजयः" इत्यमरः (श्लो० १९१)। हे 'अमायासञ्चार!' नास्ति मायायाः—निकृतेः—शाठ्यस्य सञ्चारः—प्रचारो यस्मिन् स तथा तस्य सं०। हे 'उदितमदनमेघानिल!' उदितः—उदयं प्राप्तः यो मदनः—कामः स एव मेघः—पर्जन्यः तस्य तस्मिन् वा अनिल इव अनिलो—वायुः तस्य सं०। प्रादुर्भूतकन्दर्पमेघविघट्टने पवनकल्प इति निष्कर्षः। हे 'पितः' पाति रक्षतीति पिता तस्य संबोधनम्, निष्कारणहितकारित्वादिति भावः॥ १॥

सौ० वृ०—यो मुनिवत् सुव्रतो—महात्मा भवति तं प्रति सर्वेऽपि नमन्ति। तथा गर्भस्थे भगवति मातुर्दर्शनेन सर्वेऽपि शत्रवो नमिताः। अनेन सम्बन्धेनायातस्यैकविंशतितमश्रीनमिनाथजिनस्य स्तुतेरर्थो लिख्यते—स्फुरद्विद्युदिति।

हे 'नमे!' हे नमिजिनपते!। पुनः स्फुरन्ती—दीप्यन्ती या विद्युत्—तडित् तद्वत् कान्तिः—प्रभा यस्य स स्फुरद्विद्युत्कान्तिः तस्य सं० हे 'स्फुरद्विद्युत्कान्ते!'। हे चारो! हे मनोज्ञ!। हे 'दितमद!' हे खण्डितदर्प!। हे 'अमायप्रचार!' नास्ति (मायायाः प्रचारो यस्मिन् त-

१ इदं चिन्त्यमिव प्रतिभाति। २ 'प्रज्ञार्चाश्रद्धावृत्तिभ्योऽण्' इति सारस्वते (सू० ६१९)।

स्यामन्त्रणं ) अशाठ्यप्रचार ! । हे 'उदितमदनमेघानिल !' हे प्रकटितकामघनप्रचण्डपवन !, तन्निर्घाटकत्वात् । हे 'पितः!' हे निष्कारणेन जगज्जन्तुरक्षकत्वात् जनक ! । त्वं मे-मम अघानि-पापानि सततं-सदा प्रविकिर इत्यन्वयः । 'प्रविकिर' इति क्रियापदम् । कः कर्ता ? । 'त्वम्' । 'प्रविकिर' निरस्य-दूरं क्षिप । कानि कर्मतापन्नानि ? । 'अघानि' पापानि । कस्य ? । 'मे' मम । कथम् ? । 'सततं' निरन्तरम् । किंविशिष्टानि अघानि ? । 'वितन्वन्ति' विस्तारं कुर्वन्ति । किं कर्मतापन्नम् ? । 'आयासं' श्रमं भवभ्रमणलक्षणम् । कस्य ? । 'मम' । किंविशिष्टस्त्वम् ? । 'लपितः' हृद्यकथकः । केषाम् ? । हृद्यानि-मनोहराणि यानि वचांसि हृद्यवचांसि तेषां हृद्यवचसाम् । किंविशिष्टानां हृद्यवचसाम् ? । नमन्ती-प्रणमन्ती या भव्यानां-मुक्तिगमनयोग्यानां श्रेणी-राजिः तस्याः भवभयं-संसारभयं तस्य भेदनशीलानां 'नमद्भव्यश्रेणीभवभयभिदाम्' । तादृशस्त्वं मम दुरितानि प्रविकिर-दूरं प्रक्षिप । इति पदार्थः ॥

अथ समासः—स्फुरन्ती चासौ विद्युच्च स्फुरद्विद्युत्, स्फुरद्विद्युदिव कान्तिर्यस्य स स्फुरद्विद्युत्कान्तिः, तस्य सं० हे स्फुरद्विद्युत्कान्ते ! । दितो मदो येन स दितमदः, तस्य सं० हे दितमद ! । लपति-भाषते इति लपितः । नमन्तश्च ते भव्याश्च नमद्भव्याः, नमद्भव्यानां श्रेणी नमद्भव्यश्रेणी, भवस्य भयं भवभयं, नमद्भव्यश्रेण्या भवभयं नमद्भव्यश्रेणीभवभयं, नमद्भव्यश्रेणीभवभयं भिदन्ति तानि नमद्भव्यश्रेणी भवभयभीन्दि, तेषां नमद्भव्यश्रेणीभवभयभिदाम् । हृद्यानि च तानि वचांसि च हृद्यवचांसि, तेषां हृद्यवचसाम् । मायायाः सञ्चारो मायासञ्चारः, नास्ति मायासञ्चारो यस्य सः अमायासञ्चारः, तस्य सं० हे अमायासञ्चार ! । उदितश्चासौ मदनश्च उदितमदनः, उदितमदन एव मेघः उदितमदनमेघः, ( उदितमदनमेघे ) अनिल इवानिलः, उदितमदनमेघानिलः, तस्य सं० उदितमदनमेघानिल ! । पातीति पिता तस्य सं० हे पितः ! । क्वचिद्वृत्त्यन्तरे लपित इति विशेषणं संबोधनमप्यस्ति तत्र लपते इति लपिता तस्य सं० हे लपितः ! इत्यपि समासः । शिखरिणीच्छन्दसा स्तुतिरियम् । इति प्रथमवृत्तार्थः ॥ १ ॥

दे० व्या०—स्फुरद्विद्युदिति । हे नमे !-नमिजिन ! त्वं मम अघानि-पापानि सततं प्रविकिर-प्रकर्षेण विक्षेपय इत्यन्वयः । 'कॄ विक्षेपे' धातुः । 'प्रविकिर' इति क्रियापदम् । कः कर्ता ? । त्वम् । कानि कर्मतापन्नानि ? । अघानि । कथम् ? । सततं-निरन्तरं यथा स्यात् तथेति क्रियाविशेषणम् । किं कुर्वन्ति अघानि ? । वितन्वन्ति-विस्तारयमाणानि । किम् ? । आयासं-परिश्रमम् । संसारदुःखमितियावत् । 'स्फुरद्विद्युत्कान्ते !' इति । स्फुरन्ती-इतस्ततश्चलन्ती या तडिद्-विद्युत् तद्वत् कान्तिः-प्रभा यस्य स तस्यामन्त्रणं, सुवर्णवर्णशरीरत्वात् । 'चारो !' इति । चारो !-दर्शनीय ! इति प्राञ्चः । 'दितमद !' इति । दितः-खण्डितो मुन्मोहसम्भेदो येन स तस्यामन्त्रणम् । 'लपितः !' इति । प्रजल्पक ! इत्यर्थः । केषाम् ? । 'हृद्यवचसाम्' हृद्यानि-मनोज्ञानि वचांसि-वचनानि येषां तेषाम् । किंविशिष्टानां हृद्यवचसाम् ? । 'नमद्भव्यश्रेणीभवभयभिदाम्' नमन्ती-प्रणामं कुर्वन्ती या 'भव्यश्रेणी' भव्यानां-भव्यप्राणिनां श्रेणी-सन्ततिः तस्याः 'भवभयं' भवस्य-संसारस्य भयं-साध्वसं भिदन्ति-विदारयन्तीति तथा तेषाम् । 'अमायासञ्चार !' इति । नास्ति मायया-कपटेन सञ्चारः-प्रचारो यस्य स तस्यामन्त्रणम् । 'उदितमदनमेघानिल !' इति । उदितः-उदयं प्राप्तः यो मदनः-कन्दर्पः स एव मेघः-पर्जन्यः तस्मिन्, विघटनहेतुत्वात् अनिल इव अनिलो यः स तस्यामन्त्रणम् । 'पितः' ! इति आमन्त्रणे पदम्, जनक इव हितकारित्वात् । एतानि सर्वाण्यपि नमेः सम्बोधनपदानि ॥ इति प्रथमवृत्तार्थः ॥ १ ॥



जिनेश्वराणां जयः—

नखांशुश्रेणीभिः कपिशितनमन्नाकिमुकुटः
सदा नोदी नानामयमलमदारेरिततमः ।
प्रचक्रे विश्वं यः स जयति जिनाधीशनिवहः
सदानो दीनानामयमलमदारेरिततमः ॥ २ ॥

—शिख०

ज० वि०—नखांश्विति । सोऽयं—स एष जिनाधीशनिवहः—तीर्थंकरनिकरः सदा—सर्वदा अलं—अत्यर्थं जयति—सर्वतः अतिशायीभवति इति क्रियाकारकसम्बन्धः । अत्र 'जयति' इति क्रियापदम् । कः कर्ता ? 'जिनाधीशनिवहः' । कथम् ? 'सदा' । पुनः कथम् ? 'अलम्' । जिनाधीशनिवहः कथंभूतः ? 'कपिशितनमन्नाकिमुकुटः' कपिशिताः—पिञ्जिताः नमन्नाकिमुकुटाः—प्रणमत्सुरशिरोमणयो येन स तथा । काभिः कृत्वा ? 'नखांशुश्रेणीभिः' नखमयूखमालाभिः । पुनः कथं० ? 'नोदी' प्रेरणशीलः, दूरीकरणशील इत्यर्थः । कस्य ? 'नानामयमलमदारेः' नाना—अनेकरूपाः ये आमयाः—रोगाः मलाः—कर्ममलाः मदाः—जात्यादिरूपाः त एवारिः तस्य । पुनः कथं० ? 'सदानः' दानसहितः । केषाम् ? 'दीनानां' कृपणानाम् । पुनः कथं० ? 'अदारेरिततमः' दारैः—स्त्रीभिः ईरितो—ध्यानाच्चालितः, न दारेरितः अदारेरितः, अतिशयेन अदारेरितः अदारेरिततमः । स इति तच्छब्दसम्बन्धाद् यच्छब्दयोजनामाह—यो विश्वं—जगत् इततमः—गतमोहं प्रचक्रे—कृतवान् । अत्रापि 'प्रचक्रे' इति क्रियापदम् । कः कर्ता ? 'यः' । किं कर्मतापन्नम् ? 'विश्वम्' । कथंभूतम् ? 'इततमः' ॥

अथ समासः—नखानां अंशवः नखांशवः 'तत्पुरुषः' । नखांशूनां श्रेण्यः नखां० 'तत्पुरुषः' । ताभिः नखां० । नमन्तश्च ते नाकिनश्च नम० 'कर्मधारयः' । नमन्नाकिनां मुकुटाः नम० 'तत्पुरुषः' । कपिशिता नमन्नाकिमुकुटा येन स कपिशित० 'बहुव्रीहिः' । आमयाश्च मलाश्च मदाश्च आमयमलमदाः 'इतरेतरद्वन्द्वः' । नाना च ते आमयमलमदाश्च नानामय० 'कर्मधारयः' । अरिरिवारिः । नानामयमलमदा एवारिर्नानामय० 'कर्मधारयः' । तस्य नानामय० । इतं तमो यस्मात् तद् इततमः 'बहुव्रीहिः' । जिनानां जिनेषु वा अधीशा जिनाधीशाः 'तत्पुरुषः' । जिनाधीशानां निवहो जिना० 'तत्पुरुषः' । सह दानेन वर्तते यः स सदानः 'तत्पुरुषः' । दारैरीरितो दारेरितः 'तत्पुरुषः' । न दारेरितः अदारेरितः 'तत्पुरुषः' । अतिशयेनादारेरितः अदारेरिततमः । इति काव्यार्थः ॥ २ ॥

सि० वृ०—नखांश्विति। सोऽयं—स एष जिनाधीशनिवहः—तीर्थकरसमूहः सदा—सर्वदा अलं—अत्यर्थं जयति—सर्वतः अतिशायीभवतीत्यर्थः। 'जि जये' धातोः कर्तरि वर्तमाने परस्मैपदे प्रथमपुरुषैकवचनम्। क्रियासाधनिका पूर्ववत्। अत्र 'जयति' इति क्रियापदम्। कः कर्ता ?। 'जिनाधीशनिवहः' जिनानां जिनेषु वा अधीशाः—स्वामिनः तेषां निवहो—निकुरम्बो जिनाधीशनिवहः। "समूहो निवहव्यूह—सन्दोहविसरव्रजाः" इत्यमरः (श्लो० १०६९)। कथंभूतो जिनाधीशनिवहः ?। 'कपिशितनमन्नाकिमुकुटः' कपिशिताः—पिशङ्गीकृता नमन्तो ये नाकिनः—देवाः तेषां मुकुटाः—किरीटानि येन स तथा। "पिशङ्गः कपिशो हरिः" इति हैमः (का० ६, श्लो० ३२)। "मौलिः कोटीरमुष्णीषं, किरीटं मुकुटोऽस्त्रियाम्" इति वैजयन्ती। "मौलिः किरीटं कोटीरमुष्णीषं" इति (अभिधान)चिन्तामणौ (का० ३, श्लो० ३१९)। काभिः कृत्वा ?। 'नखांशुश्रेणीभिः' नखाः—करशूकाः तेषां अंशवो—मयूखास्तेषां श्रेणयः—पङ्क्तयः ताभिः। पुनः कथंभूतः ?। 'नोदी' नुदतीत्येवंशीलो नोदी, दूरीकरणशील इत्यर्थः। 'नुद् स्फेटने' 'सुप्यजातौ०' (पा० अ० ३, पा०२, सू० ७८) इति णिनिः। कस्य ?। 'नानामयमलमदारेः' नाना—विविधप्रकारा ये आमया—रोगाः मलाः—पापानि मदाः—जात्याद्यहङ्कृतयस्त एव अरिः तस्य, आमयाश्च मलाश्च मदाश्च आमयमलमदाः 'इतरेतरद्वन्द्वः'। नाना च ते आमयमलमदाश्च नानामयमलमदाः 'कर्मधारयः'। अरिरिवारिः, नानामय(मलमदा एव अरिः नाना०) इति 'कर्मधारयः'। पुनः कथंभूतः ?। सदानः—दानसहितः। केषाम् ?। दीनानां—कृपणानाम्। पुनः कथंभूतः ?। 'अदारेरिततमः' दारैः—स्त्रीभिरीरितो—ध्यानाच्चालितः दारेरितः, न दारेरितः अदारेरितः, अतिशयेन अदारेरितः अदारेरिततमः, स्त्रीभिर्व्याक्षिप्तचित्तो नेत्यर्थः। अतिशयेऽर्थे तमप्। स इति स कः ?। यो जिनाधीशनिवहः विश्वं—जगत् इततमः—गतमोहं चक्रे—चकारेत्यर्थः। 'डुकृञ् करणे' धातोः परोक्षे आत्मनेपदे प्रथमपुरुषैकवचनम्। 'द्विश्च' (सा० सू० ७१०) इति द्वित्वम्। 'रः' (सा० सू० ७६८) इत्यनेन ऋकारस्याकारः। 'कुहोश्चुः' (सा० सू० ७४६)। 'ऋ रं' (सा० सू० ३९)। 'स्वरहीनं०' (सा० सू० ३६)। तथाच 'चक्रे' इति सिद्धम्। अत्र च 'चक्रे' इति क्रियापदम्। कः कर्ता ?। यः। किं कर्मतापन्नम् ?। विश्वम्। कीदृशम् ?। 'इततमः' इतं—गतं तमः—अज्ञानं शोको वा यस्य तत् इततमः। "तमोऽन्धकारे स्वर्भानौ, तमः शोके गुणान्तरे" इत्यमरः (?)॥ १॥

सौ० वृ०—नखांश्विति। अयं—प्रत्यक्षो मानसगतः स्थापनागतो वा स—प्रसिद्धो जिनाधीशनिवहः—तीर्थकरसमूहः सदा—सर्वदा जयति इत्यन्वयः। 'जयति' इति क्रियापदम्। कः कर्ता ?। 'जिनाधीशनिवहः'। 'जयति' सर्वातिशयोत्कर्षेण वर्तते। किंविशिष्टो जिनाधीशनिवहः ?। कपिशिताः—पिञ्जरीकृताः नमन्तो ये नाकिनो—देवास्तेषां मुकुटानि—किरीटानि येन सः 'कपिशितनमन्नाकिमुकुटः'। नखानां—करजानां अंशवः—किरणास्तेषां श्रेण्यो—राजयः ताभिः नखांशुश्रेणीभिः। किंविशिष्टो जिनाधीशनिवहः?। 'नोदी' प्रेरणशीलः, वार्यमाणत्वात्। कस्य ?। नानाप्रकारा आमया—रोगाः मलाः—कर्ममलाः मदाः—जात्यादयः त एव अरयः—शत्रवः, जातौ एकवचनं, नानामयमलमदारिः स तस्य 'नानामय-

१ 'अरिः—शत्रुः' इति प्रतिभाति।

मलमदारेः'। पुनः किंविशिष्टो जिनाधीशनिवहः ? । 'सः' प्रसिद्धः । तच्छब्दो यच्छब्दमपेक्षते । स कः ?। यो जिनाधीशनिवहः अलं-अत्यर्थं विश्वं-जगत् इतं-गतं तमः-अज्ञानं यस्मात् तत् इततमं-गताज्ञानं प्रचक्रे इत्यन्वयः । 'प्रचक्रे' इति क्रियापदम् । कः कर्ता ?। 'यः' 'जिनाधीशनिवहः । 'प्रचक्रे' प्रकर्षेण कृतवान् । किं कर्मतापन्नम् ?। 'विश्वं' जगत् । किंविशिष्टं विश्वम् ?। 'इततमः' । कथम् ?। 'अलं' अत्यर्थम्। किंविशिष्टो यः ?। ('सदानः') अभयदानादिना वार्षिकदानादिना वा सहितः । केषाम् ?। 'दीनानाम्' दुःखितानाम् । पुनः किंविशिष्टो यः ?। न विद्यते दारैः-स्त्रीभिः ईरिततमः-अतिशयेन प्रेरणं यस्य सः 'अदारैरिततमः'। एतादृशो जिनसमूहो जयति । इति पदार्थः ॥

अथ समासः—नखानां अंशवः नखांशवः, नखांशूनां श्रेण्यः नखांशुश्रेण्यः, ताभिः नखांशुश्रेणीभिः। नमन्तश्च ते नाकिनश्च नमन्नाकिनः, नमन्नाकिनां मुकुटाः नमन्नाकिमुकुटाः, कपिशिताः नमन्नाकिमुकुटा येन स कपिशितनमन्नाकिमुकुटः । नुदः-प्रेरणं अस्यास्तीति नोदी । नानाविधा आमया नानामयाः, नानामयाश्च मलाश्च मदाश्च नानामयमलमदाः, नानामयमलमदा एव अरिः नानामयमलमदारिः, तस्य नानामयमलमदारेः । इतं-गतं तमः-अज्ञानं यस्मात् तत् इततमः । जिनानां अधीशा जिनाधीशाः, जिनाधीशानां निवहः जिनाधीशनिवहः । दानेन सहितः सदानः । अतिशयेन ईरित इति ईरिततमः, नास्ति दारैः ईरिततमः अदारैरिततमः । इति द्वितीयवृत्तार्थः ॥ २ ॥

दे० व्या०-नखांश्विति । स जिनाधीशनिवहो-जिनपतिसमूहः अलं-अत्यर्थं जयति-सर्वोत्कर्षेण वर्तत इत्यन्वयः । 'जि जये' धातुः । 'जयति' इति क्रियापदम् । कः कर्ता ? । जिनाधीशनिवहः । कथम् ? । अलं-अत्यर्थं यथा स्यात् तथेति क्रियाविशेषणम् । किंविशिष्टो जिनाधीशनिवहः ? । 'कपिशितनमन्नाकिमुकुटः' नमन्तश्च ते नाकिनश्चेति पूर्वं 'कर्मधारयः', ततः कपिशिताः-पिशङ्गीकृताः कर्बुरीकृता इतियावत् नमन्नाकिनां-प्रणमद्देवानां मुकुटाः-किरीटा येनेति 'तृतीयाबहुव्रीहिः'। "पिशङ्गः कपिशो हरिः" इत्यभिधानचिन्तामणिः ( का० ६, श्लो० ३२ ) । काभिः ? । 'नखांशुश्रेणीभिः' अंशूनां श्रेण्यः अंशुश्रेण्य इति पूर्वं 'षष्ठीतत्पुरुषः', ततः नखाः-कररुहाः तेषां अंशुश्रेण्यः-किरणसमूहाः ताभिरिति विग्रहः । किंविशिष्टः ? । नोदी-प्रेरकः । कस्य ? । 'नानामयमलमदारेः' आमयो-रोगः, "आम आमय आकल्पः (ल्यम्)" इत्यभिधानचिन्तामणिः ( का० ३, श्लो० १२७ ), मलः-कर्मलेपः मदः-अहंकृतिः एतेषां 'द्वन्द्वः', पश्चान्नानापदेन 'कर्मधारयः', तेषां अरिः-शत्रुर्यः स तस्य । पुनः किंविशिष्टः ? । 'सदानः' दानं-वितरणं तेन सह वर्तमानः । केषाम् ? । दीनानां-दुःखितानाम् । पुनः किंविशिष्टः ? । 'अदारैरिततमः' दाराः-कलत्राणि तैरीरिततमः-अतिशयेन व्याक्षिप्तचेता नेत्यर्थः । यत्तदोर्नित्याभिसम्बन्धाद् यो जिनाधीशनिवहः विश्वं-विष्टपं इततमः-गततमः चक्रे-चकार । 'डुकृञ् करणे' धातुः । 'चक्रे' इति क्रियापदम् । कः कर्ता ? । जिनाधीशनिवहः । किं कर्मतापन्नम् ? । विश्वम् । किंविशिष्टं विश्वम् ? । 'इततमः' इतं-गतं तमः-अज्ञानं यस्य तत् ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥



**सिद्धान्तपरिचयः—**

जल-व्याल-व्याघ्र-ज्वलन-गज-रुग्-बन्धन-युधो
गुरुर्वाहोऽपातापदघनगरीयानसुमतः ।
कृतान्तस्त्रासीष्ट स्फुटविकटहेतुप्रमितिभा-
गुरुर्वोऽहो ! पाता पदघनगरीयानसुमतः ॥ ३ ॥

—शिख०

ज० वि०—जलव्यालेति । अहो इत्यामन्त्रणे तच्चैवं योज्यते—अहो भव्याः ! । कृतान्तः—सिद्धान्तः त्रासीष्ट—रक्ष्यात् इति क्रियाकारकयोजना । अत्र 'त्रासीष्ट' इति क्रियापदम् । कः कर्ता ? 'कृतान्तः' । कान् कर्मतापन्नान् ? 'असुमतः' प्राणिनः । कस्मात् सकाशात् त्रासीष्ट ? 'जलव्यालव्याघ्रज्वलनगजरुग्बन्धनयुधः' जलं—समुद्रादिसम्बन्धि वारि व्यालः—पन्नगः व्याघ्रो—द्वीपी ज्वलनो—वह्निः गजः—करी रुग्—जलोदरादिरोगः बन्धनं—करचरणादिनियन्त्रणं युत्—सङ्ग्रामः तस्मात् । कृतान्तः कथंभूतः ? 'गुरुः' महान् । पुनः कथं० । 'वाहः' वाहः—अश्वः स इव वाहः । वाहो हि ग्रामादियाने सुमतः स्यात् तेनासौ वाहः । कथंभूतः ? 'अपातापदघनगरीयानसुमतः' पातः—च्यवनं आपद्—विपत् अघं—पापं, ततो न विद्यन्ते पातापदघानि यस्याः सा चासौ नगरी युक्त्या मुक्तिरेव तस्यां यानं—गमनं तत्र सुमतः—सुष्ठु सम्मतः । एष मुक्तिगमनसाधनमित्यभिप्रेत इत्यर्थः । कृतान्तः पुनः कथं ? 'स्फुटविकटहेतुप्रमितिभाक्' स्फुटाः—अविसंवादिनीः विकटाः—अश्लिष्टाः हेतुप्रमितीः—लिङ्गप्रमाणानि भजतीति यः स तथा । पुनः कथं० ? 'उरुर्वा' अत्र वाशब्दश्चकारार्थः तेन उरुश्च—विशालश्च । पुनः कथं० ? 'पाता' त्राता । पुनः कथंभूतः ? 'पदघनगरीयान्' पदेषु—वाक्यावयवेषु घनः—अर्थनिबिडः गरीयान्—महत्त्वातिरेकयुक्तः ॥

अथ समासः—जलं च व्यालश्च व्याघ्रश्च ज्वलनश्च गजश्च रुक् च बन्धनं च युत् च जल० व्याल० 'समाहारद्वन्द्वः' । तस्मात् जलव्यालव्याघ्रज्वलनगजरुग्बन्धनयुधः । पातश्च आपच्च अघं च पातापदघानि 'इतरेतरद्वन्द्वः' । न विद्यन्ते पातापदघानि यस्याः सा अपाता० 'बहुव्रीहिः' । अपातापदघा चासौ नगरी च अपाता० 'कर्मधारयः' । अपातापदघनगर्यां यानं अपाता० 'तत्पुरुषः' । सुष्ठु मतः सुमतः 'तत्पुरुषः' । अपातापदघनगरीयाने सुमतः अपाता० 'तत्पुरुषः' । हेतवश्च प्रमितयश्च हेतु० 'इतरेतरद्वन्द्वः' । विकटाश्च ता हेतुप्रमितयश्च विकट० 'कर्मधारयः' । स्फुटाश्च ता विकटहेतुप्रमितयश्च स्फुटवि० 'कर्मधारयः' । स्फुटविकटहेतुप्रमितीर्भजतीति स्फुटवि० 'तत्पुरुषः' । घनश्चासौ गरीयांश्च घनगरीयान् 'कर्मधारयः' । पदेषु घनगरीयान् पद० 'तत्पुरुषः' । इति काव्यार्थः ॥ ३ ॥

सि० वृ०—जलव्यालेति । अहो इत्यामन्त्रणे । तच्चैवं योज्यते—अहो भव्याः ! कृतान्तः—सिद्धान्तः असुमतः त्रासीष्ट—रक्षतामित्यर्थः । 'त्रैङ् दैङ् पालनयोः' इति धातोः आशिषि कर्तरि आत्मनेपदे प्रथमपुरुषैकवचनं सीष्ट । 'सन्ध्यक्षराणामा' ( सा० सू० ८०३ ) इत्यात्वम् । तथाच 'त्रासीष्ट' इति सिद्धम् । अत्र 'त्रासीष्ट' इति क्रियापदम् । कः कर्ता ? । कृतान्तः । कान् कर्मतापन्नान् ? । 'असुमतः' असवः—प्राणाः विद्यन्ते येषां ते असुमन्तः तान् । कस्मात् ? । 'जलव्यालव्याघ्रज्वलनगजरुग्बन्धनयुधः' जलं—समुद्रादि व्यालः—सर्पः व्याघ्रः—सिंहः ज्वलनो—वन्हिः गजः—करी रुग्—रोगः बन्धनं—काराक्षेपः युत्—सङ्ग्रामः, जलं च व्यालश्च व्याघ्रश्च ज्वलनश्च गजश्च रुक् च बन्धनं च युच्च जलव्यालव्याघ्रज्वलनगज-

रुग्बन्धनयुधः 'इतरेतरद्वन्द्वः' तस्मात् । पुनः कथंभूतः ? । गुरुः—महान् । गृणाति हिताहितमिति गुरुः । 'कृग्रोरुच' ( उणा० सू० २४ ) इति उः, उकारान्तादेशो रपरः । पुनः कथंभूतः ? । 'वाहः' वाह्यते इति वाहः, वाह इव वाहः—तुरङ्गमः, वाहो हि ग्रामादियाने सुमतः स्यात् तेनासौ वाहः । कथंभूतः ? । 'अपातापदघनगरीयानसुमतः' पातः—च्यवनं आपद्—विपत् अघं—पापं, ततो न विद्यन्ते पापापदघानि यस्यां सा चासौ नगरी अर्थान्मुक्तिरेव तस्यां यानं—गमनं तत्र सुमतः—सुष्ठु संमतः—सुतरामभिप्रेतः, एष मुक्तिगमनसाधनमित्यभिप्रेत इत्यर्थः । कृतान्तस्येदं विशेषणमिति कश्चित् । पुनः कथंभूतः कृतान्तः ? । 'स्फुटविकटहेतुप्रमितिभाक्' स्फुटा—अविसंवादिनीः विकटा—अश्लिष्टाः हेतुप्रमितीः—लिङ्गप्रमाणानि भजति यः स तथा । हेतवश्च प्रमितयश्च हेतुप्रमितयः 'इतरेतरद्वन्द्वः,' विकटाश्च ता हेतुप्रमितयश्च विकटहेतुप्रमितयः 'कर्मधारयः', स्फुटाश्च ता विकटहेतुप्रमितीर्भजतीति स्फुटविकटहेतुप्रमितिभाक् । पुनः कथंभूतः ? । उरुः—विशालः । अत्र वाशब्दश्चकारार्थः । तेन उरुश्च—विशालश्च । पुनः कथंभूतः ? । 'पाता' पातीति पाता—त्राता दुर्गतिनिपतत्प्राणिनां रक्षकत्वात् इति भावः । पुनः कथंभूतः ? । 'पदघनगरीयान्' पदेषु—वाक्यावयवेषु घनः—अर्थनिबिडः गरीयान्—महत्त्वातिरेकयुक्तः, घनश्चासौ गरीयांश्च घनगरीयान्, पदेषु घनगरीयान् पदघनगरीयान् इति 'तत्पुरुषः' ॥

**सौ० वृ०—जलव्यालेति । अहो इत्यामन्त्रणे । भो भव्याः ! कृतान्तः—सिद्धान्तः असुमतः—प्राणिनः त्रासीष्ट इत्यन्वयः । 'त्रासीष्ट' इति क्रियापदम् । कः कर्ता ? । 'कृतान्तः' । 'त्रासीष्ट' रक्षतात् । कान् कर्मतापन्नान् ? । 'असुमतः' प्राणिनः । कस्मात् सकाशात् ? । जलं—सरःसरित्समुद्रान्धुसम्बन्धि व्यालाः—सर्पाः व्याघ्राः—द्वीपिशार्दूलादयः ज्वलनः—वह्निः गजाः—करिणः रुजः—जलोदरादयः बन्धनं—करपादादिनिगडं युत्—सङ्ग्रामः इत्याद्यष्टभयेभ्यः जलव्यालव्याघ्रज्वलनगजरुग्बन्धनयुधः तस्मात् 'जलव्यालव्याघ्रज्वलनगजरुग्बन्धनयुधः' । पुनः किंविशिष्टः कृतान्तः ? । 'गुरुः' महान् । पुनः किंविशिष्टः कृतान्तः ? । 'वाहः' अश्व इव अश्वः । पुनः किंविशिष्टः कृतान्तः ? । न विद्यते पातः—च्यवनं आपद्—विपत् अघं—पापं यस्यां सा अपातापदघा तादृशी या नगरी अर्थान्मुक्तिः तस्या यानं—गमनं मार्गो वा तस्मिन् सु—शोभनो मतः—अभिमतः—अभिलषितः 'अपातापदघनगरीयानसुमतः' । तादृशः कृतान्तः—सिद्धान्तः मुक्तिगमनयोग्यः वाह इव मतः । अन्योऽपि यो वाहो भवति स पुरप्रापणे अभिमतो भवति । पुनः किंविशिष्टः कृतान्तः ? । स्फुटाः—प्रकटा विकटा अतिगम्भीरा अर्थगहनत्वात् तादृशा ये हेतवः—कारणानि दृष्टान्ता वा प्रमितयः—प्रमाणानि प्रत्यक्षपरोक्षादीनि अनुमानोपमानप्रमुखानि (ताः) भजति स 'स्फुटविकटहेतुप्रमितिभाक्' । पुनः किंविशिष्टः कृतान्तः ? । 'उरुः' विशालः । वाशब्दः समुच्चयार्थे चकारार्थे वा । पुनः किंविशिष्टः कृतान्तः ? । 'पाता' रक्षकः अर्थात् जगतः । पुनः किंविशिष्टः कृतान्तः ? । पदानि स्यादित्यादीनि सुश्लिष्टसुमधुरादीनि वा तैः कृत्वा घनो—निबिडः [ ते ] गरीयान्—अतिशयेन गुरुः 'पदघनगरीयान्' । एतादृशः कृतान्तः प्राणिनो रक्षतात् । इति पदार्थः ॥**

**अथ समासः—जलानि च व्यालाश्च व्याघ्राश्च ज्वलनश्च गजाश्च रुजश्च बन्धनानि च युधश्च जलव्यालव्याघ्रज्वलनगजरुग्बन्धनयुधः । गृणाति—वदति तत्त्वं हिताहितं इति गुरुः । वाह्यते—आरुह्यते इति वाहः । पतनं—च्यवनं—पातः, पातश्च आपच्च अघं च पातापदघानि, न विद्यन्ते पातापदघानि यस्यां सा अपातापदघा, अपातापदघा चासौ नगरी च अपातापदघनगरी, अपातापदघनगर्यां यानं अपातापदघनगरी-**

यानं, सु-शोभनो मतः सुमतः, अपातापदघनगरीयाने सुमतः अपातापदघनगरीयानसुमतः । हेतवश्च प्रमितयश्च हेतुप्रमितयः, विकटाश्च ते हेतुप्रमितयश्च विकटहेतुप्रमितयः, स्फुटाश्च ता विकटहेतुप्रमितयश्च स्फुटविकटहेतुप्रमितयः, स्फुटविकटहेतुप्रमितीः भजतीति स्फुटविकटहेतुप्रमितिभाक् । पाति-रक्षतीति पाता । पदानां पदैर्वा घनं पदघनं, अतिशयेन गुरुर्गरीयान्, पदघनेन गरीयान् पदघनगरीयान् । असवः-प्राणा विद्यन्ते येषां ते असुमन्तः, तान् असुमतः । इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या०—जलव्यालेति । कृतान्तः-सिद्धान्तः असुमतः-प्राणिनः त्रासीष्ट-रक्षतात् इत्यन्वयः । 'त्रासीष्ट' इति क्रियापदम् । कः कर्ता ? । कृतान्तः । कान् कर्मतापन्नान् ? । असुमतः । कस्मात् ? । 'जलव्यालव्याघ्रज्वलनगजरुग्बन्धनयुधः' जलं-समुद्रादि व्यालः-सर्पः व्याघ्रः-सिंहः (?) ज्वलनो-वह्निः गजो-मत्तमातङ्गः रुक्-रोगः बन्धनं काराक्षेपः युत्-संग्रामः एतेषां 'द्वन्द्वः' तस्मात् । किंविशिष्टः कृतान्तः ? । वाहः-तुरङ्गमः । अत्राभेदरूपकालङ्कारः । "वाहो वाजी हयो हरिः" इत्यभिधानचिन्तामणिः ( का० ४, श्लो० २९९ ) । पुनः किंविशिष्टः ? । गुरुः-हिताहितप्राप्तिपरिहारोपदेष्टा । पुनः किंविशिष्टः ? । 'अपातापदघनगरीयानसुमतः' न विद्यते पातश्च आपच्च अघं च यस्याः सा अपातापदघा, एवंविधा या नगरी अर्थान्मुक्तिः तस्या याने-गमने सुमतः-सुतरामभिप्रेतः । वाहस्य विशेषणं वा । पुनः किंविशिष्टः ? । 'स्फुटविकटहेतुप्रमितिभाक्' स्फुटाः-स्पष्टाः शब्दतः विकटा-दुर्गमाः अर्थतः ते च ते हेतवः-साध्यगमकास्तेषां प्रमितिः-यथार्थज्ञानं (तां) भजतीति भाक्, क्विप्प्रत्ययान्तम् । पुनः किंविशिष्टः ? । उरुः-विशालः । वा वैकल्पिकः । पुनः किंविशिष्टः ? । 'पाता' पातीति पाता-रक्षकः, दुर्गतिपतत्प्राणिरक्षकत्वात् । पुनः किंविशिष्टः ? । 'पदघनगरीयान्' पदानि-वर्णसमूहाः सुप्तिङन्तानि वा तैर्घनो (-निबिडः ) निवहः अत एव गरीयान्-गरिष्ठः । इति तृतीयवृत्तार्थः ॥ ३ ॥



कालीदेव्याः स्तुतिः—

विपक्षव्यूहं वो दलयतु गदाक्षावलिधरा-
ऽसमा नालीकालीविशदचलना नालिकवरम् ।
समध्यासीनाऽम्भोभृतघननिभाऽम्भोधितनया-
समानाली काली विशदचलनानालिकबरम् ॥ ४ ॥ २१ ॥

—शिख०

ज० वि०—विपक्षेति । काली-काल्याख्या देवी वः-युष्माकं विपक्षव्यूहं दलयतु-विनाशयतु इति क्रियाकारकप्रयोगः । अत्र 'दलयतु' इति क्रियापदम् । का कर्त्री ? 'काली' । कं कर्मतापन्नम् ? 'विपक्षव्यूहम्' । केषाम् ? 'वः' । काली कथंभूता ? 'गदाक्षावलिधरा' गदा-प्रहरणविशेषः अक्षावलिः-माला ते धारयतीति गदाक्षावलिधरा । पुनः कथं० ? 'असमा' असदृशी । पुनः कथं० ? 'नालीकालीविशदचलना' नालीकाली-कमलावली तद्वद् विशदौ-

उज्ज्वलौ चलनौ–पादौ यस्याः सा तथा। काली किं कुर्वाणा ? 'समध्यासीना' सम्यक् अधिरोहन्ती। किं कर्मतापन्नम् ? 'नालिकवरं' प्रधानपद्मम्। नालिकवरं कथंभूतम् ? 'विशदचलनानालिकवरं' विशन्तः–निलीयमानाः अचलाः–स्थिराः एतादृशा ये नानालिनः नानालयो वा–विचित्रमधुकराः तैः कबरं–कर्बुरम्। अत्र यमकवशात् बवयोरैक्यम्। काली पुनः कथं० ? 'अम्भोभृतघननिभा' जलभरितमेघप्रभा, श्यामवर्णेत्यर्थः। पुनः कथं० ? 'अम्भोधितनयासमानाली' अम्भोधितनया–लक्ष्मीः तस्याः असमाना–अनन्यसमा आली–सखी॥

अथ समासः—विपक्षाणां व्यूहः विपक्षव्यूहः 'तत्पुरुषः'। तं विपक्ष०। गदा च अक्षावलिश्च गदाक्षावली 'इतरेतरद्वन्द्वः'। गदाक्षावली धारयतीति गदाक्षावलि० 'तत्पुरुषः'। न समा असमा 'तत्पुरुषः'। नालीकानामाली नालीकाली 'तत्पुरुषः'। नालीकालीवद् विशदौ नालीक० 'तत्पुरुषः'। नालीकालीविशदौ चलनौ यस्याः सा नाली० 'बहुव्रीहिः'। नालीकेषु वरं नालीक० 'तत्पुरुषः'। अम्भोभिर्भृतः अम्भोभृतः 'तत्पुरुषः'। अम्भोभृतश्चासौ घनश्च अम्भो० 'कर्मधारयः'। अम्भोभृतघनवत् निभा यस्याः सा अम्भोभृत० 'बहुव्रीहिः'।[1] अम्भोधेस्तनया अम्भोधि० 'तत्पुरुषः'। न समाना असमाना 'तत्पुरुषः'। असमाना चासौ सखी च असमा० 'कर्मधारयः'। अम्भोधितनयाया असमानसखी अम्भोधि० 'तत्पुरुषः'। नाना–विधाश्च ते अलिनश्च नानालिनः 'कर्मधारयः'। न चला अचलाः 'तत्पुरुषः'। अचलाश्च ते नानालिनश्च अचलनाना० 'कर्मधारयः'। विशन्तश्च ते अचलनानालिनश्च विशदचल० 'कर्मधारयः'। विशदचलनानालिभिः कबरं विशद० 'तत्पुरुषः'। तत् विशद०। इति काव्यार्थः॥ ४॥

॥ इति शोभनस्तुतिवृत्तौ श्रीनेमिजिनपतेः स्तुतेर्व्याख्या॥ २१॥

सि० वृ० विपक्षेति। काली–कालीनाम्नी महादेवी वो–युष्माकं विपक्षव्यूहं–शत्रुव्रातं–वैरिसमूहं दलयतु–विनाशयतु इत्यर्थः। 'दल दलने' धातोर्ण्यन्तस्य 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप्। 'चुरादेः [ञिः]' (सा० सू० १०३९) इति ञिः। 'अप् कर्तरि' (सा० सू० ६९१) इत्यप्। 'गुणः' (सा० सू० ६९२) इति गुणः। 'ए अय्' (सा० सू० ४१)। 'स्वरहीनं०' (सा० सू० ३६)। तथाच 'दलयतु' इति सिद्धम्। अत्र 'दलयतु' इति क्रियापदम्। का कर्त्री ?। काली। कं कर्मतापन्नम् ?। 'विपक्षव्यूहं' विपक्षणां–शत्रूणां व्यूहो–निकरस्तम्। "व्यूहः स्याद् बलविन्यासे, निर्माणे वृन्दतर्कयोः" इति विश्वः। केषाम् ?। वः। षष्ठीबहुवचने युष्माकमित्यस्य वसादेशः। कथंभूता काली ?। 'गदाक्षावलिधरा' गदा–शस्त्रविशेषः अक्षावलिः–माला गदा च अक्षावली च गदाक्षावली 'इतरेतरद्वन्द्वः,' ते धरतीति गदाक्षावलिधरा। पुनः कथंभूता ?। असमा —असदृशी, निरुपमेत्यर्थः। पुनः कथंभूता ?। 'नालीकालीविशदचलना' नालीकानां–कमलानां आलिः–

---

[1] अम्भोभृतघनेन निभा अम्भो० 'तत्पुरुषः' इति प्रतिभाति।

श्रेणी तद्वद् विशदौ—निर्मलौ ( चलनौ— ) पादौ यस्याः सा तथा । काली किं कुर्वाणा ? । समध्यासीना—सम्यगधिरोहन्ती । कम् ? । ‘ नालीकवरं ’ नालं विद्यते येषु तानि नालीकानि तेषु नालीकेषु—कमलेषु वरं—प्रधानं नालीकवरम् । कथंभूतं नालीकवरम् ? । ‘ विशदचलनानालिकबरं ’ विशन्तो—निलीयमानाः अचलाः—स्थिराः एवंभूता ये नाना—विविधप्रकाराः अलयो—भ्रमराः तैः कबरं—कर्बुरम् । विशन्तश्च ते अचलाश्च ते नानालयश्च विशदचलनानालय इति पूर्वं ‘ कर्मधारयः ’ । अत्र यमकवशाद् बवयोरैक्यम् । काली पुनः कथंभूता ? । ‘ अम्भोभृतघननिभा ’ अम्भः—जलं तेन भृतः—पूर्णः यो घनः—मेघः तेन निभा-तुल्या या सा तथा, सजलजलधरवन्नीलवर्णेति फलितार्थः । पुनः कथंभूता ? । ‘ अम्भोधितनयासमानाली ’ अम्भोधितनया—लक्ष्मीः तया समानाः—तुल्याः आल्यः—सख्यो यस्याः सा तथा । “क्षीराब्धितनया रमा” इत्यमरः ( ? ) “हरिप्रिया पद्मवासा क्षीरोदतनयाऽपि च ” इति हैमः ( का० २, श्लो० १४० ) । शिखरिणीवृत्तम् ॥ “ रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ” इति च लक्षणमुन्नेयम् ॥ ४ ॥

॥ इति महामहोपाध्याय० श्रीनमिनाथजिनस्य स्तुतिवृत्तिः ॥ २१ ॥

**सौ० वृ०—विपक्षेति । कालीनाम्नी देवी वो—युष्माकं विपक्षाः-वैरिणः तेषां व्यूहः-समूहः तं विपक्षव्यूहं दलयतु इत्यन्वयः । ‘ दलयतु ’ इति क्रियापदम् । का कर्त्री ? । ‘काली’ । ‘दलयतु’ पिनष्टु । कं कर्मतापन्नम् ? । ‘ विपक्षव्यूहम् ’ । केषाम् ? । ‘ वः ’ युष्माकम् । किंविशिष्टा काली ? । ‘ गदाक्षावलिधरा ’ गदा-प्रहरणविशेषः अक्षावलिः-जाप्यमाला ते द्वे धरतीति गदाक्षावलिधरा । पुनः किंविशिष्टा काली ? । ‘ असमा ’ लावण्यैश्वर्यादिगुणैर्नान्यसदृशी । पुनः किंविशिष्टा काली ? । नालीकानि-कमलानि तेषां आली-श्रेणिः तद्वद् विशदौ-निर्मलौ चलनौ-चरणौ यस्याः सा ‘नालीकालीविशदचलना’ । पुनःकाली किं कुर्वाणा ? । सम्यक् प्रकारेण अध्यासीना-आरूढा ‘समध्यासीना’ । किं कर्मतापन्नम् ? । ‘ नालिकवरं ’ कमलेषु प्रधानं, बवयोरैक्यं यमकत्वात् । पुनः किंविशिष्टा काली ? । अम्भोभिः भृतः-पूर्णो यो घनो-मेघः तस्य (तेन ?) निभा-सदृशी , घनश्यामवर्णा । पुनः किंविशिष्टा काली ? । अम्भोधिः-समुद्रः तस्य तनया-लक्ष्मीः तया समाना-सदृशी आली-सखी यस्याः सा अम्भोधितनयासमानाली । किंविशिष्टं नालिकवरम् ? । विशन्तः-प्रविशन्तः अचलाः-स्थिरा-लीना नानाप्रकारा-विचित्रा अलयः-अलिनो वा तैः कबरं-मिश्रितं ‘ विशदचलनानालिकबरम् ’ । बवयोरैक्यम् । एवंविधा काली देवी युष्माकं विपक्षव्यूहं पिनष्टु । इति पदार्थः ॥**

**अथ समासः—विरुद्धपक्षा विपक्षाः, विपक्षाणां व्यूहः विपक्षव्यूहः, तं विपक्षव्यूहम् । अक्षाणां आवलिः ( अक्षावलिः ), गदा च अक्षावलिश्च गदाक्षावली, गदाक्षावली धारयतीति गदाक्षावलिधरा, न विद्यते समा-सदृशी यस्याः सा असमा, नालीकानां आली नालीकाली, नालीकालीवत् विशदौ चलनौ यस्याः सा नालीकालीविशदचलना । नालिकेषु वरं तत् नालिकवरम् । सम्यक् प्रकारेण अध्यासीना समध्यासीना । अम्भोभिः भृतः अम्भोभृतः, अम्भोभृतश्चासौ घनश्च अम्भोभृतघनः, अम्भोभृतघनस्य (घनेन ?) निभा अम्भोभृतघननिभा । अम्भांसि धीयन्ते अस्मिन्निति अम्भोधिः, अम्भोधेस्तनया अम्भोधितनया-लक्ष्मीः, तया समाना-सदृशी आली-सखी यस्याः सा अम्भोधितनयासमानाली । नाना-विचित्राः अलयः अलिनो वा नानालयः, न चला अचलाः; अचलाश्च ते नानालयश्च अचलनानालयः, विशन्तश्च ते अचलनानालयश्च विशदचलनानालयः, विशदचलनानालिभिः कबरं विशदचलनानालिकबरम् । इत्येकविंशतितमश्रीनमिनाथजिनस्तुतिः ॥ ४ । २१ । ८४ ॥**

---

१ यथा प्रत्येकस्तुतिचतुष्टयसमाप्तौ पद्यं दृश्यते, तथाऽत्र न इति विशेषः ।

दे० व्या०—विपक्षेति । काली देवी वो-युष्माकं 'विपक्षव्यूहं' विपक्षाः-शत्रवः तेषां व्यूहं-समूहं दलयतु-मर्दयतु इत्यन्वयः । 'दलयतु' इति क्रियापदम् । का कर्त्री ? । काली । किं कर्मतापन्नम् ? । विपक्षव्यूहम् । किंविशिष्टा देवी ? । 'गदाक्षावलिधरा' गदा-शस्त्रविशेषः अक्षावलिः-जपमाला अनयोर्द्वन्द्वः', ते बिभर्ति-धारयतीति तथा । पुनः किंविशिष्टा ? । 'असमा' नास्ति बलेनेति शेषः समः-सदृशो यस्याः सा तथा । पुनः किंविशिष्टा ? । 'नालीकालीविशदचलना' नालीकं-कमलं तस्य आली-परम्परा तद्वद् विशदौ-उज्ज्वलौ चलनौ (-पादौ) यस्याः सा तथा । "बिसप्रसूनं नालीकं" इत्यभिधानचिन्तामणिः (का० ४, श्लो० २२७) । पुनः किंविशिष्टा ? । समध्यासीना-अध्यारूढा । किम् ? । नालिकवरं-प्रधानकमलम् । नालिकेषु वरं नालिकवरं इति समासः । बवयोरभेदादत्र वकारस्थाने बकारग्रहणम् । पुनः किंविशिष्टा ? । 'अम्भोभृतघननिभा' अम्भः-पयस्तेन भृतः-पूर्णो यो घनो-मेघः तेन निभा-सदृशा, सजलजलधरवत् कृष्णवर्णेत्यर्थः । पुनः किंविशिष्टा ? । 'अम्भोधितनयासमानाली' अम्भोधितनया-लक्ष्मीः तस्याः समानाः सदृशाः आलयः-सख्यो यस्याः सा तथा । किंविशिष्टं नालिकवरम् ? । 'विशदचलनानालिकबरम्' विशन्तो-निलीयमानाः अचलाः-स्थिरा नाना-अनेके ये अलयो-भ्रमराः तैः कबरं-मिश्रितम् । "करम्बः कबरो मिश्रः" इत्यभिधानचिन्तामणिः (का० ६, श्लो० १०५) ॥ इति तुरीयवृत्तार्थः ॥४॥



## २२ श्रीनेमिजिनस्तुतयः

अथ श्रीनेमिनाथाय नमस्कारः—

चिक्षेपोर्जितराजकं रणमुखे योऽलक्ष्यसङ्ख्यं[1] क्षणा-
दक्षामं जन[2] ! भासमानमहसं 'राजीमती' तापदम् ।
तं 'नेमिं' नम नम्रनिर्वृतिकरं चक्रे यदूनां च यो
दक्षामञ्जनभासमानमहसं राजीमतीतापदम् ॥ १ ॥

—शार्दूल०

ज० वि०—चिक्षेपोर्जितेति । हे जन ! त्वं तं नेमिं-नेमिनामानं जिनं नम प्रणिपत इति क्रियाकारकसंयोजनम् । अत्र 'नम' इति क्रियापदम् । कः कर्ता ? 'त्वम्' । कं कर्मतापन्नम् ? 'नेमिम्' । कथंभूतं नेमिम् ? 'भासमानं' विराजमानम्, अथवा जनैर्भासमानं 'जनभासमानम्' । एतत्पक्षे सम्बोधनमध्याहृत्य वाच्यम् । पुनः कथं० ? 'अहसं' अविद्यमानहासम् । पुनः कथं० ? 'राजीमतीतापदं' राजीमती-उग्रसेनपृथिवीपतेः पुत्री तस्यास्तापदम्, सम्भोगमनोरथविफलीकरणात् तापदायिनम् । पुनः कथं० ? 'नम्रनिर्वृतिकरं' नम्राणां-नमनशीलानां निर्वृतिः-सौख्यं शिवं वा करोति स तथा तम् । पुनः कथं० ? 'अञ्जनभासमानमहसं' अञ्जनभया-कज्जलकान्त्या समानं-सदृशं महः-तेजः यस्य स तथा तम् । तमिति तच्छब्दाविनाभावित्वाद् यच्छब्दघटनामाह- य ऊर्जितराजकं-बलवद्राजसमूहं रणमुखे-समरारम्भे क्षणात्-वेगेन चिक्षेप-निरस्तवान् । अत्रापि 'चिक्षेप' इति क्रियापदम् । कः कर्ता ? 'यः' । किं कर्मतापन्नम् ? '(ऊर्जित)राजकम्' । कस्मिन् ? 'रणमुखे' । कथम् ? 'क्षणात्' । (ऊर्जित)-राजकं कथंभूतम् ? 'लक्ष्यसङ्ख्यं' लक्ष्या सङ्ख्या यस्य तत् तथा । अथवा अकारप्रश्लेषेण अलक्ष्या-अविभाव्या सङ्ख्या-परिमाणं यस्य तत् तथा । पुनः कथं० ? 'अक्षामं' समर्थम् । पुनर्यच्छब्दयोजनामाह—च-पुनः यो यदूनां-यादवानां राजीं-श्रेणीं अतीतापदं-अतिक्रान्तविपदं चक्रे-कृतवान् । अत्रापि 'चक्रे' इति क्रियापदम् । कः कर्ता ? 'यः' । कां कर्मतापन्नाम् ? 'राजीम्' । केषाम् ? 'यदूनाम्' । राजीं कथंभूताम् ? 'अतीतापदम्' । पुनः कथंभूताम् ? 'दक्षां' असम्मूढाम् ॥

अथ समासः—राज्ञां समूहः राजकम् । ऊर्जितं च तद् राजकं च ऊर्जित० 'तत्पुरुषः' । तत् ऊर्जित० । रणस्य मुखं रणमुखं 'तत्पुरुषः' । तस्मिन् रणमुखे । लक्ष्या सङ्ख्या यस्य

---

१ 'लक्षसङ्ख्यं' इत्यपि पाठः । २ 'जनभासमानं' इत्यपि संभवति ।

तत् लक्ष्यसङ्ख्यं 'बहुव्रीहिः'। अथवा न लक्ष्या अलक्ष्या 'तत्पुरुषः'। अलक्ष्या सङ्ख्या यस्य तत् अलक्ष्यसङ्ख्यं 'बहुव्रीहिः'। न क्षामं अक्षामं 'तत्पुरुषः'। तद् अक्षामम्। जनैर्भासमानः जन० 'तत्पुरुषः'। तं जन०। न विद्यते हसो यस्य सः अहसः 'बहुव्रीहिः'। तं अहसम्। तापं ददातीति तापदः 'तत्पुरुषः'। राजीमत्यास्तापदो राजी० 'तत्पुरुषः'। तं राजी०। निर्वृतिं करोतीति निर्वृतिकरः 'तत्पुरुषः'। नम्राणां निर्वृतिकरो नम्रनि० 'तत्पुरुषः' तं नम्र०। अञ्जनस्य भा अञ्जनभा 'तत्पुरुषः'। अञ्जनभया समानं अञ्जन० 'तत्पुरुषः'। अञ्जनभासमानं महो यस्य सः अञ्जनभासमानमहाः 'तत्पुरुषः'। तं अञ्जन०। अतीता आपदो यस्याः सा अतीतापत् 'बहुव्रीहिः'। तां अती०। इति काव्यार्थः॥ १॥

सि० वृ०—चिक्षेपोर्जितेति। हे जन! त्वं तं नेमिं—नेमिनामानं जिनं नम—प्रणिपत इत्यर्थः। 'णम प्रह्वत्वे शब्दे च' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनम्। अत्र 'नम' इति क्रियापदम्। कः कर्ता?। त्वम्। कं कर्मतापन्नम्?। 'नेमिं' धर्मचक्रस्य नेमिवन्नेमिः तं नेमिम्। नेमिशब्द इन्नन्तोऽप्यस्ति, "नेमिनं नौमि भक्त्या" इति प्रयोगात्। कथंभूतं नेमिम्?। 'भासमानं' भासते—शोभते इति भासमानः तं भासमानं, यद्वा जनैर्भास(मा)नं जनभासमानम्। एतत्पक्षे संबोधनमध्याहृत्य वाच्यम्। पुनः कथंभूतम्?। 'अहसं' न विद्यते हासो—हास्यं यस्य स तथा तम्। "घर्घरो हासिका हास्यं, हासस्तु हसनं हसः" इति हैमः (का० २, श्लो० २१०)। पुनः कथंभूतम्?। 'राजीमतीतापदम्' राजीमती उग्रसेनधारिण्योः पुत्री तस्याः तापं ददातीति तापदः तम्। 'आतोऽनुपसर्गे कः' (पा० अ० ३, पा० २, सू० ३)। प्रव्रज्याग्रहणेन तन्मनोरथविफलीकरणादिति भावः। पुनः कथंभूतम्?। 'नम्रनिर्वृतिकरं' नम्राणां—नमनशीलानां निर्वृतिं—सौख्यं शिवं वा करोतीति तथा तम्। पुनः कथंभूतम्?। 'अञ्जनभासमानमहसं' अञ्जनं—कज्जलं तस्य भा—कान्तिः तया समानं—सदृशं महः—तेजो यस्य स तथा तम्। "महश्चो(स्तू?)त्सवतेजसोः" इत्यमरः (श्लो० २७९७)। श्यामशरीरत्वेन कज्जलप्रभासाधर्म्यम्। तमिति तच्छब्दाविनाभावित्वाद् यच्छब्दघटनामाह—यो नेमिः ऊर्जितराजकं—बलवद्राजसमूहं रणमुखे—सङ्ग्रामारम्भे क्षणात्—क्षणमात्रेण चिक्षेप—निरस्तवानित्यर्थः। 'क्षिप प्रेरणे' धातोः परोक्षे परस्मैपदे प्रथमपुरुषैकवचनं णप्। 'द्विश्च' (सा० सू० ७१०) इति धातोर्द्वित्वम्। 'सस्वरादिर्द्विरद्धिः' (सा० सू० ७११) इति कषयोर्मध्ये कस्य स्वरसहितस्य द्वित्वम्। तथा च किक्षि इति जाते 'कुहोश्चुः' (सा० सू० ७४६) इति चुत्वम्। 'उपधाया लघोः' (सा० सू० ७३९) इति गुणः। तथाच 'चिक्षेप' इति सिद्धम्। अत्र 'चिक्षेप' इति क्रियापदम्। कः कर्ता?। यः। कं कर्मतापन्नम्?। 'राजकं' राज्ञां समूहो राजकम्। 'गोत्रोक्षोष्ट्रोरभ्रराज०' (पा० अ० ४, पा० २, सू० ३९) इति वुञ्। ऊर्जो—बलं जातं अस्य इति ऊर्जितं, ऊर्जितं च तद् राजकं चेति 'कर्मधारयः'। "स सम्राडथ राजकम् (श्लो० १४७४)। राजन्यकं च नृपति—क्षत्रियाणां गणे क्रमात्" इत्यमरः (श्लो० १४७५)। कस्मिन्?। रणमुखे। "मुखं निःसरणे वक्त्रे

१ पूर्वापरीभावस्तु मुद्रिते अभिधानचिन्तामणिनामके ग्रन्थे।

प्रारम्भोपाययोरपि" इति विश्वः। राजकं कथंभूतम् ?। 'अक्षसङ्ख्यम्' लक्षाः सङ्ख्या—परिमाणं यस्य तत् तथा। अथवा अकारस्य प्रश्लेषः। अलक्ष्या—अविभाव्या सङ्ख्या यस्मात् तत् तथेत्यर्थः। पुनः कथंभूतम् ?। 'अक्षामं' न क्षामं अक्षामं, समर्थमित्यर्थः। 'क्षायो मः' ( सा० सू० १३१३ ) इति निष्ठातकारस्य मकारः। पुनर्यच्छब्दं योजयति। च—पुनः यो यदूनां—यदुवंशोत्पन्नानां यादवानां राजीं—पङ्क्तिमतीतापदं चक्रे—कृतवानित्यर्थः। 'डुकृञ् करणे' धातोः कर्तरि परोक्षे आत्मनेपदे प्रथमपुरुषैकवचनम्। 'द्विश्च' ( सा० सू० ७१० ) इति द्वित्वम्। 'रः' ( सा० सू० ७६८ ) इति पूर्वऋकारस्याकारः। 'कुहोश्चुः' ( सा० सू० ७४६ ) इति चुत्वम्। 'ऋ रं' ( सा० सू० ३९ )। 'स्वरहीनं०' ( सा० सू० ३६ )। तथा 'चक्रे' इति सिद्धम्। अत्र 'चक्रे' इति क्रियापदम्। कः कर्ता ?। यः। कां कर्मतापन्नाम् ?। राजीम्। केषाम् ?। यदूनाम्। कथंभूतां राजीम् ?। 'अतीतापदं' अतीता—अतिक्रान्ता आपदो—दुरवस्था यस्याः सा ताम्। पुनः कथंभूताम् ?। दक्षां—निपुणाम् ॥ १ ॥

सौ० वृ०—यो द्रव्यभावशत्रून् नामयति-वशीकरोति सः अरिष्टेषु-उपद्रवेषु नेमिः-चक्रमिव भवति तथा गर्भस्थे भगवति जनन्या अरिष्टरत्नमयं चक्रं शय्यापार्श्वे दृष्टम्। अनेन सम्बन्धेनायतस्य द्वाविंशतितमश्रीअरिष्ट(नेमि)नाम्नो जिनस्य स्तुतेर्व्याख्यानं लिख्यते-चिक्षेपोर्जितेति।

हे जन!—हे भव्यलोक ! त्वं तं नेमिं-नेमिजिनं नम इत्यन्वयः। 'नम' इति क्रियापदम्। कः कर्ता ?। 'त्वम्'। 'नम' प्रणम। कं कर्मतापन्नम् ?। ('नेमिं') नेमिनाथम्। किंविशिष्टं नेमिम् ?। नम्राणां-नमनशीलानां निर्वृतिः-मोक्षः सुखं वा तं करोतीति 'नम्रनिर्वृतिकरम्'। पुनः किंविशिष्टं नेमिम् ?। 'अहसं' अपगतहास्यम्। पुनः किंविशिष्टं नेमिम् ?। राजीमत्याः-(उग्रसेन) पुत्र्याः तापदं-तापकार्यकं, काममनोरथविफलीकरणत्वात्। पुनः किंविशिष्टं नेमिम् ?। अञ्जनं-कज्जलं तस्य भा-कान्तिः तत्समानं-(सदृश्यं,) श्यामवर्णमित्यर्थः। पुनः किंविशिष्टं नेमिम् ?। 'तं' तं प्रसिद्धम्। तच्छब्दो यच्छब्दमपेक्षते। तं कम् ?। यो नेमिः रणमुखे—सङ्ग्रामप्रारम्भे ऊर्जितराजकं—उत्कटराजसमूहं क्षणात्-वेगेन चिक्षेप इत्यन्वयः। 'चिक्षेप' इति क्रियापदम्। कः कर्ता ?। 'यः'। 'चिक्षेप' बभञ्ज वित्रासयामास। किं कर्मतापन्नम् ?। ऊर्जितराजकम्। कस्मिन् ?। 'रणमुखे'। किंविशिष्टं ऊर्जितराजकम् ?। 'लक्षसंख्यं' लक्षशः संख्यात्मकं, यद्वा अकारप्रश्लेषे नास्ति लक्षशः (लक्ष्या) संख्या यत्र तत् अलक्ष्यसंख्यम्। पुनः किंविशिष्टं ऊर्जितराजकम् ?। 'अक्षामं' न दुर्बलं, प्रौढपरिकरमित्यर्थः। च-पुनः यो नेमिः यदूनां-यादवानां राजी-श्रेणिः अतीतापदं-गतविपदं चक्रे इत्यन्वयः। 'चक्रे' इति क्रियापदम्। कः कर्ता ?। 'यः' नेमिः। 'चक्रे' कृतवान्। कां कर्मतापन्नम् ?। 'राजीं' श्रेणिम्। केषाम् ?। 'यदूनाम्'। किंविशिष्टां राजीम् ?। 'दक्षां' कुशलाम्। पुनः किंविशिष्टां राजीम् ?। अतीता-अतिक्रान्ता आपद्-विपद् यस्याः सा अतीतापत् तां 'अतीतापदम्'। पुनः किंविशिष्टां राजीम् ?। जनेषु-लोकेषु भासमानं-दीप्यमानं महः-तेजो यस्याः सा 'जनभासमानमहसम्'। इदमपि विशेषणं नेमिमिति पदेऽपि लगति। एवंविधं श्रीनेमिजिनं भो भव्याः! यूयं प्रणमत। इति पदार्थः॥

अथ समासः—राज्ञां समूहो राजकं, ऊर्जितं-उद्धतं च तद् राजकं च ऊर्जितराजकम्। रणस्य मुखं रणमुखं, तस्मिन् रणमुखे। नास्ति लक्षशः (लक्ष्या) सङ्ख्या यस्मिंस्तत् अलक्षसंख्यम्। न क्षामं अक्षामं, तत् अक्षामम्। जनेषु भासमानं महो यस्य स जनभासमानमहाः, तं जनभासमानमहसम्। न विद्यते हसो-हासो यस्य सः अहसः, तं अहसम्। तापं ददातीति तापदः, राजीमत्याः तापदो राजी-

मतीतापदः, तं राजीमतीतापदम्। अञ्जनस्य भा अञ्जनभा, अञ्जनभया समानः अञ्जनभासमानः, तं अञ्जनभासमानम्। नमनशीला नम्राः, नम्राणां निर्वृतिः नम्रनिर्वृतिः, नम्रनिर्वृतिं करोतीति नम्रनिर्वृतिकरः, तं नम्रनिर्वृतिकरम्। अतीता-गता आपद् यस्याः सा अतीतापत्, तां अतीतापदम्। इति प्रथमवृत्तार्थः ॥ १ ॥ शार्दूलविक्रीडितम् ॥

दे० व्या०—चिक्षेपोर्जितेति। हे जन !-हे भव्यलोक ! तं नेमिं-नेमिनाथं त्वं नम-नमस्कुरु इत्यन्वयः। 'णम प्रह्वीभावे' धातुः। 'नम' इति क्रियापदम्। कः कर्ता ?। त्वम्। कं कर्मतापन्नम् ?। नेमिम्। किंविशिष्टं नेमिम् ?। 'नम्रनिर्वृतिकरम्' नम्राणां-प्रह्वीभूतानां निर्वृतिं-सुखं कैवल्यं वा करोतीति तथा (तम्)। पुनः किंविशिष्टम् ?। भासमानं-शोभमानम्। पुनः किंविशिष्टम् अहसं-हास्यरहितम्। पुनः किंविशिष्टम् ?। 'राजीमतीतापदम्' राजीमती-राजदुहिता तस्याः तापदं-दुःखप्रदम्, प्रव्रज्याग्रहणेन तन्मनोरथविफलीकरणात्। पुनः किंविशिष्टम् ?। 'अञ्जनभासमानमहसम्' अञ्जनं-कज्जलं तस्य भा-कान्तिः तया समानं-सदृशं महः-तेजो यस्य स तं, श्यामशरीरत्वात्। यत्तदोर्नित्याभिसम्बन्धाद् यो नेमिः यदूनां-यादवानां राजीं-पङ्क्तिं अतीतापदं चक्रे-चकार। 'डुकृञ् करणे' धातुः। 'चक्रे' इति क्रियापदम्। कः कर्ता ?। नेमिः। कां कर्मतापन्नाम् ?। राजीम्। केषाम् ?। यदूनाम्। किंविशिष्टां राजीम् ?। 'अतीतापदम्' अतीता-अतिक्रान्ता आपद्-विपत्तिर्यस्याः सा ताम्। पुनः किंविशिष्टाम् ?। दक्षां-चतुराम्। च-पुनः यो नेमिः ऊर्जितराजकं-बलवद्राजसमूहं क्षणात्-क्षणमात्रेण रणमुखे-सङ्ग्राममुखे चिक्षेप-क्षेपयामास। 'क्षिप प्रेरणे' धातुः। 'चिक्षेप' इति क्रियापदम्। कः कर्ता ?। नेमिः। किं कर्मतापन्नम् ?। 'ऊर्जितराजकम्' राज्ञां समूहो राजकं, ऊर्जितं च तद् राजकं चेति, पश्चात् 'कर्मधारयः'। किंविशिष्टं ऊर्जितराजकम् ?। लक्षसङ्ख्यं-लक्षसङ्ख्याकम्। पुनः किंविशिष्टम् ?। अक्षामं-उपचितम्। न क्षामं अक्षामं इति 'नञ्समासः' प्रचुरस्वसेवकजनोपेतत्वात् ॥ इति प्रथमवृत्तार्थः ॥ १ ॥

---

## जिनश्रेण्याः स्तुतिः—

प्राव्राजीज्जितराजका रज इव ज्यायोऽपि राज्यं जवाद्
या संसारमहोदधावपि हिता शास्त्री विहायोदितम्।
यस्याः सर्वत एव सा हरतु नो राजी जिनानां भवा-
यासं सारमहो दधाव पिहिताशास्त्रीविहायोऽदितम् ॥ २ ॥

—शार्दूल०

ज० वि०—प्राव्राजीज्जितेति। सा जिनानां राजी-तीर्थकरश्रेणी नः-अस्माकं भवायासं-संसारखेदं हरतु-दूरीकरोतु इति क्रियाकारकसम्बन्धः। अत्र 'हरतु' इति क्रियापदम्। का कर्त्री ? 'राजी'। केषाम् ? 'जिनानाम्'। कं कर्मतापन्नम् ? 'भवायासम्'। केषाम् ? 'नः'। सेति तच्छब्दसाहचर्याद् यच्छब्दयोजनामाह—या जिनानां राजी प्राव्राजीत्-प्रव्रज्यामग्रहीत्। अत्रापि 'प्राव्राजीत्' इति क्रियापदम्। का कर्त्री ? 'या'। किं कृत्वा ? 'विहाय' त्यक्त्वा।

किं कर्मतापन्नम् ? ' राज्यं ' राजव्यापारम् । कस्मात् ? ' जवात् ' वेगात् । किमिव ? ' रज इव ' रेणुमिव । राज्यं कथंभूतम् ? ' ज्यायोऽपि ' महदपि । पुनः कथं० ? ' उदितं ' प्राप्तोदयम् । या कथंभूता ? ' जितराजका ' जितं–वशीकृतं राजकं–राजसमूहो यया सा तथा । पुनः कथं० ? हिता ' श्रेयस्करी । कस्मिन्नपि ? ' संसारमहोदधावपि ' भवमहार्णवेऽपि । पुनः कथं० ? ' शास्त्री ' शिक्षयित्री, जीवाजीवादितत्त्वोपदेशदायिनीत्यर्थः । पुनर्यच्छब्दयोजनामाह–यस्याः–जिनानां राज्याः सारमहः–प्रधानतेजः सर्वत एव–समन्तादेव दधाव–वेगात् प्रससारेति क्रियाकारकयोगः । अत्र दधाव ' इति क्रियापदम् । किं कर्तृ ? ' सारमहः ' । कस्याः ? ' यस्याः ' । कथम् ? ' सर्वत एव ' । सारमहः कथंभूतम् ? ' पिहिताशास्त्रीविहायः ' आशास्त्रियो–दिङ्नार्यः विहायः–गगनं एतानि पिहितानि–स्थगितानि येन तत् तथा । पुनः कथं० ? ' अदितं ' अखण्डितम् ॥

अथ समासः—जितं राजकं यया सा जित० ' बहुव्रीहिः ' । महांश्चासौ उदधिश्च महोदधिः ' कर्मधारयः ' महोदधिरिव महोदधिः । संसारश्चासौ महोदधिश्च संसारमहो० ' कर्मधारयः ' । तस्मिन् संसार० । भवस्यायासो भवायासः ' तत्पुरुषः ' । तं भवायासम् । सारश्च तन्महश्च सारमहः ' कर्मधारयः ' । स्त्रिय इव स्त्रियः । आशाश्च ताः स्त्रियश्च आशास्त्रियः कर्मधारयः ' । आशास्त्रियश्च विहायश्च आशास्त्रीविहायः ' इतरेतरद्वन्द्वः ' । पिहितानि आशास्त्रीविहायांसि येन तत् पिहिता० ' बहुव्रीहिः ' । न दितं अदितं ' तत्पुरुषः ' । इति काव्यार्थः ॥ २ ॥

सि० वृ०—प्राव्राजीज्जितेति । सा जिनाना–तीर्थकृता राजी–ततिः–श्रेणी नः–अस्माकं भवायासं–संसारखेदं हरतु–दूरीकरोतु इत्यर्थः । ' हृञ् हरणे ' धातोः ' आशीःप्रेरणयोः ' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप् । ' अप्० ' ( सा० सू० ६९१ ) । ' गुणः ' ( सा० सू० ६९२ ) इति गुणः । ' स्वरहीनं० ' ( सा० सू० ३६ ) । अत्र ' हरतु ' इति क्रियापदम् । का कर्त्री ? । राजी । केषाम् ? । जिनानाम् । कं कर्मतापन्नम् ? । ' भवायासं ' भवस्य आयासो भवायासस्तम् । केषाम् ? । नः । सेति तच्छब्दसाहचर्याद् यच्छब्दयोजनामाह । या जिनानां राजी प्राव्राजीत्–प्रव्रज्यामग्रहीत् । प्रपूर्वक ' व्रज गतौ क्षेपणे च ' धातोः कर्तरि भूते सौ परस्मैपदे प्रथमपुरुषैकवचनं दिप् । ' दिबादावट् ' ( सा० सू० ७०७ ) । ' भूते सिः ' ( सा० सू० ७२४ ) । ' सिसतासीस्यपामिट् ' ( सा० सू० ७२० ) इति सेरिडागमः । सेरिति दिपः ईडागमः । ' इट ईटी ' ( सा० सू० ७३७ ) इति सेर्लोपः । ' सवर्णे दीर्घः ' ( सा० सू० ९२ ) । ' णित्पे ' ( सा० सू० ७५९ ) इति परस्मैपदे णित्वे । ' अत उपधायाः ' ( सा० सू० ७५७ ) इति वृद्धिः । ' स्वरहीनं० ' ( सा० सू० ३६ ) । तथा च ' प्राव्राजीत् ' इति सिद्धम् । अत्र ' प्राव्राजीत् ' इति क्रियापदम् । का कर्त्री ? । या । किं कृत्वा ? । संत्यज्य–त्यक्त्वा । किम् ? । राज्यं–साम्राज्यं, राज्यव्यापारमितियावत् । ' राजश्वशुराद्यत् ' ( पा० अ० ४, पा० १, सू० १३७ ) इति यत् । कस्मात् ? ।

जवात्—वेगात् । किमिव ? । रज इव—रेणुरिव । यथा वस्त्रविलग्नरजःपरिशाटने विलम्बो न भवति तथाऽविलम्बेन त्यक्तमिति भावः । "रेणुर्द्वयोः स्त्रियां धूली (लिः) पांशुर्ना न द्वयो रजः" इत्यमरः (श्लो० १६६४) । "अथ रजांसि स्युर्धूलीपांशुरेणवः" इति हैमः ( का० ४, श्लो० ३६ ) । रज्यन्ते वस्त्राण्यनेन इति रजः । 'रञ्ज रागे' '( सर्वधातुभ्यः ) असुन्' ( उणा० सू० ६२८ ) इत्यसुन् 'असि अके अने०' ( वार्तिके ४०६७ ) 'घिनुणि च' ( वार्तिके ४०६८ ) रञ्जेर्लोपो वाच्यः यद्वा 'भूरञ्जिभ्यां कित्' ( उणा० सू० ६९६ ) इत्यसुन् । 'रजकरजनरजःसूपसङ्ख्यानम्' ( वार्तिके ४०६९ ) इति नलोपः । रजसी रजांसि इत्यादि रूपाणि "रजेनापि रजः सम" मिति शब्दप्रभेदः । राज्यं कथंभूतमपि ? । ज्यायोऽपि—प्रशस्यमपि । 'ज्य च' ( पा० अ० ५, पा० ३, सू० ६१ ) प्रशस्यशब्दस्य ज्यादेशः । 'ज्यादीयसिः' इति ईयस ईकारस्याकारः । पुनः कथंभूतम् ? । उदितं—उत्कर्षं प्राप्तम् । ( उत्पूर्वक ) 'इण् गतौ' भावे क्तः । या कथंभूता ? । 'जितराजका' जितं—वशीकृतं राजकं—राज्ञां समूहो यया सा । पुनः कथंभूता ? । हिता—हितकारिणी । कस्मिन्नपि ? । 'संसारमहोदधावपि' संसरणं संसारः भावे घञ् स एव महान्—प्रकृष्टो यः उदधिः—समुद्रः तस्मिन् । पुनः कथंभूता ? । शास्त्री—शिक्षयित्री । 'शासु अनुशिष्टौ' शीलार्थे तृ( तृन् ) प्रत्ययः । द्विसप्ततिकलायाः पूर्वं भगवता एव शिक्षणादिति भावः । यदिवा शास्त्री जीवादितत्त्वोपदेशदायिनी-त्यर्थः । पुनर्यच्छब्दयोजनामाह—च—पुनर्यस्या—जिनराज्याः सारमहः—प्रधानतेजः सर्वत एव—समन्तादेव दधाव—वेगात् प्रससारेत्यर्थः । 'दधाव' इति 'सृ गतौ' इति धातोर्धावादेशे परोक्षे कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं णप् । 'द्विश्च' ( सा० सू० ७१० ) इति धातोर्द्वित्वम् । 'ह्रस्वः' ( सा० सू०७१३) इति ह्रस्वः । 'झपानां जबचपाः' (सा० सू० ७१४)इति पूर्वधकारस्य दत्वम् । 'अत उपधायाः' (सा० सू० ७५७ ) इति वृद्धिः । तथा च 'दधाव' इति सिद्धम् । आदेशस्तु सार्वधातुके दृश्यते । आर्ध-धातुके तु तदभावाद् दधावेति चिन्त्यमिव प्रतिभाति[2] । अत्र 'दधाव' इति क्रियापदम् । किं कर्तृ ? 'सारमहः' सारं च तन्महश्च सारमहः । कस्याः ? । यस्याः । कथम् ? । सर्वत एव । कथंभूतं सारमहः ? । 'पिहिताशास्त्रीविहायः' आशास्त्रियो—दिगङ्गनाः विहायो—गगनं, आशास्त्रियश्च विहायश्च आशास्त्रीविहा-यांसि, एतानि पिहितानि—आच्छादितानि येन तत् तथा । विजहाति सर्वमिति विहायः । असुनि साधुः । पुनः कथंभूतम् ? । 'अदितं न दितं अदितं' अखण्डितम् । 'दो अवखण्डने' 'द्यतिस्यतिमास्था०' ( पा० अ० ७, पा० ४, सू० ४० ) इति इकारोऽन्तादेशः ॥ २ ॥

सौ० वृ०—प्राव्राजीज्जितेति । सा जिनानां राजी-तीर्थकृतां श्रेणिः नः- अस्माकं भवायासं-संसारखेदं हरतु इत्यन्वयः । 'हरतु' इति क्रियापदम् । का कर्त्री ? । 'राजी' । केषाम् ? । 'जिना-नाम्' । 'हरतु' अपनयतु । कं कर्मतापन्नम् ? । 'भवायासम्' । केषाम् ? । 'नः' अस्माकम् । कथं-भूता जिनानां राजी ? । 'सा' सा-प्रसिद्धा । तच्छब्दो यच्छब्दमपेक्षते । सा का ? । या जिनानां राजी प्राव्राजीत् इत्यन्वयः । 'प्राव्राजीत्' इति क्रियापदम् । का कर्त्री ? । 'या' । 'प्राव्राजीत्' दीक्षामग्र-हीत् । किं कृत्वा ? । 'विहाय' त्यक्त्वा । किं कर्मतापन्नम् ? । 'राज्यं' नृपत्वम् । कथम् ? । 'जवात्' । वेगेन । किमिव ? । 'रज इव' यथा रजः वेगेन त्यज्यते । किंविशिष्टं राज्यम् ? । 'ज्या-

१ 'ज्यादादीयसः' इति पाणिनीये ( अ० ६, पा० ४, सू० १६० ) । २ चिन्त्यमेतद् 'धावु गतिशुद्धयो'रित्यस्य धातोः सद्भावात् ।

योऽपि ' महदपि । किंविशिष्टा राजी ? । [तं] पराजितं राजकं-राजसमूहो यया सा ' जितराजका ' । पुनः किंविशिष्टा राजी ? । ' हिता ' हितकारिणी । कस्मिन् ? । ' संसारमहोदधौ अपि ' संसारसमुद्रेऽपि । पुनः किंविशिष्टा जिनानां राजी ? । ' शास्त्री ' शिक्षयित्री, जीवाजीवादितत्त्वोपदेशदायिनीत्यर्थः । पुनः किंविशिष्टा राजी ? । पुनर्यच्छब्दमपेक्षते । यस्याः राज्याः सारमहः-प्रधानं तेजः सर्वत एव-सर्वस्मिन्नपि जगति दधाव इत्यन्वयः । ' दधाव ' इति क्रियापदम् । किं कर्तृ ? । ' सारमहः ' । ' दधाव ' । प्रससार । कस्याः ? । ' यस्याः ' । कथम् ? । ' सर्वत एव ' सर्वत्र । किंविशिष्टं सारमहः ? । पिहितानि-स्थगितानि आशा-दिशः स्त्रियो-योषितः विहायः-आकाशं येन तत् ' पिहिताशास्त्रीविहायः ' । पुनः किंविशिष्टं सारमहः ? । ' अदितं ' अखण्डितं, परिपूर्णमित्यर्थः । इति पदार्थः ।

अथ समासः-राज्ञां समूहो राजकं, जितं राजकं यया सा जितराजका । अतिशयेन वृद्धं ज्यायः, तत् ज्यायः । राज्ञो भावो राज्यं, तद् राज्यम् । संसरणं संसारः, उदकानि धीयन्ते-स्थाप्यन्ते अस्मिन् इति उदधिः, महांश्चासौ उदधिश्च महोदधिः, संसार एव महोदधिः संसारमहोदधिः, तस्मिन् संसारमहोदधौ । शास्ति-शिक्षयतीति शास्त्री । भवस्य आयासः भवायासः, तं भवायासम् । सारं च तन्महश्च सारमहः । आशाश्च स्त्रियश्च विहायश्च आशास्त्रीविहायांसि, पिहितानि आशास्त्रीविहायांसि येन तत् पिहिताशास्त्रीविहायः । न दितं अदितम् । पक्षे उदितं उदयमाप्तं राज्यमित्यर्थः । इति द्वितीयवृत्तार्थः ॥ २ ॥

हे० व्या०—प्राव्राजीज्जितेति । सा जिनानां राजी-ततिः नः-अस्माकं भवायासं-संसारपरिश्रमं हरतु-नाशयतु इत्यन्वयः । ' हृञ् हरणे ' धातुः । ' हरतु ' इति क्रियापदम् । का कर्त्री ? । राजी । केषाम् ? । जिनानाम् । कं कर्मतापन्नम् ? । भवायासम् । भवस्य आयासं भवायासं इति ( ' तत्पुरुष ' ) समासः । केषाम् ? । नः । किंविशिष्टा जिनानां राजी ? । ' जितराजका ' जितं भग्नं राजकं-राज्ञां समूहो यया सा तथा । " स्याद् राजपुत्रकं राजन्यकं राजकमाजकं " इत्यभिधानचिन्तामणिः ( का० ६, श्लो० ५३ ) । पुनः किंविशिष्टा ? । हिता-हितकारिणी । कस्मिन् ? । ' संसाराम्भोधौ ' संसरणं संसारः भावे घञ् स एव महान्-प्रकृष्टो यः उदधिः-समुद्रः तस्मिन् । पुनः किंविशिष्टा ? । शास्त्री-शिक्षयित्री, द्विसप्ततिकलायाः पूर्वं भगवतैव शिक्षणात् । यत्तदोर्नित्याभिसम्बन्धाद् या जिनानां राजी जवात्- शीघ्रं प्राव्राजीत्-प्रव्रज्यामग्रहीत् । ' प्राव्राजीत् ' इति क्रियापदम् । का कर्त्री ? । जिनानां राजी । किं कृत्वा ? । विहाय-सन्त्यज्य । किम् ? । राज्यं-साम्राज्यम् । कथम् ? । जवात्-अविलम्बेन यथा स्यात् तथेति क्रियाविशेषणम् । किमिव ? । रज इव । यथा रजस्त्यागे विलम्बो न भवति तथा अविलम्बेन राज्यं त्यक्तमित्यभिप्रायः । च-पुनः यस्याः-जिनराज्याः ' सारमहः ' सारं-प्रधानं महः-तेजः सर्वतः-समन्तात् दधाव-प्रससारेत्यन्वयः । ' दधाव ' इति क्रियापदम् । किं कर्तृ ? । ' सारमहः ' सारं प्रधानं महः-तेजः । कथम् ? । किंविशिष्टं सारमहः ? । ' पिहिताशास्त्रीविहायः ' आशास्त्री-दिग्वनिता विहायः-आकाशं अनयोः ' द्वन्द्वः ', ततः पिहिते-आच्छादिते आशास्त्रीविहायसी येनेति । अदितं-अखण्डितम् । न दितं अदितमिति नञ्समासः । पुनः किंविशिष्टम् ? । उदितं-उदयं प्राप्तम् । किंविशिष्टं राज्यम् ? । प्रशस्यमिति(मपि?) श्लाघनीयमपि । पुनः किंविशिष्टम् ? । उदितं गतार्थमेतत् ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥

जिनवाणीगौरवम्—

कुर्वाणाऽणुपदार्थदर्शनवशाद् भास्वत्प्रभायास्त्रपा-
मानत्या जनकृत्तमोहरत ! मे शस्ताऽदरिद्रोहिका ।
अक्षोभ्या तव भारती जिनपते ! प्रोन्मादिनां वादिनां
मानत्याजनकृत् तमोहरतमेश ! स्तादरिद्रोहिका ॥ ३ ॥

—शार्दूल०

ज० वि०—कुर्वाणेति । हे जिनपते !—जिनराज ! तव—भवतः भारती—वाक् मे—मम अरिद्रोहिका—अरीणां द्रोहकारिणी स्तात्—भवतु इति क्रियाकारकान्वयः । अत्र 'स्तात्' इति क्रियापदम् । का कर्त्री ? 'भारती' । कस्य ? 'तव' । कथंभूता ? 'अरिद्रोहिका' । कस्य ? 'मे' । न चायं मेशब्दो युष्मच्छब्दविशेषादेशत्वात् सम्बोधनपदाग्रे कथं प्रयुक्तः "सम्बोधनपदादग्रे न भवन्ति वसादयः" (सा० सू० ३४५) इत्याशङ्कनीयम् । मेइत्यस्य षष्ठ्यन्तप्रतिरूपाव्ययत्वात् निपातत्वेन युष्मच्छब्दविशेषादेशत्वाभावादिति । भारती किं कुर्वाणा ? 'कुर्वाणा' विदधाना । कां कर्मतापन्नाम् ? 'त्रपां' लज्जाम् । कस्याः ? 'भास्वत्प्रभायाः' । कस्मात् ? 'अणुपदार्थदर्शनवशात्' अणवः—सूक्ष्माः ये पदार्थाः—परमाण्वादयः तेषां यद् दर्शनं—व्यक्तीकरणं तद्वशात्—तदायत्तभावत्वात् । इयं अणूनपि पदार्थान् दर्शयति, न त्वहम्; अतो जिताऽस्मीत्येवंरूपां भास्वत्प्रभायास्त्रपां करोतीति हार्दम् । भारती कथंभूता ? 'शस्ता' प्रशस्ता । पुनः कथं० ? 'अदरिद्रोहिका' अदरिद्रा—अतुच्छा ऊहा यस्याः सा तथा । अत्र स्वार्थे कन् । पुनः कथं० ? 'अक्षोभ्या' अचालनीया । पुनः कथं० ? 'मानत्याजनकृत्' अभिमानमोक्षणकारिणी । केषाम् ? 'वादिनां' परतीर्थिकानाम् । कथंभूतानाम् ? 'प्रोन्मादिनां' प्रकर्षेणोन्मादवताम्, दर्पादसमञ्जसचेष्टानामित्यर्थः । पुनः कथंभूता भारती ? 'तमोहरतमा' अतिशयेन तमोहरा—अज्ञानविनाशिनी । अवशिष्टे च द्वे जिनपतेः सम्बोधने, तद्व्याख्या यथा—हे 'जनकृत्तमोहरत !' मोहः—मोहनीयं कर्म रतं—कामकेलिः, ततः जनानां—लोकानां कृत्ते—छिन्ने—सर्वथा निरस्ते मोहरते येन स तथा तत्सम्बोधनं हे जन० । कया हेतुभूतया ? 'आनत्या' प्रणामेन । हे 'ईश !' स्वामिन् ! ॥

अथ समासः—अणवश्च ते पदार्थाश्च अणुपदार्थाः 'कर्मधारयः' । अणुपदार्थानां दर्शनं अणु० 'तत्पुरुषः' । अणुपदार्थदर्शनस्य वशः अणु० 'तत्पुरुषः' । तस्मादणु० । भास्वतः प्रभा भास्वत्प्रभा 'तत्पुरुषः' । तस्याः भास्वत्प्रभायाः । मोहश्च रतं च मोहरते 'इतरेतरद्वन्द्वः' । कृत्ते मोहरते येन स कृत्त० 'बहुव्रीहिः' । जनानां कृत्तमोहरतः जनकृत्त० 'तत्पुरुषः' । तत्सम्बो० हे जनकृत्त० । न दरिद्रा अदरिद्राः 'तत्पुरुषः' । अदरिद्रा ऊहा

यस्याः सा अदरिद्रो० ' बहुव्रीहिः ' । न क्षोभ्या अक्षोभ्या ' तत्पुरुषः ' । जिनानां जिनेषु वा पतिः जिनपतिः 'तत्पुरुषः' । तत्सम्बो० हे जिन० । प्रकर्षेणोन्मादिनः प्रोन्मादिनः 'तत्पुरुषः' । तेषां प्रोन्मा० । मानस्य त्याजनं मान० ' तत्पुरुषः ' । मानत्याजनं करोतीति मान० ' तत्पुरुषः ' । तमो हरतीति तमोहरा ' तत्पुरुषः ' । अतिशयेन तमोहरा तमो० । अरीणां द्रोहिका अरि० ' तत्पुरुषः ' । इति काव्यार्थः ॥ ३ ॥

सि० वृ०—कुर्वाणेति । हे जिनपते !—हे जिननायक ! तव—भवतः भारती—वाणी मे—मम अरिद्रोहिका—अरीणां द्रोहकारिणी स्तात्—भवतु इत्यर्थः । ' अस् भुवि ' धातोः ' आशीःप्रेरणयोः ' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनम् । अत्र ' स्तात् ' इति क्रियापदम् । का कर्त्री ? । भारती । बिभर्तीति भारती पृषोदरादिः । कस्य ? । तव । कथंभूता ? । अरिद्रोहिका । कस्य ? । मे—मम । न चायं मेशब्दः युष्मच्छब्दविशेषादेशत्वात् सम्बोधनपदादग्रे कथं प्रयुक्तः ? [ यदुक्तम् ] "सम्बोधनपदादग्रे न भवन्ति वसादयः" ( सा० सू० ३४४ ) इत्याशङ्कनीयम् । मे इत्यस्य षष्ठ्यन्तप्रतिरूपाव्ययत्वात् निपातत्वेन युष्मच्छब्दविशेषादेशाभावादिति । भारती किं कुर्वाणा ? । 'कुर्वाणा' कुरुत इति कुर्वाणा—विदधाना । काम् ? । त्रपां—लज्जाम् । कस्याः ? । 'भास्वत्प्रभायाः' भास्वान्—सूर्यः तस्य प्रभा—प्रकाशः तस्याः । कस्मात् ? । 'अणुपदार्थदर्शनवशात्' अणवः—सूक्ष्मा ये पदार्थाः—निगोदजीवपरमाण्वादयः तेषां दर्शनं—व्यक्तीकरणं तस्माद् । भारती सूक्ष्मानपि पदार्थान् दर्शयति, न त्वहं तद्दर्शने समर्थेति तया जिताऽस्मीत्येवंशीला भास्वत्प्रभायास्त्रपां करोतीति भावः । भारती कथंभूता ? । शस्ता—प्रशस्ता । पुनः कथंभूता ? । ' अदरिद्रोहिका ' अदरिद्रा—अतुच्छा ऊहा यस्यां सा । स्वार्थे कन् । पुनः कथंभूता ? । ' अक्षोभ्या ' न क्षोभयितुं—चालयितुं शक्या—अक्षोभ्या । पुनः कथंभूता ? । ' मानत्याजनकृत् ' मानः—अभिमानः तस्य त्याजनं—मोक्षणं करोतीति तथा । ' क्विप् ' ( सा० सू० १२४९ ) । 'ह्रस्वस्य पिति कृति०' ( सा० सू० १२४६ ) इति तुक् । केषाम् ? । वादिनां—परतीर्थिकानाम् । कथंभूतानां वादिनाम् ? । ' प्रोन्मादिनां ' प्रकर्षेण उन्मादः—चित्तविप्लवो येषां ते तथा तेषाम्, प्रकर्षेणोन्मादवतामित्यर्थः, दर्पादसमञ्जसचेष्टावतामिति भावः । पुनः कथंभूता भारती ? । ' तमोहरतमा ' अतिशयेन तमः—अज्ञानं हरति—नाशयतीति तथा । अतिशयार्थे तमप् । अवशिष्टे च द्वे जिनपतेः सम्बोधने, तयोस्त्वेवं व्याख्या—हे ' जनकृत्तमोहरत ! जनानां—लोकानां कृत्ते—छिन्ने मोहरते येन स तथा तस्य सम्बो० हे जन० । मोहो—मोहनीयं कर्म रतं—कामकेलिः, मोहश्च रतं च मोहरते ' इतरेतरद्वन्द्वः ' । हे ईश !—स्वामिन् ! । कया कृत्वा ? । आनत्या—प्रणामेन ॥ ३ ॥

सौ० वृ०—कुर्वाणेति । हे जिनपते !—हे जिनराज ! हे ईश !—स्वामिन् ! पुनर्जनानां—लोकानां कृत्ते—छेदिते मोहः-अज्ञानं रतं-सुरतं येन स जनकृत्तमोहरतः तस्य सं० हे जनकृत्तमोहरत ! तव-भवतः भारती-वाणी मे-मम अरिद्रोहिका—शत्रुविनाशिनी स्तात् इत्यन्वयः । 'स्तात्' इति क्रियापदम् । का कर्त्री ? । ' भारती ' । ' स्तात् ' भवतु । भारती कस्य ? । ' तव ' । किंविशिष्टा ? ' अरिद्रोहिका ' । कस्य ? । ' मे ' मम । किंविशिष्टा भारती ? । ' शस्ता ' प्रशस्ता । पुनः किंविशिष्टा भारती ? ।

'कुर्वाणा' विदधाना । कां कर्मतापन्नाम् ? । 'त्रपां' लज्जाम् । कस्याः ? । भास्वान्—सूर्यः तस्य प्रभा-कान्तिः तस्याः 'भास्वत्प्रभायाः', सूर्यकान्तेरपि लज्जां कुर्वतीत्यर्थः । कस्मात् ? । अणुः-परमाणुः स एव पदार्थः द्रव्यरूपतया (तस्य) दर्शनं—अवलोकनं तस्य वशः-स्वायत्तीकरणं ज्ञानेन तस्मात् 'अणुपदार्थदर्शनवशात्' तद्वशात्-तदायत्तभावत्वात् । इयमणुपदार्थान् दर्शयति न तु अहं, अतोऽहं जिताऽस्मि इत्येवंरूपां भास्वत्प्रभायास्त्रपां करोतीति । पुनः किंविशिष्टा भारती ? । तमः-अज्ञानं तत् प्रति हरतीति तमोहरा, अतिशयेन तमोहरा 'तमोहरतमा' । पुनः किंविशिष्टा भारती ? । अदरिद्रा-सम्पूर्णा ऊहा-वितर्का यस्यां सा 'अदरिद्रोहिका' । स्वार्थे कन् । पुनः किंविशिष्टा भारती ? । मानो-दर्पः अहंकारो वा तस्य त्याजनं-त्यागः तं करोतीति 'मानत्याजनकृत्' । कया ? । 'आनत्या' प्रणतिभावेन । पुनः किंविशिष्टा भारती ? । 'अक्षोभ्या' न क्षोभयितुं शक्या । केषाम् ? । 'वादिनां' कुतीर्थिकानाम् । किंविशिष्टानां वादिनाम् ? । 'प्रोन्मादिनां' प्रकर्षेण यथा तथा जल्पनशीलानाम् । अत्र मे इति युष्मच्छब्दस्य विशेषादेशरूपं संबोधनपदादग्रे बद्धं तन्न भवति "संबोधनपदादग्रे न भवन्ति वसादयः" ( सा० सू० ३४५ ) इति वचनात् कथं घटते तदाह-मे इत्यस्य षष्ठ्यन्तप्रतिरूपाव्ययत्वात् अस्मच्छब्दस्य विशेषार्थत्वान्निपातत्वेन विशेषादेशाभावात् इति न वसादयः । इति पदार्थः ॥

अथ समासः—कुरुते इति कुर्वाणा । अणवश्च ते पदार्थाश्च अणुपदार्थाः, अणुपदार्थानां दर्शनं अणुपदार्थदर्शनं, अणुपदार्थदर्शनस्य वशः-आयत्तः अणुपदार्थदर्शनवशः, तस्मात् अणुपदार्थदर्शनवशात् । भाः-कान्तिः विद्यते यस्यासौ भास्वान्, भास्वतः प्रभा भास्वत्प्रभा, तस्याः भास्वत्प्रभायाः । मोहश्च रतं च मोहरते, जनानां कृत्ते मोहरते येन स जनकृत्तमोहरतः, तस्य सं० हे जनकृत्तमोहरत! । न दरिद्रा अदरिद्राः, अदरिद्रा ऊहा यस्यां सा अदरिद्रोहिका । क्षोभयितुं योग्या क्षोभ्या, न क्षोभ्या अक्षोभ्या । जिनानां पतिः जिनपतिः, तस्य सं० हे जिनपते ! । प्रकृष्ट उन्मादो येषां ते प्रोन्मादिनः, तेषां प्रोन्मादिनाम् । वदनं वादः, वादः अस्ति ए(ये)षां इति वादिनः, तेषां वादिनाम् । मानस्य त्याजनं मानत्याजनं, मानत्याजनं करोतीति मानत्याजनकृत् । तमांसि हरतीति तमोहरा, अतिशयेन तमोहरा ( तमोहरतमा ) । अरीणां द्रोहः अरिद्रोहः, तं अरिद्रोहं करोतीति अरिद्रोहकारिका ॥ इति तृतीयपदार्थः ॥ ३ ॥

दे० व्या०—कुर्वाणेति । हे जिनपते ! गतार्थम् । हे ईश !—स्वामिन् ! ते-तव भारती मे-मम अरिद्रोहिका-शत्रुक्षयकारिणी स्तात् इत्यन्वयः । 'स्तात्' इति क्रियापदम् । का कर्त्री ? । भारती-वाणी । "वाग् ब्राह्मी भारती गौर्गीः" इत्यभिधानचिन्तामणिः ( का० २, श्लो० १५५ ) । कस्य ? । ते-तव । किंविशिष्टा भारती ? । अरिद्रोहिका । कस्य ? । मे-मम । पुनः किंविशिष्टा ? । शस्ता-प्रशस्ता, अविसंवादित्वात् । पुनः किंविशिष्टा ? । 'अदरिद्रोहिका' न सन्ति दरिद्रा-अर्थशून्या ऊहाः-तर्का यस्याः सा तथा । पुनः किंविशिष्टा ? । अक्षोभ्या-अचालनीया । न क्षोभ्या अक्षोभ्या इति समासः । पुनः किंविशिष्टा ? । 'मानत्याजनकृत्' मानस्य-अहङ्कारस्य त्याजनं करोतीति तथा । 'क्विप्०' (पा० अ० ३, पा० २, सू० ७६), 'ह्रस्वस्य पिति कृति तुक्' (पा० अ० ६, पा० १, सू० ७१ ) । केषाम् ? । वादिनां-परतीर्थिकानाम् । किंविशिष्टानां वादिनाम् ? 'प्रोन्मादिनां' प्रकर्षेण उन्मादः-चित्तविप्लवो येषां ते तथा । "उन्मादश्चित्तविप्लवः" इत्यभिधानचिन्तामणिः ( का० २, श्लो० २३४ ) । पुनः किंविशिष्टा ? । 'तमोहरतमा' तमः-अज्ञानं हरतीति तमोहरा, अतिशयेन तमोहरा तमोहरतमा । अतिशयेऽर्थे तमप्प्रत्ययः । किं कुर्वाणा भारती ? । कुर्वाणा । काम् ? । त्रपां-लज्जाम् । कस्याः ? । 'भास्वत्प्रभायाः' भास्वतः-सूर्यस्य प्रभा-कान्तिः तस्याः । (कस्मात् ?) 'अणुपदार्थदर्शनवशात्' अणवः-अत्यन्तं सूक्ष्माः चक्षुरग्राह्या इतियावत् ते च ते पदार्थाः-जीवादिनवपदार्थाः तेषां यद् दर्शनं-व्यक्तीकरणं तस्मात्, हेत्वर्थे पञ्चमी । "प्रमितिविषयाः पदार्थाः" इति वैशेषिकादयः । "परस्पराविनिर्लुठितमक्षणक्षयिलक्षण-

---

१ 'अरिद्रोहिका' इति पदं मूलकाव्ये, तस्मादयं विग्रहो भ्रान्तिमूलकः ।

निरंशाः परमाणवः पदार्थाः ' इति बौद्धाः । 'जनकृत्तमोहरत !' इति । मोहश्च रतं चेति पूर्वं ' द्वन्द्वः ', ततः जनानां–भव्यप्राणिनां कृत्ते– छिन्ने मोहरते–अज्ञानसुरते येन इति ' तृतीयाबहुव्रीहिः ' तस्यामन्त्रणम् । भगवतः ननु अपुरुषार्थोऽयम् । सुखस्यापि हानेरिति चेन्न, बहुतरदुःखानुविद्धतया सुखस्यापविद्धेयत्वात्, मधुविषसंसक्तान्नभोजनजन्यसुखवत् । यद्वा कृत्तं मोहरतं–अज्ञानस्य सुखं येनेति विवक्षणे न कोऽपि दोषः । कया ? । आनत्या–प्रणामेन । इति तृतीयवृत्तार्थः ॥ ३ ॥



अम्बादेव्याः स्तुतिः—

हस्तालम्बितचूतलुम्बिलतिका यस्या जनोऽभ्यागमद्
विश्वासेविततताम्रपादपरतां वाचा रिपुत्रासकृत् ।
सा भूतिं वितनोतु नोऽर्जुनरुचिः सिंहेऽधिरूढोल्लसद्–
विश्वासे विततताम्रपादपरता'ऽम्बा' चारिपुत्राऽसकृत् ॥ ४ ॥ २२ ॥

—शार्दूल०

ज० वि०—हस्तेति । सा अम्बा–अम्बिका देवी, अत्रापि बवयोरैक्यं यमकवशादेव, नः–अस्माकं भूतिं–सम्पत्तिं वितनोतु–विस्तारयतु इति क्रियाकारकयोगः । अत्र ' वितनोतु ' इति क्रियापदम् । का कर्त्री ? ' अम्बा ' । कां कर्मतापन्नाम् ? ' विभूतिम् ' । केषाम् ? ' नः ' । अम्बा कथंभूता ? ' हस्तालम्बितचूतलुम्बिलतिका ' हस्ताग्रे आलम्बिता–अवलम्बिता–लोलायमाना चूतस्य–आम्रद्रुमस्य लुम्बिरूपा लतिका यस्याः सा तथा । पुनः कथं० ? ' रिपुत्रासकृत् ' वैरिणां त्रासकारिणी । कया ? ' वाचा ' गिरा, हक्कारवेणेत्यर्थः । पुनः कथं० ? ' अर्जुनरुचिः । चामीकरच्छविः । पुनः कथं० ? ' अधिरूढा ' आसीना । कस्मिन् ? ' सिंहे ' केसरिणि । कथंभूते केसरिणि (सिंहे) ? ' उल्लसद्विश्वासे ' उल्लसन् विश्वासो–विश्रम्भो यस्य स तथा तस्मिन् । पुनः कथंभूता अम्बा ? ' विततताम्रपादपरता ' विततः–विस्तीर्णः य आम्रपादपः–चूतवृक्षः तत्र रता–आसक्तचित्ता । पुनः कथं० ? ' चारिपुत्रा ' चारिणौ–विहरणशीलौ पुत्रौ यस्याः सा तथा । सेति तच्छब्दसम्बद्धत्वाद् यच्छब्दघटनामाह–यस्याः अम्बायाः जनः–लोकः ' विश्वासेविततताम्रपादपरतां ' विश्वेन–जगता सेवितौ–आराधितौ ताम्रौ–रक्तौ ईदृशौ यौ पादौ–चरणौ तयोः परतां–तदेकशरणतां अभ्यगात्–जगाम । अत्रापि ' अभ्यगात् ' इति क्रियापदम् । कः कर्ता ? ' जनः ' । कां कर्मतापन्नाम् ? ' विश्वासेविततताम्रपादपरताम् ' । कथम् ? ' असकृत् ' अनारतम् ॥

अथ समासः—हस्ते आलम्बिता हस्तालम्बिता 'तत्पुरुषः' । चूतस्य लुम्बिः चूत० 'तत्पुरुषः' । लतिकेव लतिका । चूतलुम्बिश्चासौ लतिका च चूत० 'कर्मधारयः' । हस्तालम्बिता चूतलुम्बिलतिका

१ ' लम्बि० ' इत्यपि पाठः ।




निर्वाणकलिकायाम्—

" तस्मिन्नेव तीर्थे समुत्पन्नां कूष्माण्डीं ( अम्बिकां ) देवीं कनकवर्णां सिंहवाहनां चतुर्भुजां मातुलिङ्गपाशयुक्तदक्षिणकरां पुत्राङ्कुशान्वितवामकरां चेति । "



PRINTERS M. VADILAL & CO, BOMBAY 2

यस्याः सा हस्ता० 'बहुव्रीहिः'। विश्वेनासेवितौ विश्वासेवितौ 'तत्पुरुषः'। ताम्रौ च तौ पादौ च ताम्रपादौ 'कर्मधारयः'। विश्वासेवितौ च तौ ताम्रपादौ च विश्वासे० 'कर्मधारयः'। विश्वासेवितताम्रपादयोः परता विश्वासेवित० 'तत्पुरुषः'। तां विश्वासेवित०। त्रासं करोतीति त्रासकृत् 'तत्पुरुषः'। रिपूणां त्रासकृत् रिपुत्रा० 'तत्पुरुषः'। अर्जुनस्येव रुचिर्यस्याः सा अर्जुन० 'बहुव्रीहिः'। उल्लसन् विश्वासो यस्य स उल्लसद्विश्वासः 'बहुव्रीहिः'। तस्मिन् उल्लस०। आम्रश्चासौ पादपश्च आम्रपादपः 'कर्मधारयः'। विततश्चासौ आम्रपादपश्च वितता० 'कर्मधारयः'। विततताम्रपादपे रता वितता० 'तत्पुरुषः'। चारिणौ पुत्रौ यस्याः सा चारिपुत्रा 'बहुव्रीहिः'। इति काव्यार्थः ॥ ४ ॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीनेमिजिनेन्द्रस्य स्तुतेर्व्याख्या ॥

**सि० वृ०**—हस्तेति। सा अम्बा—अम्बिकादेवी, अत्रापि बवयोरैक्यं यमकवशादेव, नः—अस्माकं भूतिं—सम्पदं वितनोतु—विस्तारयत्वित्यर्थः। विपूर्वक 'तनु विस्तारे' धातोः 'आशीःप्रेरणयोः' (**सा० सू० ७०३**) लोटि कर्तरि परस्मैपदे प्रथमपुरुषैकवचनम्। अत्र 'वितनोतु' इति क्रियापदम्। का कर्त्री ?। अम्बा। कां कर्मतापन्नाम् ?। भूतिम्। "भूतिर्भस्मनि सम्पदि" **इत्यमरः** (श्लो० २४७३)। केषाम् ?। नः। कथंभूता अम्बा ?। 'हस्तालम्बितचूतलुम्बिलतिका' हस्ताग्रे आलम्बिता—अवलम्बिता—लोलायमाना स्थिता चूतस्य—आम्रस्य लुम्बिरूपा लतिका—शाखा यया सा तथा। "शिखाशाखालताः समाः" इति **हैमः** (का० ४, श्लो० १८९)। पुनः कथंभूता ?। 'रिपुत्रासकृत्' रिपूणां—वैरिणां त्रासं—भयं आकस्मिकभयं वा करोतीति रिपुत्रासकृत्। कया ?। वाचा—गिरा, हक्कारवेणेत्यर्थः। पुनः कथंभूता ?। 'अर्जुनरुचिः' अर्जुनस्येव—सुवर्णस्येव रुचिः—दीप्तिः यस्याः सा तथा। "तपनीयचामीकरचन्द्रभर्मार्जुननिष्कशातस्वरकर्बुराणि" इति **हैमः** (का० ४, श्लो० ११०)। पुनः कथंभूता ?। अधिरूढा—आसीना। कस्मिन् ?। सिंहे—केसरिणि। कथंभूते सिंहे ?। 'उल्लसद्विश्वासे' उल्लसन्—उल्लासं प्राप्नुवन् विश्वासो—विस्रम्भो यस्य स तथा तस्मिन्। पुनः कथंभूता अम्बा ?। 'विततताम्रपादपरता' विततो—विस्तीर्णो यः आम्रपादपः—चूतवृक्षः तत्र रता—आसक्तचित्ता। पुनः कथंभूता ?। 'चारिपुत्रा' चारिणौ—विहरणशीलौ पुत्रौ—सुतौ यस्याः सा तथा। प्राग्भवापेक्षयैतद् विशेषणं, षष्ठांगः—**ज्ञाताधर्मकथांगस्तस्मादस्याः** पूर्वजन्मवक्तव्यता बोद्धव्या[१]। यत्तदोर्नित्यसम्बन्धात् यस्याः अम्बायाः जनः—लोकः विश्वासेवितताम्रपादपरतां अभ्यगात्—जगामेत्यन्वयः। 'इण् गतौ' धातोः कर्तरि भूते सौ परस्मैपदे प्रथमपुरुषैकवचनं दिप्। 'भूते सिः' (**सा० सू० ७२४**) इति सिः। 'दादेः पे' (**सा० सू० ७२९**) इति सिलोपः। 'ईणः सिलोपे गादेशो वक्तव्यः'[२] इति गादेशः। 'दिबादावट्' (**सा० सू० ७०७**)। 'इ यं स्वरे' (**सा० सू० ३३**)। 'स्वरहीनं' (**सा० सू० ३६**)। तथाच 'अभ्यगात्' इति सिद्धम्। अत्र 'अभ्यगात्' इति क्रियापदम्। कः कर्ता ?। जनः। कां कर्मतापन्नाम् ?।

---

१ अयमुल्लेखश्चिन्तनीयः, मुद्रितषष्ठाङ्गे तदनुपलब्धेः। २ 'इणिकोः सिलोपे गा वक्तव्यः' इति **सारस्वते** (सू० ८९५)।

'विश्वासेविततात्रपादपरताम्' विश्वेन—जगता सेवितौ अर्चितौ वा ताम्रौ—रक्तवर्णौ पादौ—चरणौ तयोः परता—तदेकशरणताम् । कथम् ? । असकृत्—निरन्तरम् । शार्दूलविक्रीडितं छन्दः । लक्षणं तु पूर्वमेवोक्तम् ॥ ४ ॥

॥ इति महोपाध्यायश्रीभानु०श्रीनेमिनाथजिनस्य स्तुतिवृत्तिरियम् ॥

सौ० वृ०—हस्तेति । सा अम्बानाम्नी देवी नः-अस्माकं भूतिं-लक्ष्मीं वितनोतु इत्यन्वयः । 'वितनोतु' इति क्रियापदम् । का कर्त्री ? । 'अम्बा' । वितनोतु' विस्तारयतु । कां कर्मतापन्नाम् ? । 'भूतिम्' । केषाम् ? । 'नः' अस्माकम् । किंविशिष्टा अम्बा ? । 'अर्जुनरुचिः' सुवर्णच्छविः । पुनः किंविशिष्टा अम्बा ? । विततः-विस्तीर्णो य आम्रपादपः-सहकारतरुः तत्र रता-आसक्ता 'विततात्रपादपरता', सहकारतरुनिवासिनीत्यर्थः । पुनः किंविशिष्टा अम्बा ? । रिपूणां-वैरिणां त्रासं-अकस्माद्भयं करोतीति 'रिपुत्रासकृत्' रिपुभयकारिणीत्यर्थः । कया ? । 'वाचा' हक्कारेण । पुनः किंविशिष्टा अम्बा ?' हस्ते-करे आलम्बिता-लोलायमाना चूतस्य-सहकारस्य लुम्बिः-प्रलम्बा (?) लतिका यया सा 'हस्तालम्बितचूतलुम्बिलतिका' । पुनः किंविशिष्टा अम्बा ? 'अधिरूढा' अध्यारूढा । कस्मिन् ? । 'सिंहे' कण्ठीरवे । किंविशिष्टे सिंहे ? । उल्लसन्—जाग्रद् विश्वासः—प्रतीतिलक्षणो यस्य स उल्लसद्विश्वासः तस्मिन् 'उल्लसद्विश्वासे' । पुनः किंविशिष्टा अम्बा ? । 'सा' सा-प्रसिद्धा । तच्छब्दो यच्छब्दमपेक्षते । सा का ? । जनो—लोको यस्याः अम्बाया विश्वं—जगत् तेन आसेवितौ—आराधितौ ताम्रौ—रक्तौ पादौ-चरणौ तयोः परतां—तत्परतां 'विश्वासेविततात्रपादपरतां' अभ्यागमत् इत्यन्वयः । 'अभ्यागमत्' इति क्रियापदम् । कः कर्ता ? । 'जनः' । 'अभ्यागमत्' प्रापत् । कां कर्मतापन्नाम् ? । 'विश्वासेविततात्रपादपरतां' जगदाराधितताम्रचरणसंगतिम् । कथम् । ? । 'असकृत्' नित्यशः । कस्याः ? । 'यस्याः' देव्याः । पुनः किंविशिष्टा अम्बा ? । चारिणौ—विहरणशीलौ पुत्रौ यस्याः सा 'चारिपुत्रा', बवयोरैक्यं यमकत्वात् । एतादृशी अम्बा नः-अस्माकं भूतिं वितनोतु । इति पदार्थः ॥

अथ समासः—चूतस्य लुम्बिः चूतलुम्बिः चूतलुम्बिः एव लतिका चूतलुम्बिलतिका, हस्ते आलम्बिता हस्तालम्बिता, हस्तालम्बिता चूतलुम्बिलतिका यया सा हस्तालम्बितचूतलुम्बिलतिका । विश्वेन आसेवितौ विश्वासेवितौ, ताम्रौ च तौ पादौ च ताम्रपादौ, विश्वासेवितौ च तौ ताम्रपादौ च विश्वासेविततात्रपादौ, परस्य भावः परता, विश्वासेविततात्रपादयोः परता विश्वासेविततात्रपादपरता, तां विश्वासेविततात्रपादपरताम् । चारिणौ पुत्रौ यस्याः सा चारिपुत्रा । न सकृत् असकृत् । अर्जुनवद् रुचिर्यस्या असौ अर्जुनरुचिः । हिनस्तीति सिंहः; वर्णविपर्यये, तस्मिन् सिंहे । उल्लसंश्चासौ विश्वासश्च उल्लसद्विश्वासः, तस्मिन् उल्लसद्विश्वासे, यद्वा उल्लसन् विश्वासो यस्य स उल्लसद्विश्वासः । आम्रश्चासौ पादपश्च आम्रपादपः, विततश्चासौ आम्रपादपश्च विततात्रपादपः, विततात्रपादपे रता विततात्रपादपरता । रिपूणां त्रासो रिपुत्रासः, रिपुत्रासं करोतीति रिपुत्रासकृत् ॥ इति चतुर्थवृत्तार्थः ॥ ४ ॥

श्रीमन्नेमिजिनेन्द्रस्य, स्तुतेरर्थो लिवीकृतः ।
सौभाग्यसागराख्येण, सूरिणा ज्ञानसेविना ॥

॥ इति श्रीद्वाविंशति(तम)श्रीनेमिनाथस्य स्तुतेर्व्याख्यानम् ॥ ४ । २१ । ८८ ॥

दे० व्या०—हस्तेति । सा अम्बिका देवी नः-अस्माकं भूतिं-ऋद्धिं तनोतु-विस्तारयतु इति सम्बन्धः । 'तनु विस्तारे' धातुः । 'तनोतु' इति क्रियापदम् । का कर्त्री ? । अम्बिका । कां कर्मतापन्नाम् । भूतिम् ? । "ऋद्धिः विभूतिः सम्पत्तिः" इत्यभिधानचिन्तामणिः ( का० ३, श्लो० २१ ) । केषाम् ? । नः । किंविशिष्टा

अम्बिका ?। 'अर्जुनरुचिः' अर्जुनः(नं?)-सुवर्णं तद्वद् रुचिः-कान्तिः यस्याः सा तथा। पुनः किंविशिष्टा ?। अधिरूढा-आरूढा। कस्मिन्?। सिंहे-हर्यक्षे। किंविशिष्टे सिंहे ?। 'उल्लसद्विश्वासे' उल्लसन्-उल्लासं प्राप्नुवन् विश्वासो यस्मिन् स तस्मिन्। पुनः किंविशिष्टा ?। 'विततानम्रपादपरता' विततो-विस्तीर्णो य आम्रपादपः-सहकारवृक्षः तस्मिन् रता-आसक्ता, दत्तचित्ता इतियावत्। पुनः किंविशिष्टा ?। 'चारिपुत्रा' चारिणौ-गमनशीलौ पुत्रौ-अङ्गजौ यस्याः सा तथा। पूर्वभवापेक्षयैतद् विशेषणम्। पुनः किंविशिष्टा ?। 'रिपुत्रासकृत्' रिपूणां त्रासं करोतीति तथा। "त्रासस्त्वाकस्मिकं भयं" इत्यभिधानचिन्तामणिः (का०२,श्लो०२३५)। 'वाचा' शापेन वचनव्यापारेण वा। पुनः किंविशिष्टा ?। 'हस्तालम्बितचूतलुम्बिलतिका' हस्ते-करे आलम्बिता-गृहीता चूतस्य-आम्रस्य ( लुम्बिरूपा ) लतिका-शाखा यया सा तथा। "शिखाशाखालताः समाः" इत्यभिधान-चिन्तामणिः ( का० ४, श्लो० १८५ )। यत्तदोर्नित्याभिसम्बन्धाद् यस्याः अम्बिकाया जनः-लोकः असकृत्-निरन्तरं विश्वासेविततानम्रपादपरतां अभ्यागमत्-आययौ। 'अभ्यागमत्' इति क्रियापदम्। कः कर्ता ?। जनः। कां कर्मतापन्नाम् ?। 'विश्वासेविततानम्रपादपरतां' विश्वेन-जगता आ-समन्तात् सेवितौ-सपर्याविषयीकृतौ ताम्रपादौ-ताम्रवर्णक्रमौ तयोः परतां तदाधीनतामित्यर्थः॥ इति चतुर्थवृत्तार्थः॥ ४ ॥ शार्दूलविक्रीडितं छन्दः॥ तल्लक्षणं तु प्रागेव प्रदर्शितम्॥



# २३ श्रीपार्श्वजिनस्तुतयः

अथ श्रीपार्श्वनाथाय प्रार्थना—

मालामालानबाहुर्दधददधदरं यामुदारा मुदाऽऽरा-
लीनाऽलीनामिहाली मधुरमधुरसा सूचितोमाचितो मा
पातात् पातात् स 'पार्श्वो' रुचिररुचिरदो देवराजीवराजी-
पत्राऽऽपत्रा यदीया तनुरतनुरवो नन्दको नोदको नो ॥ १ ॥

—स्रग्धरा (७, ७, ७)

ज० वि०—मालेति। स पार्श्वः-पार्श्वनामा जिनः, माशब्दोऽस्मच्छब्दस्य द्वितीयैकवचनान्तो विशेषादेशासिद्धो मामित्यस्यार्थे वर्तते, पातात्-नरकादिषु पतनात् पातात्-रक्षतात् इति क्रियाकारकयोजनम्। अत्र 'पातात्' इति क्रियापदम्। कः कर्ता? 'पार्श्वः'। पार्श्वः किं कुर्वन्? 'दधत्' धारयन। कां कर्मतापन्नाम्? 'मालां' स्रजम्। अत्राग्रे यामिति यच्छब्दस्य सत्त्वात् तामिति तच्छब्दोऽप्यध्याह्रियते। यां मालां अलीनां-भ्रमराणां आली-श्रेणी आरात्-अन्तिके लीना-श्लिष्टा सती अदधत्-पीतवती। अत्रापि 'अदधत्' इति क्रियापदम्। का कर्त्री? 'आली'। केषाम्? 'अलीनाम्'। कां कर्मतापन्नाम्? 'याम्'। कथम्? 'आरात्'। कुत्र? 'इह' अत्र जगति। पुनः कथं०? 'अरं' शीघ्रम्। कया? 'मुदा' हर्षेण। अलीनामाली कथंभूता? 'उदारा' प्रचुरा। पुनः कथंभूता? 'मधुरमधुरसा' मधुरे-सुस्वादे मधुनि-मकरन्दे रसः-तीव्राभिलाषो यस्याः सा तथा। पार्श्वः कथंभूतः? 'आलानबाहुः' आलानाविव-गजबन्धनस्तम्भाविव बाहू-भुजौ यस्य स तथा। पुनः कथं०? 'सूचितोमाचितः' सूचिता-सुष्ठूचिता या उमा-कीर्तिः तया आचितः-संयुक्तः। पुनः कथं०? 'रुचिररुचिरदः' रुचिररुचयः-कान्तद्युतयः रदाः-दन्ताः यस्य स तथा। पुनः कथं०? 'अतनुरवः' अतनुः-अनल्पः रवः-ध्वनिर्यस्य स तथा। पुनः कथं०? 'नन्दकः' आनन्दयिता। पुनः कथं०? 'नोदको नो' नोदकः-क्षेपकः, नो इति निषेधार्थे। स पार्श्व इत्यत्र तच्छब्दसम्बद्धत्वाद् यच्छब्दघटनामाह-यदीया तनुः-यस्य पार्श्वप्रभोः तनुः-शरीरं आपत्रा-आपद्भ्यस्त्राणकारिणी। 'अस्ति' इति क्रियाऽध्याह्रियते। ततः 'अस्ति' इति क्रियापदम्। का कर्त्री? 'तनुः'। किमीया? 'यदीया आपत्रा'। पुनः कथं०? 'देवराजीवराजीपत्रा' देवसम्बन्धिनी या राजीवराजी-देव( कमल )पंक्तिः सैव पत्रं-वाहनं यस्याः सा तथा॥

अथ समासः—आलानाविव आलानौ। आलानौ बाहू यस्य स आलानबाहुः 'बहुव्रीहिः'। मधुरं च तत् मधु च मधुरमधु 'कर्मधारयः'। मधुरमधुनि रसो यस्याः सा मधुर०

'बहुव्रीहिः'। सुष्ठु उचिता सूचिता 'तत्पुरुषः'। सूचिता चासौ उमा च सूचितोमा 'कर्मधारयः'। सूचितोमया चितः सूचितो० 'तत्पुरुषः'। रुचिरा रुचिर्येषां ते रुचिररुचयः 'कर्मधारयः'। रुचिररुचयो रदा यस्य स रुचि० 'बहुव्रीहिः'। देवानां राजीवानि देव० 'तत्पुरुषः'। देवराजीवानां राजी देव० 'तत्पुरुषः'। पत्रमिव पत्रम्। देवराजीवराजी पत्रं यस्याः सा देव० 'बहुव्रीहिः'। आपद्भ्यस्त्रायत इत्यापत्त्रा 'तत्पुरुषः'। न तनुः अतनुः 'तत्पुरुषः'। अतनुः रवो यस्य सः अतनुरवः 'बहुव्रीहिः'। इति काव्यार्थः॥ १॥

सि० वृ०—मालेति। स पार्श्वः—पार्श्वाभिधानो जिनः मा—मां पातात्—अवतादित्यर्थः 'पा रक्षणे' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप्। 'अप्०' (सा० सू० ६९१)। तुपस्तातङादेशः। अत्र 'पातात्' इति क्रियापदम्। कः कर्ता?। 'पार्श्वः'। स्पृशति—जानाति सर्वं ज्ञानेन इति पार्श्वः। 'स्पृश संस्पर्शने'। पृषोदरादिः। गर्भस्थेऽस्मिन् माता शयनीयस्था निशि तमस्यपि कृष्णसर्पमपश्यत् इति पार्श्वः इति ज्ञानेन सर्वान् भावान् पश्यतीति वा पार्श्वो—पार्श्वनामा यक्षोऽस्य वैयावृत्त्यकरो—सेवकोऽस्यास्तीति वा पार्श्वः। 'अर्श आदिभ्योऽच्' (पा० अ० ५, पा० २, सू० १२७) पार्श्वनाथस्यैकदेशः पार्श्वो वा इति यथा। कं कर्मतापन्नम्?। 'मा' माशब्दोऽस्मच्छब्दस्य द्वितीयैकवचनान्तो विशेषादेशसिद्धो मामित्यस्यार्थे वर्तते। पातात् कस्मात्?। 'पातात्' पतनं—पातस्तस्मात्, नरकादिषु पतनादित्यर्थः। पार्श्वः किं कुर्वन्?। दधत्—धारयन्। कां कर्मतापन्नाम्?। मालां—स्रजम्। अत्राग्रे यामिति शब्दस्य सत्त्वात् तामिति तच्छब्दोऽप्यध्याह्रियते। यां माला अलीनां—मधुकराणां आली—लेखा आरात्—अन्तिके—समीपे लीना—आश्लिष्टा सती अदधत्—पपौ, पीतवतीत्यर्थः। 'धेट् पाने' धातोः भूते सौ कर्तरि परस्मैपदे प्रथमपुरुषैकवचनम्। क्रियासाधनिका पूर्ववज्ज्ञेया। अत्र 'अदधत्' इति क्रियापदम्। का कर्त्री?। आली। केषाम्?। अलीनाम्। कथम्?। आराद्। "आराद् दूरसमीपयोः" इति विश्वः। कुत्र?। इह—जगति। पुनः कथम्?। अरं—शीघ्रम्। कया?। मुदा—हर्षेण। कथंभूता अलीनामाली?। 'उदारा' प्रचुरा—महती। "उदारो दातृमहतोः" इत्यमरः (श्लो० २७१९)। पुनः कथंभूता?। 'मधुरमधुरसा' मधुरं—मिष्टं यन्मधु—पुष्परसः तस्मिन् रसः—तीव्राभिलाषो रागो वा यस्याः सा। "मधु मद्ये पुष्परसे" इत्यमरः (श्लो० २९४०)। "शृङ्गारादौ विषे वीर्ये, गुणे रागे द्रवे रसः" इत्यमरः (श्लो० २७८९)। कथंभूतः पार्श्वः?। 'आलानबाहुः' आलानाविव गजबन्धनस्तम्भाविव बाहू—भुजौ यस्य स तथा। पुनः कथंभूतः?। 'सूचितोमाचितः' सुष्ठु उचिता या उमा—कीर्तिस्तया चितो—व्याप्तः। "उमा सीता हैमवती हरिद्राकीर्तिकान्तिषु" इति विश्वः। पुनः कथंभूतः?। 'रुचिररुचिरदः' रुचिरा—मनोहरा रुचिः—ज्योतिर्येषां ते रुचिररुचयः, एतादृशा रदाः—दन्ता यस्य स तथा। "रोचिरुस्ररुचिशोचिरंशुगो ज्योतिरर्चिरुपधृत्यभीशवः" इति अभिधानचिन्तामणौ

( का० २, श्लो० १३ ) । पुनः कथंभूतः ? । ' अतनुरवः ' अतनुः—अनल्पः रवो—ध्वनिर्यस्य स तथा, वाण्या योजनगामित्वात् । पुनः कथंभूतः ? । नन्दकः—नन्दयिता । पुनः कथंभूतः ? । नोदकः—क्षेपकः । नो इति निषेधार्थे । स पार्श्वः इति स कः ? । यदीया तनुः—यस्य पार्श्वप्रभोः तनुः—शरीरं आपत्रा—आपद्भ्यस्त्राणकारिणी, अस्तीति क्रियाध्याहारः । ततः ' अस्ति ' इति क्रियापदम् । का कर्त्री ? । तनुः । कथंभूता ? । यदीया । पुनः कथंभूता ? । ' आपत्रा ' आपद्भ्यस्त्राति—रक्षतीति आपत्रा । 'सुपि०' ( पा० अ० ३, पा० २, सू० ४ ) इति योगविभागात् कः । पुनः कथंभूता ? । ' देवराजीवराजीपत्रा ' देवसम्बन्धिनी या राजीवानां—कमलानां राजी—श्रेणी सैव पत्रं—वाहनं यस्याः सा तथा । " पत्रं वाहनपक्षयोः " इत्यमरः ( श्लो० २६९२ ) ॥ १ ॥

सौ० वृ०—यो रिष्टेषु-विघ्नेषु नेमिः-चक्रं भवति तस्य पार्श्वं सद्भिः सदा सेव्यमानं भवति । यद्वा गर्भस्थे भगवति जनन्या स्वप्ने शय्यापार्श्वे कृष्णसर्पदर्शनात् तथा पार्श्वनागकुमारशासनाधिष्ठायकत्वात् । अनेन सम्बन्धेनायातस्य त्रयोविंशतितमजिनस्य श्रीपार्श्वनाथस्य स्तुतिव्याख्यानं लिख्यते-मालेति ।

स ( पार्श्वः- ) पार्श्वनाथजिनः मा पातात् इत्यन्वयः । ' पातात् ' इति क्रियापदम् । कः कर्ता ? । ( ' पार्श्वः ' ) पार्श्वजिनः । ' पातात् ' रक्षतात् । कं कर्मतापन्नम् ? । 'मा' विशेषादेशे अस्मच्छब्दस्य द्वितीयैकवचनस्य मा इत्यस्य मा इति निपातः । कस्मात् । ' पातात् ' नरकादिपा(ता)त् । पार्श्वः किं कुर्वन् ? । ' दधत् ' बिभ्रत् । कां कर्मतापन्नाम् ? । ' मालां ' स्रजम् । किंविशिष्टः पार्श्वः ? । आलानौ-गजबन्धनस्तम्भौ तद्वद् बाहू-भुजौ यस्य सः ' आलानबाहुः ' । पुनः अलीनां-भ्रमराणां आली-श्रेणिः यां मालां आरात्-अन्तिके अरं-अत्यर्थं मुदा हर्षेण अदधत् इत्यन्वयः । ' अदधत् ' इति क्रियापदम् । का कर्त्री ? । ' आली '—केषाम् ? । ' अलीनाम् ' । ' अदधत् ' पीतवती, धेटो दधादेशः अनद्यतन्याम् । कां कर्मतापन्नाम् ? । ' यां ' मालाम् । कथम् ? । ' अरं ' अत्यर्थम् । कया ? । ' मुदा ' हर्षेण । कथंभूता अलीनां आली ? । 'उदारा' प्रधाना-महती । पुनः किंविशिष्टा अलीनां आली ? । मधुरः-सुस्वादुः मधुः-मकरन्दः तस्य रसो-हर्षो यस्याः सा ' मधुरमधुरसा ' " रसो हर्षे जले दुग्धे, शृङ्गारादौ रसाधरा " इति महीपः । पुनः किंविशिष्टः पार्श्वः ? । सु-शोभना उचिता-योग्या उमा-कीर्तिः तया चितः-व्याप्तः ' सूचितोमाचितः । "उमा धान्यविशेषे स्याद्, गौरी श्रीकीर्तिकान्तिषु" इति सुधाकलशवचनात् । पुनः किंविशिष्टः पार्श्वः ? । रुचिरा-मनोहरा रुचिः-कान्तिर्येषां ते तादृशा रदा-दशना यस्य सः ' रुचिररुचिरदः ' । पुनः किंविशिष्टः पार्श्वः ? । ' सः ' सः-प्रसिद्धः । तच्छब्दो यच्छब्दमपेक्षते । सः कः ? । यदीया तनुः-यस्य मूर्त्तिः-यस्य शरीरं आपत्रा विपद्रक्षका अस्ति इत्यन्वयः । ' अस्ति ' इत्यध्याहार्यम् । ' अस्ति ' इति क्रियापदम् । का कर्त्री ? । ' तनुः ' । ' अस्ति ' विद्यते । किंविशिष्टा तनुः ? । ' यदीया ' श्रीपार्श्वनाथसम्बन्धिनी । पुनः किंविशिष्टा तनुः ? । ' आपत्त्रा ' । पुनः किंविशिष्टा तनुः ? । देवानां-सुराणां [ वा ] राजीवानि-कमलानि तेषां राजी-श्रेणिः सा एव पत्रं-वाहनं यस्याः सा ' देवराजीवराजीपत्रा ' । पुनः किंविशिष्टः पार्श्वः ? । अतनुः-महान् रवः-शब्दो यस्य सः ' अतनुरवः ', देशनासमये योजनगामीश्वरः ( रवः ? ) इत्यर्थः । पुनः किंविशिष्टः पार्श्वः ? । ' नन्दकः ' आनन्दकारी । पुनः किंविशिष्टः पार्श्वः ? । ' नोदकः ' क्षेपकः-क्लिष्टकारी । कथम् ? । ' नो ' निषेधे । इति पदार्थः ।

अथ समासः—आलानाविव बाहू यस्य स आलानबाहुः । मधुरश्चासौ मधुश्च मधुरमधुः, मधुरमधौ रसो यस्याः सा मधुरमधुरसा । सु-शोभना उचिता सूचिता, सूचिता चासौ उमा च सूचितोमा

सूचितोमया चितः सूचितोमाचितः । रुचिरा रुचिः येषां ते रुचिररुचयः, रुचिररुचयो रदा यस्य स रुचिररुचिरदः । देवैर्निर्मितानि राजीवानि देवराजीवानि, देवराजीवानां राजी देवराजीवराजी, देवराजीवराजी एव पत्रं यस्याः सा देवराजीवराजीपत्रा । आपदः-विपदः त्रायते इति आपत्त्रा । यस्य इयं यदीया । न तनुः अतनुः, अतनुः रवो यस्य सः अतनुरवः । नन्दयतीति नन्दकः । इति प्रथमवृत्तार्थः ॥ १ ॥ एकविंशतिवर्णमयीस्रग्धराच्छन्दसा स्तुतिरियम् ॥

दे० व्या०—मालेति । स पार्श्वः-पार्श्वनाथः मां अवतात्-रक्षतात् इत्यन्वयः । 'अव रक्षणे' धातुः । 'अवतात्' इति क्रियापदम् । कः कर्ता ? । (पार्श्वः) पार्श्वनाथः । कं कर्मतापन्नम् ? । माम् । कस्मात् ? । 'पातात्' पतनं पातः तस्मात् । पतनं पदात् परिभ्रंशः । किंविशिष्टः पार्श्वनाथः ? । 'आलानबाहुः' आलानं-गजबन्धनस्तम्भः तद्वद् बाहू-भुजौ यस्य स तथा । " तोत्रं वेणुकमालानं, बन्धस्तम्भोऽङ्कुशः सृणिः " इत्यभिधानचिन्तामणिः ( का० ४, श्लो० २९६ ) । पुनः किंविशिष्टः ? । 'सूचितोमाचितः । सुतरां सुष्ठु वा उचिता-योग्या या उमा-कीर्तिः तया चितो-व्याप्तः । पुनः किंविशिष्टः ? 'रुचिररुचिरदः' रुचिरा-मनोहरा रुचिः-कान्तिर्येषां ते एवंविधा रदा-दन्ता यस्य स तथा । पुनः किंविशिष्टः ? । 'अतनुरवः' अतनुः-अनल्पो रवः-शब्दो यस्य स तथा, मेघगम्भीरघोषत्वात् । पुनः किंविशिष्टः ? । नन्दकः-आनन्दजनकः समृद्धिकारक इति प्राञ्चः । नो निषेधे । पुनः किंविशिष्टः ? नोदकः-प्रेरकः । किं कुर्वन् पार्श्वनाथः ? । दधत्-धारयत् । काम् ? । मालां-पुष्पस्रजम् । इह-अस्मिँल्लोके यां मालाम् अलीनां-भ्रमराणां आली-पंक्तिः मुदा-हर्षेण अदधत्-पपौ । 'धेट् पाने' धातुः । 'अदधत्' इति क्रियापदम् । का कर्त्री ? । 'आली' । केषाम् ? । अलीनाम् । कां कर्मतापन्नाम् ? । मालाम् । कया ? । मुदा । कथम् ? । अरम्-अत्यर्थं यथा स्यात् तथेति क्रियाविशेषणम् । किंविशिष्टा आली ? । उदारा-स्फारा । पुनः किंविशिष्टा ? । लीना-आश्लिष्टा । कथम् ? । आरात्-शीघ्रम्, आगत्येतिशेषः । किंविशिष्टां मालाम् ? । 'मधुरमधुरसाम्' मधुरं-मिष्टं यन्मधु-मकरन्दः तस्य रसः-पुष्पनिर्यासो यस्यां सा ताम् । आल्या विशेषणमिति कश्चित् तच्चिन्त्यम् । यत्तदोर्नित्याभिसम्बन्धाद् यदीया तनुः-शरीरं 'आपत्त्रा' आपद्-विपत्तिः तस्याः सकाशात् त्रायते इति आपत्त्रा, वर्तत इति शेषः । किंविशिष्टा तनुः ? । 'देवराजीवराजीपत्रा' देवैर्निर्मिता या 'राजीवराजी' राजीवानि-कमलानि तेषां राजी-पंक्तिः सैव पत्रं-वाहनं यस्याः सा तथा, तदुपरि चरणविन्यासादिति भावः । " यानं युग्यं पत्रं वाहं ( ह्यं ) " इत्यभिधानचिन्तामणिः ( का० ३, श्लो० ४२३ ) । इति प्रथमवृत्तार्थः ॥ १ ॥



जिनेश्वराणां स्तुतिः—

राजी राजीववक्त्रा तरलतरलसत्केतुरङ्गत्तुरङ्ग-
व्यालव्यालम्बयोधाचितरचितरणे भीतिहृद् याऽतिहृद्या ।
सारा साऽऽराज्जिनानामलममलमतेर्बोधिका माऽधिकामा-
दव्यादव्याधिकालाननजननजरात्रासमानाऽसमाना ॥ २ ॥

—स्रग्०

ज० वि०—राजीति । सा जिनानां-तीर्थकृतां राजी-श्रेणी, माशब्दोऽस्मच्छब्दस्य द्वितीयैकवचनान्तो विशेषादेशे सिद्धो मामित्यस्यार्थे वर्तते, 'अधिकामात्' अधिक-उत्कटो य आमो-

रोगस्तस्मात्, अथवा आधिः– मनःपीडा कामः–कन्दर्पः तस्मात् ( अस्मान् ) अव्यात्–पायात् इति क्रियाकारकयोगः । अत्र 'अव्यात्' इति क्रियापदम् । का कर्त्री ? 'राजी' । केषाम् ? 'जिनानाम्' । कं कर्मतापन्नम् ? 'मा' । कस्मात् ? 'अधिकामात्' 'आधिकामाद् वा' । जिनानां राजी कथंभूता ? 'राजीववक्त्रा' कमलवदना । पुनः कथं० ? 'अतिहृद्या' अतिशयेन हृदयङ्गमा । पुनः कथं० ? 'सारा' उत्कृष्टा । पुनः कथं० ? 'बोधिका' बोधिजनका । कस्य ? 'अमलमतेः' निर्मलधियो जनस्य । पुनः कथं० ? 'अव्याधिकालाननजननजरात्रासमाना' व्याधिः–रोगः कालाननं–यममुखं जननं–जन्म जरा–वार्धकं त्रासः–आकस्मिकं भयं मानः–अहङ्कारः, एते न विद्यन्ते यस्याः सा । पुनः कथं० ? 'असमाना' असदृशा । सेति तच्छब्दसंयोगाद् यच्छब्दयोजनामाह—या जिनानां राजी भीतिहृद्–भयापहारिणी । अत्र [ अपि ] 'अस्ति' इति क्रिया अध्याह्रियते । ततश्च 'अस्ति' इति क्रियापदम् । का कर्त्री ? 'या' । कथंभूता? 'भीतिहृत्'। कस्मिन् ? 'तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालव्यालग्नयोधाचितरचितरणे' तरलतराः–कम्प्रतराः लसन्तः–दीप्यमानाः केतवो–ध्वजा येषां ते तथा रङ्गन्तः–चलन्तः ये तुरङ्गाः– अश्वाः व्यालाः–दुष्टदन्तिनः तेषां व्यालग्ना–भेटिताः कृताधिरोहणा वा एवंविधा ये योधाः–भटाः तैराचितः–आकीर्णः रचितो–विहितो यो रणः–सङ्ग्रामः तस्मिन् । कथम् ! 'आरात्' दूरात् अन्तिकाद् वा ॥

अथ समासः—राजीवमिव राजीवम् । राजीवं वक्त्रं यस्याः सा राजीव० 'बहुव्रीहिः' । लसन्तश्च ते केतवश्च लसत्० 'कर्मधारयः' । अतिशयेन तरलास्तरलतराः । तरलतरा लसत्केतवो येषां ते तरल० 'बहुव्रीहिः' । रङ्गन्तश्च ते तुरङ्गाश्च रङ्गत्तु० 'कर्मधारयः' । रङ्गत्तुरङ्गाश्च व्यालाश्च रङ्गत्तु० 'इतरेतरद्वन्द्वः' । रङ्गत्तुरङ्गव्यालानां व्यालग्ना रङ्गत्तु० 'तत्पुरुषः' । रङ्गत्तुरङ्गव्यालव्यालग्नाश्च ते योधाश्च तरलतरलसत्केतुरङ्गत्तु० 'कर्मधारयः' । तरलतरलसत्केतवश्च ते रङ्गत्तुरङ्गव्यालव्यालग्नयोधाश्च तरल० 'कर्मधारयः' । तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालव्यालग्नयोधैराचितः तरल० 'तत्पुरुषः' । रचितश्चासौ रणश्च रचित० 'कर्मधारयः । तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालव्यालग्नयोधाचितश्चासौ रचितरणश्च तरल० 'कर्मधारयः' । तस्मिन् तरल० । भीतिं हरतीति भीतिहृत् 'तत्पुरुषः' । अतिशयेन हृद्या अतिहृद्या 'तत्पुरुषः' । न विद्यते मलो यस्यां सा अमला 'बहुव्रीहिः' । अमला मतिर्यस्य सोऽमलमतिः 'बहुव्रीहिः' । तस्यामलमतेः । अधिकश्चासावामश्च अधिकामः 'कर्मधारयः' । तस्मादधिकामात् । अथवा आधिश्च कामश्चाधिकामं 'समाहारद्वन्द्वः' । तस्मादाधिकामात् । कालस्याननं कालाननं 'तत्पुरुषः' । व्याधिश्च कालाननं च जननं च जरा च त्रासश्च मानश्च व्याधिकाला० 'इतरेतरद्वन्द्वः' न विद्यन्ते व्याधिकालाननजननजरात्रासमाना यस्यां सा अव्याधिकाला० 'बहुव्रीहिः' । न समाना असमाना 'तत्पुरुषः' इति काव्यार्थः ॥ २ ॥

सि० वृ०—राजीति । सा जिनानां राजी–तीर्थकृतां पङ्क्तिः, माशब्दोऽस्मच्छब्दस्य द्वितीयैकवचनान्तो विशेषादेशे सिद्धो मामित्यस्यार्थे वर्तते, 'अधिकामात्' अधिकः–उत्कृष्टः यः आमो–रोगः तस्मात्, अथवा आधिः–मानसी व्यथा कामः–कन्दर्पः तस्मात् (अलम्) अव्यात्–पायात् इत्यर्थः । 'अव रक्षणे' धातोः आशिषि कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं यात् । अत्र 'अव्यात्' इति क्रियापदम् । का कर्त्री ? । राजी । केषाम् ? । जिनानाम् । कं कर्मतापन्नम् ? । मा । कस्मात् ? । अधिकामात् । जिनानां राजी कथंभूता ? । 'राजीववक्त्रा' राजीवानि–कमलानि तद्वद् वक्त्रं–मुखं यस्याः सा । "परं शतसहस्राभ्यां, पत्रं राजीवपुष्करे" इति हैमः (का० ४, श्लो० २२७) । पुनः कथंभूता ? । अतिहृद्या–अतिशयेन हृदयङ्गमा । पुनः कथंभूता ? । सारा–उत्कृष्टा । पुनः कथंभूता ? । बोधिका–बोधजनका । कस्य ? । 'अमलमतेः' अमला–निर्मला मतिः–प्रज्ञा यस्य स तथा तस्य । पुनः कथंभूता ? । 'अव्याधिकालाननजननजरात्रासमाना' व्याधिः–रोगः कालाननं–यममुखं जननं–जन्म जरा–विस्रसा त्रासः–भयं मानः–अभिमानः, व्याधिश्च कालाननं च जननं च जरा च त्रासश्च मानश्च व्याधिकालाननजननजरात्रासमानाः 'इतरेतरद्वन्द्वः', एते न विद्यन्ते यस्याः सा तथा । पुनः कथंभूता ? । 'असमाना' न विद्यते समानः–सदृशः कोऽपि यस्याः सा असमाना । सेति सा का ? । या जिनानां राजी भीतिहृत्–भयापहारिणी, अस्तीति क्रियाध्याहारः । ततः 'अस्ति' इति क्रियापदम् । का कर्त्री ? । या । कथंभूता ? । भीतिहृत् । कस्मिन् ? । 'तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालव्यालग्नयोधाचितरचितरणे' अतिशयेन तरलाः तरलतराः ते च ते लसन्तो–दीप्यमानाः केतवः–ध्वजा येषां ते तथा रङ्गन्तः–चलन्तो ये तुरङ्गाः–अश्वाः व्यालाः–दुष्टदन्तिनः तेषां व्यालग्नाः–भेटिताः कृताधिरोहणा वा, एवंविधा ये योधा–भटाः तैः आचितः–आकीर्णः रचितो–विहितो यो रणः–सङ्ग्रामः तस्मिन् । कथम् ? । आरात् दूरात् अन्तिकाद् वा । लसन्तश्च ते केतवश्च लसत्केतव इति 'कर्मधारयः', तरलतरा लसत्केतवो येषां ते तरलतरलसत्केतवः 'बहुव्रीहिः', रङ्गन्तश्च ते तुरङ्गाश्च रङ्गत्तुरङ्गाः 'कर्मधारयः', रङ्गत्तुरङ्गाश्च ते व्यालाश्च रङ्गत्तुरङ्गव्यालाः 'इतरेतरद्वन्द्वः', रङ्गत्तुरङ्गव्यालानां व्यालग्नाः रङ्गत्तु० 'तत्पुरुषः', रङ्गत्तुरङ्गव्यालव्यालग्नाश्च ते योधाश्च रङ्ग० 'कर्मधारयः' तरलतरलसत्केतवश्च ते रङ्गत्तुरङ्गव्यालव्यालग्नयोधाश्च तरल० 'कर्मधारयः', तैः आचितः तरल० 'तत्पुरुषः', रचितश्चासौ रणश्च रचितरणः 'कर्मधारयः' । तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालव्यालग्नयोधाचितश्चासौ रचितरणश्च तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालव्यालग्नयोधाचितरचितरणः तस्मिन् । भीतिं हरतीति भीतिहृत् ॥ २ ॥

सौ० वृ०—राजीति । सा जिनानां राजी–तीर्थकृतां श्रेणिः अधिकः–उत्कृष्टः आमो–रोगः तस्मात् आधिकामात्, यद्वा आधिः–मानसी व्यथा कामो–विषयः तस्मात् आधिकामात् मा–मां प्रति अव्यात् इत्यन्वयः । 'अव्यात्' इति क्रियापदम् । का कर्त्री ? । 'राजी' । केषाम् ? । 'जिनानाम्' । 'अव्यात्' पायात्–रक्षतात् । कं कर्मतापन्नम् ? । 'मा' । अस्मच्छब्दस्य द्वितीयैकवचनं मा इत्यस्य विशेषादेशे मा इति निपातः । 'त्वा मामा' इति सूत्रेण । कस्मात् अव्यात् ? । 'अधिकामात्' वा 'आधिकामात्' । किंविशिष्टा जिनानां राजी ? । राजीवानि–पद्मानि तद्वत् वक्त्राणि–मुखानि यस्याः (सा) 'राजीववक्त्रा,' पद्मवदनेत्यर्थः । पुनः किंविशिष्टा जिनानां राजी ? । 'सारा' प्रधाना । पुनः किंवि-

शिष्टा जिनानां राजी ?। 'बोधिका' बोधिदातृ(का)। कस्य ?। अमला-निर्मला मतिर्यस्य सः अमलमतिः तस्य अमलमतेः, निर्मलबुद्धिजनस्येत्यर्थः । कथम् ?। 'अलं' अत्यर्थम् । पुनः किंविशिष्टा जिनानां राजी ?। नास्ति व्याधिः-रोगः कालाननं-यममुखं-मरणं जननं-जन्म जरा-वयोहानिः-वार्धकं त्रासः-आकस्मिकं भयं मानः-अहंकारः एतानि यस्याः सा 'अव्याधिकालाननजननजरात्रासमाना'। पुनः किंविशिष्टा जिनानां राजी ?। 'असमाना' अनन्यसदृशा । पुनः किंविशिष्टा जिनानां राजी ?। 'अतिहृद्या' अतिमनोहरा । पुनः किंविशिष्टा जिनानां राजी ?। 'सा' सा-प्रसिद्धा। तच्छब्दो यच्छब्दमपेक्षते । सा का ?। या जिनानां राजी भीतिहृत्-भयहर्त्री अस्ति । 'अस्ति' इति पदमध्याहार्यम् । 'अस्ति' इति क्रियापदम् । का कर्त्री ?। 'या' जिनानां राजी ।' अस्ति' विद्यते । किंविशिष्टा या ?। 'भीतिहृत्'। कस्मिन् ?। तरलतरा-अतिशयेन चपलतरा लसन्तः-दीप्यन्तः ये केतवः-ध्वजाः रङ्गन्तो-वल्गन्तो ये तुरङ्गा-अश्वा येषु व्याला-दुष्टगजाः तेषु व्यालग्ना-आरूढा भेदि(टि)ता वा ये योधाः-सुभटाः तैः [ आचितरं-प्रकटीकृतं यद् वितरं-प्रचुरं ] ( आचितं-व्याप्तं यद् रचितं ) रणं-युद्धं तस्मिन् 'तरलतरलसत्केतुरङ्ग तुरङ्गव्यालव्यालग्नयोधाचितरचितरणे'। एतादृशा रणभयहर्त्री जिनानां राजी मां आरात्-दूरात् अन्तिके वा पायात् । इति पदार्थः ॥

अथ समासः—राजीवानीव वक्त्राणि यस्याः सा राजीववक्त्रा । अतिशयेन तरलाः तरलतराः, लसन्तश्च ते केतवश्च लसत्केतवः, तरलतराश्च ते लसत्केतवश्च तरलतरलसत्केतवः, रङ्गन्तश्च ते तुरङ्गाश्च रङ्गत्तुरङ्गाः, तरलतरलसत्केतवश्च रङ्गत्तुरङ्गाश्च येषु ते तरलतरलसत्केतुरङ्गत्तुरङ्गाः, तरलतरलसत्केतुरङ्गत्तुरङ्गाश्च व्यालाश्च तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालाः, तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालैः व्यालग्नाः तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालव्यालग्नाः, तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालव्यालग्नाश्च ते योधाश्च तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालव्यालग्नयोधाः, तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालव्यालग्नयोधैः आचितः-आकीर्णः तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालव्यालग्नयोधाचितः, रचितश्चासौ रणश्च रचितरणः, तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालव्यालग्नयोधाचितश्चासौ रचितरणश्च तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालव्यालग्नयोधाचितरचितरणः, तस्मिन् तरलतरलसत्केतुरङ्गत्तुरङ्गव्यालव्यालग्नयोधाचितरचितरणे । भीतिं हरतीति भीतिहृत् । हृदि भवा हृद्या, हृदि हिता वा हृद्या, अतिशयेन हृद्या अतिहृद्या । अमला मतिर्यस्य सः अमलमतिः, तस्य अमलमतेः । बोधिं करोति कथयति वा बोधिका । अधिकश्चासौ आमश्च अधिकामः, आधिश्च कामश्च आधिकामम् [ अधिकामाधिकामः ] तस्मात् ( अधिकामात् ) आधिकामात् (वा)। व्याधिश्च कालाननं च जननं च जरा च त्रासश्च मानश्च व्याधिकालाननजननजरात्रासमानाः, न विद्यन्ते व्याधिकालाननजननजरात्रासमाना यस्यां सा अव्याधिकालाननजननजरात्रासमाना । नास्ति समानः-तुल्यो यस्याः सा असमाना । इति द्वितीयवृत्तार्थः ॥ २ ॥

दे० व्या०—राजीति । सा जिनानां-तीर्थकराणां राजी-पङ्क्तिः अलम्-अत्यर्थं यथा स्यात् तथा मां अव्यात्-रक्षतात् इत्यन्वयः। 'अव रक्षणे' धातुः। 'अव्यात्' इति क्रियापदम् । का कर्त्री ?। राजी । केषाम् ?। जिनानाम् । कं कर्मतापन्नम् ?। माम् । किंविशिष्टा जिनानां राजी ?। 'राजीववक्त्रा' राजीवं-कमलं तद्वद् वक्त्रं-मुखं यस्याः सा तथा । "पत्रं राजीवपुष्करे" इत्यभिधानचिन्तामणिः (का० ४, श्लो० २२७)। पुनः किंविशिष्टा ?। 'अतिहृद्या' अतिशयेन हृदयङ्गमा । पुनः किंविशिष्टा ?। बोधिका-बोधजनका । कस्य ?। 'अमलमतेः' अमला-निर्मला मतिः-बुद्धिः यस्य स तस्य । पुनः किंविशिष्टा ? । 'अव्याधिकालाननजरात्रासमाना', व्याधिः-पीडा कालाननं-यममुखं मरणमितियावत् जननं-उत्पत्तिः जरा-विस्रसा त्रासः-आकस्मिकं भयं मानः-स्मयः एतेषां पूर्वं 'द्वन्द्वः' ततो न विद्यन्ते व्याधिकालाननजरात्रासमाना यस्याः सा

तथेति समासः । पुनः किंविशिष्टा ? । 'असमाना' (नास्ति) सदृशो यस्याः सा तथा, धर्मचक्रवर्तित्वात् । यत्तदो-र्नित्याभिसम्बन्धात् । (या) जिनानां राजी भीतिहृत्, वर्तत इत्यध्याहारः । 'वर्तते' इति क्रियापदम् । का कर्त्री ? । जिनानां राजी । किंविशिष्टा जिनानां राजी ? । 'भीतिहृत्' भीतिं हरतीति भीतिहृत् । कस्मिन् ? । 'तरल-तरलसत्केतुरङ्गत्तुरङ्गव्यालव्यालग्नयोधाचितरचितरणे' अतिशयेन तरलाः तरलतराः चञ्चला इत्यर्थः, ते च ते लसन्तो-राजमानाः केतवः-पताका येषु एतादृशां रङ्गतां-चलतां तुरङ्गाणां व्यालानां-दुष्टदन्तिनां च विशेषेण लग्ना ये योधाः-सुभटाः तैः चितो-व्याप्तो रचितः-प्रारब्धो यो रणः-संग्रामः तस्मिन् ॥ इति द्वितीयवृत्तार्थः ॥२॥



जिनवाण्या विचारः—

सद्योऽसद्योगभिद् वागमलगमलया जैनराजीनराजी-
नूता नूतार्थधात्रीह ततहततमःपातकाऽपातकामा ।
शास्त्री शास्त्री नराणां हृदयहृदयशोरोधिकाऽबाधिका वा-
ऽऽदेया देयान्मुदं ते मनुजमनु जरां त्याजयन्ती जयन्ती ॥ ३ ॥ — स्रग्०

ज० वि०—सद्योऽसद्योगेति । जैनराजी-जिनसम्बन्धिनी वाक्-वाणी ते-तव मुदं-हर्षं देयात्-वितीर्यादिति क्रियाकारकान्वयघटना । अत्र 'देयात्' इति क्रियापदम् । का कर्त्री ? 'वाक्' । कां कर्मतापन्नाम् ? 'मुदम्' । कुत्र ? 'इह' अत्र जगति । कथम् ? 'सद्यः' तत्क्षणम् । वाक् किमीया ? 'जैनराजी' । कथंभूता ? 'असद्योगभित्' असन्-अशोभनो यो योगः-अकार्यादिव्यापारः तं भिनत्ति सा तथा । अथवा असन्तः-असाधवः तैर्योगः-संसर्गः तं भिनत्ति सा तथा । पुनः कथं० ? 'अमलगमलया' अमला-निर्मला ये गमाः-सदृशपाठाः तेषां लयः-श्लेषो यस्यां सा तथा । पुनः कथं० ? 'इनराजीनूता' इनाः-चक्रवर्तिवासुदेवादयः पतयः सूर्या वा तेषां राजी-श्रेणी तया नूता-स्तुता । पुनः कथं० ? 'नूतार्थधात्री' नूताः-नवीना ये अर्थाः-भावास्तेषां धात्री-धारणशीला । पुनः कथं० ? 'ततहततमःपातकापातकामाः' तताः-प्रसृताः हताः-क्षयं नीताः तमः-अज्ञानं पातकं-पापं अपातः-पातरहितः कामः-कन्दर्पः, तता हतास्तमःपातकापातकामा यया सा तथा । ततहततमःपातका अपातकामा चेति विशेषणद्वयं पृथग् व्याख्यायते तदापि युक्तमेव । तथाचायमर्थः-तते हते तमःपातके यया सा तथा, न विद्येते पातकामौ यस्याः सा तथेति । पुनः कथं० ? 'शास्त्री' शास्त्रसम्बन्धिनी । पुनः कथं० ? 'शास्त्री' शासिका । केषाम् ? 'नराणाम्' । पुनः कथं० ? 'हृदयहृत्' मनोहारी । अथवा शास्त्रीशेत्येकं[1] विशेषणम् । स्त्रीनराणां हृदयहृदिति चैकं विशेषणमिति विशेषणद्वयं व्याख्येयम् । तथा हि शास्त्रिणः-शास्त्रवन्तः बहुश्रुता इत्यर्थः, तेषामीशा-स्वामिनी, तैः सेवनी-

१ 'शास्त्रीशा स्त्रीनराणां' इत्यपि पदच्छेदः ।

यत्वात् । स्त्रीणां—योषितां नराणां—पुंसां हृदयहृत्—मनोहरा । पुनः कथं० ? ‘ अयशोरोधिका ’ अयशसां—अकीर्तीनां रोधिका—प्रसरविघातकारिका । पुनः कथं० ? ‘ अबाधिका ’ न बाधाजनिका । ‘ वा ’शब्दश्चार्थः स च समुच्चयार्थो ज्ञेयः । पुनः कथं० ? ‘ आदेया ’ ग्राह्या । वाक् किं कुर्वती ? ‘ त्याजयन्ती ’ मोचयन्ती । कां कर्मतापन्नाम् ? ‘ जरां ’ विस्रसाम् । कथम् ? ‘ मनुजमनु ’ मानवमनु—लक्षीकृत्य । मनुजानां जरां विनाशयतीति फलितार्थः । पुनः किं कुर्वती ? ‘ जयन्ती ’ जयमासादयन्ती, केनाप्यपरिभूयमानत्वात् ॥

**अथ समासः**—न सन् असन् ‘ तत्पुरुषः ’। असंश्चासौ योगश्च असद्योगः ‘कर्मधारयः’। अथवा न सन्तः असन्तः ‘ तत्पुरुषः ’। असद्भिर्योगः असद्योगः ‘ तत्पुरुषः ’। असद्योगं भिनत्तीत्यसद्योगभित् ‘ तत्पुरुषः ’। न विद्यते मलो येषां ते अमलाः ‘ बहुव्रीहिः ’। अमलाश्च ते गमाश्च अमलगमाः ‘कर्मधारयः’। अमलगमानां लयो यस्यां सा अमलगम० ‘ बहुव्रीहिः ’। जिनानां जिनेषु वा राजानः जिनराजाः ‘ तत्पुरुषः ’। जिनराजानामियं जैनराजी । इनानां राजी इनराजी ‘ तत्पुरुषः ’। इनराज्या नूता इनरा० ‘ तत्पुरुषः ’। नूताश्च तेऽर्थाश्च नूतार्थाः ‘ कर्मधारयः ’। नूतार्थानां धात्री नूता० ‘ तत्पुरुषः ’। तताश्च ते हताश्च ततहताः ‘कर्मधारयः’। न विद्यते पातो यस्य सोऽपातः ‘ बहुव्रीहिः ’। अपातश्चासौ कामश्च अपातकामः ‘कर्मधारयः’। तमश्च पातकं च अपातकामश्च तमःपा० ‘ इतरेतरद्वन्द्वः ’। ततहतास्तमःपातकापातकामा यया सा ततहत० ‘ बहुव्रीहिः ’। पृथग्विशेषणपक्षे तु तते च ते हते च ततहते ‘ कर्मधारयः ’। तमश्च पातकं च तमःपातके ‘ इतरेतरद्वन्द्वः ’। ततहते तमःपातके यया सा ततह० ‘ कर्मधारयः ’। पातश्च कामश्च पातकामौ ‘ इतरेतरद्वन्द्वः ’। न विद्येते पातकामौ यस्याः सा अपा० ‘बहुव्रीहिः’। शास्त्रीणामीशा शास्त्रीशा ‘ तत्पुरुषः ’। स्त्रियश्च नराश्च स्त्रीनराः ‘ इतरेतरद्वन्द्वः ’। तेषां स्त्रीनराणाम् । हृदयं हरतीति हृदयहृत् ‘ तत्पुरुषः ’। न यशांसि अयशांसि ‘ तत्पुरुषः ’। अयशसां रोधिका अयशो० ‘ तत्पुरुषः ’। न बाधिका अबाधिका ‘ तत्पुरुषः ’। इति काव्यार्थः॥२॥

**सि० वृ०**—सद्योऽसद्योगेति । सा जिनराजानामियं जैनराजी जिनराजसंबन्धिनीत्यर्थः वाक्—वाणी ते—तव मुदं—हर्षं देयात्—वितीर्यादित्यर्थः । ‘ डुदाञ् दाने ’ धातोः कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं यात् । ‘ दादेरे ’( सा० सू० ८०७ ) इत्याकारस्यैकारः । तथा च ‘ देयात् ’ इति सिद्धम् । अत्र ‘ देयात् ’ इति क्रियापदम् । का कर्त्री ? । वाक् । कां कर्मतापन्नाम् ? । मुदं—हर्षम् । कुत्र ? । इह—अत्र जगति । कथम् ? । सद्यः—तत्क्षणम् । वाक् किमीया ? । जैनराजी । कथंभूता वाक् ? । ‘असद्योगभित्’ असत्—अशोभनो यो योगः—असद्व्यापारः तं भिनत्ति सा तथा । यदि वा असन्तो—असाधवः तैः योगः—संसर्गः तं भिनत्तीति तथा । असद्योगं मनोवाक्कायव्यापारं भिनत्तीत्यर्थो वा । पुनः कथंभूता ? । ‘ अमलगमलया ’ अमला—निर्मला ये गमाः—सदृशपाठाः तेषां लयः—श्लिष्टता यत्र सा तथा । पुनः कथंभूता ? । ‘ इनराजी-

नूता ' इनाः—चक्रवर्त्यादयः प्रभवः सूर्या वा तेषां राजी—श्रेणी तया नूता—स्तुता । " इनः प्रभौ च सूर्ये च " इत्यमरः (?) । कथंभूता ? । ' नूतार्थधात्री ' नूतना—नवीना ये अर्था—भावाः तेषां धात्री—धारणशीला, यदिवा नूतान्—नवान् अभिधेयान् प्रयोजनानि वा दधातीति नूतार्थधात्री । " अर्थोऽभिधेयरैवस्तु-प्रयोजननिवृत्तिषु " इत्यमरः ( श्लो० २९०१ ) । पुनः किंविशिष्टा ? । ' ततहततमःपातकापातकामा ' तमः—अज्ञानं पातकं—पापं अपातः—पातरहितः कामः—कन्दर्पः, तमश्च पातकं च अपातकामश्च ' इतरेतरद्वन्द्वः ', तता हताः तमःपातकापातकामा यया सा तथा । अपातकामेति पृथग् विशेषणं वा । पातः—पतनं कामः—स्मरः अनयो'र्द्वन्द्वः ' । तथा च न विद्येते पातकामौ यस्याः सा तथेति । पुनः कथंभूता ? । शास्त्री—शास्त्रसम्बन्धिनीत्यर्थः । ' तस्येदम् ' (पा० अ० ४, पा० ३, सू० १२० ) इत्यण् । ' टिड्ढाणञ्० ' (पा० अ० ४, पा० १, सू० १५) इति ङीप् । " निदेशग्रन्थयोः शास्त्रं " इत्यमरः (श्लो० २६९४) । पुनः कथंभूता ? । शास्त्री—शिक्षयित्री । केषाम् ? । नराणाम् । पुनः कथंभूता ? । ' हृदयहृत् ' हृदयं हरति—वशीकुरुते इति हृदयहृत् । अथवा शास्त्रीशेत्येकं विशेषणं, स्त्रीनराणां हृदयहृदिति चैकं विशेषणमिति विशेषणद्वयं ज्ञातव्यम् । तथाहि—कथंभूता वाक् ? । शास्त्रीशा—शास्त्रं जानन्ति ते शास्त्रिणः—बहुश्रुताः तेषा ईशा—स्वामिनी, तैः सेवनीयत्वात् । पुनः कथंभूता ? । ' स्त्रीनराणां हृदयहृत् ' स्त्रीणां—योषितां नराणां—पुंसां हृदयहृत्—मनोहरा । पुनः कथंभूता ? । ' अयशोरोधिका ' अयशसां—अपकीर्तीनां रोधिका—प्रसरविघातकारिका । पुनः कथंभूता ? । ' अबाधिका ' न बाधत इत्यबाधिका, सर्वेषां सुखजनकत्वात् । पुनः किंविशिष्टा ? । ' आदेया ' आदीयते इत्यादेया, ग्रहणयोग्येत्यर्थः । अविसंवादित्वेन सर्वैरपि तद्ग्रहणादिति भावः । वाक् किं कुर्वती ? । त्याजयन्ती—मोचयन्ती । काम् ? । जरां—विस्रसाम् । कथम् ? । ' मनुजमनु ' मानवमनु—लक्षीकृत्य, मनुजानां जरां विनाशयतीति फलितार्थः । किं कुर्वती ? । जयन्ती—जयमासादयन्ती, केनाप्यपरिभूयमानत्वात् ॥ ३ ॥

सौ० वृ०—सद्योऽसद्योगेति । जैनराजी-तीर्थङ्करसम्बन्धिनी वाक्-वाणी [ यस्याः सा ] ते-तव मुदं-हर्षं देयात् इत्यन्वयः । ' देयात् ' इति क्रियापदम् । का कर्त्री ? । ' वाग् ' वाणी । ' देयात् ' वितीर्यात्, ददातु इत्यर्थः । कां कर्मतापन्नाम् ? । ' मुदं ' हर्षम् । कस्य ? । ' ते ' तव । कुत्र ? । ' इह ' संसारे ! कथम् ? । ' सद्यः ' शीघ्रम् । किंविशिष्टा वाक् ? । ' जैनराजी ' तीर्थंकरसत्का । पुनः किंविशिष्टा वाणी ? । असन्तः—अशोभनाः दुष्टा योगा—मनोवाक्कायव्यापारास्तान् भिनत्तीति 'असद्योगभित्,' यद्वा असन्तः—असाधवः तेषां योगः—संयोगस्तं प्रति भिनत्तीति ' असद्योगभित् ' । पुनः किंविशिष्टा वाक् ? । अमला—निर्मला सदर्थत्वात् गमाः—सदृशपाठालापकाः तेषां लयः—स्थानं यस्याः सा 'अमलगमलया' । पुनः किंविशिष्टा वाक् ? । इनाः—स्वामिनः चक्रवर्तिबलदेववासुदेवादयः यद्वा इनाः—सूर्यादयः इन्द्रादयो वा तेषां राजी-श्रेणिः तया नूता—स्तुता ' इनराजीनूता ' । पुनः किंविशिष्टा वाक् ? । नूतः—स्तुतः नवीनो वा योऽर्थः—सूत्रभाषणं तस्य धात्री—धरणीव धरणी वा मातेव माता ' नूतार्थधात्री ' । पुनः किंविशिष्टा वाक् ? । ततं—विस्तीर्णं हतं—निरस्तं तमः अज्ञानं [वा] पातकं—पापं यया सा 'ततहततमःपातका' । पुनः किंविशिष्टा वाक् ? । निराकृतः पातः कामो—मदनो यया सा ' अपातकामा, ' यद्वा नास्ति पातकं—पापं

---

१ " इनः सूर्ये प्रभौ राजा " इति अमरकोशे ( श्लो० २५५७ ) ।

आमो रोगो यस्याः सा ' अपातकामा '। एतद्विशेषणद्वयमपि एकपदमप्यस्ति। पुनः किंविशिष्टा वाक् ?। ' शास्त्री ' शिक्षयित्री, यद्वा शास्त्राणां-ग्रन्थानां ईशा-स्वामिनी। पुनः किंविशिष्टा वाक् ?। हृदयं-चित्तं हरतीति ' हृदयहृत् ', हृदयङ्गमा इत्यर्थः। केषाम् ?। ' स्त्रीनराणां ' योषित्पुरुषाणाम्। पुनः किंविशिष्टा वाक् ?। अयशः-अकीर्तिः तं ( तद् ) रोधते इति ' अयशोरोधिका '। पुनः किंविशिष्टा वाक् ?। नास्ति बाधा-पीडा यस्याः सा ' अबाधिका '। वाशब्दः समुच्चयार्थे। पुनः किंविशिष्टा वाक् ?। ' आदेया ' सर्वभव्यानुमतां ग्राह्यवचना, हितकारिणी इत्यर्थः। पुनः वाक् किं कुर्वती ?। ' त्याजयन्ती ' अपनयन्ती। कां कर्मतापन्नाम् ?। ' जरा ' विस्रसाम्। कथम् ?। ' अनु ' लक्षीकृत्य। कं कर्मतापन्नम् ?। ' मनुजं ' मानवम्। पुनः वाक् किं कुर्वती ?। ' जयन्ती ' जयनशीला, न कैरपि पराजिता। एतादृशी जैनी वाग् युष्माकं मुदं देयात्। इति पदार्थः॥

अथ समासः—असन्तश्च ते योगाश्च असद्योगाः, असद्योगान् भिनत्तीति असद्योगभिद्, यद्वा न सन्तः असन्तः, असतां योगः असद्योगः, असद्योगं भिनत्तीति असद्योगभित्। उच्यते इति वाक्। न मला अमलाः, अमलाश्च ते गमाश्च अमलगमाः, अमलगमानां लयः-स्थानं यस्याः सा अमलगमलया। जिनेषु राजानः जिनराजाः, जिनराजानां इयं जैनराजी। इनानां राजयः इनराजयः, इनराजिभिः नूता इनराजिनूता। नूताश्च ते अर्थाश्च नूतार्थाः, नूतार्थानां धात्री नूतार्थधात्री। तमश्च पातकं च तमःपातके, हते च ते तमःपातके च हततमःपातके, तते हततमःपातके यया सा ततहततमःपातका। पातश्च कामश्च पातकामौ, न स्तः पातकामौ यस्याः सा अपातकामा, यद्वा ततहततमःपातकाश्च अपातकामाश्च यस्यां सा ततहततमःपातकापातकामा। शास्ति-शिक्षयतीति शास्त्री। यद्वा शास्त्राणां ईशा शास्त्रीशा। स्त्रियश्च नराश्च स्त्रीनराः, तेषां स्त्रीनराणाम्। हृदयं हरतीति हृदयहृत्। न यशांसि अयशांसि, अयशसां रोधिका अयशोरोधिका। न विद्यते बाधा यस्यां सा अबाधिका [ वा ]। आदातुं योग्या आदेया। इति तृतीयवृत्तार्थः॥ ३॥

दे० व्या०—सयोऽसयोगेति। सा जैनराजी वाग्-वाणी इह-अस्मिन् लोके ते-तुभ्यं सद्यः-तत्कालं मुदं-हर्षं देयात्-दद्यादित्यन्वयः। 'दा दाने' धातुः। 'देयात्' इति क्रियापदम्। का कर्त्री ?। वाक्। कां कर्मतापन्नाम् ?। मुदम्। कस्य ?। ते-तव। कस्मिन् ?। इह। कथम् ?। सद्यः। किंविशिष्टा वाक् ?। 'जैनराजी' जिनराजानामियं जैनराजी। पुनः किंविशिष्टा ?। 'असद्योगभित्' असन्तम्-अशोभनं योगं-कायादिव्यापारं यद्वा असद्भिः-असाधुभिः योगं-सम्बन्धं भिनत्तीति तथा। पुनः किंविशिष्टा ?। 'अमलगमलया' अमला-निर्मला ये गमाः-सदृशपाठाः तेषां लयः-श्लिष्टता यत्र सा तथा। पुनः किंविशिष्टा ?। ' इनराजीनूता ' इनानां-राज्ञां सूर्याणां वा राजी-पंक्तिः तया नूता-स्तुता। पुनः किंविशिष्टा ?। 'नूतार्थधात्री ' नूता-नवीना ये अर्थास्तेषां धात्री-धरणशीला। पुनः किंविशिष्टा ?। ' ततहततमःपातका ' तमः-अज्ञानं पातकं-पापं अनयोः ' द्वन्द्वः ', पश्चात् तते-विस्तृते हते-नाशिते तमःपातके ययेति विग्रहः। पुनः किंविशिष्टा ?। ' अपातकामा ' नास्ति पातः-च्यवनं कामः-कन्दर्पो यस्यां सा तथा। पातश्च कामश्चेति पूर्वं ' द्वन्द्वः '। पुनः किंविशिष्टा ?। शास्त्री-शास्त्रसम्बन्धिनी। शास्त्री-शासिका। 'शासु अनुशिष्टौ'। ' तस्येदम् ' (पा० अ० ४, पा० ३, सू० १२०)। पुनः किंविशिष्टा ?। 'हृदयहृत्' हृदयं हरतीति हृदयहृत्, मनोहारिणीत्यर्थः। केषाम् ?। नराणां-मनुष्याणाम्। पुनः किंविशिष्टा ?। 'अयशोरोधिका ' न यशः अयशः इति 'नञ्समासः', तस्य रोधिका-प्रसरणविघातिनी। पुनः किंविशिष्टा ?। 'अबाधिका' बाधा-पीडा तां न करोतीत्यबाधिका, सर्वेषां सुखजनकोपदेशदातृत्वात्। पुनः किंविशिष्टा ?। ' आदेया' आदातुं योग्या आदेया, ग्रहणयोग्येत्यर्थः, अविसंवादित्वेन सर्वैरपि तद्ग्रहणात्। वाक् किं कुर्वती ?। त्याजयन्ती-मोचयन्ती। काम् ?। जरां-वयोहानिम्। कथम् ?। ' मनुजमनु ' पुमांसं पुमांसं अनु-लक्षीकृत्य। पुनः किं कुर्वती ?। जयन्ती-जयमासादयन्ती। इति तृतीयवृत्तार्थः॥ ३॥

श्रीवैरोट्यायाः स्तुतिः--

याता या तारतेजाः सदसि सदसिभृत् कालकान्तालकान्ता-
ऽपारिं पारिन्द्रराजं सुरवसुरवधूपूजिताऽरं जितारम् ।
सा त्रासात् त्रायतां त्वामविषमविषभृद्भूषणाऽभीषणा भी-
हीनाऽहीनाग्र्यपत्नी कुवलयवलयश्यामदेहाऽमदेहा ॥ ४ ॥ २३ ॥ —स्रग्०

ज० वि०--यातेति । हे भव्यात्मन् ! सा 'अहीनाग्र्यपत्नी' अहीनः-धरणेन्द्रः तस्य अग्र्यपत्नी-पट्टराज्ञी वैरोट्यादेवीत्यर्थः, त्वां-भवन्तं त्रासात्-भयात् त्रायतां-रक्षत्विति क्रियाकारकप्रयोगः । अत्र 'त्रायताम्' इति क्रियापदम् । का कर्त्री ? 'अहीनाग्र्यपत्नी' । कं कर्मतापन्नम् ? 'त्वाम्' । कस्मात् ? 'त्रासात्' । सेति तच्छब्दयोगाद् यच्छब्दयोजनामाह--या अहीनाग्र्यपत्नी पारिन्द्रराजं-गजेन्द्रं ( अजगरेन्द्रं ?) याता-गता प्राप्तेतियावत् । अत्र 'अस्ति' इति क्रियापदम् । का कर्त्री ? 'या' । या कथंभूता ? 'याता' । कं कर्मतापन्नम् ? 'पारिन्द्रराजम्' । कथंभूतं पारिन्द्रराजम् ? 'अपारिं' अपगतवैरिणम् । यतः पुनः कथं० ? 'जितारं' जितं-पराजितं आरं-अरीणां समूहो येन स तथा तम् । अहीनाग्र्यपत्नी पुनः कथंभूता ? 'तारतेजाः' उज्ज्वलप्रभा । कस्याम् ? 'सदसि' सभायाम् । पुनः कथं० ? 'सदसिभृत्' शोभनतरवारिधरा । पुनः कथं० ? 'कालकान्तालकान्ता' कालाः-श्यामाः कान्ताः-कमनीयाः अलकान्ताः-कुरलाग्राणि यस्याः सा तथा । पुनः कथं० ? 'सुरवसुरवधूपूजिता' सुरवाः-सुस्वराः याः सुरवध्वो-देवाङ्गनास्ताभिः पूजिता-महिता । (कथम् ?) 'अरं' अत्यर्थम् । पुनः कथं० ? 'अविषमविषभृद्भूषणा' अविषमाः-सौम्याः विषभृतः-सर्पाः त एव भूषणं-शृङ्गारो यस्याः सा तथा । पुनः कथं० ? 'अभीषणा' अरौद्रा । पुनः कथं० ? 'भीहीना' भयरहिता । पुनः कथं० ? 'कुवलयवलयश्यामदेहा' कुवलयानि-नीलोत्पलानि तेषां वलयं-समूहस्तद्वत् श्यामो देहो यस्याः सा तथा । पुनः कथं० ? 'अमदेहा' अमदा-मदरहिता ईहा-चेष्टा यस्याः सा तथा ॥

अथ समासः--तारं तेजो यस्याः सा तार० 'बहुव्रीहिः' । संश्चासावसिश्च सदसिः 'कर्मधारयः' । सदसिं बिभर्तीति सद० 'तत्पुरुषः' । अलकानामन्ता अलकान्ताः 'तत्पुरुषः' । अपगता अरयो यस्य सोऽपारि० 'बहुव्रीहिः' । तमपारिम् । पारिन्द्राणां पारिन्द्रेषु वा राजा पारिन्द्र० 'तत्पुरुषः' । तं पारि० । शोभनो रवो यासां ताः सुरवाः 'बहुव्रीहिः' । सुराणां वध्वः सुरवध्वः 'तत्पुरुषः' । सुरवाश्च ताः सुरवध्वश्च सुर० 'कर्मधारयः' । सुरवसुरवधूभिः पूजिता सुरवसुर० 'तत्पुरुषः' । अरीणां समूहः आरं 'तत्पुरुषः' । जितं आरं येन स जितारः 'बहुव्रीहिः' । तं जितारम् । विषं बिभर्तीति विषभृत् 'तत्पुरुषः' । न विषमा

अविषमाः 'तत्पुरुषः'। अविषमाश्च ते विषभृतश्च अविषम० 'कर्मधारयः'। अविषमविषभृतो भूषणं यस्याः सा अविषम० 'बहुव्रीहिः'। (न भीषणा अभी० 'तत्पुरुषः'।) भिया हीना भीहीना 'तत्पुरुषः'। अहीनां इनः अहीनः 'तत्पुरुषः'। अग्र्या चासौ पत्नी च अग्र्यपत्नी 'कर्मधारयः'। अहीनस्याग्र्यपत्नी अहीना० 'तत्पुरुषः'। कुवलयानां वलयं कुवलय० 'तत्पुरुषः'। कुवलयवलयवत् श्यामः कुवल० 'तत्पुरुषः'। कुवलयवलयश्यामो देहो यस्याः सा कुवल० 'बहुव्रीहिः'। न विद्यते मदो यस्याः सा अमदा 'बहुव्रीहिः'। अमदा ईहा यस्याः सा अमदेहा 'बहुव्रीहिः'। इति काव्यार्थः ॥ ४ ॥

॥ इति श्रीशोभनस्तुतिवृत्तौ श्रीपार्श्वपरमेश्वरस्य स्तुतेर्व्याख्या ॥ २३ ॥

सि० वृ० —यातेति। हे भव्यात्मन्! सा अहीनाग्र्यपत्नी अहीनो—धरणेन्द्रः तस्याग्र्यपत्नी—मुख्यराज्ञी वैरोट्या देवीत्यर्थः। पद्मावतीत्यपि स्तुतिस्तोत्रादौ धरणेन्द्रपत्नीति दृश्यते [सिद्धसेनसूरिणा मतैका-धिक्यविंशतिस्थानप्रकरणे (विंशे स्थाने)

"देवीओ चक्केसरी १ अज(जि)या २ दुरिया(रि) ३ कालि ४ महाकाली ५।
अच्चुअ ६ संता ७ जलो(जाला) ८ सुतारया ९ सोअ १० स(सि)रिवच्छा ११ ॥
पवरा १२ पि(विज)यं १३ कूसा १४ पन्नयत्ति(ण्णत्ती) १५ निव्वाणि १६ अच्चुया १७ धरणी १८।
वैरुट्ट १९ द(छु)त्त २० गंधारी २१ अंबा(ब) २२ पउमावई २३ सिद्धा २४ ॥"

इति वचनात् तथा हेमाचार्येणाप्येवमुक्तम् (अभि० का० १, श्लो० ४६)—

"नरदत्ताऽथ गान्धार्य—म्बिका पद्मावती तथा।
सिद्धायिका चेति जैन्यः, क्रमाच्छासनदेवताः ॥"

इति] परं श्रीभगवतीसूत्र–प्रवचनसारोद्धार-पार्श्वचरित्रादौ कुत्रापि तथा दर्शनाभावात् धरणेन्द्रस्य पद्मावती पत्नीति न प्रतिभाति। तेनैतद् विचार्यमार्यधुर्यैरिति। [पञ्चमाङ्गस्य दशमशतकस्य पञ्चमोद्देशके इत्युक्तम्—"धरणस्स णं भंते! नागकुमारिंदस्स नागकुमाररण्णो कति अग्गमहिसीओ पन्नत्ताओ? (अज्जो! छ अग्गमहिसीओ पन्नत्ताओ) तंजहा—अला १ सक्का २ सतेरा ३ सोदामणी ४ इंदा ५ घणविज्जुत्ता ६, तत्थ णं एगमेगाए देवीए छ छ देविसहस्सा परिवारो प०, पभू णं ताओ एगमेगाए देवीए अन्नाइं छ छ देविसहस्साइं परियारं विउव्वित्तए" इत्याद्युक्तम्।] त्वां—भवन्तं त्रासाद्—भयात् त्रायतां—रक्षतु इत्यर्थः। 'त्रैङ् दैङ् पालनयोः' इति धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि आत्मनेपदे प्रथमपुरुषैकवचनं ताम्। 'अप्०' (सा० सू० ६९१)। 'ऐ आय्' (सा० सू० ४७)। 'स्वरहीनं०' (सा० सू० ३६)। तथाच 'त्रायताम्' इति सिद्धम्। अत्र 'त्रायताम्' इति क्रियापदम्। का कर्त्री?। अहीनाग्र्यपत्नी। कं कर्मतापन्नम्?। त्वाम्। कस्मात्?। त्रासात्। सेति तच्छब्दयोगाद् यच्छब्दयोजनामाह—या अहीनाग्र्यपत्नी पारिन्द्र-

१ कोऽयं सूरिरिति जिज्ञासातृप्त्यर्थं दृश्यतां श्रीएकविंशतिस्थानप्रकरणस्य मुनिश्रीदेवविजयलिखिता प्रस्तावना (पृ० १-२)। २ 'सामा' इति पाठस्तत्रस्थः।

राजं—अजगरेन्द्रं याता—गता प्राप्तेतियावत्। अत्र ' अस्ति ' इति क्रियापदम्। का कर्त्री ?। या। किं कर्मतापन्नम् ?। ' पारिन्द्रराजम् ' पारिन्द्राणां—अजगराणां राजा पारिन्द्रराजः, ' राजाहःसखिभ्यष्टच् ' (पा० अ० ५, पा० ४, सू० ९१) इति टच्, तम्। " चक्रमण्डल्यजगरः पारिन्द्रो वाहसः शयुः " इति हैमः (का० ४, श्लो० ३७१)। कथंभूतं पारिन्द्रराजम् ?। ' अपारिं ' अपगता—दूरीभूता अरयः—विपक्षा यस्य स तथा तम्। पुनः कथंभूतम् ?। ' जितारं ' जितं—भग्नं आरं—अरीणां समूहो येन स तथा तम्। कथंभूता अहीनाग्र्यपत्नी ?। ' तारतेजाः ' तारं—उज्ज्वलं तेजो यस्याः सा तारतेजाः। कस्याम् ?। सदसि—सभायाम्। पुनः कथंभूता ?। ' सदसिभृत् ' सन्—शोभनो यः असिः—खड्गः तं बिभर्तीति सदसिभृत्, क्विबन्तः। "तरवारिकौक्षेयकमण्डलाग्रा—असिर्ऋष्टिरिष्टी" इति हैमः (का० ३, श्लो० ४४६)। पुनः कथंभूता ?। ' कालकान्तालकान्ता ' कालाः—श्यामाः कान्ताः—कमनीयाः अलकान्ताः—कुन्तलाग्राणि यस्याः सा तथा। " अन्तः प्रान्तेऽन्तिके नाशे, स्वरूपेऽतिमनोहरे " इति विश्वः। पुनः कथंभूता ?। ' सुरवसुरवधूपूजिता ' सुरवाः—सुस्वराः याः सुरवध्वः—देवाङ्गनास्ताभिः पूजिता—महिता। अरं—अत्यर्थम्। पुनः कथंभूता ?। ' अविषमविषभृद्भूषणा ' न विषमा अविषमाः—सौम्याः ये विषभृतः—विषधराः—सर्पास्त एव भूषणं—शृङ्गारो यस्याः सा तथा। पुनः कथंभूता ?। अभीषणा—न भयानका। न भीषणा अभीषणा, अरौद्रेत्यर्थः। पुनः कथंभूता ?। ' भीहीना ' भिया—भयेन हीना—रहिता [ भीहीना ]। पुनः कथंभूता ?। ' कुवलयवलयश्यामदेहा ' कुवलयानि—नीलोत्पलानि तेषां वलयं—समूहः तद्वत् श्यामो—नीलो देहः—शरीरं यस्याः सा तथा। पुनः कथंभूता ?। ' अमदेहा ' अमदा—मदरहिता ईहा—चेष्टा यस्याः सा तथा ॥ ४ ॥ स्रग्धरेयं छन्दः। लक्षणं तु प्राक् प्रतिपादितम् ॥ ४ ॥

॥ इति महोपाध्यायश्रीभानुचन्द्रगणिविरचित०श्रीपार्श्वनाथस्तुतिवृत्तिः ॥ २३ ॥

**सौ० वृ०—यातेति। सा ' अहीनाग्र्यपत्नी ' अहयः-सर्पाः तेषां इनः-स्वामी धरणेन्द्रः तस्य अग्र्या-प्रधाना पत्नी-वैरोट्यानाम्नी देवी त्वां त्रासात्-अकस्माद् भयात् त्रायताम् इत्यन्वयः। ' त्रायताम् ' इति क्रियापदम्। का कर्त्री ?। 'अहीनाग्र्यपत्नी'। ' त्रायतां ' रक्षताम्। कं कर्मतापन्नम् ?। 'त्वां' भवन्तम्। कस्मात् ?। 'त्रासात्'। किंविशिष्टा अहीनाग्र्यपत्नी ?। ' सा ' सा-प्रसिद्धा। तच्छब्दो यच्छब्दमपेक्षते। सा का ?। या अहीनाग्र्यपत्नी पारिन्द्रराजं याता इत्यन्वयः। 'याता' इति क्रियापदम्। का कर्त्री ?। या। ' याता ' प्राप्ता। कं कर्मतापन्नम् ?। ' पारिन्द्रराजं ' पारिन्द्रः-अलगर्दव्यालः तस्य राजा तं पारिन्द्रराजम्-अजगरं प्रति गता-प्राप्ता, तस्या वाहनमित्यर्थः। किंविशिष्टं पारिन्द्रराजम् ?। 'अपारिं' अपगतवैरिम्। पुनः किंविशिष्टा या ?। तारं-देदीप्यमानं तेजो यस्याः सा 'तारतेजाः'। कस्याम् ?। ' सदसि ' सभायां सुरपर्षदि। पुनः किंविशिष्टा या ?। सन्-शोभनः असिः-खङ्गः तं प्रति बिभर्तीति ' सदसिभृत् '। पुनः किंविशिष्टा या ?। कालाः-श्यामाः कान्ता-मनोज्ञा अलकानां-चिकुराणां अन्ता-अग्रभागा यस्याः सा ' कालकान्तालकान्ता '। पुनः किंविशिष्टा या ?। सु-शोभनो रवः-शब्दो यासां तास्तादृश्यो याः सुरवध्वः-देवस्त्रियः ताभिः पूजिता-अर्चिता ' सुरवसुरवधूपूजिता '। कथम् ?। ' अरं '**

अत्यर्थम् । पुनः किंविशिष्टा या ? । 'जिता' जयनशीला । किं कर्मतापन्नम् ? । 'आरम्' अरिवृन्दम् । यद्वा 'जितारं' पारिन्द्रराजस्यापि विशेषणं क्रियते । पुनः किंविशिष्टा या ? । अविषमा-सौम्या विषभृतः-सर्पाः त एव तेषां वा भूषणानि यस्याः सा 'अविषमाविषभृद्भूषणा' । पुनः किंविशिष्टा या ? । 'अभीषणा' अक्रूरा । पुनः किंविशिष्टा या ? । भीः-भयं तेन ( तया ) हीना-रहिता । पुनः किंविशिष्टा या ? । 'कुवलयं-नीलोत्पलं, तस्य वलयं-मण्डलं तद्वत् श्यामो-नीलो देहो यस्याः सा 'कुवलयवलयश्यामदेहा' नीलकृष्णयोरैक्यत्वात् । पुनः किंविशिष्टा या ? । अमदा-अनौद्धत्यकारिणी ईहा-चेष्टा इच्छा-वाञ्छा वा यस्याः सा 'अमदेहा' । एतादृशी वैरोट्या त्वां तर्याद् (त्रासात्?) रक्षताम् । इति पदार्थः ॥

अथ समासः—तारं तेजो यस्याः सा तारतेजाः । सन् चासौ असिश्च सदसिः, सदसिं बिभर्तीति सदसिभृत् । अलकानां अन्ताः अलकान्ताः, कान्ताश्च ते अलकान्ताश्च कान्तालकान्ताः, कालाः कान्तालकान्ता यस्याः सा कालकान्तालकान्ता । अपगता अरयो यस्मात् स अपारिः, तं अपारिम् । पारिन्द्राणां राजा इति पारिन्द्रराजः, तं पारिन्द्रराजम् । 'राजाहःसखिभ्यष्टच्' ( पा० अ० ५, पा० ४, सू० ९१ ) । "पारिन्द्रो वाहसः शयुः" इति हैमकोषः ( का० ४, श्लो० ३७१ ) । सुष्ठु रवो यासां ताः सुरवाः, सुराणां वध्वः सुरवध्वः, सुरवाश्च ताः सुरवध्वश्च सुरवसुरवध्वः, सुरवसुरवधूभिः पूजिता सुरवसुरवधूपूजिता । अरीणां समूहः आरं, आरं जितं येन स जितारः, तं जितारम् । न विषमः अविषमः, विषं बिभर्तीति विषभृत्, अविषमश्चासौ विषभृत् अविषमविषभृत्, एवं ( स एव ) भूषणं यस्याः सा अविषमविषभृद्भूषणा; यद्वा अविषमविषभृतः भूषणं यस्याः सा अविषमाविषभृद्भूषणा । न भीषणा अभीषणा । भिया हीना भीहीना । अहीनां इनः अहीनः, अग्र्या चासौ पत्नी च अग्र्यपत्नी, अहीनस्य अग्र्यपत्नी अहीनाग्र्यपत्नी । कुवलयानां वलयं कुवलयवलयं, कुवलयवलयवत् श्यामो देहो यस्याः सा कुवलयवलयश्यामदेहा । न मदा अमदाः, अमदा ईहा यस्याः सा अमदेहा । अस्यां स्तुतौ सर्वपदेषु चित्रयमकालङ्कारः । इति तुर्यवृत्तार्थः ॥ ४ ॥

श्रीमत्पार्श्वजिनेन्द्रस्य, स्तुतेरर्थो लिवीकृतः ।
सौभाग्यसागराख्येन, सूरिणा ज्ञानसेविना ॥

त्रयोविंशतितमश्रीपार्श्वजिनस्तुतिः ॥ ४।२३।९२ ॥

दे० व्या०-यातेति । सा वैरोट्या देवी त्वां-भवन्तं त्रासात्-आकस्मिकभयात् अरं-शीघ्रं यथा स्यात् तथा त्रायतां-रक्षतादित्यन्वयः । 'त्रा रक्षणे' धातुः । 'त्रायताम्' इति क्रियापदम् । का कर्त्री ? । वैरोट्या देवी । कं कर्मतापन्नम् ? । त्वाम् । ( कस्मात् ? ) त्रासात् । किंविशिष्टं त्वाम् ? । 'जितारं' अरीणां समूहः आरं, जितं-भग्नं आरं येन स तम् । यत्तदोर्नित्याभिसम्बन्धाद् या वैरोट्या देवी सदसि-सभायां तारतेजाः-उत्कृष्टतेजाः वर्तते इत्यनुषङ्गः । किंविशिष्टा देवी ? । याता-आरूढा । कम् ? । पारिन्द्रराजं-अजगराधीशं, पारिन्द्राणां राजा तं पारिन्द्रराजं इति 'षष्ठीतत्पुरुषः' । 'राजाहःसखिभ्यष्टच्' ( पा० अ० ५, पा० ४, सू० ९१ ) इति टच्प्रत्ययेन रूपसिद्धिः । "चक्रमण्डल्यजगरः पारिन्द्रो वाहसः शयुः" इत्यभिधानचिन्तामणिः ( का० ४, श्लो० ३७१ ) । किंविशिष्टं पारिन्द्रराजम् ? । 'अपारिं' अपगता अरयः-शत्रवो यस्य स तम् । पुनः किंविशिष्टा देवी ? । 'सदसिभृत्' सन्तं खड्गं बिभर्तीति तथा । क्विप्प्रत्ययान्तम् । पुनः किंविशिष्टा ? । 'कालकान्तालकान्ता' कालाः-कृष्णाः कान्ताः-मनोज्ञाः अलकानां-केशानां अन्ता यस्या सा तथा । पुनः किंविशिष्टा ? । 'सुरवसुरवधूपूजिता' सुष्ठु शोभनो रवः-शब्दो यासां तास्तथा सुराणां वध्वः सुरवध्वः इति पूर्वं 'षष्ठीतत्पुरुषः',

१ 'कुवलयानि-नीलोत्पलानि तेषां वलयं' इति प्रतिभाति ।

ततः सुरवाश्च ताः सुरवध्वश्चेति 'कर्मधारयः', ताभिः पूजिता-अर्चिता। स्तुतिपूर्वकं अमराङ्गनाभिः पूजिता इति तु निष्कर्षः। पुनः किंविशिष्टा ?। 'अविषमविषभृत्' न विषमा अविषमा इति पूर्वं 'नञ्समासः', सौम्या इत्यर्थः, ततः ते च ते विषभृतश्चेति 'कर्मधारयः', विषभृतः-सर्पाः त एव भूषणं-आभरणं यस्याः सा तथा। पुनः किंविशिष्टा ?। 'अभीषणा' न भीषणा अभीषणा इति 'नञ्समासः'। अरौद्रा इति निष्कर्षः। पुनः किंविशिष्टा ?। 'भीहीना' भिया हीना भीहीना इति 'तृतीयातत्पुरुषः'। भयरहितेति निष्कर्षः। पुनः किंविशिष्टा ?। 'अहीनाग्र्यपत्नी' अहीनो-धरणेन्द्रः तस्य अग्र्यपत्नी-मुख्यललना। अग्र्या चासौ पत्नी चेति पूर्वं 'कर्मधारयः'। पुनः किंविशिष्टा ?। 'कुवलयवलयश्यामदेहा' कुवलयानि-उत्पलानि तेषां वलयं-समूहः तद्वत् श्यामो-नीलो देहः-शरीरं यस्याः सा तथा। "उत्पलं स्यात् कुवलयं" इत्यभिधानचिन्तामणिः (का० ४, श्लो० २२९)। पुनः किंविशिष्टा ?। 'अमदेहा' अमदा-मदरहिता ईहा-चेष्टा यस्याः सा तथा॥ इति तुरीयवृत्तार्थः॥ ४॥



# २४ श्रीवीरजिनस्तुतयः

अथ श्रीवीरनाथाय विज्ञप्तिः--

नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालारजोरञ्जितांह्रे ! धरित्रीकृता-
वन ! वैरतमसङ्गमोदारतारोदितानङ्गनार्यावलीलापदेहेक्षितामोहिताक्षो भवान् ।
मम वितरतु 'वीर!' निर्वाणशर्माणि जातावतारो धराधीश'सिद्धार्थ'धाम्नि क्षमालङ्कृता-
वनवरतमसङ्गमोदारतारोदितानङ्गनार्याव! लीलापदे हे क्षितामो हिताक्षोभवान् ॥१॥

—अर्णवदण्डकः

ज० वि०—नमदमरेति । हे वीर!–महावीर!। हेशब्द आभिमुख्याभिव्यक्तये सम्बोधनानां प्राक् प्रयुज्यते । भवान्–त्वं मम–मे निर्वाणशर्माणि–मोक्षसुखानि वितरतु–प्रयच्छतु इति क्रियाकारकसम्बन्धः । अत्र 'वितरतु' इति क्रियापदम् । कः कर्ता ? 'भवान्' । कानि कर्मतापन्नानि ? 'निर्वाणशर्माणि' । कस्य ? 'मम' । भवान् कथंभूतः ? 'वरतमसङ्गमोदारतारोदितानङ्गनार्यावलीलापदेहेक्षितामोहिताक्षः' वरतमा–प्रधानतरा सङ्गम[क]स्य–सङ्गमकनाम्नो वैमानिकस्य अथवा वरतमः सङ्गमो यस्याः सा तथा उदारतारा–अदीनलोचनकनीनिका उदितानङ्गा–उद्गतस्मरा एवंविधा या नार्यावली–स्त्रीश्रेणी तस्या लापो–जल्पनं देहः–शरीरं ईक्षितं–विलोकितं तैरमोहितानि–अनासक्तानि अक्षाणि–इन्द्रियाणि यस्य स तथा। पुनः कथं०? 'जातावतारः' अवतीर्णः, उत्पन्न इत्यर्थः । कस्मिन् ? 'धराधीशसिद्धार्थधाम्नि' धराधीशः–क्षितिपतिः सिद्धार्थाभिधस्तस्य धाम्नि–गेहे । कथंभूते ? 'क्षमालङ्कृतौ' क्षमायाः–भुवः अलङ्कृतौ–अलङ्कारभूते । पुनः कथंभूते ? 'लीलापदे' विलासस्थाने । भवान् पुनः कथंभूतः ? 'क्षितामः' क्षपितरोगः । पुनः कथंभूतः ? 'अक्षोभवान्' क्षोभवर्जितः । शेषाणि सर्वाण्यपि श्रीवीरस्य सम्बोधनानि, तद्व्याख्या चैवम्–हे 'नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालारजोरञ्जितांह्रे !' नमन्तः–प्रणमन्तो ये अमरा–देवाः तेषां ये शिरोरुहाः–केशास्तेभ्यः स्रस्ताः–गलिताः सामोदाः–सुरभयः एवंविधा या निर्निद्राणां–विकसितानां मन्दाराणां–देवद्रुमविशेषाणां कुसुमानां मालाः–स्रजः तासां यद् रजः–परागः तेन रञ्जितौ–पाटलितौ अंह्री–चरणौ यस्य स तथा, तत्सम्बो० हे नमद० । हे 'धरित्रीकृतावन !' धरित्र्याः–भुवः कृतावन !–विहितत्राण!। अत्र धरित्रीशब्देन धरित्रीगता लोका ज्ञेयाः, आधाराधेययोः कथञ्चिदभेदोपचारात्। हे 'असङ्गमोद!' सङ्गः–द्व्यादिसंसर्गः मोदो–धनादिप्राप्त्या प्रीतिः ताभ्यां रहितः, अथवा सङ्गाद् यो मोदस्तेन रहितः, (तत्सं० अस०) स्वतन्त्रसुखेत्यर्थः । कथम् ? 'अनवरतम्' निरन्तरम् । हे 'अरत!'

१ 'वरतम ! सङ्गमो०' इत्यपि पाठः ।

असक्त ! । हे 'अरोदित !' रोदनवर्जित ! । हे 'अनङ्गन !' अङ्गनाः—नार्यस्ताभी रहित ! । हे 'आर्याव !' आर्यान्—आर्यलोकान् अवति—रक्षति यः स तथा तत्सम्बो० हे आर्याव ! । हे 'हित !' हितकारिन् ! ॥

अथ समासः—नमन्तश्च ते अमराश्च नमद० 'कर्मधारयः'। शिरसि रोहन्तीति शिरोरुहाः 'तत्पुरुषः'। नमदमराणां शिरोरुहाः नमद० 'तत्पुरुषः'। नमदमरशिरोरुहेभ्यः स्रस्ता नमद० 'तत्पुरुषः'। सह आमोदेन वर्तन्त इति सामोदाः 'तत्पुरुषः'। निर्गता निद्रा येभ्यस्ते निर्निद्राः 'बहुव्रीहिः'। सामोदाश्च ते निर्निद्राश्च सामो० 'कर्मधारयः'। सामोदनिर्निद्राश्च ते मन्दाराश्च सामोद० 'कर्मधारयः'। नमदमरशिरोरुहस्रस्ताश्च ते सामोदनिर्निद्रमन्दाराश्च नमद० 'कर्मधारयः'। नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दाराणां माला नमद० 'तत्पुरुषः'। नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालानां रजः नमद० 'तत्पुरुषः'। नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालारजसा रञ्जितौ नमद० 'तत्पुरुषः'। नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालारजोरञ्जितौ अंह्री यस्य स नमद० 'बहुव्रीहिः'। तत्सम्बोधनं हे नमद० । कृतमवनं येन स कृतावनः 'तत्पुरुषः'। धरित्र्याः कृतावनो धरित्री० 'तत्पुरुषः'। तत्सम्बो० हे धरि० । अतिशयेन वरा वरतमा । नारीणामावली नार्यावली 'तत्पुरुषः'। उदारा तारा यस्याः सा उदार० 'बहुव्रीहिः'। उदितोऽनङ्गो यस्याः सा उदिता० 'बहुव्रीहिः' उदितानङ्गा चासौ नार्यावली च उदिता० 'कर्मधारयः'। उदारतारा चासावुदितानङ्गनार्यावली च उदार० 'कर्मधारयः'। सङ्गमस्योदारतारोदितानङ्गनार्यावली सङ्गमो० 'तत्पुरुषः'। वरतमा चासौ सङ्गमोदारतारोदितानङ्गनार्यावली च वरतम० 'कर्मधारयः'। अथवा वरतमः सङ्गमो यस्याः सा वरतम० 'बहुव्रीहिः'। वरतमसङ्गमा चासावुदारतारोदितानङ्गनार्यावली च वरतम० 'कर्मधारयः'। लापश्च देहश्च ईक्षितं च लापदेहे० 'इतरेतरद्वन्द्वः'। वरतमसङ्गमोदारतारोदितानङ्गनार्यावल्या लापदेहेक्षितानि वरतम० 'तत्पुरुषः'। न मोहितानि अमोहितानि 'तत्पुरुषः'। वरतमसङ्गमोदारतारोदितानङ्गनार्यावलीलापदेहेक्षितैरमोहितानि वरतम० 'तत्पुरुषः'। वरतमसङ्गमोदारतारोदितानङ्गनार्यावलीलापदेहेक्षितामोहितान्यक्षाणि यस्य स वरतम० 'बहुव्रीहिः'। निर्वाणस्य शर्माणि निर्वाण० 'तत्पुरुषः'। तानि निर्वाण० । जातोऽवतारो यस्य स जातावतारः 'बहुव्रीहिः'। धराया अधीशो धराधीशः 'तत्पुरुषः'। धराधीशश्चासौ सिद्धार्थश्च धरा० 'कर्मधारयः'। धराधीशसिद्धार्थस्य धाम धरा० 'तत्पुरुषः'। तस्मिन् धरा० । अलङ्कृतिरिवालङ्कृतिः । क्षमाया अलङ्कृतिः क्षमा० 'तत्पुरुषः'। तस्यां क्षमा० । सङ्गश्च मोदश्च सङ्गमोदौ 'इतरेतरद्वन्द्वः'। न विद्येते सङ्गमोदौ यस्य सोऽसङ्ग० 'बहुव्रीहिः'। अथवा सङ्गान्मोदः सङ्गमोदः 'तत्पुरुषः'। न विद्यते सङ्गमोदो यस्य सोऽसङ्ग० 'बहुव्रीहिः'। तत्सम्बो० हेऽसङ्ग० । न रतोऽरतः 'तत्पुरुषः'। तत्सम्बो० हेऽरत ! । न विद्यते रोदितं यस्य

सोऽरोदितः 'बहुव्रीहिः'। तत्सम्बो० हेऽरोदित!। न विद्यतेऽनङ्गो यस्य सोऽनङ्गः 'बहुव्रीहिः'। तत्सम्बो० हेऽनङ्ग!। आर्यानवतीत्यार्यावः 'तत्पुरुषः'। तत्सम्बो० हे आर्याव!। लीलायाः पदं लीलापदं 'तत्पुरुषः'। तस्मिन् लीलापदे। क्षित आमो येन स क्षितामः 'बहुव्रीहिः'। क्षोभोऽस्यास्तीति क्षोभवान्। न क्षोभवान् अक्षोभवान् 'तत्पुरुषः'। इति काव्यार्थः ॥ १॥

सि० वृ०—नमदमरेति। हे वीर! हे महावीर! हे ज्ञातनन्दन! भवान्—त्वं मम—मे निर्वाणशर्माणि—मोक्षसुखानि वितरतु—प्रयच्छत्वित्यर्थः। विशेषेण ईरयति—कम्पयति—प्रेरयति कर्मशत्रूनिति वीरः। विपूर्व 'ईर गतिकम्पनयोः' पचाद्यच्। विशिष्टा ईः—लक्ष्मीः तपोरूपा तीर्थकृन्नामकर्मोदयसमुद्भूता वा तया राजतेऽसौ वीरः। 'राज दीप्तौ', 'अन्येभ्योऽपि—' (पा० अ० ३, पा० २, सू० ७५) इतीड् डित्वाट्टिलोपः। यद्वा ईरणं ईरः 'ईर गतौ' भावे घञ्। ये गत्यर्थास्ते ज्ञानार्थाः प्राप्त्यर्थाश्चेति वचनात् विशिष्ट ईरो—ज्ञानमस्य (स) वीरः। यद्वा विशिष्टा पञ्चत्रिंशद्वाग्गुणोपेता इरा—वाणी यस्येति वा। कर्मशत्रुसेनाजेतृत्वाद् दर्शितपराक्रमो वा वीरः। यद्वा निरुक्तिवशात् कर्मततिविदारणाद् वा वीरस्तस्य सम्बोधनं क्रियते हे वीर!। 'तॄ प्लवनतरणयोः' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनं हिः। 'अप् कर्तरि' (सा० सू० ६९१) इत्यप्। 'गुणः' (सा० सू० ६९२)। 'अतः' (सा० सू० ७०९) इति हेर्लुक्। तथा 'वितरतु' इति सिद्धम्। अत्र 'वितरतु' इति क्रियापदम्। कः कर्ता?। त्वम्। कानि कर्मतापन्नानि?। 'निर्वाणशर्माणि' निर्वाणस्य—मोक्षस्य शर्माणि—सुखानि तानि निर्वाणशर्माणि। कस्य?। मम। कथंभूतो भवान्?। 'वरतमसङ्गमोदारतारोदितानङ्गनार्यावलीलापदेहेक्षितामोहिताक्षः'। वरतमा—प्रधानतमा सङ्गम[क]स्य—सङ्गमकनाम्नो वैमानिकस्य देवस्य अथवा वरतमः सङ्गमो यस्याः सा वरतमसङ्गमा सा चासौ 'उदारतारा' च उदारा—अदीना तारा—लोचनकनीनिका यस्याः सा वरतमसङ्गमोदारतारा, सा चासौ 'उदितानङ्गा' उदितः—उदयं प्राप्तः अनङ्गः—कामो यस्याः सा वरतमसङ्गमोदारतारोदितानङ्गा, एवंविधा या नार्यावली—नारीणामावली—श्रेणी—स्त्रीश्रेणी तस्याः [आ]लापो—जल्पनं देहः—शरीरं ईक्षितं—विलोकितं, [आ]लापश्च देहश्च ईक्षितं च [आ]लापदेहेक्षितानि 'इतरेतरद्वन्द्वः', तैः अमोहितानि—अनासक्तानि—न मोहं प्राप्तानि अक्षाणि—इन्द्रियाणि यस्य स तथा। पुनः कथंभूतः?। 'जातावतारः' जातः अवतारः—अवतरणं यस्य स तथा। कस्मिन्?। 'धराधीशसिद्धार्थधाम्नि' धरायाः—पृथिव्याः अधीशः—स्वामी यः सिद्धार्थनामा तस्य धाम्नि—गृहे। कथंभूते?। 'क्षमालङ्कृतौ' क्षमायाः—पृथिव्याः अलङ्कृतौ—अलङ्कारभूते। "क्षितिः क्षोणी क्षमाऽनन्ता" इति हैमः (का० ४, श्लो० २)। पुनः कथंभूते?। 'लीलापदे' लीलाया—विलासस्य पदे—स्थाने। भवान् कथंभूतः?। 'क्षितामः' क्षितः—क्षयितः आमः—रोगो यस्मात् सः। पुनः कथंभूतः?। 'अक्षोभवान्' न क्षोभो विद्यते यस्यासौ अक्षोभवान्। अवशिष्टानि सर्वाणि श्रीवीरस्य सम्बोधनानि। तेषां व्याख्या त्वेवम्—हे 'नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालारजोरञ्जितांह्रे!' नमन्तः—प्रणमन्तो ये अमराः—देवाः तेषां ये शिरोरुहाः—केशाः तेभ्यः स्रस्ताः—पतिताः ताश्च ताः सामोदाः—सुरभयः एवंविधा या निर्निद्राणां—विकसितानां मन्दाराणां—देवद्रुमकुसुमानां मालाः—स्रजस्तासां यद् रजः—पुष्परेणुस्तेन रञ्जितौ—श्वेतरक्तीकृतौ अंह्री—

चरणौ यस्य स तथा तस्य संबोधनं हे नम० । हे ' धरित्रीकृतावन ! ' धरित्र्याः—भुवः, कथञ्चिद्-भेदात् धरित्रीगतलोकस्येत्यर्थः, कृतं—विहितं अवनं—रक्षणं येन स तथा तस्य संबोधनं हे धरित्रीकृतावन ! । " धात्री धरित्री धरणी " इति हैमः ( का० ४, श्लो० १ ) । हे ' असङ्गमोद ! ' सङ्गः—स्त्र्यादि-संसर्गः मोदो—धनादिप्राप्त्या प्रीतिः, सङ्गश्च मोदश्च सङ्गमोदौ ' इतरेतरद्वन्द्वः ', ताभ्यां रहितो—वर्जितस्तत्संबोधनं हे असङ्गमोद ! । हे ' अनङ्गन ! ' अङ्गनाः—नार्यस्ताभिः रहितस्तस्य संबोधनं हे अनङ्गन ! । कथम् ? । अनवरतं—निरन्तरम् । हे अरत !—असक्त ! । हे ' अरोदित !' न विद्यते रोदितं यस्य स तथा तस्य (सं० हे अरो०) । हे ' आर्याव !' आर्यान्—आर्यलोकान् अवति—रक्षति तथा तस्य सं० हे आर्याव ! । हे हित !—हितकारिन् ! । ' दधातेर्हिः ' ( सा० सू० १३०९ ) ॥ १ ॥

सौ० वृ०—श्रीवृषभाद्याः पार्श्वान्ता जिना यथार्थनामानः स्तुताः । एते सर्वेऽपि वर्धमानज्ञान-दर्शनादिचरित्राद्यनेकगुणा भवन्ति । अनेन सम्बन्धेनायातस्य चतुर्विंशतितमश्रीवर्धमाननाम्नः देवैः कृतापरनामश्रीमहावीरनामाजिनस्य स्तुतेर्व्याख्यानं विधीयते-नमदमरेति ।

हे ' वीर ' ! हे श्रीमहावीर ! विशेषेण स्ववीर्यस्वात्मने (?) स्वभावे ईरयति-प्रेरयति इति वीरः तस्य सं० हे वीर ! । नमन्तः-प्रणमन्तः ये अमरा-देवाः तेषां शिरोरुहाः-केशाः-चिकुराः तेभ्यः स्रस्ताः-पतिताः सामोदाः आमोदः-सुगन्धः-परिमलः तेन सहिताः सामोदाः निर्निद्रा-विकसिता-विकस्वरा मन्दाराणां-देवतरूणां-कल्पवृक्षाणां या मालाः-स्रजः तासां रजांसि-परागाः तैः रञ्जितौ-पाटलीकृतौ अंह्री-चरणौ यस्य स नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालारजोरञ्जितांह्रिः, तस्य सं० हे ' नम-दमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालारजोरञ्जितांह्रे ' ! । ' धरित्रीकृतावन ' ! आधाराधेयोपचाराद् धरित्री-पृथ्वी तस्यां स्थिता ये जन्तवः पदार्था वा तेषां कृतं-विहितं अवनं-रक्षणं येन स धरित्री-कृतावनः, तस्य सं० धरित्रीकृतावन ! । हे ' असङ्गमोद ' ! नास्ति ( न स्तः ) सङ्गः-प्रसङ्गः मोदः-इष्टप्राप्तिलक्षणो हर्षः तौ द्वौ यस्य सः असङ्गमोदः, तस्य सं० हे असङ्गमोद ! । हे ' अरत ! ' न विद्यते रतं-सुरतं यस्य सः अरतः, तस्य सं० हे अरत ! । हे ' अरोदित ' ! हे अरोदन ! । [ हे '[1]अनङ्ग!' हे अदेह! ] । भवान्-त्वं मे-मम निर्वाणशर्माणि-मोक्षसुखानि अनवरतं-निरन्तरं वितरतु इत्यन्वयः । ' वितरतु ' इति क्रियापदम् । कः कर्ता ? । ' भवान् ' । ' वितरतु ' ददातु । कानि कर्मताप-न्नानि ? । ' निर्वाणशर्माणि ' । कस्य ? । ' मम ' । कथम् ? । ' अनवरतम् ' । किंविशिष्टो भवान् ? । वरतमः-प्रधानतरः सङ्गमाख्यो वैमानिको देवः तस्य उदारा-स्फारा तारा-कनीनिका उदितं-शब्दं अनङ्गः-कामः यासां ताः तादृशा नार्यः-स्त्रियः तासां आवली-श्रेणिः तस्या लापः देहः-शरीरं ईक्षितं-कटाक्षावलोकनं तैः कृत्वा अमोहितानि-न व्यामोहं प्राप्तानि अक्षाणि-इन्द्रियाणि यस्य स वरतमसङ्ग-मोदारतारोदितानङ्गनार्यावलीलापदेहेक्षितामोहिताक्षः । पुनः किंविशिष्टो भवान् ? । ' जातावतारः ' कृतावतारः, प्राप्तजन्मा । कस्मिन् ? । धरा-पृथ्वी तस्या अधीशः-स्वामी यः सिद्धार्थनामा तस्य धाम-गृहं तस्मिन् ' धराधीशसिद्धार्थधाम्नि ' । किंविशिष्टे धराधीशसिद्धार्थधाम्नि? । क्षमा-पृथ्वी तस्यां अलङ्कृतौ-अलङ्कारभूते । पुनः किंविशिष्टे धराधीशसिद्धार्थधाम्नि ? । लीला-विलासः तस्याः पदं-स्थानं लीलापदं तस्मिन् लीलापदे । पुनः किंविशिष्टो भवान् ? । ' क्षितामः ' क्षिताः-गताः आमाः-रोगा यस्मात् स क्षितामः । हे ' अनङ्गन ! ' अङ्गना-नार्यः ताभी रहितः ( तस्य सं० ) अन० । हे ' आर्याव ! ' आर्यान्-आर्य-लोकान् अवति-रक्षति यः स आर्यावः तस्य सं० हे आर्याव ! । हे ' हित ! ' हितकारिन् ! । पुनः किंविशिष्टो भवान् ? । न विद्यते क्षोभो यस्यासौ अक्षोभवान् । इति पदार्थः ॥

१ अयं पाठः प्रामादिकः ।

अथ समासः—नमन्तश्च ते अमराश्च नमदमराः, शिरसि रोहन्ति-जायन्ते इति शिरोरुहाः, नमदमराणां शिरोरुहाः नमदमरशिरोरुहाः, नमदमरशिरोरुहेभ्यः स्रस्ताः नमदमरशिरोरुहस्रस्ताः, आमोदेन सहिताः सामोदाः, निर्गता निद्रा यासु ता निर्निद्राः, मन्दाराणां माला ( मन्दारमालाः ), नमदमरशिरोरुहस्रस्ताश्च ताः सामोदाश्च निर्निद्राश्च ता मन्दारमालाश्च नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालाः, (नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालानां रजांसि) नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालारजांसि, नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालारजोभिः रञ्जितौ अंह्री यस्य स नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालारजोरञ्जितांहिः, तस्य सं० हे नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालारजोरञ्जितांहे ! । धरित्र्यां-धरित्रीस्थितानां जन्तूनां कृतं अवनं-रक्षणं येन स धरित्रीकृतावनः, तस्य सं० हे धरित्रीकृतावन ! । अत्र धरित्रीशब्देन जगद् गृह्यते । "धरित्री धरिणी विश्वं, लोकः क्षेमेषु शाश्वतं" इति व्याडिः । वरतमश्चासौ सङ्गमश्च वरतमसङ्गमः, यद्वा वरः-प्रधानः वैमानिकत्वात् तेषु तम इव तमः तीर्थकरोपसर्गकारित्वेन वरतमसङ्गमः, ताराश्च उदितानि च अनङ्गश्च तारोदितानङ्गाः, ( उदाराश्च तारोदितानङ्गाश्च उदारतारोदितानङ्गाः ), [ वरतमसङ्गमस्य उदारतारोदितानङ्गाः, ] उदारतारोदितानङ्गा यासां ता उदारतारोदितानङ्गाः, उदारतारोदितानङ्गाश्च ता नार्यश्च उदारतारोदितानङ्गनार्यः, वरतमसङ्गमस्य उदारतारोदितानङ्गनार्यः वरतमसङ्गमोदारतारोदितानङ्गनार्यः, वरतमसङ्गमोदारतारोदितानङ्गनारीणामावली वरतमसङ्गमोदारतारोदितानङ्गनार्यावली, लापाश्च-आलापाश्च देहाः-शरीराणि ईक्षितानि-विलोकितानि च लापदेहेक्षितानि, वरतमसङ्गमोदारतारोदितानङ्गनार्यावल्याः लापदेहेक्षितानि वरतमसङ्गमोदारतारोदितानङ्गनार्यावलीलापदेहेक्षितानि, न मोहितानि अमोहितानि, अमोहितानि च अक्षाणि च अमोहिताक्षाणि, वरतमसङ्गमोदारतारोदितानङ्गनार्यावलीलापदेहेक्षितैः अमोहिताक्षाणि यस्य स वरतमसङ्गमोदारतारोदितानङ्गनार्यावलीलापदेहेक्षितामोहिताक्षः; यद्वा अतिशयेन वराः वरतमाः-प्रधानाः सङ्गमा-लीलाविलासालिङ्गनादयः यासां तास्ताद्दश्यो नार्यः-स्त्रियः इत्यपि समासोऽस्ति अर्थोऽप्यस्ति । निर्वाणस्य शर्माणि (निर्वाणशर्माणि), तानि निर्वाणशर्माणि । जातः अवतारो यस्य स जातावतारः । धराया अधीशः धराधीशः, धराधीशश्चासौ सिद्धार्थश्च धराधीशसिद्धार्थः, धराधीशसिद्धार्थस्य धाम (धराधीशसिद्धार्थधाम), तस्मिन् धराधीशसिद्धार्थधाम्नि । क्षमायाः अलङ्कृतिरिव अलङ्कृतिः क्षमालङ्कृतिः, तस्यां क्षमालङ्कृतौ । सङ्गश्च मोदश्च सङ्गमोदौ, यद्वा सङ्गमात्-इष्टप्राप्तेः मोदः सङ्गमोदः, (न विद्येते सङ्गमोदौ) न विद्यते सङ्गमोदो (वा) यस्य सः असङ्गमोदः, तस्य सं० हे असङ्गमोद ! । यद्वा न विद्यते सङ्गो यस्य स असङ्गः, तस्य सं० हे असङ्ग । " मास्तु हर्षे विधौ मासे ' इत्यनेकार्थवचनात् मासं-हर्षं ददातीति मोदः (?), तस्य सं० हे मोद ! इत्यपि व्याख्यानम् । न रतः अरतः, तस्य सं० हे अरत ! । नास्ति रोदितं यस्य सः अरोदितः, तस्य सं० हे अरोदित !, गतशोक इत्यर्थः । नास्ति अङ्गना यस्य सः अनङ्गनः, तस्य सं० हे अनङ्गन ! । आर्यान्-आर्यलोकान् अवति-रक्षति यः स आर्यावः, तस्य सं० हे आर्याव ! । लीलायाः पदं लीलापदं, तस्मिन् लीलापदे । हे इति सम्बोधनपदं आभिमुख्याभिव्यक्तये सर्वत्र योज्यम् । क्षिता-गता आमा-रोगा यस्मात् स क्षितामः । हे हित !-हे हितकारिन् ! । क्षोभोऽस्यास्तीति क्षोभवान्, न क्षोभवान् अक्षोभवान् । चण्डवृष्टिप्रयातादिदण्डकः । इति प्रथमवृत्तार्थः ॥१॥

दे० व्या०—नमदमरेति । हे वीर !-वर्धमान ! भवान्-त्वं मम निर्वाणशर्माणि अनवरतं-निरन्तरं यथा स्यात् तथा वितरतु-ददातु इत्यन्वयः । 'तॄ प्लवनतरणयोः' इति धातुः । 'वितरतु' इति क्रियापदम् । कः कर्ता ? । त्वम् । कानि कर्मतापन्नानि ? । निर्वृतिशर्माणि-मुक्तिसुखानि । निर्वृतेः शर्माणि निर्वृतिशर्माणि इति विग्रहः । " निर्वाणं ब्रह्म निर्वृतिः " इत्यभिधानचिन्तामणिः (का० १, श्लो० ७४) । किंविशिष्टो भवान् ? । ' क्षितामः ' क्षितः-क्षपितः आमो-रोगो यस्य स तथा । पुनः किंविशिष्टः ? । ' अक्षोभवान् ' नास्ति क्षोभो यस्यासौ

तथा । पुनः किंविशिष्टः ? । ' जातावतारः ' जातो-गृहीतः अवतारो येन स तथा । कस्मिन् ? । ' धराधीश-सिद्धार्थधाम्नि ' धरायाः-पृथिव्या अधीशः-स्वामी यः सिद्धार्थः-सिद्धार्थनामा राजा तस्य धाम्नि-गृहे । किंविशिष्टे धाम्नि ? । 'क्षमालङ्कृतौ' क्षमायाः-पृथिव्याः अलङ्कृतौ-अलङ्कारभूते । पुनः किंविशिष्टे ? । 'लीला-पदे ' लीलाया-विलासस्य पदे-स्थाने । ' नमदमरशिरोरुहस्रस्तसामोदनिर्निद्रमन्दारमालारजोरञ्जितांह्रे ! ' इति । नमन्तः-प्रणमन्तो ये अमरा-देवाः तेषां शिरोरुहाः-केशाः तेभ्यः स्रस्ताः-पतिताः याः सामोदनिर्निद्रमन्दा-रमालाः-सुगन्धिविकसितकल्पवृक्षस्रजः, निर्निद्राश्च ता मन्दारमालाश्चेति पूर्वं समासः, ततः सामोदाश्च ता निर्निद्रमन्दारमालाश्चेति पूर्वपदान्वितः ' कर्मधारयः ', तासां रजसा-परागेण रञ्जितौ-पञ्जरितौ अंह्री-चरणौ यस्य स तस्यामन्त्रणम् । 'धरित्रीकृतावन' ! ( इति ) । धरित्र्याः-पृथिव्याः कृतं अवनं-रक्षणं येन स तस्यामन्त्र-णम् । ' वरतमसङ्गमोदारतारोदितानङ्गनार्यावलीलापदेहेक्षितामोहिताक्ष ! ' इति । अतिशयेन वराः वरतमाः सङ्गम[क]स्य-सङ्गमनाम्नो देवस्य सम्बन्धिनी उदारा-स्फारा तारा-मनोहरा सा चासौ उदितानङ्गा या नार्यावली उदितः-उदयं प्राप्तः अनङ्गः-कन्दर्पः यस्यां सा चासौ नारीणां आवली-पङ्क्तिः तस्याः [ आ ] लापेन-संभाषणेन, " आपृच्छाऽऽलापः संभाषः " इत्यभिधानचिन्तामणिः ( का० २, श्लो० १८९ ), देहेन-शरीरेण ईक्षितेन-विलोकितेन न मोहितानि न मोहं प्राप्तानि अक्षाणि-इन्द्रियाणि यस्य स तस्यामन्त्रणम् । "बिभीतकोऽक्षोऽक्ष-मीन्द्रियम् " इत्यनेकार्थः । ' असङ्गमोद ! ' इति । नास्ति सङ्गमात्-संसारबन्धात् मोदः-प्रमोदो यस्य स तस्यामन्त्रणम् । ' अरत ! ' इति । नास्ति रतं-मैथुनाभिलाषो यस्य स तस्यामन्त्रणम् । ' अनङ्गन ! ' इति । नास्ति अङ्गना-वल्लभा यस्य स तस्यामन्त्रणम् । ' आर्याव '! इति । आर्यान्-प्रशस्यान् अवति-रक्षतीत्यार्यावः तस्यामन्त्रणम् । हे हित ! हितकारिन् । 'दधातेर्हिः' ( सा० सू० १३०५ ) इत्यनेन हिरादेशः । एतानि सर्वाणि भगवत आमन्त्रणपदानि ॥ इति प्रथमवृत्तार्थः ॥ १ ॥



जिनसमूहस्य स्तुतिः—

समवसरणमत्र यस्याः स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिसालत्रयी--[1]
सदवनमदशोकपृथ्वीक्षणप्रायशोभातपत्रप्रभागुर्वराराट् परेताहितारोचितम् ।
प्रवितरतु समीहितं साऽर्हतां संहतिर्भक्तिभाजां भवाम्भोधिसम्भ्रान्तभव्यावलीसेविता-
ऽसदवनमदशोकपृथ्वीक्षणप्रा यशोभातपत्रप्रभागुर्वराराट्परेताहितारोचितम् ॥ २ ॥

—अर्णव०

ज० वि०—समवसरणमत्रेति । सा अर्हतां-पारगतानां संहतिः-समूहः भक्तिभाजां-सेवा-कारिणां समीहितं-वाञ्छितं प्रवितरत्विति क्रियाकारकसम्बन्धः । अत्र ' प्रवितरतु ' इति क्रिया-पदम् । का कर्त्री ? ' संहतिः ' । केषाम् ? ' अर्हताम् ' । किं कर्मतापन्नम् ? ' समीहितम् ' । केषाम् ? ' भक्तिभाजाम् ' । अर्हतां संहतिः कथंभूता ? ' भवाम्भोधिसम्भ्रान्तभव्यावलीसेविता ' भवाम्भोधौ-संसारसागरे सम्भ्रान्ता-व्याकुलीभूता एवंविधा या भव्यावली-भव्यजन्तुसन्ततिः तया सेविता-आराधिता । पुनः कथंभूता ? ' असदवनमदशोकपृथ्वी ' सह दवनेन-उपतापेन वर्तत इति सदवना, मदो-जात्याद्यभिमानः, शोकः-शोचनं, ताभ्यां पृथ्वी-वितता, सदवना-

१ ' शालत्रयी-' इत्यपि पाठः ।

मदशोकपृथ्वी च न भवति या सा तथा। पुनः कथं० ? 'ईक्षणप्रा' ईक्षणानि-लोचनानि प्राति-पूरयति आप्याययतीति ईक्षणप्रा। अथवा ईक्षणानि-ज्ञानानि प्राति-ददातीति ईक्षणप्रा। सेति तच्छब्दसाहचर्याद् यच्छब्दयोजनामाह-यस्या अर्हतां संहतेः समवसरणं-सुरकृतं धर्मदेशनास्थानं अत्र-अस्मिन् जगति अराराट्-अत्यर्थमराजत्। अत्र 'अराराट्' इति क्रियापदम्। किं कर्तृ ? 'समवसरणम्'। कस्याः ? 'यस्याः'। कुत्र ? 'अत्र'। समवसरणं कथंभूतम् ? 'स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिसालत्रयीसदवनमदशोकपृथ्वीक्षणप्रायशोभातपत्रप्रभागुरु' स्फुरन्तः-चलन्तः केतवः-ध्वजाः चक्रं-धर्मचक्रं आनकाः-देवदुन्दुभयः अनेकपद्मानि-बहूनि सुरनिर्मितकमलानि इन्दुरुक्चामराणि-चन्द्रोज्ज्वलानि वालव्यजनानि उत्सर्पिसालत्रयी-उत्तुङ्गप्राकारत्रयं सदवनमदशोकः सन्-प्रधानोऽवनमन्-नम्रीभवन् अशोकः-कङ्केल्लिपादपः पृथ्वीक्षणप्रायाणि-भुव उत्सवावहानि आतपत्राणि-छत्राणि, एतेषां स्फुरत्केत्वादीनां याः प्रभाः-कान्तयः ताभिर्गुरु-महार्हम्। पुनः कथं० ? 'परेताहितारोचितं' परेताः-अपगता अहिताः-शत्रवो येषां ते तथा, गतवैरार्था यत्यादयः, तैरारोचितं-उपशोभितम्। आरोचितमिति पृथगेव समवसरणविशेषणम्, परेता हिता इति च विशेषणद्वयमर्हतां संहतेः। तदर्थश्चायम्-परा-प्रधाना इताहिता-गतशत्रुरिति। समवसरणं पुनः कथं० ? 'यशोभातपत्रप्रभागुर्वराराट्परेताहितारोचितम्' यशसा-कीर्त्या भातानि-शोभीनि पत्राणि-गजवाजिसुखासनप्रमुखानि वाहनानि प्रभजन्त इति यशोभातपत्रप्रभाजः, एतादृशाः उर्वराराजः-राजानो-भूभुजः परेताः-पिशाचा-व्यन्तरदेवविशेषाः अहयो-नागाख्या-भवनवासिदेवविशेषाः तारा-ज्योतिष्कदेवविशेषाः तेषामुचितं-योग्यम्॥

अथ समासः-स्फुरन्तश्च ते केतवश्च स्फुर० 'कर्मधारयः'। न एकान्यनेकानि 'तत्पुरुषः'। अनेकानि च तानि पद्मानि च अनेक० 'कर्मधारयः'। इन्दोरिव रुचिर्येषां तानि इन्दुरुचीनि 'बहुव्रीहिः'। इन्दुरुचीनि च तानि चामराणि च इन्दु० 'कर्मधारयः'। सालानां त्रयी सालत्रयी 'तत्पुरुषः'। उत्सर्पिणी चासौ सालत्रयी च उत्सर्पि० 'कर्मधारयः'। अवनमंश्चासावशोकश्च अवन० 'कर्मधारयः'। संश्चासाववनमदशोकश्च सदव० 'कर्मधारयः'। पृथ्व्याः क्षणप्राया पृथ्वी० 'तत्पुरुषः'। पृथ्वीक्षणप्राया शोभा येषां तानि पृथ्वी० 'बहुव्रीहिः'। आतपात् त्रायन्त इत्यातपत्राणि 'तत्पुरुषः'। पृथ्वीक्षणप्रायशोभानि च तान्यातपत्राणि (च) पृथ्वी० 'कर्मधारयः'। स्फुरत्केतवश्च चक्रं च आनकाश्च अनेकपद्मानि च इन्दुरुक्चामराणि च उत्सर्पिसालत्रयी च सदवनमदशोकश्च पृथ्वीक्षणप्रायशोभातपत्राणि च स्फुरत्केतु० 'इतरेतरद्वन्द्वः'। स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिसालत्रयीसदवनमदशोकपृथ्वीक्षणप्रायशोभातपत्राणां प्रभा स्फुरत्केतु० 'तत्पुरुषः'। स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिसालत्रयीसदवनमदशोकपृथ्वीक्षणप्रायशोभातपत्रप्रभाभिर्गुरु स्फुरत्केतु० 'तत्पुरुषः'। परेताः अहिता येषां ते परे० 'बहुव्रीहिः'। परेताहितैरारोचितं परेता० 'तत्पुरुषः'। भक्तिं भजन्त इति भक्तिभाजः

१ 'प्रायशोभानि-भुव उत्सवावहा शोभा-कान्तिर्येषु तानि' इति प्रतिभाति।

'तत्पुरुषः'। तेषां भक्ति०। अम्भोधिरिवाम्भोधिः। भवश्चासावम्भोधिश्च भवाम्भोधिः 'कर्मधारयः'। भवाम्भोधौ सम्भ्रान्ता भवाम्भोधिसम्भ्रान्ता 'तत्पुरुषः'। भव्यानामावली भव्यावली 'तत्पुरुषः'। भवाम्भोधिसम्भ्रान्ता चासौ भव्यावली च भवाम्भो० 'कर्मधारयः'। भवाम्भोधिसम्भ्रान्तभव्यावल्या सेविता भवाम्भो० 'तत्पुरुषः'। सह दवनेन वर्तत इति सदवना 'तत्पुरुषः'। मदश्च शोकश्च मदशोकौ 'इतरेतरद्वन्द्वः'। मदशोकाभ्यां पृथ्वी मदशोक० 'तत्पुरुषः'। सदवना चासौ मदशोकपृथ्वी च सदवन० 'कर्मधारयः'। न सदवनमदशोकपृथ्वी असदवन० 'तत्पुरुषः'। ईक्षणानि प्रातीति ईक्षणप्रा 'तत्पुरुषः'। यशसा भातानि यशो० 'तत्पुरुषः'। यशोभातानि च तानि पत्राणि च यशो० 'कर्मधारयः'। यशोभातपत्राणि प्रभजन्त इति यशोभा०। उर्वराया राज उर्वरा० 'तत्पुरुषः'। यशोभातपत्रप्रभाजश्च ते उर्वराराजश्च यशोभा० 'कर्मधारयः'। यशोभातपत्रप्रभागुर्वराराजश्च परेताश्च अहयश्च ताराश्च यशोभा० 'समाहार(इतरेतर?)द्वन्द्वः'। यशोभातपत्रप्रभागुर्वराराट्परेताहिताराणामुचितं यशोभा० 'तत्पुरुषः'। इति काव्यार्थः ॥ २ ॥

सि० वृ०—समवसरणमत्रेति। सा अर्हतां—परमेष्ठिनां सन्ततिः—समूहः भक्तिभाजां—सेवाकारिणां श्रद्धावतां समीहितं—वाञ्छितं प्रवितरतु—प्रकर्षेण करोत्वित्यर्थः। प्रविपूर्वक 'तॄ प्लवनतरणयोः' धातोः 'आशीःप्रेरणयोः' (सा० सू० ७०३) कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं तुप्। 'अप्०' (सा० सू० ६९१)। 'गुणः' (सा० सू० ६९२)। 'स्वरहीनं०' (सा० सू० ३६)। तथाच 'प्रवितरतु' इति सिद्धम्। अत्र 'प्रवितरतु' इति क्रियापदम्। का कर्त्री?। सन्ततिः। केषाम्?। अर्हताम्। किं कर्मतापन्नम्?। समीहितम्। केषाम्?। 'भक्तिभाजां' भक्तिं—अनुरागं श्रद्धां वा भजन्ति ते भक्तिभाजस्तेषाम्। अर्हतां सन्ततिः कथंभूता?। 'भवाम्भोधिसम्भ्रान्तभव्यावलीसेविता' भव एव अम्भोधिः भवाम्भोधिः तस्मिन् भवाम्भोधौ—संसारसागरे सम्भ्रान्ता—व्याकुलीभूता या भव्यानामावली—पङ्क्तिस्तया सेविता—आराधिता। पुनः कथंभूता?। 'असदवनमदशोकपृथ्वी' सह दवनेन—उपतापेन वर्तत इति सदवना, मदो—जात्याद्यभिमानः शोकः—शोचनं ताभ्या पृथ्वी—वितता सदवना मदशोकपृथ्वी च न भवति या सा तथा। पुनः कथंभूता?। 'ईक्षणप्रा' ईक्षणानि—लोचनानि प्राति—पूरयति आप्याययतीति ईक्षणप्रा, अथवा ईक्षणानि—ज्ञानानि प्राति—ददातीति ईक्षणप्रा। सेति सा का?। यस्याः अर्हतां सन्ततेः समवसरणं—देवविनिर्मितधर्मदेशनास्थानमत्र—अस्मिन् जगति अराराट्—अत्यर्थं अराजत्। 'राजृ दीप्तौ' अनद्यतने कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं दिप्। 'दिबादावट्' (सा० सू० ७०७)। 'अप्०' (सा० सू० ६९१)। तथा च 'अराराट्' इति सिद्धम्। अत्र 'अराराट्' इति क्रियापदम्। किं कर्तृ?। समवसरणम्। कस्याः?। यस्याः। कुत्र?। अत्र। कथंभूतं समवसरणम्?। 'स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिसालत्रयीसदवनमदशोकपृथ्वीक्षणप्रायशोभातपत्रप्रभागुरु'। स्फुरन्तः—चलन्तः केतवः—ध्वजाः चक्रं—धर्मचक्रं आनकाः—देवदुन्दुभयः, अनेकानि च तानि पद्मानि च अनेकपद्मानि—बहूनि सुरनिर्मितकमलानि इन्दोरिव रुक्—रोचिर्येषां

तानि चन्द्रोज्ज्वलानि, एवंविधानि चामराणि—वालव्यजनानि उत्सर्पिसालत्रयी—उत्सर्पिणी सा चासौ सालानां—वप्राणां त्रयी सालत्रयी, अवनमंश्चासावशोकश्च अवनमदशोकः ( संश्चासौ अव० सद० ) पृथ्व्याः क्षणप्राया शोभा येषां तानि क्षणप्रायशोभानि च तानि आतपात् त्रायन्त इत्यातपत्राणि—छत्राणि, तथा च स्फुरत्केतवश्च चक्रं च आनकाश्च अनेकपद्मानि च इन्दुरुक्चामराणि च उत्सर्पिसालत्रयी च सदवनमदशोकश्च पृथ्वीक्षणप्रायशोभातपत्राणि च स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिसालत्रयीसदवनमदशोकपृथ्वीक्षणप्रायशोभातपत्राणि 'इतरेतरद्वन्द्वः', एतेषां स्फुरत्केत्वादीनां याः प्रभाः—कान्तयस्ताभिः गुरु—गरिष्ठम् । "सालः पादपमात्रे स्यात् प्राकार" इति **विश्वः** । पुनः कथंभूतम् । 'परेताहितारोचितं' परेताः—अपगताः अहिताः—शत्रवो येषां ते तथा गतवैरा अर्थान्मुनयस्तैः (आ)रोचितं—शोभितम् । पुनः कथंभूतम् ? । 'यशोभातपत्रप्रभागुर्वराराट्परेताहितारोचितम्' यशसा—कीर्त्या भातानि—शोभितानि पत्राणि—गजवाजिसुखासनप्रमुखाणि वाहनानि प्रभजन्त इति यशोभातपत्रप्रभाजः, "पत्रं स्याद् वाहने पर्णे, पक्षे च क्षरपक्षिणाम्(?)" इति **विश्वः**, एतादृशा ये उर्वराराजो—भूभुजः परेताः—पिशाचाः व्यन्तराः—देवविशेषाः अहयो—नागकुमाराः-भवनपतिदेवविशेषाः ताराः—ज्योतिषिकास्तेषामुचितं—योग्यं, यशोभातपत्रप्रभागुर्वराराजश्च परेताश्च अहयश्च ताराश्च यशोभातपत्रप्रभागुर्वराराट्परेताहितारा: 'इतरेतरद्वन्द्वः' ।

> "यत्र द्वित्वं बहुत्वं च, स द्वन्द्व इतरेतरः ।
> समाहारो भवेदन्यो, यत्रैकत्वं नपुंसके ॥ १ ॥"

इत्युमापतिधरमहोपाध्यायाः ॥ २ ॥

**सौ० वृ०—समवसरणमत्रेति । सा अर्हतां-तीर्थकृतां संहतिः-समूहः भक्तिभाजां-भक्तिकराणां जनानां समीहितं-वाञ्छितं प्रवितरतु इत्यन्वयः । 'प्रवितरतु' इति क्रियापदम् । का कर्त्री ? । 'संहतिः' । केषाम् ? । 'अर्हताम्' । किं कर्मतापन्नम् ? । 'समीहितम्' । केषाम् ? । 'भक्तिभाजाम्' । किंविशिष्टा अर्हतां संहतिः ? । भवाम्भोधौ-संसारसमुद्रे सम्भ्रान्ताः-व्याकुलीभूता ये भव्या-मुक्तिगमनयोग्याः तेषां आवली-श्रेणिः तया सेविता-आराधिता 'भवाम्भोधिसम्भ्रान्तभव्यावलीसेविता' । पुनः किंविशिष्टा अर्हतां संहतिः ? । दवनः-तापः मदो-जात्यादिः शोकः-शुक्-शोचनं तेन सहिताः सदवनमदशोकाः तेषां पृथ्वी (सद०, न सद०) 'असदवनमदशोकपृथ्वी । पुनः कथंभूता अर्हतां संहतिः ? । ईक्षणानि-नयनानि ज्ञानादीनि प्राति-ददातीति 'ईक्षणप्रा' । पुनः किंविशिष्टा अर्हतां संहतिः ? । 'सा' सा-प्रसिद्धा । तच्छब्दो यच्छब्दमपेक्षते । सा का ? । यस्याः । अर्हतां संहत्याः समवसरणं-धर्मदेश(ना)स्थानकं चतुर्विधदेवनिकायनिर्मितं अत्र-जगति अराराट् इत्यन्वयः । 'अराराट्' इति क्रियापदम् । किं कर्तृ ? । 'समवसरणम्' । 'अराराट्' अतिशयेन वि(व्य)राजत । कस्याः ? । 'यस्याः' संहत्याः । कुत्र ? । 'अत्र' संसारे । किंविशिष्टं समवसरणम् ? । स्फुरन्तो-दीप्यमानाः चलन्तो वा केतवो-ध्वजाः धर्मध्वजादयः चक्रं-धर्मचक्रं आनका-ध्वनद्दुन्दुभयः पटहाः वा अनेकानि पद्मानि सुरनिर्मितानि इन्दुः-चन्द्रः तद्वद् रुक्-कान्तिः येषां तानि तादृशानि चामराणि-वालव्यजनानि तथा उत्सर्पिणी-प्रोत्तुङ्गा सालत्रयी तथा सन्-शोभनः अवनमन्-पुष्पफलदलप्राग्भारेण नमन् यः अशोकः-कङ्केल्लितरुः तथा पृथिव्यां-जगति क्षणप्रायाणि उत्सवयोग्या शोभा-कान्तिः येषु तानि आतपत्राणि-छत्राणि तेषां प्रभा-कान्तिः तया गुरु-महत्-महर्घ्यं 'स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिसालत्रयीसदवनमदशोकपृथ्वीक्षणप्रायशोभातपत्रप्रभागुरु' ।**

पुनः किंविशिष्टं समवसरणम्? । परेता-गता अहिताः-शत्रवः येषां ते तादृशाः साधवः तैः आ-समन्तात् रोचितं-व्याप्तं (?) 'परेताहितारोचितम्'। यद्वा किंविशिष्टा अर्हतां संहतिः? । परेता-गता अहिताः-सप्तेतयो यस्यां सा 'परेताहिता'।

" साग्रे च गव्यूतिशतद्वये रुजा १ वैरी( रे )२ तयो ३ मार्य ४ तिवृष्ट्य ५ वृष्टयः ६ ।
दुर्भिक्ष ७ मन्यस्वकचक्रतो ८ भयं स्यान्नेति ( चैत एकादश कर्मघातजाः ) ॥ "

इत्यभिधानचिन्तामणि( का० १, श्लो० ६० )वचनात् । पुनः किंविशिष्टं समवसरणम्? । आ-समन्तात् रोचितं-शोभितं भासितं वा 'आरोचितम्'। तथा ऋषीणां समूहः आरं, यद्वा अरर्ति-संसारपारं गच्छन्तीति आरा-मुनयः तेषां उचितं-योग्यं 'आरोचितम्'। पुनः किंविशिष्टं समवसरणम्?। यशसा-कीर्त्या भातानि यानि पत्राणि-वाहनानि हस्त्यश्वरथशिविकादीनि तानि भजन्ते तादृशा(शी) या उर्वरा-पृथ्वी तस्या राजो-राजानः चक्रवर्त्यादयः परेता-भूतप्रेतपिशाचव्यन्तरादयः अहयः-नागाख्या भवनवासिदेवविशेषाः ताराः-ज्योतिष्कदेवविशेषाः तेषां उचितं-योग्यं 'यशोभातपत्रभागुर्वराराट्परे-ताहितारोचितम्'। इति पदार्थः ॥

अथ समासः—स्फुरन्तः केतवो यस्मिन् तत् स्फुरत्केतु, स्फुरत्केतु (च) चक्रं च आनकाश्च स्फुरत्केतु-चक्रानकाः, अनेकानि च तानि पद्मानि च अनेकपद्मानि, इन्दुवद् रुग् येषां तानि इन्दुरुञ्जि, इन्दुरुञ्जि च तानि चामराणि च इन्दुरुक्चामराणि, शालानां त्रयी शालत्रयी, उत्सर्पिणी चासौ शालत्रयी च उत्सर्पिशालत्रयी, स्फुरत्केतुचक्रानकाश्च अनेकपद्मानि च इन्दुरुक्चामराणि च उत्सर्पिशालत्रयी च स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिशालत्रयी, अवनमन् चासौ अशोकश्च अवनमदशोकः, सन् चासौ अवनमदशोकश्च सदवनमदशोकः, स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिशालत्रयी च सदवनमदशोकश्च स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिशालत्रयीसदवनमदशोकः, पृथ्व्याः क्षण-प्राया-उत्सवतुल्या पृथ्वीक्षणप्राया, ( पृथ्वीक्षणप्राया ) शोभा येषां तानि पृथ्वीक्षणप्रायशोभानि, आत-पात् त्रायन्ते इति आतपत्राणि, पृथ्वीक्षणप्रायशोभानि च तानि आतपत्राणि च पृथ्वीक्षणप्रायशोभात-पत्राणि, स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिशालत्रयीसदवनमदशोकश्च पृथ्वीक्षणप्रायशोभात पत्राणि च स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिशालत्रयीसदवनमदशोकपृथ्वीक्षणप्रायशोभा-तपत्राणि, स्फुरत्केतु०प्रायशोभातपत्राणां प्रभा स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिशालत्रयी-सदवनमदशोकपृथ्वीक्षणप्रायशोभातपत्रप्रभा, स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिशालत्रयी-सदवनमदशोकपृथ्वीक्षणप्रायशोभातपत्रप्रभाभिर्गुरु [यत्] स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पि-शालत्रयीसदवनमदशोकपृथ्वीक्षणप्रायशोभातपत्रप्रभागुरु । परेता-गताः अहिताः-शत्रवो येषां ते परेता-हिताः-साधवः, परेताहितैः आरोचितं परेताहितारोचितम्; यद्वा परेता-गता अहिता-ईतयो यस्यां सा परेताहिता, अर्हतां संहतिपक्षे आ-समन्तात् रोचितं-भासितं आरोचितं, यद्वा अरन्ति-गच्छन्ति भवस्य पारं आराः-मुनयः, आराणां उचितं आरोचितम् । भक्तिं भजन्तीति भक्तिभाजः, तेषां भक्तिभाजाम् । अम्भांसि धीयन्ते इति अम्भोधिः, भव एव अम्भोधिः भवाम्भोधिः, भवाम्भोधौ सम्भ्रान्ता भवाम्भोधिस-म्भ्रान्ताः, भवाम्भोधिसम्भ्रान्ताश्च ते भव्याश्च भवाम्भोधिसम्भ्रान्तभव्याः, भवाम्भोधिसम्भ्रान्तभव्यानां आवली भवाम्भोधिसम्भ्रान्तभव्यावली, भवाम्भोधिसम्भ्रान्तभव्यावल्या सेविता भवाम्भोधिसम्भ्रान्त-भव्यावलीसेविता । दवनं च मदश्च शोकश्च दवनमदशोकाः, दवनमदशोकैः सहिता सदवनमदशोका; न विद्यन्ते सदवनमदशोका येषां ते असदवनमदशोकाः अर्थात् साधवः, असदवनमदशोकानां-साधूनां पृथ्वीव पृथ्वी आयता-विशाला भूमिरिव असदवनमदशोकपृथ्वी । ईक्षणानि-ज्ञानादीनि नयनानि प्राति-ददातीति ईक्षणप्रा । 'प्रा दाने' धातोरित्यस्य प्रातीति प्रयोगः । यशसा भातानि यशोभातानि,

यशोभातानि च तानि पत्राणि च यशोभातपत्राणि, यशोभातपत्राणि प्रकर्षेण भजन्ते ते यशोभातपत्रप्रभाजः, उर्वराया राट् (जः) उर्वराराजः, यशोभातपत्रप्रभाजश्च ते उर्वराराजश्च यशोभातपत्रप्रभागुर्वराराजः, यशोभातपत्रप्रभागुर्वराराजश्च परेताश्च अहयश्च ताराश्च यशोभातपत्रप्रभागुर्वराराट्परेताहिताराः, यशोभातपत्रप्रभागुर्वराराट्परेताहितारैः(राणां) उचितं-पूर्णं शोभायमानं यशोभातपत्रप्रभागुर्वराराट्परेताहितारोचितम् । इति द्वितीयवृत्तार्थः ॥

दे० व्या०—समवसरणमत्रेति । सा अर्हतां-तीर्थङ्कराणां सन्ततिः-श्रेणिः भक्तिभाजां समीहितं-वाञ्छितं प्रवितरतु-ददातु इत्यन्वयः । 'तॄ प्लवनतरणयोः' इति धातुः । 'प्रवितरतु' इति क्रियापदम् । का कर्त्री ? । सन्ततिः । केषाम् ? । अर्हताम् । कं कर्मतापन्नम् ? । समीहितम् । केषाम् ? । 'भक्तिभाजां' भक्तिं-सेवां भजन्तीति भक्तिभाजः तेषाम् । यत्तदोर्नित्याभिसम्बन्धाद् यस्याः अर्हत्सन्ततेः समवसरणं-वप्रत्रयं अराराद्-अत्यर्थं यथा स्यात् तथा अत्र-अस्मिन् लोके शुशुभे इत्यध्याहारः (?) । 'शुशुभे (अराराट्)' इति क्रियापदम् । किं कर्तृ ? । समवसरणम् । कस्याः ? । यस्याः । किंविशिष्टं समवसरणम् ? । 'स्फुरत्केतुचक्रानकानेकपद्मेन्दुरुक्चामरोत्सर्पिशालत्रयीसदवनमदशोकपृथ्वीक्षणप्रायशोभातपत्रप्रभागुरु' । केतुः-धर्मध्वजः चक्रं-धर्मचक्रं आनको-देवदुन्दुभिः, "भेरी दुन्दुभिरानकः" इत्यमरः (?), पद्मानि-सुरकृतकमलानि शालत्रयी-प्राकारत्रयी अशोकः-(कङ्केल्लि)वृक्षः आतपत्राणि-छत्राणि एतेषां पूर्वं 'द्वन्द्वः', तथाच स्फुरन्-विराजमानः केतुश्च चक्रं च आनकश्च अनेकानि पद्मानि च इन्दुरुक्चामराणि च उत्सर्पिणी शालत्रयी च सन्-शोभनः अवनमन्-पल्लवादिभारेण खर्वीभवन् अशोकश्च पृथ्व्याः क्षणप्रायशोभा-उत्सवसदृशशोभा च आतपत्राणां प्रभा च ताभिः गुरु-गरिष्ठमित्यर्थः । पुनः किंविशिष्टम् ? । 'परेताहितारोचितं' परेताः-दूरीभूताः अहिता-शत्रवो येषां तैः आ-समन्तात् रोचितं-शोभितम् । यद्वा परा-प्रधाना इताहिता-गतदुर्जना इत्यर्हत्सन्ततेर्विशेषणम् । रोचितं-शोभितं इति समवसृतेर्विशेषणम् । पुनः किंविशिष्टम् ? । 'यशोभातपत्रप्रभागुर्वराराट्परेताहितारोचितम्' उर्वराराजो-राजानः परेताः-पिशाचाः अहयो-नागकुमाराः तारा-ज्योतिष्काः एतेषां पूर्वं 'द्वन्द्वः', ततो यशोभातानि-यशसा शोभितानि पत्राणि-वाहनानि भजन्ते ये उर्वराराट्परेताहिताराः तेषां उचितं-योग्यम् ॥ इति द्वितीयवृत्तार्थः ॥ २ ॥



भारत्यै प्रार्थना—

परमततिमिरोग्रभानुप्रभा भूरिभङ्गैर्गभीरा भृशं विश्ववर्यै निकाय्ये वितीर्योत्तरा-
महतिमतिमते हि ते शस्यमानस्य वासं सदाऽतन्वतीतापदानन्दधानस्य सामानिनः[२]।
जननमृतितरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जज्जनोत्तारनौर्भारती तीर्थकृत् !
महति मतिमते[१] हितेशस्य मानस्य वा संसदातन्वती तापदानं दधानस्य सामानि नः[३]

—अर्णव०

ज० वि०—परमततेति । हे तीर्थकृत् !—तीर्थकर ! ते-तव मते-शासने सा-प्रसिद्धा, अयं तच्छब्दो यदुपादानं नापेक्षते प्रसिद्धार्थेऽभिहितत्वात् । तदुक्तम्—" प्रक्रान्तप्रसिद्धानुभूतार्थ-

१ '०मति मते' इत्यपि पदच्छेदः । २ 'साऽमानिनः' इत्यपि पाठः समीचीनः । ३ 'मतिमतेहिते०' इत्यपि पाठः ।

विषयस्तच्छब्दो यदुपादानं नापेक्षते " इति । भारती—वाणी नः—अस्माकं विश्ववय—भुवनोत्तमे सर्वोत्तमे वा निकाय्ये—निवासे मोक्ष इत्यर्थः, वासम्—आश्रयं वितीर्यात्तराम्—अतिशयेन वितरत्विति क्रियाकारकप्रयोगः । इयं कर्त्रुक्तिः । अत्र ' वितीर्यात्तराम् ' इति क्रियापदम् । का कर्त्री ? ' भारती ' । कस्य ? ' ते ' । कं कर्मतापन्नम् ? ' वासम् ' । कस्मिन् ? ' निकाय्ये ' निवासे । कथंभूते ? ' विश्ववर्ये ' । केषाम् ? ' नः ' । निकाय्ये पुनः कथंभूते ? ' अहतिमति ' हतिः—हननं तद्रहिते, अविनाशिनीत्यर्थः । अथवा अहतिमिति द्वितीयान्तं वासविशेषणम् । अतिमते इति सप्तम्यन्तं निकाय्यविशेषणम् । तयोश्चायमर्थः—अहतिं—हतिरहितं अतिशयेन मतेऽभिप्रेते एतत्पक्षे मते—शासने इत्युक्तं तन्न व्याख्येयम् । हीति स्फुटार्थम् । पुनः कथंभूते निकाय्ये ? ' महति ' अतिप्रमाणे, पञ्चचत्वारिंशद्(लक्ष)योजनात्मकत्वात् । तव (ते) कथंभूतस्य ? 'शस्यमानस्य' स्तूयमानस्य । नरामराद्यैरित्यर्थः सामर्थ्याद् गम्यते । पुनः कथं० ? 'आनन्दधानस्य' प्रमोदस्थानस्य । पुनः कथं० ? 'अमानिनः' निरहङ्कारस्य । अथवा 'सामानिनः' सह अमानिभिः—निरभिमानिभिः अर्थात् साध्वादिभिर्यः स तथा तस्य । अस्मिन् व्याख्यानपक्षे सा तव भारतीति तच्छब्दसापेक्षं न व्याख्येयम् । पुनः कथं० ? 'ईशस्य' स्वामिनः । जगतामिति गम्यते । पुनः किं कुर्वाणस्य? 'दधानस्य' पुष्णतः । कानि कर्मतापन्नानि ? ' सामानि ' प्रियाणि । भारती कथंभूता ? ' परमततिमिरोग्रभानुप्रभा ' परेषां—शाक्यादीनां मतानि तद्रूपाणि यानि तिमिराणि—तमांसि तत्र भानुप्रभा—तरणिकिरणकल्पा, तदुच्छेदकत्वात् । पुनः कथं० ? ' गभीरा ' अलब्धमध्या । कैः कृत्वा ? ' भूरिभङ्गैः ' भूरिभिः—प्रचुरैः भङ्गैः—अर्थविकल्पैः । कथम् ? ' भृशम् ' अत्यर्थम् । पुनः कथं० ? ' जननमृतितरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जज्जनोत्तारनौः ' जननानि—जन्मानि मृतयः—मरणानि तद्रूपा ये तरङ्गाः—वीचयः यत्र स तथा निष्पारः—पाररहितः, एवंविधो यः संसारनीराकरः—भवपाथोधिः तस्यान्तः—मध्यं तत्र निमज्जन्तः—ब्रुडन्तः ये जना—लोकाः तेषामुत्तारणं—पारप्रापणं तत्र नौरिव—अनाविकेव नौः । पुनः कथंभूता ? 'मानस्य वा संसत् ' वाशब्द इवार्थे भिन्नक्रमश्च, तत एवं योज्यते—मानस्य—पूजायाः संसदिव—सभेव । भारती किं कुर्वती ? ' आतन्वती ' विस्तारयन्ती । किं कर्मतापन्नम् ? ' तापदानं ' तापस्य—सन्तापस्य दानं—खण्डनम् । अवशिष्टे च द्वे तीर्थकृतः सम्बोधने, तयोश्चायमर्थः—हे ' अतन्वतीनापत् ' अतनवः—मृत्यः अतीताः नाशं गताः आपदः—विपदो यस्मात् स तथा तत्सम्बो० हे अतन्व० । कथम् ? ' सदा ' नित्यम् । हे ' हित ! ' हितकारिन् ! कस्मै ? ' मतिमते ' मनीषिणे । एते द्वे भारत्या विशेषणे अपि घटेते । तथाचैवं व्याख्या—अतनवोऽतीता आपदो यस्याः सा तथा । मतिमता—मनीषिणा ईहिता—समीहिता, उपादेयतयाऽभिप्रेतेत्यर्थः ॥

अथ समासः—परेषां मतानि पर० ' तत्पुरुषः ' । तिमिराणीव तिमिराणि । परमतानि च तानि तिमिराणि ( च ) पर० 'कर्मधारयः' । भानोः प्रभा भानुप्रभा 'तत्पुरुषः' । उग्रा चासौ भानुप्रभा

च उग्र० 'कर्मधारयः'। (परमततिमिरेषु) उग्रभानुप्रभेव उग्रभानुप्रभा परमततिमिरोग्रभानुप्रभा 'तत्पुरुषः'। भूरयश्च ते भङ्गाश्च भूरिभङ्गाः 'कर्मधारयः'। तैः भूरि०। विश्वे विश्वस्मिन् वा वर्यो विश्ववर्यः 'तत्पुरुषः'। तस्मिन् विश्व०। हतिरस्यास्तीति हतिमान्। न हतिमान् अहतिमान् 'तत्पुरुषः'। तस्मिन्नह०। अथवा न विद्यते हतिर्यस्य सोऽहतिः 'बहुव्रीहिः'। तमहतिम्। अतिशयेन मतः अतिमतः 'तत्पुरुषः'। तस्मिन्नतिमते। न तनवोऽतनवः। अतनवश्च ता अतीताश्च अतन्वतीताः 'कर्मधारयः'। अतन्वतीता आपदो यस्मात् सोऽतन्व० 'बहुव्रीहिः। तत्सम्बो० हे अतन्व०। अथवा अतन्वतीता आपदो यस्याः साऽतन्व० 'बहुव्रीहिः'। आनन्दस्य धानमानन्दधानं 'तत्पुरुषः'। तस्यानन्द०। मानोऽस्यास्तीति मानी। न मानी अमानी 'तत्पुरुषः'। तस्यामानिनः। अथवा न मानिनोऽमानिनः 'तत्पुरुषः'। सह अमानिभिर्वर्तते यः स सामानी 'तत्पुरुषः'। तस्यासामा०। जननानि च मृतयश्च जनन० 'इतरेतरद्वन्द्वः'। तरङ्गा इव तरङ्गाः। जननमृतयस्तरङ्गा यस्य स जनन० 'बहुव्रीहिः'। नीराणामाकरो नीराकरः 'तत्पुरुषः'। नीराकर इव नीराकरः। संसारश्चासौ नीराकरश्च संसार० 'कर्मधारयः'। निर्गतः पारो यस्मात् स निष्पारः 'बहुव्रीहिः'। निष्पारश्चासौ संसारनीराकरश्च निष्पार० 'कर्मधारयः'। जननमृतितरङ्गश्चासौ निष्पारसंसारनीराकरश्च जनन० 'कर्मधारयः'। जननमृतितरङ्गनिष्पारसंसारनीराकरस्यान्तः जनन० 'तत्पुरुषः'। जननमृतितरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जन्तो जनन० 'तत्पुरुषः'। जननमृतितरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जन्तश्च ते जनाश्च जनन० 'कर्मधारयः'। जननमृतितरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जज्जनानामुत्तारो० जनन० 'तत्पुरुषः'। जननमृतितरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जज्जनोत्तारे नौर्जनन० 'तत्पुरुषः'। तीर्थं करोतीति तीर्थकृत् 'तत्पुरुषः'। तत्सम्बो० हे तीर्थकृत्!। तापस्य दानं तापदानं 'तत्पुरुषः' (तत्)। इति काव्यार्थः ॥ ३ ॥

सि० वृ०—परमतेति। हे तीर्थकृत्!—तीर्थकर! ते—तव मते—शासने सा—प्रसिद्धा भारती—वाणी नः—अस्माकं विश्ववर्ये—भुवनोत्तमे निकाय्ये—निवासे अर्थान्मोक्षे वा ममाश्रयं वितीर्यात्तराम्—अतिशयेन (दद्यात्) इत्यर्थः। विपूर्वक 'तॄ प्लवनतरणयोः' धातोराशिषि कर्तरि परस्मैपदे प्रथमपुरुषैकवचनं यात्। 'ऋत इर्' (सा० सू० ८२०)। 'य्वोर्विहसे' (सा० सू० ३१६) इति दीर्घः। तथाच 'वितीर्यात्' इति सिद्धम्। अत्र 'वितीर्यात् (तराम्)' इति क्रियापदम्। का कर्त्री?। भारती। कं कर्मतापन्नम्?। वासम्। कस्य?। ते। कस्मिन्?। निकाय्ये। "मन्दिरं सदनं सद्म, निकाय्यो भवनं कुटः" इति हैमः (अभि० का० ४, श्लो० ५६)। कथंभूते निकाय्ये?। 'विश्ववर्ये' विश्वस्मिन् वर्यं— प्रधानं विश्ववर्यं तस्मिन्।

केषाम् ? । 'नः' षष्ठीबहुवचने अस्माकं इत्यस्य नसादेशः । पुनः कथंभूते निकाय्ये ? । 'अहतिमति' हतिः–हननं तद्रहिते, अविनाशिनीत्यर्थः । अथवा अहतिमिति द्वितीयान्तं वासविशेषणम् । अतिमते इति सप्तम्यन्तं निकाय्यविशेषणम् । तयोश्चायमर्थः–अहतिं–हतिरहितं, अतिशयेन मते–अभिप्रेते । एतत्पक्षे मते-शासने इत्युक्तं तन्न व्याख्येयम् । हीति स्फुटार्थम् । पुनः कथंभूते ? । महति–अतिप्रमाणे, पञ्चचत्वारिंशल्लक्ष-योजनत्वात् । तव (ते) कथंभूतस्य ? । शस्यमानस्य–स्तूयमानस्य । नरामराद्यैरिति गम्यम् । पुनः कथंभूतस्य ? । 'आनन्दधानस्य' आनन्दस्य धानं आनन्दधानं तस्य, प्रमोदस्थानस्येत्यर्थः । पुनः कथंभूतस्य ? । 'अमानिनः' न विद्यते मानः–अभिमानो यस्य स तस्य । अथवा सामानिनः सह अमानिभिः–निरभिमानिभिरर्थात् साध्वा-दिभिर्यः स तथा तस्य । पुनः कथंभूतस्य ? । ईशस्य–स्वामिनः । जगतामिति गम्यम् । पुनः किं कुर्वाणस्य ? । दधानस्य–पुष्णतः । कानि ? । सामानि–प्रियवचनानि । भारती कथंभूता ? । सा । अयं तच्छब्दो यच्छब्दं नापेक्षते, प्रशस्ता(सिद्धा?)र्थेऽभिहितत्वात् । पुनः कथंभूता ? । परमततिमिरोग्रभानुप्रभा' परेषां–बौद्धादीनां मतानि–शासनानि तान्येव तिमिराणि–तमांसि तत्र भानोः–सूर्यस्य प्रभेव प्रभा, तन्मततिमिरोच्छे-दकत्वात् । पुनः कथं० ? । गभीरा–अलब्धमध्या, गम्भीरेतियावत् । कैः कृत्वा ? । 'भूरिभङ्गैः' भूरयः–प्रचुराः भङ्गाः–अर्थविकल्पाः तैः [ भूरिभङ्गैः ] । कथम् ? । भृशम्–अत्यर्थम् । पुनः कथंभूता ? । 'जननमृति-तरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जज्जनोत्तारनौः' जननानि–जन्मग्रहणानि मृतयो–मरणानि तल्लक्षणास्तरङ्गाः–कल्लोला यत्र स तथा निष्पारः–पाररहितः एवंविधो यः संसार एव नीराकरः–समुद्रस्तस्यान्तर्–मध्यं तत्र निमज्जन्तो–ब्रुडन्तो ये जनाः–लोकास्तेषां उत्तारः–उत्तरणं तटप्रापणं तत्र नौरिव नौः–तरिः । "पारालिन्दी (?)-स्तरङ्गो नौः" इति हारावली । पुनः कथंभूते ? । 'मानस्य वा संसत्' वाशब्दोऽत्र इवार्थे भिन्नक्रमश्च, तत एवं व्यज्यते–मानस्य–पूजायाः संसदिव–सभेव । यदाह–

" मन्येशङ्केध्रुवंप्रायो–नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दै–रिवशब्दोऽपि तादृशः ॥ "

इति । "वा प्रचेतसि जानीयादिवार्थे च तदव्ययम्" इति मेदिनी । भारती किं कुर्वती ? । आतन्वती–विस्तारयन्ती । किम् ? । 'तापदानं' तापस्य–सन्तापस्य दानं–खण्डनम् । अवशिष्टे च द्वे तीर्थकृत्संबोधने । तयोश्चायमर्थः–हे 'अतन्वतीतापत् !' अतनवो–महत्यो–अतीता–विनाशं प्राप्ता आपदो–दुर्दशा यस्मात् स तथा तस्य संबोधनं हे अतन्व० । कथम् ? । सदा–नित्यम् । हे हित !–हितकारिन् । कस्मै ? । मतिमते–मनीषिणे, मतिः–सदसद्विवेकिताबुद्धिः सा विद्यते यस्य स मतिमान् तस्मै ॥ ३ ॥

सौ० वृ०—परमतेति । हे 'तीर्थकृत् !' तीर्थं–चातुर्वर्ण्यसङ्घः प्रवचनं प्रथमगणधरो वा "तित्थं चाउवण्णे संघे पवयणे पढमगणहरे वा" इत्यागमपाठात् तीर्थं करोतीति तीर्थकृत् तस्य सं० हे तीर्थ-कृत् ! । हे 'अतन्वतीतापत् !' अतनुः–महती अतीता–गता आपत्–विपत् यस्मात् सः अतन्वतीतापत्, तस्य सं० हे अतन्वतीतापत् ! । हे 'हित !' हे हितकारिन् ! । [ हे 'ईश !' हे स्वामिन् ! । ] सा तव भारती निकाय्ये–आलये निवासं–वासं वितीर्यात्तराम् इत्यन्वयः । 'वितीर्यात्तराम्' इति क्रियापदम् ।

१ तीर्थं चातुर्वर्ण्यः सङ्घः प्रवचनं प्रथमगणधरो वा । २ भगवती ।

का कर्त्री ? । 'भारती' वाणी । 'वितीर्यात्तरां' दद्यात्तराम्-अतिशयेन दद्यात् । किं कर्मतापन्नम् ? । 'निवासं' स्थानम् । कस्मिन् ? । 'निकाय्ये' भवने । "निकाय्यो भवनं कुटः" इत्यभिधानचिन्तामणिः ( का० ४, श्लो० ५६ ) । किंविशिष्टे निकाय्ये ? । 'विश्ववर्ये' विश्वं-जगत् तस्मिन् वर्यं-प्रधानं विश्ववर्यं तस्मिन् विश्ववर्ये, लोकाग्रस्थाने मोक्षे इत्यर्थः । केषाम् ? । 'नः' अस्माकम् । किंविशिष्टा भारती ? । 'सा' सा-प्रसिद्धा । अयं तच्छब्दो यदुपादानं नापेक्षते प्रसिद्धार्थेऽभिहितत्वात्, [परं] तदुक्तम्-" प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यदुपादानं नापेक्षते " इति । पुनः किंविशिष्टा भारती ? । परेषां-शाक्यादीनां मतानि तानि एव तिमिराणि-अन्धकाराणि तेषु तेषां वा उग्रा-तीव्रा भानोः-सूर्यस्य प्रभा-कान्तिः परमततिमिरोग्रभानुप्रभा, परपाषण्डमतध्वान्तविनाशकत्वाद् भानुरित्यर्थः । पुनः किंविशिष्टा भारती ? । 'गभीरा' अगाधमध्या । कैः ? । भूरयः-बहवः भङ्गाः-अर्थविकल्पाः, भूरिभङ्गाः तैः 'भूरिभङ्गैः' । कथम् ? । 'भृशं' अत्यर्थम् । किंविशिष्टे निकाय्ये ? । हतिः-हननं तदस्यास्तीति हतिमान्, न हतिमान् अहतिमान्, तस्मिन् 'अहतिमति' । पुनः किंविशिष्टे निकाय्ये ? । 'महति' महत्प्रमाणे, पञ्चचत्वारिंशल्लक्षयोजनप्रमाणत्वात् । [¹अतिशयेन महत् अतिमहत्, तस्मिन् 'अतिमहति' ।] 'अहतिं' इति भिन्नपदं वासपदस्य विशेषणं, तत्र नास्ति हतिः—विनाशो यस्मिन् सः अहतिः तं 'अहतिम्' । पुनः किंविशिष्टे निकाय्ये ? । ( 'अतिमते' अतिशयेन अभिप्रेते ) [²'अतिहिते' अतिशयेन हितकारिणि ] । कस्य ? । 'ते' (तव) । हे इति भिन्नपदम् । ते कथंभूतस्य ? 'शस्यमानस्य' स्तूयमानस्य, नरामरेन्द्रैः इति गम्यम् । कथम् ? । 'सदा' निरन्तरम् । किंविशिष्टस्य ते ? । 'आनन्दधानस्य' परमानन्दस्थानस्य । पुनः किंविशिष्टस्य ते ? । 'अमानिनः' निरहङ्कारस्य, यद्वा अमानिनः( भिः ) सहितस्य सामानिनः । ( पुनः किंविशिष्टस्य ते ? । 'ईशस्य' स्वामिनः, जगतामिति गम्यम् । ) पुनः किंविशिष्टा भारती ? । जननानि—जन्मानि मृतयः—मरणानि ता एव तरङ्गा—ऊर्मयः यस्मिन् स जननमृतितरङ्गः, तादृशः 'निष्पारः' नास्ति पारः—पर्यन्तः (यत्र) तादृशः संसारो—भव एव नीराकरो—जलधिः तस्मिन् अन्तर्—मध्ये निमज्जन्तो-ब्रुडन्तो ये जनाः—लोकाः तेषामुत्तारः—पारप्रापणं तदर्थं तस्मिन् वा नौरिव नौः—द्रोणीव द्रोणी 'जननमृतितरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जज्जनोत्तारनौः' । पुनः किंविशिष्टा भारती ? । 'संसत् (इव)' सभा इव सभा । कस्य ? । 'मानस्य' पूजायाः । पुनः किं कुर्वती भारती ? । 'तन्वती' विस्तारयन्ती । कानि कर्मतापन्नानि ? । सामानि-प्रियाणि । वाशब्द इवार्थे । पुनः किंविशिष्टस्य ते ? । 'दधानस्य' बिभ्रतः पुष्यतो वा । कं कर्मतापन्नम् ? । तापः-संसारोष्मा तस्य दानं (-खण्डनं) 'तापदानम्' । कस्मै ? । 'मतिमते' बुद्धिमज्जनाय प्राज्ञाय । पक्षे हे अतन्वतीतापत् इति तीर्थकृत्संबोधनं कृतं, एतद्विशेषणं भारत्या अपि भवति तत्र अतनवः-महत्यः अतीता-गता आपदः यस्याः सा अतन्वतीतापत् । एतादृशी तव भारती नः-अस्माकं निकाय्ये-मोक्षे वासं वितीर्यात्तराम् । इति पदार्थः ॥

अथ समासः—परेषां मतानि परमतानि, परमतान्येव तिमिराणि परमततिमिराणि, भानोः प्रभा भानुप्रभा, उग्रा चासौ भानुप्रभा च उग्रभानुप्रभा, परमततिमिरेषु उग्रभानुप्रभा परमततिमिरोग्रभानुप्रभा । भूरयश्च ते भङ्गाश्च भूरिभङ्गाः, तैः भूरिभङ्गैः । विश्वेषु वर्यं विश्ववर्यं, तस्मिन् विश्ववर्ये । अतिशयेन वितीर्यात् इति वितीर्यात्तराम् । हननं हतिः, न हतिः अहतिः, अहतिः यस्यासौ अहतिमान्, तस्मिन्नहतिमति । यद्वा नास्ति हतिर्यस्यासौ अहतिः, तं अहतिम् । अतिशयेन मतिमान् अतिमतिमान्, तस्मै अतिमतिमते । शस्यते-प्रशस्यते इति शस्यमानः, तस्य शस्यमानस्य । न तनवः अतनवः, बह्व्यः ( महत्यः ) इत्यर्थः, अतनवः-महत्यः अतीताः आपदः यस्मात् सः अतन्वतीतापद्, तस्य सं० हे अतन्वतीतापत् ! । आनन्दस्य धानं आनन्दधानं, तस्य आनन्दधानस्य । मानोऽस्यास्तीति मानी, न मानी अमानी, यद्वा न विद्यते मानो येषां ते अमानिनः-साधवः, अमानिभिः सहितः सामानी, तस्य सामानिनः । जननानि च मृतयश्च जननमृतयः, जननमृतय एव तरङ्गाः यस्मिन्

१-२ [ ] एतच्चिह्नान्तर्गतः पाठः प्रामादिकः ।

स जननमृतितरङ्गः, पाराभिर्गत इति निष्पारः, संसरणं संसारः, नीराणां आकरः नीराकरः, संसार एव नीराकरः संसारनीराकरः, निष्पारश्चासौ संसारनीराकरश्च निष्पारसंसारनीराकरः, (जननमृतितरङ्गश्चासौ निष्पारसंसारनीराकरश्च ) जननमृतितरङ्गनिष्पारसंसारनीराकरः, जननमृतितरङ्गनिष्पारसंसारनीराकरस्य अन्तः जननमृतितरङ्गनिष्पारसंसारनीराकरान्तः, जननमृतितरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जन्तः (जनन०), जननमृतितरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जन्तश्च ते जनाश्च जननमृतितरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जज्जनाः, जननमृतितरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जज्जनानां उत्तारः जनन०निमज्जज्जनोत्तारः, जननमृतितरङ्ग०निमज्जज्जनोत्तारे नौरिव नौः जननमृतितरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जज्जनोत्तारनौः । तीर्थं करोतीति तीर्थकृत्, तस्य सं० हे तीर्थकृत् ! । मतिर्विद्यते यस्यासौ मतिमान् तस्मै मतिमते । तापस्य दानं तापदानं, तत् तापदानम् । इति तृतीयवृत्तार्थः ॥ ३ ॥

दे० व्या०—परमतेति । हे तीर्थकृत् ! तीर्थं–चतुर्विधः सङ्घः प्रथमगणधरो वेति बोध्यम् । ते–तव भारती –वाणी निकाय्ये–गृहे अर्थात् मोक्षे वासं–निवासं वितीर्यात्( तरां ) (अतिशयेन ) दद्यात् इत्यन्वयः । 'तॄ प्लवनतरणयोः' धातुः । 'वितीर्यात्( तरां )' इति क्रियापदम् । का कर्त्री ? । भारती । कस्य ? । ते–तव । किं कर्मतापन्नम् ? । वासम् । कस्मिन् ? । निकाय्ये । "निकाय्यो भवनं कुटः " इत्यभिधानचिन्तामणिः ( का० ४, श्लो० ५६ ) । किंविशिष्टे निकाय्ये ? । 'विश्ववर्ये' विश्वस्मिन् वर्ये–समीचीने । पुनः किंविशिष्टे ? । अहतिमति–अविद्यमानहनने । पुनः किंविशिष्टे ? । 'अतिमते' अतिशयेन मते–वाञ्छिते । हि स्फुटम् । पुनः किंविशिष्टे ? । महति–विस्तीर्णे । किंविशिष्टा भारती ? । 'परमततिमिरोग्रभानुप्रभा' परमतमेव तिमिरं–अन्धकारं तस्मिन् उग्रभानोः–सूर्यस्य प्रभा इव प्रभा–कान्तिः । पुनः किंविशिष्टा ? । गभीरा–अलब्धमध्या । कैः ? । भूरिभङ्गैः । भूरयो–भूयिष्ठा ये भङ्गा–विकल्पाः तैः । कथम् ? । भृशम्–अत्यर्थं यथा स्यात् तथा । पुनः किंविशिष्टा ? । 'जननमृतितरङ्गनिष्पारसंसारनीराकरान्तर्निमज्जज्जनोत्तारनौः' जननं च मृतिश्चेति 'द्वन्द्वः' । त एव तरङ्गाः–कल्लोला यस्य स चासौ निष्पारः–अलब्धप्रान्तो यः संसारनीराकरः संसार एव समुद्रः तस्यान्तर्–मध्ये निमज्जन्तो–ब्रुडन्तो ये जना–लोकाः तेषां उत्तारे–तीरप्रापणे नौरिव नौः–द्रोणी । पुनः किंविशिष्टा ? । 'मानस्य वा संसत्' मानस्य–पूजायाः संसदिव–सभेव । अत्र वाशब्दः इवार्थे भिन्नक्रमश्च । पुनः किंविशिष्टा ? । आतन्वती–विस्तारयन्ती । किम् ? । तापदानं–सन्तापखण्डनम् ( दो अवखण्डने ) । किंविशिष्टस्य ? । ते–तव ईशस्य–स्वामिनः । पुनः किंविशिष्टस्य ? । शस्यमानस्य–स्तूयमानस्य । कथम् ? । सदा–निरन्तरम् । किंविशिष्टस्य ? । आनन्दधानस्य–प्रमोदस्थानस्य । सेति भारत्या विशेषणम् । पुनः किंविशिष्टस्य ? । 'अमानिनः' निरभिभूयिष्ठा (?) अतन्वतीतापत् ! इति । अतनवः–महत्यः अतीता–अतिक्रान्ता आपदो येन स तस्यामन्त्रणम् । हे हित ! (कल्याण)कारिन् ! । कस्मै ? । 'मतिमते' मतिर्विद्यते यस्यासौ मतिमान् तस्मै मतिमते, हितेति समग्रमेव वा जिनामन्त्रणम् ॥ इति तृतीयदण्डकार्थः ॥ ३ ॥



श्रीअम्बिकायाः स्तुतिः—

सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फुरद्रश्मिसारक्रमाम्भोरुहे !
परमवसुतराङ्गजाऽऽरावसन्नाशितारातिभाराऽजिते भासिनी हारतारा बलक्षेमदा ।
क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटोत्कृष्टकण्ठोद्भटे संस्थिते ! भव्यलोकं त्वमम्बा'म्बिके !'
परमव सुतरां गजारावसन्ना शितारातिभा रा[2]जिते भा[3]सि नीहारतारावलक्षेऽमदा ॥ ४-२४ ॥

—अर्णव०

१–२ सम्बोधनार्थे वा ३ 'भासिनीहार०' इत्यपि सम्भवति ।

ज० वि०—सरभसेति । हे अम्बिके !—अम्बिकानाम्नि देवि ! त्वं—भवती भव्यलोकं—भव्यजनं, भव्यलोकानां बहुत्वेऽपि जात्यपेक्षयैकवचननिर्देशः, परं—उत्कृष्टं यथा स्यात् तथा सुतरां—अत्यर्थं यथा स्यात् तथा अव—रक्ष त्रायस्वेतियावत् इति क्रियाकारकप्रयोगः । इयं कर्त्रुक्तिः । अत्र 'अव' इति क्रियापदम् । का कर्त्री ? 'त्वम्' । कं कर्मतापन्नम् ? 'भव्यलोकम्' । कथम् ? 'परम्' । पुनः कथम् ? 'सुतराम्' । त्वं कथंभूता ? 'परमवसुतराङ्गजा' अतिशयेन परमवसू—उत्कृष्टतेजसौ अङ्गजौ—पुत्रौ यस्याः सा तथा । पुनः कथं० ? 'आरावसन्नाशितारातिभारा' आरावः—ध्वनिस्तेन सन्नाशितः—सम्यगदर्शनं नीतः अरातिभारः—शत्रुसमूहो यया सा तथा । पुनः कथं० ? 'भासिनी' भासनशीला । पुनः कथं० ? 'हारतारा' हारेणोज्ज्वला । पुनः कथं० ? 'बलक्षेमदा' बलं—सामर्थ्यं क्षेमं—कल्याणं ते ददातीति बलक्षेमदा । पुनः कथं० ? 'असन्ना' अखिन्ना । पुनः कथं० ? 'शितारातिभा' शितं—तनूकृतं यद् आरं तस्येव अतिभा—अतिशयेन प्रभा यस्याः सा तथा । पुनः कथं० ? 'अमदा' मदरहिता । कस्याम् ? 'भासि' दीप्तिविषये । अवशिष्टानि सर्वाण्यप्यम्बिकाया देव्याः सम्बोधनानि, तद्व्याख्या यथा—हे 'सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फुरद्रश्मिसारक्रमाम्भोरुहे !' सरभसं—सवेगं नतः—प्रणतः यो नाकिनारीजनः—देवाङ्गनाजनः तस्योरोजपीठीषु—स्तनपर्यन्तिकासु लुठन्तः—इतस्ततश्चलन्तः तारा—उज्ज्वला ये हाराः—कण्ठाभरणानि तेषां स्फुरन्तः—प्रसरन्तः ये रश्मयः—किरणाः तैः सारे—कर्बुरीभूते क्रमाम्भोरुहे—चरणारविन्दे यस्याः सा तथा तत्सम्बो० हे सरभ० । हे 'संस्थिते !' अधिरूढे ! । कस्मिन् ? 'गजारौ' मतङ्गजरिपौ, केसरिणीत्यर्थः । गजारौ कथंभूते ? 'अजिते' केनाप्यनभिभूते । पुनः कथं० ? 'क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटोत्कृष्टकण्ठोद्भटे' क्षणरुचिः—विद्युत् तद्वद् रुचिराः—चार्व्यः उरवः—विशालाः चञ्चन्त्यो—दीप्यमाना एवंविधा याः सटाः—केसराः ताभिः सङ्कटः—व्याप्तः उत्कृष्टः—अतिशायी यः कण्ठः—निगरणं तेनोद्भटः—करालस्तस्मिन् । पुनः कथं० ? 'राजिते' शोभिते । पुनः कथं० ? 'नीहारतारावलक्षे' नीहारः—हिमं तारा—नक्षत्राणि तद्वद् वलक्षः—उज्ज्वलस्तस्मिन् । हे 'अम्ब !' मातः ! । अजिते राजिते इति विशेषणे द्वे गजारेः सप्तम्यन्तत्वेन व्याख्याते ते अम्बिकायाः सम्बोधने घटेते च ॥

अथ समासः—सह रभसेन वर्तते यत् तत् सरभसं 'तत्पुरुषः' । सरभसं नतं सरभ० 'तत्पुरुषः' । नाकिनां नार्यो नाकिनार्यः 'तत्पुरुषः' । नाकिनार्यश्चासौ जनश्च नाकि० 'कर्मधारयः' । सरभसनतश्चासौ नाकिनारीजनश्च सरभ० 'कर्मधारयः' । उरसि जायन्त इत्युरोजाः 'तत्पुरुषः' । पीठा इव पीठ्यः । उरोजाश्च ताः पीठ्यश्च उरोजपीठ्यः 'कर्मधारयः' । सरभसनतनाकिनारीजनस्योरोजपीठ्यः सरभ० 'तत्पुरुषः' । सरभसनतनाकिनारीजनोरोजपीठीषु लुठन्तः सरभ० 'तत्पुरुषः' । ताराश्च ते हाराश्च तारहाराः 'कर्मधारयः' । सरभस-

१ 'नार्य एव जनः नाकि-' इति प्रतिभाति ।

नतनाकिनारीजनोरोजपीठीलुठन्तश्च ते तारहाराश्च सरभ० 'कर्मधारयः'। स्फुरन्तश्च त रश्मयश्च स्फुर० 'कर्मधारयः'। सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहाराणां स्फुरद्रश्मयः सरभ० 'तत्पुरुषः'। सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फुरद्रश्मिभिः सारे सरभ० 'तत्पुरुषः'। अम्भसि रोहन्तीत्यम्भोरुहाणि 'तत्पुरुषः'। अम्भोरुहे इवाम्भोरुहे। क्रमौ च ते अम्भोरुहे च क्रमाम्भोरुहे 'कर्मधारयः'। सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फुरद्रश्मिसारक्रमाम्भोरुहे यस्याः सा सरभ० 'बहुव्रीहिः'। तत्सम्बो० हे सरभ०। परमं वसु ययोस्तौ परपरमवसू। अतिशयेन परमवसू परमवसुतरौ। अङ्गाज्जायेते इत्यङ्गजौ 'तत्पुरुषः'। परमवसुतरौ अङ्गजौ यस्याः सा परम० 'बहुव्रीहिः'। सम्यग् नाशितः सन्नाशितः 'तत्पुरुषः'। आरावेण सन्नाशितः आराव० 'तत्पुरुषः'। अरातीनां भारोऽरातिभारः 'तत्पुरुषः'। आरावसन्नाशितोऽरातिभारो यया सा आरा० 'बहुव्रीहिः'। न जितोऽजितः 'तत्पुरुषः'। तस्मिन्नजिते। अम्बिकासम्बोधनपक्षे तु न जिता अजिता 'तत्पुरुषः'। तत्सम्बो० हे अजिते!। हारेण हारवद् वा तारा हारतारा 'तत्पुरुषः'। बलं च क्षेमं च बलक्षेमे 'इतरेतरद्वन्द्वः'। बलक्षेमे ददातीति बलक्षेमदा 'तत्पुरुषः'। क्षणं रुचिर्यस्याः सा क्षणरुचिः 'बहुव्रीहिः'। क्षणरुचिवद् रुचिराः क्षणरुचि० 'तत्पुरुषः'। चञ्चन्त्यश्च ताः सटाश्च चञ्चत्सटाः 'कर्मधारयः'। उरवश्च ताः चञ्चत्सटाश्च उरुचञ्चत्सटाः 'कर्मधारयः'। क्षणरुचिरुचिराश्च ता उरुचञ्चत्सटाश्च क्षणरुचि० 'कर्मधारयः'। क्षणरुचिरुचिरोरुचञ्चत्सटाभिः सङ्कटः क्षणरुचि० 'तत्पुरुषः'। उत्कृष्टश्चासौ कण्ठश्च उत्कृष्टकण्ठः 'कर्मधारयः'। (क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटश्चासौ उत्कृष्टकण्ठश्च क्षणरुचि० 'कर्मधारयः'।) क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटोत्कृष्टकण्ठेन उद्भटः क्षणरुचि० 'तत्पुरुषः'। तस्मिन् क्षणरुचि०। भव्यश्चासौ लोकश्च भव्यलोकः 'कर्मधारयः'। तं भव्य०। गजानामरिर्गजारिः 'तत्पुरुषः' तस्मिन् गजारौ। न सन्ना असन्ना 'तत्पुरुषः'। शितं च तदारं च शितारं 'कर्मधारयः'। अतिशयेन भाऽतिभा 'तत्पुरुषः'। शितारवदतिभा यस्याः सा शिता० 'बहुव्रीहिः'। नीहाराश्च ताराश्च नीहा० 'इतरेतरद्वन्द्वः'। नीहारतारावद् वलक्षो नीहार० 'तत्पुरुषः'। तस्मिन्नीहा०। न विद्यते मदो यस्याः साऽमदा 'बहुव्रीहिः'। इति काव्यार्थः ॥ ४ ॥

॥ इति श्रीमद्वृद्धपण्डितश्री५श्रीदेवविजयगणिशिष्यपं०जयविजयगणिविरचितायां श्रीशोभनस्तुतिवृत्तौ श्रीवर्धमानस्वामिनः स्तुतेर्व्याख्या ॥ इति श्रीशोभनस्तुतिवृत्तिः सम्पूर्णा ॥

अथ प्रशस्तिः—

श्रीविजयसेनसूरी–श्वरस्य राज्ये सुयौवराज्ये तु ।
श्रीविजयदेवसूरे–रिन्दुरसाब्धीन्दुमितवर्षे ॥ १ ॥–आर्या

समधीत्य वाचकेन्द्र–श्रीमत्कल्याणविजयगणिशिष्यात् ।
श्रीधर्मविजयवाचक–शिरोमणेः श्रुतनिधेः किञ्चित् ॥ २ ॥–आर्या
श्रीदेवविजयविदुषां, शिष्योऽकृत शोभनस्तुतेर्वृत्तिम् ।
जयविजयः सुखबोधा–मल्पमतीनुपचिकीर्षुरिमाम् ॥ ३ ॥–आर्या
श्रीशोभनस्तुतेर्वृत्तेर्ग्रन्थाग्रं प्रतिपाद्यते ।
पञ्चाशत्त्रिशतीयुक्तं, सहस्रद्वितयं मया ॥ ४ ॥–अनुष्टुप्

ग्रन्थाग्रं २३५० ।

सि० वृ०—सरभसनतेति । हे अम्बिके !–अम्बिकानाम्नि देवि ! त्वं–भवती भव्यलोकं–भविकजनं परम्–उत्कृष्टं यथा स्यात् तथा सुतरा अव–रक्षेत्यर्थः । 'अव रक्षणे' धातोः 'आशीःप्रेरणयोः' ( सा० सू० ७०३ ) कर्तरि परस्मैपदे मध्यमपुरुषैकवचनम् । अत्र 'अव' इति क्रियापदम् । का कर्त्री ? । त्वम् । कं कर्मतापन्नम् ? । भव्यलोकम् । भव्यलोकानां बहुत्वेऽपि जात्यपेक्षयैकवचननिर्देशः । कथम् ? । परम् । कथम् ? । सुतराम् । त्वं कथंभूता ? । 'परमवसुतराङ्गजा' अतिशयेन परमवसू–उत्कृष्टतेजसौ अङ्गजौ–पुत्रौ यस्याः सा तथा । पूर्वभवापेक्षया एतद् विशेषणम् । पुनः कथंभूता ? । 'आरावसन्नाशितारातिभारा' आरावो–ध्वनिविशेषः तेन सन्नाशितः–सम्यगदर्शनं नीतः अरातिभारः–शत्रुसमूहो यया सा । पुनः कथंभूता ? । 'भासिनी–भासनशीला । पुनः कथंभूता ? । 'हारतारा' हारेण–मौक्तिकस्रजा तारा–उज्ज्वला । पुनः कथंभूता ? । 'बलक्षेमदा' बलं–सामर्थ्यं क्षेमं–कल्याणं अनयोः 'इतरेतरद्वन्द्वः', ते ददातीति तथा । पुनः कथंभूता ? । 'असन्ना' न सन्ना असन्ना, अखिन्नेत्यर्थः । पुनः कथंभूता ? । 'शितारातिभा' शितं–तनूकृतं यदारं–पित्तलं तस्येव अतिभा–अतिशयेन प्रभा यस्याः सा तथा । "रीरिः ( तिः ) स्त्रियामारकूटो न स्त्रियामथ ताम्रकं" इत्यमरः ( श्लो० १९०० )। पुनः कथंभूता ? । 'अमदा' न विद्यते मदो–दर्पो यस्याः सा, मदरहितेत्यर्थः । कस्याम् ? । भासि–दीप्तिविषये । अवशिष्टानि सर्वाणि अम्बिकायाः सम्बोधनानि । तेषां व्याख्या त्वेवम्–हे 'सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फुरद्रश्मिसारक्रमाम्भोरुहे !' सरभसं–सवेगं नतः–प्रणतो यो नाकिनारीजनः–देवाङ्गनालोकः तस्य उरोजपीठीषु–स्तनपीठिकासु लुठन्तः–इतस्ततः परिस्खलन्तस्ताराः–उज्ज्वला ये हाराः–कण्ठाभरणानि तेषां स्फुरन्तः–प्रसरन्तो ये रश्मयः–मयूखास्तैः सारे–कर्बुरीभूते क्रमाम्भोरुहे–चरणारविन्दे यस्याः सा तस्याः सम्बोधनं हे सरभस० । "सारः शबलवातयोः" इति विश्वः । हे संस्थिते !–अधिरूढे ! । कस्मिन् ? । 'गजारौ' गजानामरिः गजारिः तस्मिन्, केसरिणीत्यर्थः । कथंभूते गजारौ ? । अजिते–केनाऽप्यनभिभूते । पुनः कथंभूते ? । 'क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटोत्कृष्टकण्ठोद्भटे' क्षणरुचिः–तडित् तद्वत् रुचिरा–मनोज्ञा उरवो–विशालास्ताश्च ताश्चञ्चन्त्यः–दीप्यमाना याः सटाः–केसरास्ताभिः सङ्कटो–व्याप्तः स चासावुत्कृष्टः–अतिशायी यः कण्ठो–निगरणं तेनोद्भटः–करालस्तस्मिन् । पुनः कथंभूते ? । राजिते–शोभिते । पुनः कथंभूते ? । 'नीहारतारावलक्षे' नीहारो–हिमं तारा–नक्षत्राणि अनयोः 'द्वन्द्वः', तद्वद् वलक्षः–धवलस्तस्मिन् । "अवदातगौरशुभ्रवलक्षधवलार्जुनाः" इति

हैमः ( का० ६, श्लो० २९ ) । हे अम्ब !—मातः ! । 'अम्बादीनां धौ ह्रस्वः' ( सा० सू० २०१ ) इत्यनेन ह्रस्वत्वम् । दण्डकच्छन्दोऽदः । 'तदूर्ध्वं चण्डवृष्ट्यादि—दण्डकाः परिकीर्तिताः' इति च तल्लक्षणम् ॥

इति श्रीमहाराजाधिराजपादसाहश्री**अकब्बर**सूर्यसहस्रनामाध्यापकश्री**शत्रुञ्जय**तीर्थकरमोचनाद्यनेकसुकृतविधापकमहोपाध्यायश्री**भानुचन्द्र**गणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदितपातिसाहश्री**अकब्बर**जल्लालदीनप्रदत्तखुस्फहमापराभिधानमहोपाध्यायश्री**सिद्ध(द्धि)चन्द्र**गणिविरचितायां **शोभनाचार्य**नाम्ना विहितायाः **शोभनस्तुतेः** टीकाया श्रीमहावीरतीर्थकरस्येयं स्तुतिवृत्तिः । तत्समाप्तौ च समाप्ता **श्रीशोभनस्तुतिवृत्तिः** ॥

सौ० वृ०—सरभसेति । हे 'अम्ब !' हे मातः ! । 'अम्बादीनां धौ ह्रस्वः' ( सा० सू० २०१ ) इति वचनात् हे अम्ब ! । हे अम्बिके ! सिद्धायिकापरनाम्नि ! देवि ? । पुनः (?) सरभसं-सहर्षं सवेगं यथा स्यात् तथा नतः-प्रणतो यो नाकिनां-देवानां नारीजनः-स्त्रीगणः तस्य उरोजाः-स्तनाः तेषां पीठी-स्थली तस्यां लुठन्तः-इतस्ततः चलन्तो ये ताराः-निर्मला हाराः-मौक्तिकमालाः तेषां स्फुरन्तः-देदीप्यमानाः रश्मयः-किरणाः तैः कृत्वा सारं-प्रधानं कर्बुरं वा क्रमाम्भोरुहं-चरणपद्मं यस्याः सा सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फुरद्रश्मिसारक्रमाम्भोरुहा, तस्याः सं० हे 'सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फुरद्रश्मिसारक्रमाम्भोरुहे ! त्वं-भवती भव्यलोकं सुतरां परं-प्रकर्षेण अव इत्यन्वयः । 'अव' इति क्रियापदम् । का कर्त्री ? । 'त्वम्' । 'अव' रक्ष । कं कर्मतापन्नम् ? । 'भव्यलोकम्' । भव्यलोकानां बहुत्वेऽपि जात्यपेक्षयैकवचननिर्देशः । कथम् ? । 'सुतरां' अतिशयेन शोभनतरं भवति यथा स्यात् तथा । किंविशिष्टा त्वम् ? । परमं-प्रकृष्टं अतिशयेन वसु-तेजो यस्य स तादृशः अङ्गजः-पुत्रो यस्याः सा 'परमवसुतराङ्गजा' यद्वा परमवसुतरौ द्वौ अङ्गजौ यस्याः सा 'परमवसुतराङ्गजा' । पुनः किंविशिष्टा त्वम् ? । आरावेण-शब्देन हुंकारेण सन्तः-विद्यमाना नाशिताः-त्रासिताः अरातीनां-शत्रूणां भाराः-समुदाया यया सा 'आरावसन्नाशितारातिभारा' । पुनः किंविशिष्टा त्वम् ? । हारवत् तारा-उज्ज्वला निर्मला 'हारतारा' । पुनः किंविशिष्टा त्वम् ? । बलं-शरीरसामर्थ्यं क्षेमं-कल्याणं तद्द्वयं ददातीति 'बलक्षेमदा' । पुनः किंविशिष्टा त्वम् ? । 'भासिनी' तेजोभरैर्दीप्ता-भासनशीला । हे 'अजिते' ! ( अनभिभूते ! ) । हे 'संस्थिते !' अध्यासिते ! । कस्मिन् ? । 'गजारौ' गजस्य अरिः-शत्रुः गजारिः तस्मिन् गजारौ, सिंहाधिरूढा इत्यर्थः । पुनः किंविशिष्टा त्वम् ? । 'अमदा' मदरहिता, निरहङ्कारिणीत्यर्थः । कस्याम् ? । 'भासि' स्वप्रभायाम् । पुनः किंविशिष्टा त्वम् ? 'असन्ना' अखिन्ना-श्रमरहिता । पुनः किंविशिष्टा त्वं ? । शितः-तीक्ष्णीकृतः य आरः-निर्धूमाङ्गारः स्वर्णस्याङ्कुशाग्रं वा तद्वदतिशयेन भा-प्रभा यस्याः सा 'शितारातिभा' । किंविशिष्टे गजारौ ? । क्षणरुचिः-विद्युत् तद्वद् रुचिरा-मनोहरा उरवः-महत्यः चञ्चन्त्यो-दीप्यमानाः तादृश्यो याः सटाः ताभिः सङ्कटः-सङ्कीर्णः तादृशः उत्कृष्टो यः कण्ठः-निगरणः तेन उद्भटः-प्रधानः क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटोत्कृष्टकण्ठोद्भटः तस्मिन् क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटोत्कृष्टकण्ठोद्भटे । पुनः किंविशिष्टे गजारौ ? :

---

१ श्रीभाण्डारकरऑरियेन्टलइन्स्टिट्युट्संज्ञकसंस्थायाः प्रत्यां तु अयं पाठः—इति

निरतीचारचारित्राः, सौजन्यगुणशालिनः ।
भ्रातरो **भावचन्द्राह्वा**, आद्यादर्शमलीलिखन् ॥

भद्रं भूयाल्लेखकपाठकयोः ।

यादृशं पुस्तके दृष्टं, तादृशं लिपि( खि )तं मया ।
यदि शुद्धमशुद्धं वा, मम दोषो न दीयते ॥

संवत् १७५८ वर्षे फाल्गुनासितद्वितीयायां लिपीकृतं पं० **सुमतिविजय**गणिशिष्यभुजिष्यमुनि**रामविजये**न स्ववाचनार्थं श्रीबरहानपुरवरे ।

श्रीः ॥ कल्याणमस्तु ॥ श्रीः । छः ॥

नीहारो-हिमं तारा-नक्षत्राणि तद्वल्लक्षणो मलः ( ? ) नीहारतारावलक्षः तस्मिन् ' नीहारतारावलक्षे । राजिते अजिते नीहारतारावलक्षे एतद्विशेषणत्रयं गजारौ इत्यस्य कृतं, एतद्विशेषणत्रयं अम्बिकायाः सम्बोधनेऽपि भवति । एतादृशा अम्बिका त्वं भव्यलोकान् अव-त्रायस्व । इति पदार्थः ।

अथ समासः—"रभसं (सो?) वेगहर्षयोः" इति (विश्व०)वचनात् रभसेन सहितं सरभसं, सरभसं यथा स्यात् तथा नतः सरभसनतः, नाकं अस्यास्तीति नाकी, नाकिनो नार्यः नाकिनार्यः, नाकिनार्य एव जनः ( नाकिनारीजनः ), सरभसनतश्चासौ नाकिनारीजनश्च सरभसनतनाकिनारीजनः, उरसि जायन्ते इति उरोजाः, सरभसनतनाकिनारीजनस्य उरोजाः सरभसनतनाकिनारीजनोरोजाः, सरभसनतनाकिनारीजनोरोजानां पीठी सरभसनतनाकिनारीजनोरोजपीठी, सरभसनतनाकिनारीजनोरोजपीठ्यां लुठन्तः सरभसनतनाकिनारीजनोरोजपीठीलुठन्तः, ताराश्च ते हाराश्च तारहाराः, सरभसनतनाकिनारीजनोरोजपीठीलुठन्तश्च ते तारहाराश्च सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहाराः, स्फुरन्तश्च ते रश्मयश्च स्फुरद्रश्मयः , सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहाराणां स्फुरद्रश्मयः सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फुरद्रश्मयः, क्रमावेव अम्भोरुहं क्रमाम्भोरुहं, सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फुरद्रश्मिभिः सारं-प्रधानं कर्बुरितं वा क्रमाम्भोरुहं यस्याः सा सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फुरद्रश्मिसारक्रमाम्भोरुहा, तस्याः सं० हे सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फुरद्रश्मिसारक्रमाम्भोरुहे ! । परमं च तद् वसु च परमवसु, अतिशयेन परमवसु इति परमवसुतरः, परमवसुतरः अङ्गजो यस्याः सा परमवसुतराङ्गजा, यद्वा परमश्च वसुतरश्च परमवसुतरौ परमवसुतरौ नामानौ ( ? ) अङ्गजौ यस्याः सा परमवसुतराङ्गजा । अरातीनां भारः अरातिभारः, नाशितश्चासौ अरातिभारश्च नाशितारातिभारः, आरवेण-हुंकारेण सन्-विद्यमानः नाशितारातिभारो यया सा आरावसन्नाशितारातिभारा । हारवत् तारा हारतारा । बलं च क्षेमं च बलक्षेमे, बलक्षेमे ददातीति बलक्षेमदा । क्षणं रुचिः यस्याः सा क्षणरुचिः, क्षणरुचिवद् रुचिराः क्षणरुचिरुचिराः, क्षणरुचिरुचिराश्च ता उरवश्च क्षणरुचिरुचिरोरवः,क्षणरुचिरुचिरोरवश्च ताः चञ्चन्त्यश्च क्षणरुचिरुचिरोरुचञ्चन्त्यः, क्षणरुचिरुचिरोरुचञ्चन्त्यश्च ताः सटाश्च क्षणरुचिरुचिरोरुचञ्चत्सटाः, क्षणरुचिरुचिरोरुचञ्चत्सटाभिः सङ्कटः क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटः, उत्कृष्टश्चासौ कण्ठश्च उत्कृष्टकण्ठः, क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटश्चासौ उत्कृष्टकण्ठश्च क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटोत्कृष्टकण्ठः, क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटोत्कृष्टकण्ठेन उद्भटः क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटोत्कृष्टकण्ठोद्भटः, तस्मिन् क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटोत्कृष्टकण्ठोद्भटे। सम्यक् स्थिता संस्थिता, तस्याः सं० हे संस्थिते ! । भव्यश्चासौ लोकश्च भव्यलोकः, तं भव्यलोकम् । गजानां अरिः गजारिः, तस्मिन् गजारौ । न सन्ना असन्ना, अक्षीणा इत्यर्थः । शितं च तत् आरं च शितारं, शितारवत् अतिशयेन भा-कान्तिः यस्याः सा शितारातिभा । भासते इति भासिनी । नीहाराश्च ताराश्च नीहारताराः, नीहारतारावत् वलक्षो नीहारतारावलक्षः, तस्मिन्नीहारतारावलक्षे । नास्ति मदो यस्याः सा अमदा । इति तुर्यवृत्तार्थः ॥ ४ ॥

श्रीमद्वीरजिनेन्द्रस्य, स्तुतेरर्थो लिवीकृतः ।
सौभाग्यसागराख्येन, सूरिणा ज्ञानसेविना ॥ १ ॥

॥ इति श्रीचतुर्विंशतितमवीरजिनस्तुतिः समाप्ता । तत्समाप्तौ च समाप्ता श्रीशोभनदेवाचार्यकृता शोभनस्तुतिः ॥ ४।२४।९६ ॥

---

१ ' तद्वद् वलाक्षो-धवलः ' इति प्रतिभाति । २ ' परमं वसु यस्य स परमवसुः ' इति प्रतिभाति ।

( अथ प्रशस्तिः— )

श्रीमत्तपागच्छसुधीर्वितन्द्रः
श्रीहीरविजयाभिधसूरिचन्द्रः ।
यदुक्तिमाकर्ण्य दयार्द्रचेता
बभूव साहिश्रीअकब्बराख्यः ॥ १ ॥ –उपजातिः

जेजीयाख्यकरोव्यमोचनयतं स्वाज्ञां चिरं ग्राहिता-
नेके निर्वृतयोऽक्षतं च गुरु संशत्रुञ्जयाख्यं परम् ।
येन द्वादश वासराश्च विहिताः सत्त्वाभयोत्सर्जनात्
शुद्धाः शुद्धगुणैरनेकविहितं धर्मादिकृत्यं मुदा ॥ २ ॥ –शार्दूल०

तत्पट्टे विजयादिसेनसुगुरुर्जातः सुधादीधिति-
स्तत्पट्टोदयभानुभानुरभवद् देवेशवन्द्यक्रमः ।
श्रीमच्छ्रीविजयादिदेवसुगुरुः सूरीश्वरः शङ्कर-
स्तत्पट्टे विजयप्रभाख्यसुगुरुः सूरीशसेन( शीत ? )द्युतिः ॥ ३ ॥ –शार्दूल०

तत्पट्टेऽजनि शीतरश्मिसदृशः संविज्ञचूडामणिः
श्रीज्ञानाद्विमलाभिधानसुगुरुः सूरीशवास्तोष्पतिः ।
तत्पट्टाम्बरभास्वदर्कसदृशोऽनूचानवर्योपमः
सौभाग्यादिमसागराख्यसुगुरुस्तेनेयमाविष्कृता ॥ ४ ॥ –शार्दूल०

रम्या शोभनपण्डितेन विहिता श्रीमज्जिनानां स्तुति-
स्तद्वृत्तिर्विहिता सुबोधकलिता प्रेक्षावतां ज्ञप्तये ।
श्रीमानादिमसागराः समभवन् पूर्वे बुधा विश्रुता
एकैकस्य पठ(द)स्य युक्तिशतशो व्याख्या कृताऽनेकशः ॥ ५ ॥ –शार्दूल०

सौभाग्यसूरिणा चेयं, कृता वृत्तिर्मनोरमा ।
बन्दिरे स्तम्भतीर्थेऽस्मिन्, श्रीमत्पार्श्वप्रसादतः ॥ ६ ॥ –अनु०

श्रीज्ञानविमलसूरीश्वरेण संशोधिता चेयम् ।
वसुमुनिमुनिविधु(१७७८)वर्षे माघोज्ज्वलसप्तमीदिवसे ॥ ७ ॥ –आर्या

इति श्रीप्रशस्तिः स्वस्तिकारिणी भूयाद् भूरिभक्तिभृतां जनानाम् । लेखकपाठकयोर्मङ्गल-मालिका बालिकावदालिङ्गतुतराम् ॥ इति श्रेयःश्रेणयः सन्तु । स्तुतिः समाप्तिमार ।

अङ्केन्दुगजभूवर्ष( १८१९ )-मिते मास इषे सिते ।
कर्मवाग्यष्टमीयुक्ते[1], श्रीमत्सूरतबन्दिरे ॥ १ ॥ अनु०

प्रौढाह्वयेन प्रालेखि, साधुना पुस्तकं शुभम् ।
आद्यादिविजयप्रान्त-स्तस्य हेतोर्मया मुदा ॥ २ ॥ युग्मम्

लेखनं पेषणं तुल्यं, बुधा मुधा वदन्त्यपि ।
लेखने गात्रसंरोधः पेषणे गात्रचेष्टितम् ॥ ३ ॥ –अनु०
यादृशं लेख्यपत्रसङ्घाते दृष्टं तादृशमलेखि ।

---

१ कर्मसाक्ष्यष्टमीयोगे इति प्रतिभाति ।

दे० व्या०--सरभसमिति। हे अम्बिके ! सुतराम्-अत्यर्थं यथा स्यात् तथा भव्यलोकं त्वं अव-रक्षेत्यन्वयः। 'अव रक्षणे' धातुः। 'अव' इति क्रियापदम् । का कर्त्री ?। त्वम्। कं कर्मतापन्नम् ?। भव्यलोकम्। किंविशिष्टं भव्यलोकम् ?। परम्-उत्कृष्टं, संप्राप्तसम्यक्त्वात्। किंविशिष्टा त्वम् ?। 'परमवसुतराङ्गजा' परमवसुतरौ-अतिशयेन प्रकृष्टतेजसौ अङ्गजौ-पुत्रौ यस्याः सा। यद्यपि देव्याः उरसः पुत्राभावः, तथापि प्राग्भवीयवितावबसेयौ। पुनः किंविशिष्टा ?। 'आरावसन्नाशितारातिभारा' आरावेण-शब्देन सन्नाशितो-नाशं प्रपितः अरातिभारः-शत्रुसमूहः यया सा तथा। पुनः किंविशिष्टा ?। भासिनी-भासनशीला। ( पुनः किंविशिष्टा ? ) 'हारतारा' हारवत् तारा-उज्ज्वला। पुनः किंविशिष्टा ?। 'बलक्षेमदा' बलं च क्षेमं च ददातीति बलक्षेमदा। पुनः किंविशिष्टा ?। असन्ना-अखिन्ना। न सन्ना असन्नेति विग्रहः। पुनः किंविशिष्टा ? 'शितारातिभा शितारस्येव-तनीकृतपित्तलस्येव भा-कान्तिः यस्याः सा तथा। आरस्य-पित्तलस्य अतिक्रान्ता भा-दीप्तिर्यया: सा तथा। पुनः किंविशिष्टा ?। अमदा-मदरहिता। नास्ति मदो यस्याः सा तथेति विग्रहः। पुनः किंविशिष्टा ?। आसिता-उपविष्टा। कस्मिन् ?। गजारौ-सिंहे। किंविशिष्टे गजारौ ?। 'नीहारतारावलक्षे' नीहारो-हिमं तारा-नक्षत्राणि तद्वद् वलक्षे-धवले। "वलक्षधवलार्जुनाः" इत्यभिधानचिन्तामणिः ( का० ६, श्लो० २९ )। पुनः किंविशिष्टे ?। 'क्षणरुचिरुचिरोरुचञ्चत्सटासङ्कटोत्कृष्टकण्ठोद्भटे' क्षणरुचिरुचिराभिः-विद्युद्दीप्तिभिः उरुभिः चञ्चन्तीभिः सटाभिः सङ्कटः-उत्कृष्टो यः कण्ठो-गलकन्दलस्तेन उद्भटे-करालें। हे 'सरभसनतनाकिनारीजनोरोजपीठीलुठत्तारहारस्फुरद्रश्मिसारक्रमाम्भोरुहे !' सरभसं-वेगेन नतः-प्रणतो यो नाकिनारीजनः-अमरवधूवर्गः तस्य उरोजपीठीषु-स्तनपर्यङ्किकासु लुठतां-इतस्ततश्चलतां हाराणां स्फुरद्रश्मिभिः सारे-कर्बुरे क्रमाम्भोरुहे-चरणकमले यस्याः सा तस्या आमन्त्रणम्। हे अजिते !-अतिरस्कृते !। हे राजिते[1] !-शोभिते !। कस्याम् ?। भासि-दीप्तिविषये। हे अम्ब !-हे मातः! । अम्बादीनां धौ ह्रस्वः ( सा० सू० २०१ ) इति सूत्रेणात्वह्रस्वः । एतानि सर्वाणि देव्याः सम्बोधनपदानि॥ इति चतुर्थदण्डकार्थः॥

इति श्रीशत्रुञ्जयकरमोचनाद्यनेकसुकृतकारिमहोपाध्यायश्री ५ श्रीभानुचन्द्रगणिशिष्येण पण्डितप्रकाण्डमण्डलाखण्डलेन पण्डितश्रीश्री१०८श्रीदेवचन्द्रेण कृतायां शोभनस्तुतिशिशुबोधिनीटीकायां समाप्तिमागाच्चतुर्विंशतितमजिनस्तुतिः॥ शुभं भवतु॥ श्रीरस्तु॥ श्री॥ श्री॥ छ॥ श्री॥ श्री॥

---

१ मूलकाव्ये तु 'संस्थिते !' इति पाठः।



# स्तुतिचतुर्विंशतिकायाः

## ॥ पाठान्तराणि ॥

### ( मुनिराजश्रीचतुरविजयसङ्कलितानि )



| पृष्ठम् | पङ्क्तिः | मुद्रितपाठः | पाठान्तरम् |
|---|---|---|---|
| १ | २० | चतुर्विंशतिजिनस्तुतीः | चतुर्विंशतिजिनानां स्तुतीः |
| ४ | ५ | संपूर्वः | संपूर्वकः |
| ४ | ७ | हेर्लोपः | हेर्लुक् |
| ६ | ३१ | संस्कृतवचनेष्वपास्तमानमलः | संस्कृतवचनस्त्वपास्तमानमलः |
| ७ | २२ | निष्पादयेत्यर्थः | निष्पादयेत्यन्वयः |
| ७ | २९ | आपद्-विपद् | आपद्-विपत्तिः |
| ८ | २८ | मन्दा आरवा येषां ते | मन्द आरवो येषां ते |
| ९ | ५ | युष्मभ्यं पान्तु | युष्मान् पान्तु |
| १० | ७ | नोच्चैर्जल्पन्ति, नान्येषां स्वं ज्ञापयन्तीति भावः । | नोच्चैर्जल्पनेन अन्येषां स्वं ज्ञापयन्तीति भावः । |
| १० | २९ | सुष्ठु मान्यते-पूज्यते आभिः इति समासः | सुष्ठु मान्यते-पूज्यते इति सुमनसः |
| ११ | २ | पत्पदोऽङ्घ्रिश्चरणोऽस्त्रीषु | पत्पदोऽङ्घ्रिश्चरणोऽस्त्रीति |
| १३ | २३ | दीर्णोऽङ्गजो यैस्ते | दीर्णोऽङ्गजो येषां ते |
| १८ | १७ | स्थापयन्ती | स्थापयती |
| २१ | १३ | प्रथमपुरुषैकवचने णप् | प्रथमपुरुषैकवचनं णप् |
| २५ | २८ | तीर्थकरागम ! | तीर्थङ्करागम ! |
| ३२ | १७ | मारो-मदनो | मारः-कामः |
| ३४ | २७ | ‘ द्वन्द्वः ’ | ‘ इतरेतरद्वन्द्वः ’ । |
| ३९ | १६ | तच्छब्दस्याभिव्याप्य यच्छब्दघटनामाह | तच्छब्दसाचिव्याद् यच्छब्दघटनामाह |
| ३९ | २६ | तादृशैः मानवैः | तादृशैरपि मानवैः |
| ४२ | २० | ततश्चायमर्थः | तयोश्चायमर्थः |
| ४५ | ५ | तत्पुरुषः | उभयत्रापि तत्पुरुषः |
| ४५ | १९ | धर्मचक्रवर्तिनः | धर्मचक्रवर्तित्वेन |
| ४५ | ३० | न्याय्यमेव तथापि | तथापि न्याय्यमेव |
| ५० | १३ | प्रणिपातविषयीकुरु | प्रणिपातविषयीकुरुष्व |
| ५१ | १७ | द्रुतविलम्बितमाह नमौ मरौ | द्रुतविलम्बितमत्र नमौ मरौ |
| ६४ | २८ | उन्मुत्-हर्षदम् | उन्मुत्-उद्गतहर्षम् |

| पृष्ठम् | पङ्क्तिः | मुद्रितपाठः | पाठान्तरम् |
|---|---|---|---|
| ६६ | १८ | श्रेणी | श्रेणिः |
| ६६ | १९ | क्रियाकारकयोजना | क्रियाकारकयोजनम् |
| ६७ | २८ | " स्त्रियां सामाजिके गोष्ठ्या द्युतिमन्दरयोः सभा " | " स्त्रियां सामाजिके गोष्ठ्यां द्यूतमन्दरयोः सभा " |
| ६८ | ५ | मुक्तवैरिणीत्यर्थः | मुक्तवैरेत्यर्थः |
| ६९ | ११ | दीप्तम् | दीप्रम् |
| ६९ | २७ | तारणबन्धः | तरणबन्धः |
| ७० | १० | परमेष्ठिसिद्धान्तं | परमेष्ठिराद्धान्तं |
| ७० | २२ | तारणार्थं | तरणार्थं |
| ७१ | १८ | पाताले सीदन्तीति | पाताले वसन्तीति |
| ७२ | २८ | गान्धारीनामके ! | गान्धारीनामिके ! |
| ७२ | २९ | आयुधविशेषौ | आयुधविशेषे |
| ७३ | ६ | मुसलशब्दोऽदन्त्योऽप्यस्ति | मुशलशब्दो दन्त्योऽप्यस्ति |
| ७८ | १८ | ततिः—श्रेणिः | ततिः—श्रेणी |
| ८६ | ५ | यस्मिन् ( स ) | यत्र स |
| ८६ | ११ | प्रभा यस्येति | प्रभाऽस्येति |
| ८६ | २० | प्रतिपाद्यमिति सर्वं | प्रतिपाद्यत इति सर्वं |
| ८९ | २८ | भवोद्धरणरूपा | भवोत्तारणरूपा |
| ९३ | १ | असङ्ख्यातानि | सङ्ख्यातीतानि |
| ९३ | १४ | खलीनेऽस्त्री कविर्ज्ञेयः । | खलीने स्त्री कवी ज्ञेयः । |
| ९४ | ८ | सापराधस्य | अपध्यस्य |
| ९६ | ७ | स्वर्णदेहेत्यर्थः | स्वर्णद्युतिदेहेत्यर्थः |
| ९९ | ५ | भासुरं—अग्र्यं | भासुरं—उग्रं |
| १०१ | २२ | धारयन्ती | धारयती |
| १०३ | ६ | " आशुर्व्रीहौ च सत्वरे " | " आशुर्व्रीहौ च सत्वरे " |
| १०५ | १ | मध्यं—अवलग्नं | मध्यं—विलग्नं |
| १०५ | ३५ | पृष्ठभागम् । | पृष्ठिभागम् । |
| १०९ | २३ | बोध्यते | चोच्यते |
| १०९ | ३० | न कृतवानित्यर्थः | न कृतवानिति भावः |
| ११३ | २३ | फलानि पत्राणि भजत | फलानि च पत्राणि च भजते |
| ११३ | २६ | " द्रुतविलम्बितमाह नभौ भरौ " | " द्रुतविलम्बितमत्र नभौ भरौ " |
| ११७ | २८ | न क्षिप्तवती | न हृतवती |
| १२२ | २२ | वानहर्षेण | अभयवानहर्षेण |
| १२३ | १४ | मनोरथो | मनोरथा |

| पृष्ठम् | पङ्क्तिः | मुद्रितपाठः | पाठान्तरम् |
|---|---|---|---|
| १२५ | १३ | "नसमरसला गः षड्भिर्वेदैर्हयै-र्हरिणी मता" | "नसमरसला गः षड्वेदैर्यतौ हरिणी मता" |
| १२८ | १७ | श्रेणिः | श्रेणी |
| १२८ | २५ | किं कुर्वती ? | किं कुर्वन्ती ? |
| १३१ | ९ | ततिः—श्रेणी | ततिः—श्रेणिः |
| १३१ | १२ | यत्पादपांसुः | यत्पादपांशुः |
| १३२ | ५ | यस्याऽसौ | यस्य सः |
| १३५ | २९ | हितानि—कल्याणानि | हितानि—पथ्यानि |
| १३९ | २ | क्षमतीति क्षमा तस्या लाभः | क्षमा—तितिक्षा तस्या लाभः |
| १३९ | ११ | तस्याः शमिनी | रक्षःक्षुद्रग्रहादिप्रतिहतेः शमिनी |
| १४० | ९ | आधारकर्माणि | आधारे कर्मणि |
| १४१ | ९ | क्रियाकारकसण्टङ्कः | क्रियाकारकसंयोगः |
| १४३ | २९ | अर्द्धपादयमकेन | अर्द्धपेटायमकेन |
| १४३ | २६ | ( सभाः—भासहिताः ) | सभाः—सदीप्तिकाः |
| १४४ | १५ | भयच्छिदः | भयभिदः |
| १४४ | २६ | ०वर्तमाना इति | ०वर्त्तन्त इति |
| १४५ | १ | सदानवसुभी राजिना | सदानवसुना राजिताः |
| १५२ | ४ | चाक्षः, | ऽध्यक्षः, |
| १५२ | १७ | उत्कृष्टः | प्रकृष्टः |
| १६१ | १–२ | सा ततः ' नित्यबहुव्रीहिः '। | सा तथेति ' बहुव्रीहिः ' |
| १६६ | १६ | नौः—तरणिः | नौः—तरीः |
| १७४ | २९ | अन्ता—मध्यभागा | अन्ता—मध्यप्रदेशा |
| १७६ | १३ | विदारितमारम् | विदारितस्मरम् |
| १७७ | १५ | तैर्हारि—मनोहरम् | तैर्हारि—मनोज्ञम् |
| १७९ | १७ | परिणामसुखम् | परिणतिसुखम् |
| १८० | २८ | शोभनानि | शोभितानि |
| १८६ | १५ | वाक्चातुर्यलक्षणः | वाक्चातुरीलक्षणः |
| १८८ | १२ | यस्यासौ अभङ्गः | यस्य सोऽभङ्गः |
| १८९ | ८ | एकद्वित्र्यादयो येषु | एकद्वित्र्यादयो यत्र |
| १९० | २३ | हासो—हसनं यस्याः सा | हासो—हसः यस्याः सा |
| १९८ | २३ | तीर्थकरसमूहं | तीर्थङ्करसमूहं |
| २०० | २१ | मघवता—इन्द्रेण | मघवता—महेन्द्रेण |

१ इदं लक्षणं विद्यते काव्यकल्पलतायां ( प्र० १, स्त० २ )।

| पृष्ठम् | पङ्क्तिः | मुद्रितपाठः | पाठान्तरम् |
|---|---|---|---|
| २०२ | १३ | उत्कृष्टः | प्रकृष्टः |
| २०२ | १९ | भीश्च | भियश्च |
| २०५ | ५ | समा चासौ तनुश्चेति | समा चासौ तनुश्च समतनुरिति |
| २१२ | ६ | समृद्धिर्यस्याः | समृद्धिर्यस्यां |
| २१६ | २६ | “ मेचकः शितिकण्ठाभः ” | “ मेचकः शिखिकण्ठाभः ” |
| २२४ | ३ | अलकेषु—कुन्तलेषु | अलकेषु—कुरुलेषु |
| २२७ | ४ | स्वस्वकान्तिसम्भाग० | स्वस्वकान्तिसंविभाग० |
| २३१ | १८ | भवन्त्येभिरिति वा | भव्यमेभिरिति वा |
| २३१ | २३ | पवनकल्प इति | पवनतुल्य इति |
| २३२ | २२ | विक्षेपय | विक्षिप |
| २३५ | २१ | कररुहाः | करशूकाः |
| २५२ | १४ | क्रियाकारकयोगः । | क्रियाकारकप्रयोगः । |
| २५४ | ३० | चतुर्थवृत्तार्थः । | तुर्यवृत्तार्थः । |
| २५६ | १८ | भुजौ यस्य | भुजे यस्य |
| २५६ | १९ | आचितः | चितः |
| २६० | १० | असदृशा | असदृशी |
| २६१ | १० | मतिः—प्रज्ञा | मतिः—प्रतिभा |
| २६४ | ६ | कुर्वती | कुर्वन्ती |
| २६४ | २९ | संसर्गः | सम्पर्कः |
| २६४ | ३१ | निर्मला | अनघा |
| २७८ | १२ | उत्सवावहानि | उत्सवकल्पानि |
| २७८ | १७ | शोभीनि | शोभितानि |
| २८५ | १४ | गम्भीरेतियावत् | दुरवगाहेतियावत् |



# ॥ टीकाचतुष्टयान्तर्गतसाक्षीभूतपाठाः ॥



| पाठः | टीकाङ्कः | पृष्ठाङ्कः |
|---|---|---|
| **अजये** | | |
| रजोऽयं रजसा सार्धं स्त्रीपुष्पगुणधूलिषु | २ | १३२ |
| **अभिधानचिन्तामणौ** | | |
| * अङ्कुलिः कर्णिका दन्त-विषाणौ स्कन्ध आसनम् | २ | १८८ |
| अथ रजसि स्युर्धूली-पांशु-रेणवः | २ | २४७ |
| अनन्तजित् अनन्तः | ३ | १५५ |
| अपकृष्टं प्रतिकृष्टं याप्यं रेफोऽवमं ब्रुवम् | २ | ३९ |
| * अभ्यन्तरमन्तरालं विचालं मध्यमन्तरे | २ | ६८ |
| * अम्बुवृद्धौ पूरः प्लवश्च सः | २ | १५४ |
| अलसेक्षणा मृगाक्षी | ४ | ११७ |
| * अवदातगौरशुभ्र (वलक्षधवलार्जुनाः) | ४ | १९ |
| * अहिंसा-सूनृता-ऽस्तेय-ब्रह्मा-ऽकिञ्चनता यमाः | १ | ४४ |
| आपृच्छाऽऽलापः सम्भाषः | ४ | २७७ |
| आप्तोक्तिः समया ऽऽगमौ | ४ | २१५ |
| आभा राढा विभूषा श्रीः | ४ | ७ |
| * आम आमय आकल्यमुपतापो गदः समाः | २ | ५ |
| * आयतिस्तूत्तरः कालः | २ | १४८ |
| आरामः कृत्रिमे वने | ४ | ७१ |
| आलस्यं तन्द्रा कौसीद्यम् | १ | ८५ ) |
| ” | २ | ८६ ) |
| * आसारो वेगवान् वर्षः | २ | १३६ ) |
| ” | ३ | १३६ ) |
| उत्पलं स्यात् कुवलयम् | ४ | २७१ |
| * उदन्तोऽथाह्वयोऽभिधा । गोत्रसंज्ञानामधेया० | २ | २१६ |

---

१ श्रीयशोविजयजैनग्रन्थमालायां मुद्रितोऽयं सटीको ग्रन्थः २४४१तमे वीरसंवति ।

* एतच्चिह्नेन सूच्यते यदुतायं पाठो वर्तते द्वितीयायां तुरीयायां च टीकायाम् ।

२ 'दन्तौ विषाणौ' इति मुद्रिते ग्रन्थे । ३ 'प्लवोऽपि च' इति मुद्रिते ग्रन्थे ।

१ अन्यत्र काण्डाद्युल्लेखं विहाय तत्करणेऽत्रोद्देशोऽयं यदुत दृष्ट्यादिदोषाद् यत्र स्थलनिर्देशो नाकारि तत्प्रमार्जनं क्रियतेऽधुना । २ 'मती मही' इति मुद्रिते ग्रन्थे । ३ 'गुरुर्धर्मोप०' इति मुद्रिते ग्रन्थे ।

| पाठः | टीकाङ्कः | पृष्ठाङ्कः |
|---|---|---|
| चला शम्पाऽचिरप्रभा | ४ | १९२ |
| चारित्र-चरणे अपि | ४ | २२६ |
| जगती मेदिनी रसा | ४ | ६२ |
| जालं निवहसञ्चयः( यौ ) | ४ | १५ |
| जितो भग्नः पराजितः | ४ | १९६ |
| ज्या कुर्वसुमती मही | २ | ७३ |
| तरवारिकौक्षेयकमण्डलाग्रा असिर्ऋष्टिरिष्टी | २ | २६९ |
| तपनीयचामीकरचन्द्रभर्मार्जुननिष्ककातस्वरकर्बुराणि | २ | २५३ |
| तोत्रं वेणुकमालानं बन्धस्तम्भोऽङ्कुशः सृणिः | ४ | २५९ |
| तामरसं महोत्पलम् | २ | १५६ |
| तत्सदस्त्वमराः | २ | ९३ |
| तितिक्षा सहनं क्षमा | ४ | १७२ |
| * त्रासस्त्वाकस्मिकं भयम् | ३ | ६२ ) |
| ,, | ४ | २५५ ) |
| दलितं स्फुटितं स्फुटम् | ४ | ६६ |
| * दवो दावो वनवह्निः | १ | ८९ ) |
| ,, | २ | २०५ ) |
| दाराः क्षेत्रं वधूर्भार्या | ४ | ४३ |
| * दैर्घ्यमायाम आनाहः | ४ | ८२ |
| * धनुश्चापोऽस्त्रमिष्वासः कोदण्डः धन्व कार्मुकम् | ४ | १५२ ) |
| ,, | २ | १६१ ) |
| धात्री धरित्री धरणी | २ | २७५ |
| * धामागारं निशान्तं च | २ | ७० |
| धिषणः फल्गुनीभवः | २ | ९४ |
| ध्वान्तं भूच्छायान्धकारम् | ४ | १६५ |
| निर्वाणं ब्रह्म निर्वृतिः | ४ | २७६ |
| निशा निशीथिनी रात्रिः *शर्वरी क्षणदा क्षपा | २ | ५४ |
| निष्णातो निपुणो दक्षः | २ | ९२ |
| * नीपः कदम्बः सालस्तु | २ | २१२ |
| पञ्चशाखः शयः शमः । हस्तः पाणिः करः | ४ | १६१ |

| पाठः | टीकाङ्कः | पृष्ठाङ्कः |
|---|---|---|
| पारापर्यभितो( भूतो ? ) जितो भग्नः पराजितः | २ | ११ |
| परं शत-सहस्राभ्यां * पत्रं राजीव-पुष्करे | २ | २६१ |
| परिस्क( स्य ? )न्दः परिकरः ( का० ३, श्लो० ३७९ ) | ४ | १४० |
| पवित्रं पावनं पूतं | ४ | १८६ |
| पात्रामत्रे तु भाजनम् | ४ | ६६ |
| पादोऽङ्घ्रि( पदोऽह्रि ? )श्चलनः क्रमः | ४ | १९ |
| पाशस्तु बन्धनग्रन्थिः | ४ | १८४ |
| * पिशङ्गः कपिशो हरिः | २ | २३४ |
| प्रियङ्गुः फलिनी श्यामा | ४ | २१० |
| पीतरक्तस्तु पिञ्जरः । कपिलः पिङ्गलः श्यावः | २ | १८० |
| पृष्ठं तु चरमं तनोः | २ | १०५ |
| प्रोज्जासनं प्रशमनं प्रतिघातनं वधः | ४ | १९९ |
| बर्हं पर्णं छदं दलम् | ४ | १०८ |
| बिसप्रसूतं नालीकम् | ४ | २४१ |
| भयं भीर्भीतिरातङ्कः | २ | ३२ |
| भा मयूख-महसी छविर्विभा | २ | १४५ |
| मदनो जराभीरुरनङ्ग-मन्मथौ | २ | ३२ |
| मदो मुन्मोहसम्भेदः | ४ | ३० |
| मधुदीप-मारौ मधुसारथिः स्मरः | २ | ७० |
| मध्योऽवलग्नम् | २ | १०५ |
| मनःशृङ्गारसङ्कल्पात्मानो योनिः | ३ | १५९ |
| * मन्दिरं सदनं सद्म निकाय्यो भवनं कुटः | २ | २८४ |
| ,, | ३ | २८६ |
| महःक्षणोद्धवोद्धर्षाः | ३ | ६ |
| माहा सुरभिरर्जुनी | ४ | ५२ |
| मुत्प्रीत्यामोदसम्मदाः | २ | १०१ |
| मृगनाभिर्मृगमदः | ४ | २२९ |

१ अयमेव पाठः अमरकोशे ( श्लो० १२२९ ) अपि ।

नम०—'नम' प्रणम । नमदमरो--नमत्सुरः सदमरसो--दमरसेन सहितश्चासौ सुमतिः--शोभनमतिश्च तम् । सत्सु मध्येऽसदरो--निर्भयः, संश्चासावसदरश्चेति वा तम् । हे उदार ! । मुदा--हर्षेण जनितः--कृतः अजनितापदस्य--अभवतापदायकस्य पदस्य विभवो येन तम् । 'विभवं' संसाररहितम् । हे नर ! । नरकस्यान्तो यस्मात् तम् । कान्तं--मनोज्ञम् ॥ १ ॥

भवभव०—भवभवं--संसारोद्भवं भयं द्यतीति भवभवभयदा । 'अभयदावली' जिनश्रेणिः । बलीयान् दयोदयः--करुणोदयो यस्याः सा । 'अमायामा' अमाया (अमा--) रोगाः । दद्यात् । अद्य । 'अमितं' अमानम् । 'इतशमा' प्राप्तशमा । 'शं' सुखम् । आदिष्टम्--आज्ञप्तं दिष्टबीजं--धर्माधर्महेतुर्यया । 'अबीजा' निर्जन्मा ॥ २ ॥

दमदम०—'दमदम्' इन्द्रियजयप्रदम् । 'असुगमं' दुर्गमम् । सुष्ठवो (सुष्ठु) गमाः यत्र तत् सुगमम् । 'सदा' नित्यम् । सताम्--उत्तमानां आनन्दनम् । हे 'दयाविद्याविद् !' करुणाशास्त्रज्ञ ! । 'परम्' उत्कृष्टम् । 'अपरं' निःशत्रुकम् । हे 'अस्मर !' निर्मदन ! । स्मर । त्वं किं० ? 'महामहाः' उत्कृष्टं महः--तेजो यस्यासौ । धीरा--अनाकुला धीः--मतिर्यस्यासौ । 'रसमयं' प्रकृष्टरसम् । 'समयं' सिद्धान्तम् ॥३॥

काली०—कालीनाम्नी देवी असरसभावस्य--दौर्जन्यस्य अभावाय--अपनयनाय 'कालीः' सुखालीः 'तनुतात्' कुरुतात् । नयनयोः--लोचनयोः सुखदा--शर्मदायिनी । असुखं--दुःखं द्यति--खण्डयतीति असुखदा । महिभिः--उत्सवविभिः महिता--पूजिता चासौ नुता--स्तुता च, महिभिर्ये महितास्तैर्नुतेति वा, महिमहिताभ्यां नुता--स्तुतेति वा । इतः--प्राप्तः अदितः--अखण्डितः अमानः--अप्रमाणः मानः--अहङ्कारः पूजा वा तत्र या रुचिः--अभिलाषस्तया । रुच्या--मनोज्ञा । अथवा इता--प्राप्ता अदिता--अखण्डिता अमाना मा--लक्ष्मीर्यया, 'रुच्या' भासा 'न अरुच्या' नामनोज्ञा इत्याद्यह्यम् ॥४॥५॥

---

पद्मप्रभेश !०—सन् विश्वासो येषु ईदृशानि मानसानि येषां तेषु दयापर !--करुणातत्पर ! । 'भावितस्य' ध्यानैकाग्रस्य । विश्वे--जगति असमान !--असदृश ! । हे 'सदय !' सकरुण ! सद्भाग्येति वा । हे 'अपर !' नास्ति परः--शत्रुर्यस्य, नास्ति परः--उत्कृष्टो यस्मादिति वा । भात्रि--भविता(तृ) ॥ १ ॥

मूर्तिः शमस्य०—पुण्यानि दधती 'काचन' अनिर्वचनीया 'सभासु' पर्षत्सु 'रराज' बभ्राजे । 'नव्या' नवीना । 'पुण्या' पवित्रा । हे 'अनिकाचन !' दृढकर्मबन्धरहित ! । सह भया वर्तत इति सभा । सुरराजानां--देवेन्द्राणां नव्या--स्तव्या ॥ २ ॥

लिप्सुः पदं०—यमैः--महाव्रतैः परिगतैः--आश्रितैः । पदं किं० ? तया--लक्ष्म्या सहितं सतम्, अतिशयितं सतं सततमम्, यद्वा ततया--विस्तृतया मया--लक्ष्म्या सहितं सततम् । चतुराणाम् उचिता अर्थाः--पुरुषार्था यस्यां सा । 'वाचंयमैः' यतिभिः । रोचितः--श्रद्धितः अर्थो--व्याख्यानं यस्याः सा । 'सततं' निरन्तरम् । 'अश्चतु' पूजयतु ॥ ३ ॥

साहाय्यमत्र०—'अपाता' पातरहिता। 'मुदा' हर्षेण। 'रसमयस्य' प्रकृष्टरसस्य। उदार-समयस्य' प्रकृष्टसिद्धान्तस्य। हे 'निरन्तराये !' अन्तरायरहिते !। 'पातां' रक्षताम्। निरन्तरः— अन्तररहित आयो—लाभो यस्याः सा ॥ ४ ॥ ६ ॥



यदिह—निरस्तः—अपास्तः अकृतक्ष्माऽवनः—अविहितपृथ्वीरक्षणः मदः—अहङ्कारो येन। 'सुरव !' सुशब्द !। 'अधाः' धृतवान्। 'हृद्यशोभ !' कान्तश्रीक !। 'अवतारं' जन्म। 'अवन-मदसुर !' प्रणमद्दानव !। 'बाधाहृत् !' पीडाहर !। 'यशः' श्लोकः। भावेन तारं—उच्चैस्तरं, भावोज्ज्वलमिति वा ॥ १ ॥

जगति०—अदुः—ददति स्म। इता—गता मदः—अहङ्कारः रतं—निधुवनं अपध्यानं—आर्त्तरौद्रद्वयं कान्ता—वनिता च येभ्यस्ते। 'सदा' नित्यम्। 'आशाः' 'दिशः'। 'दुरितं' पापम्। अदरतापं—भयोपतापरहितं यद् ध्यानं शुक्लाख्यं तेन कान्ताः—मनोज्ञाः। सती आशा येषु ते सदाशाः ॥ २ ॥

मुनितति०—हतमुद्यत् तमः—पापं येन तम्। 'अहितदा' अप्रियखण्डनकर्त्री। 'अत्रासा' भयरहिता। 'आधिं' मानसीं व्यथाम्। 'आनन्दिता' मुदिता। 'अरं' अत्यर्थम्। 'असमहितदात्रा' निरुपमप्रियदायकेन। 'साभिमानं' चारुताम्। 'दितारं' खण्डितशत्रुसमूहम् ॥ ३ ॥

अवतु०—'मुदितं' आनन्दितम्। 'अकलितापाया' अप्राप्तान्तराया। महामानसी देवी। 'उदि-तम्' उत्थितम्। 'अकलितापा' सङ्ग्रामोपतापरहिता। 'महामानसीमां' महाऽहङ्कारपराकाष्ठाम् ॥४॥७॥



तुभ्यं०—'नन्तव्य !' नमस्य !। 'अपापं' निष्पापं पुरुषम्। नास्ति दमस्य हतिर्यस्य तस्या-मन्त्रणम्। हे 'सन् !' उत्तम !। नमोऽस्तु। हे 'अहासमाय !' हास्यकपटरहित !। ध्वस्तः कामस्य अनन्तः—अमितः व्यापो—व्यासङ्गो येन। हे 'अपमद !' मदरहित !। 'महते' ऐश्वर्यशालिने। हे 'सन्नमोह !' गतमोह !। 'असमाय' निरुपमाय ॥ १ ॥

श्रेयो०—'मुक्तामाला' मौक्तिकश्रेणिः। असमदैः—अनहङ्कारैः महिता—पूजिता। 'वः' युष्माकम्। 'अधिदाना' अधिकवितरणा। 'आमहीना' रोगरहिता। 'मुक्ता' रहिता। 'माला' मनो-हरश्रेणिः। असमदमानां—निरुपमदमानां हिता—पथ्या। 'बोधिदानां' तीर्थकृताम्। 'अहीना' उत्कृष्टा, नास्ति हीनं—न्यूनं यस्या इति वा ॥ २ ॥

रङ्गद्भङ्गः०—चूलानां—चूलिकानां माला—श्रेणिः तया पीनः—पुष्टः। शमदमौ विद्येते यस्यासौ तेन। असङ्गतायाः—मोक्षस्योपायेन हेतुना हृद्यो—मनोहरः। 'आलापी' आलापकवान्।

'नः' अस्माकम् । 'शमदम्' उपशमदायिनम् । 'अवता' रक्षता । यः 'सङ्गतः' सङ्गतिमान् । 'अपायहृत्' विघ्नहरः ॥ ३ ॥

सा त्वं०—प्राणायामः—प्राणयमः । 'अशुचि' शोकरहिते । 'मतिं' धियम् । 'अतापा' तापरहिता । आपदोऽन्तो यस्याः सा । 'अबलानां' निर्बलानाम् । 'दत्तप्राणा' प्रदत्तबला । या । 'मे' मम । शुचिमतिना—निर्मलबुद्धिना मता—अभीष्टा । पापा एव दन्तावला—इभास्तेषाम् ॥४॥८॥



यस्यातनोत्०—'सुप्रभा' सुकान्तिः । 'अवतारे' जन्मनि । 'शुचिमन्दरागे' निर्मलमेरौ । 'प्रभावतारे' अनुभावोज्ज्वले । 'अशुचि' शोकरहिते । 'मन्दरागे' नीरागे ॥ १ ॥

अभूत्०—'जनितापत्' कृतविपत् । 'एभ्यः' एतेभ्यः । नमोऽस्तु । हे अहसानां—हास्यमोहरहितानाम् इनाः!—स्वामिनः! । 'जनितापदेभ्यः' जन्मतापखण्डकेभ्यः । हसेन—हास्येन अजनितापदेभ्यः—अकृतविगतिभ्य इति वा ॥ २ ॥

वाणी०—महोदयो—मोक्षः । त्रिलोकीं 'अवद्भिः' रक्षद्भिः । 'अनीति' ईतिरहितम् । 'हारि' मनोज्ञम् । 'अहो' इत्याश्चर्ये । 'दयावद्भिः' कृपालुभिः । 'अनीतिहारि' अन्यायहृत् ॥ ३ ॥

जगद्धृति०—'करः' हस्तः । लाभं किं०? अतुला आभा—श्रीर्यस्मात् । 'शं' सुखं ददत् । 'अदम्भवत्याः' अकपटवत्याः ॥ ४ ॥ ९ ॥



जयति०—'वसुमति' धनवति । ददतीत्यविवक्षितकर्म, 'मती' मतवान् 'वसु' धनमिति वा । तरणाय किं०? 'इतरणाय' गतसङ्ग्रामाय । भवे महो दधौ इति व्यस्तरूपकम् ॥ १ ॥

वितर०—(हे) 'तमोहरणे' पापहृत्! । हे 'वलितमोहरणे!' उद्दलिताज्ञानसङ्ग्रामे! ॥२॥

भगवतो०—'परमापदं' परमां विपदम् । 'उन्नतिम्' उदयम् । 'जनयतः' कुर्वतः । 'दमादरात्' दमेन—इन्द्रियजयेन अदरात्—निर्भयात् ॥ ३ ॥

स्तवरवै०—'न परं' न केवलम् । 'अच्छविमानविलासिता' स्वच्छविमानविनोदिता । हे 'परमच्छवि!' उत्कृष्टकान्ति! । मानवि! देवि! । 'न न लासिता' द्वयोर्नञोः प्रकृतार्थगमकत्वाद् उल्लासिता ॥ ४ ॥ १० ॥



जिनवर!०—व्रताम्बुना हृत उदयन् भवदवः—संसारदावानलो येन । 'नतः' प्रह्वीभूतः । तापातङ्काभ्यां—परितापभयाभ्यां मुक्त! । महानाम्—उत्सवानां आगम!—आगमन! । उल्लसत् यद् भवदवनं—त्वद्रक्षणं ततः । 'हन्त' कोमलामन्त्रणे । 'अपातम्' अप्रतिपाति । 'कं' सुखम् । उक्तः—अभिहितः महागमः—महासिद्धान्तो येन ॥ १ ॥

जिनसमुदयं०—'भवं' संसारम् । 'अदरदम्' अभयदम् । 'रुच्या' कान्त्या । 'कन्तं' मनोज्ञम् । भवं किं०? महैः—उत्सवैः कृत्वा अमितं—अगणितं मोहं राति—ददातीति तम् । कुलादीनाम्—

अष्टमदस्थानानामनुकूलताभवो—अनुरूपेणापध्यानचित्तेनोत्थो यो मदस्तं रदति—विलेखयति यस्तम् । 'रुच्या' भक्त्या । अकस्य—दुःखस्यान्तो यस्मात् तम् । 'महामि' पूजयामि । 'तमोहरम्' अज्ञान-हरम् ॥ २ ॥

शुचिगम०—'अनवरतं' निरन्तरम् । 'अलोभावस्थां' निर्दम्भदशामाश्रयन् । समयः किं० ? 'अभितः' सर्वतः अयशो हरन् । गलन् नवरतमलः—अभिनवानिधुवनबद्ध्यमानं कर्म यस्मात् । मनः किं० ? भावस्य—शुभध्यानस्य स्थाम—बलं तस्याश्रयं—गृहम् । नयैः शोभितः ॥ ३ ॥

सुकृत०—हे 'अपविफल!' 'करा' अपगतं विफलं—वन्ध्यं कर्म यस्य, कं—सुखं रातीति करा, अपगतो विफलः—मोघः करो—दण्डो यस्याः सा इत्येकमेव वा पदम् । दिवि—स्वर्लोके त्यागेहा—दानेच्छा यस्याः सा, नृभवस्पृहयालुतया द्योस्त्यागेहा वा यस्याः सा । 'द्युत्या' कान्त्या । 'घनाघनराजिता' मेघवच्छोभिता । घण्टादीनि करे यस्याः सा । 'अगेहा' निर्गृहा । या ( घना० ) बहुपापनरैः—मनुष्यैरजिता ॥ ४ ॥ ११ ॥



पद्मोल्लासे०—सती—शोभना धीर्यस्य । लोकं किं० ? नास्ति पाताशा यस्य तम् । रुचिराश्च पवित्राश्च रुचिरपवित्राः, तान् न सहन्ति(न्ते) ते तदसहाः, ते च ते अरयश्च तेषां प्रभा--कान्तिः, ततो नास्ति सा यस्य तस्यामन्त्रणम् । 'अव' रक्ष । हे 'सद्धीर !' सतां मध्ये धीर ! त्वम्, संश्चासौ धीर-श्चेति वा । त्वं किं० ? 'पाता' रक्षिता । शमे रुचिर्यस्यासौ शमरुचिः । हे 'अपवित्रास !' अपग-तभय ! । हारी—मनोहरः प्रभावो यस्य, अथवा हे शमरुचिर ! शमे रुचिं रातीति शमरुचिरः । 'हे पवित्रासहारिप्रभाव !' वज्रभयहृदनुभाव ! ॥ १ ॥

लोकानां०—'हृद्या' मनोज्ञा । 'राजी' श्रेणिः । 'वने' विपिने । 'अत्र' इह । 'भवतु' अस्तु । दमे रसो यस्याः सा । लोकानां 'अर्थान्' धनादीन् पूरयन्ती । 'अतापा' तापरहिता । 'तमोहा' अज्ञानहरा । या 'राजीवनेत्रा' कमलनयना । भवं तुदतीति भवतुद् । अमरसार्थेन—देवगणेन आनता । 'अपातमोहा' पातमोहाभ्यां रहिता ॥ २ ॥

उत्तुङ्गस्तवय०—शस्तः—प्रशस्तः आदरो यस्य, शस्ते—कल्याणे वा आदरो यस्य । हे 'शस्त !' प्रशस्त !, अदर ! 'निर्भय !' इति पदद्वयं वा । अति—अत्यन्तं क्षतः शुक्—शोको येन तस्मिन् । सन्—शोभनोऽनेकान्तः—स्याद्वादो यत्र । सुकृतं किं० ? 'सिद्धान्तरागः' सिद्धविरह आगो—अपराधो यतस्तत् । सुष्ठवः (ष्ठु)—शोभना आदेशा यत्र तस्यामन्त्रणम् । 'स्तात्' अस्तु । अरा-तीनां—वैरिणां क्षतं यस्मात् एतादृशं यत् शुचि—भाग्यं तस्य सदने ॥ ३ ॥

वाग्दे०—शङ्काया अन्तो यत्र । 'देहि' वितर । वादे किं० ? नव्यानि ईरितानि—प्रेरितानि रणानि येनैतादृशं कुशलं यत्र । वस्तुतः तादृशं कुशलं यस्या इति सम्बोधनमेव वा । प्रसादं किं० ? प्रपूर्णा आशा यस्मात् । हे 'कान्ते !' मनोज्ञे ! । देहिनां—प्राणिनां नव्ये !—स्तुत्ये ! । अरीणां—वैरिणां तरणं—लक्षणया विजयस्तत्र कुशले !—दक्षे ! । सु—शोभना भ्रूः सुभ्रूस्तया ॥ ४ ॥ १२ ॥



नमो हतरणायते !०–हे विमल ! । हे 'हतरणायते !' हतरणा–हतसङ्ग्रामा आयतिः–उत्तरकालो यस्य, हता–अपनीता वा रणायतिर्येन । हे 'सभाजित !' सेवित ! । कैः ? असुरैः । किं० ? 'विभासुरैः' दीप्यमानैः । कया ? 'पुण्याशया' धर्मलिप्सया । हे न समदमाय ! सह मदमायाभ्यां वर्त्तते यः स स० । हे पुण्या० ! पुण्यः–पवित्रः आशयो यस्य । हे 'असभाजित !' न सभया जित असभाजित ! । भया जिता विभा–कान्तिर्यस्य । हे 'विमलविश्वमारक्षते !' मारस्य जनिता क्षतिः मारक्षतिः, विश्वा–सर्वा चासौ मारक्षतिश्च विश्वमारक्षतिः, विमलश्च विश्वमारक्षतिश्च विमलविश्वमारक्षती, विगते ते यस्मात् । अथवा विमला–निर्मला विश्वा–पृथ्वी यस्मात्, मारस्य क्षतिर्यस्मात् इति सम्बोधनद्वयम् । हे विमल !–निर्मल !, विश्वस्य–सर्वस्य मारस्य–रणस्य–क्षतिर्यस्मादिति वा । 'असमदमाय' निरुपमेन्द्रियजयाय । 'मोहतरणाय' मोहस्य तरणं यस्मात् तस्मै । 'विश्वं' जगत् आ–समन्तात् रक्षते ते–तुभ्यं नमोऽस्तु इत्याद्यूह्यम् ॥ १ ॥

महाय तरसा०—अजेषु–सिद्धेषु मध्ये गतिर्येषां एतादृशा ये बोधिदाः–तीर्थकृतस्तेषाम् । 'अहो' इत्याश्चर्ये । 'दया' करुणा । 'वः' युष्माकम् । 'महाय' महोत्सवाय । भवतु । 'तरसा' वेगेन । 'हिता' पथ्या । कीदृशानाम् ? 'भवतुदां' भवं तुदन्तीति भवतुदस्तेषाम् । 'तता' विस्तीर्णा । सह कलहेन अस्ति या सा सकलहा, न तादृग् 'असकलहा' । 'आभया' शोभया कृत्वा 'असमाना' निरुपमाना । महायतेन रसेन–शान्ताख्येन आहिता–स्थापिता । 'जगति' लोके । 'अधिदाना' अधिकं दानं यस्याः सा । 'महोदया' महानुदयो यस्याः । 'दान्तता०' दान्ततया न स्तः सकलौ–निःशेषौ हासमानौ–मोहप्रकृतिभेदौ यस्यां सा । नास्ति भयं–साध्वसं यस्याः सा अभया ॥ २ ॥

क्रियादरमनन्तरा०—'वैभवं' विभुसम्बन्धि मतं । 'मतम्' अभीष्टम् । 'वैभवं' सम्पदम् । 'अरम्' अत्यर्थं क्रियात् । 'अनन्तरागततया' अविरहशिष्यप्रशिष्यादिसन्ततिप्राप्ततया । 'सदा' सर्वदा । 'चितं' व्याप्तं पुष्टम् । समुदा–सहर्षेण इतं–प्राप्तम् । सती आशा यस्य तम् । 'अवता' रक्षता । 'शमवता' शान्तेन । 'अभवेन' भवरहितेन अर्थात् तीर्थकृता । 'उदितं' कथितम्, अत एव 'समुदितं' सामस्त्येन उदयं प्राप्तं 'भवे' संसारे । 'अनोदितम्' अप्रेरितम् । क्रियायामादरो यत्र तत् । अनन्तो यो रागस्तेन ततैः–विस्तीर्णैर्याचितम्–अध्येतुं प्रार्थितम् ॥ ३ ॥

प्रभावितरतादरम्०—रोहिणी शं वितरतात् । कीदृशम् ? ईहितैः–वाञ्छितैः कृत्वा अशुक्–शोकरहितं 'च' पुनः उरु–विस्तीर्णम्, अतिशयितः प्रभावी प्रभावितरः तस्य भावस्तत्ता तस्या आदरो यत्र । 'अरम्' अत्यर्थम् । 'आशु' शीघ्रम् । कीदृशी ? 'प्रभा' प्रकृष्टा भा यस्याः सा । सुरभियाता–गोगता, सा चासौ तारोहिणी च–तारविचारिणी च सुरभियाततारोहिणीति वा । अनन्यजितदण्डे भर्त्तरि आशा यस्य ईदृशो यो मारः–कामस्तेनोचिता–योग्या । सुरेभ्यो भीः–सुरभीस्तया अतता । गुरुणा चापेन राजितः करो यस्याः सा । आ–समन्तात् रोचिता–श्रद्धिता ॥४॥ १३ ॥



**कलितमोदमनन्त०**—कलितः—प्राप्तो मोदो—हर्षो येन। 'अनन्तरसाश्रये' अनन्तः—अपर्यवसानो रसः शान्ताख्यस्तदाश्रये। कलितमसोः—रणमोहयोः दमनम्। 'तरसा' वेगेन।'आश्रये' भजे॥१॥

**जिनवरा गतताप०**—'जिनवराः' तीर्थङ्कराः। गतौ तापदरौ यस्या अत एवोचिता भजमाना ताम् । आजिः—सङ्ग्रामो नवरागो—नवानुरागः ततापद्—विस्तीर्णापत् ताभिररोचिताम्—अनभिमताम् ॥ २ ॥

**सुरसमान०**—सुरसं मानसं—हृदयं यस्य एतादृशो दक्षो—निपुणो गणधरादिः तस्य रहस्य ! । 'ते' तव । घनानि—निबिडानि प्रभासुराणि—देदीप्यमानानि समानानि-मानोपेतानि सन्ति—शोभनानि अक्षराणि यस्य ॥ ३ ॥

**सदसि रक्षति०**—'सदसि' सभायाम्। 'रक्षति' अवति । 'भासुरवाजिनं' दीप्यमानतुरङ्गं इता। 'सदसिः' सत्खड्गा। नास्ति क्षतिर्यस्याः सा अक्षतिः, ईदृशी भा—कान्तिर्यस्याः। 'सुरवा' सुशब्दा । 'जिनं' भगवन्तं प्रणता ॥ ४ ॥ १४ ॥



**श्रीधर्म !०**—कर्मद्रौ—कर्मवृक्षे वारणो—हस्ती तस्य । सती—शोभनाऽऽयतिर्यस्य ॥ १ ॥

**गिरा त्रिजगदुद्धारं०**—भया—कान्त्या असमाना—अनुपमा । श्रिया भासमाना । अततः—अकृतोऽनयो यया सा ॥ २ ॥

**वचः पापहरं०**—'सातङ्के' सभये । बलिभिः—कुतीर्थ्यैः नोदितं—प्रेरितम्॥ ३ ॥

**दद्युः प्रसादाः०**—शक्तिं—बलम् । अत्याजित आदरो यैस्ते ॥ ४ ॥ १५ ॥

—:o:—

**अस्याभूद्०**—'अक्षोदम्' अक्षुण्णम्। 'भरतस्य' भरतक्षेत्रस्य । 'वैभवं' विभुत्वम्। 'अयं' भाग्यम्।वैभवं किं०? सारेण--बलेन अजितम्, आरेण सहाजिर्यत्र तस्य भावस्तत्ता सह तयाऽस्तीति वा। 'दक्षः' निपुणः। 'अदम्भरतस्य' अमायानिधुवनस्य । 'वै' निश्चितम् । 'भवमयं' संसारमय 'साराजितं' श्रीशोभितम् । 'तनु' कुरु । अतः—हेतोः ॥ १ ॥

**येषां चेतसि०**—भवतां किं०? प्रज्ञालाभो—धीप्राप्तिस्तद्वताम् । 'अरम्' अत्यर्थं भावनानां—अनित्यताद्यनुप्रेक्षाणां आभोगो—विस्तारस्ततः। 'प्रज्ञाला' धीशालिनः । उचितारम्भाणां—सदारम्भाणाम् अवनाः—रक्षकाः ॥ २ ॥

**मिथ्यादृष्टि०**—आचारेणोचितम् । अरयम्—अवेगम् अदम्भैः—अशठैः अवारित !—अनिषिद्ध ! । 'अपाप' अदुरित! 'वाचा' वाण्या 'रोचित!' अभिमत! । मानः—अहङ्कारः, मारः—कामः, यमः-कृतान्तस्तान् द्यति इति। 'वा' पूरणे । 'चारो !' अभिराम! । ' चितमानमारयमदं ' चितान्—पुष्टान् मानादीन् द्यतीति वा । चित्ते किं० ? भावारितापापहे ॥ ३ ॥

शत्रूणां घन०—'पातात्' रक्षतात् । आनतानां मानवासुराणां हिता । सुमुदां-सुहर्षाणां राजिषु-श्रेणिषु । 'रुच्या' मनोहरा । पातः-पतनं, अदानं-अवितरणं, तमः-अज्ञानम् । 'नवासु' नव्यासु 'अरुच्या' अनभिलापेण रहिता । सुष्ठु मुद्रा यस्याः सा । 'आजिषु' सङ्ग्रामेषु ॥ ४॥ १६ ॥



स जयति०—'सुरमणीनां' सुररत्नानां 'वैभवे' विभुत्वे 'सन्निधाने' सन्ति निधानानि यत्र । सति निधाने इति वा । वैभवे-विभवसम्बन्धिनि । नास्ति हतिर्यस्य तदहति । 'सुरमणीनां' सुरस्त्रीणाम् । 'वै' निश्चितम् । 'भवे' संसारे । 'सन्निधाने' समीपे ॥ १ ॥

जयति जिनततिः०—अमदैः-अनहङ्कारैः यतिभिर्महिता-पूजिता । 'अरम्' अत्यर्थम् । 'रीणामपाशं' क्षीणरोगपाशम् । 'मदयति' मत्तं कुरुते । 'महि' उत्सवम् । 'तारं' उज्ज्वलम् । अपगता आशा यस्य तदपाशम् ॥ २ ॥

अवतु गादित०—परमस्य-उत्कृष्टस्य तरणस्य हेतुः-निदानम् । 'छायया' शोभया । 'भासमानैः' दीप्यमानैः । अपरेषां मतमेव रणम् । छायया किं० ? अतुच्छो-बहुल आयो-लाभो यस्याः । आभया-कान्त्या असमानैः-निरुपमानैः, अभयैः असमानैश्चेति वा ॥ ३ ॥

कलितमदनलीला०—'सदसिः' सत्खड्गा । 'उचितमारात्' अनुरूपकामात् । 'धाम' गृहम् । 'हन्त' इत्यामन्त्रणे । अपकारं, 'सदसि' पर्षदि । 'रुचितम्' अभिमतम् । 'आराद्धा' आसेविता । अपकारं किं० ? नास्ति महः-उत्सवो यत्र तदमहम् । तापं करोतीति तापकारम् ॥ ४ ॥ १७ ॥



हरन्तं संस्तवी०—आनमन्तः असुरसार्था-दैत्यगणा वाचंयमाः-मुनयश्च यस्य सः । दम्भो-माया रतं-निधुवनं आधिः-मानसी व्यथा तासां यत् पापं तं ( तत् ) द्यति-खण्डयतीति तम् । हतः अमानः-अप्रमाणो मदः-अहङ्कारो येन तस्यामन्त्रणम् । यमं-मृत्युं द्यति-खण्डयतीति तम् । यमान्-महाव्रतानि ददातीति तमिति वा । हे 'भरताधिप !' भरतस्य-भरतक्षेत्रस्य अधिपः-स्वामी चक्रिजिनत्वात् ॥ १ ॥

भीमभवं हरन्त०—स्मरतरणस्य-कामपारगमनस्याधिकार इव मुदिता-परसुखतुष्टिः तस्याः पदं-स्थानम् । उत्कृष्टा या-लक्ष्मीर्यस्य यस्माद् वा । 'अविरतम्' अनारतम् । 'उत्करं' समूहम् । भीमभवं किं० ? रणं च आधिश्च रणाधी ते करोतीति तत्कारम् । उदिता आपद् यस्मात् तम् । उत्करं किं० ? उद्यमेन-अभियोगेन ये विरताः-निवृत्तास्तेषां मुदं करोतीति तम् ॥ २ ॥

भीमभवोदधे०—'अभवत्' अभूत् । 'अवतः' रक्षतः । 'यशः' श्लोकः । अभि-समन्तात् तरणेन । जिनपतिमतं किं०? 'न' नो 'मादितं' उन्मादितम् । नयं 'इतं' प्राप्तम् । 'हि' निश्चितम् । भवदवे-संसारदवाग्नौ तोय !-जलसम ! । 'रणेन' सङ्ग्रामेण । 'अदितम्' अखण्डितम् । 'न यमितं' न बद्धम् । 'हितं' पथ्यम् ॥ ३ ॥

**चक्रधरा०**—प्रभासुरो-देदीप्यमानो यो विनतातनुभवो-गरुडस्तस्य पृष्ठम् । अनुदिता-अनुदीर्णा आपद् यस्याः । 'अरम्' अत्यर्थम् । गता आरवाग्-शात्रववाणी यस्याः । सुरैः-देवैः विनता-विशेषेणानता । 'तनुभवपृष्टं' स्वल्पभवप्रश्नम्, स्वल्पभवोत्तरकालं वा, अनु-लक्ष्यीकृत्य । दितापदा-खण्डितास्थाना अत एव रङ्गेण तारा वाग्-वाणी यस्याः सा ॥ ४ ॥ १८ ॥



**महोदयं प्रवितनु०**—नास्ति घनं अघं यस्य । नोदितौ-प्रेरितौ परौ-प्रकृष्टौ मोहमानौ-अज्ञानाहङ्कारौ येन । अदिताः-अखण्डिताः पराः-प्रकृष्टाः ऊहा-विचाराः यत्र तादृशं मानसं यस्य ॥ १ ॥

**मुनीश्वरैः स्मृत०**—दानं-त्यागः तामरसानि-कमलानि तैः सहित ! । शेषं स्पष्टम् ॥२॥

**जिनः स्म यं०**—'मुदा' हर्षेण । अनेकयोगिभिः पठितम्, 'रसं' शान्ताख्यं 'गतं' प्राप्तम् । 'अपरागं' गतरागं यथा स्यात् तथा । उदारं च तत् सङ्गतम् । अपरागमैः-अन्यशास्त्रैः अहतम् ॥३॥

**तनोतु०**—'अनाविला' निर्मला । सह भया वर्तत इति सभा । 'गवि' पृथिव्याम् । कृतं-विहितं धीरतापदं-धैर्यस्थानं यया । अविकृता-अविकारभाग् धीर्यस्याः । तापं ददातीति तापदा, न तादृग् अतापदा । कृतधीरतास्पदा वाऽऽपदा ( ३-१ ) अविकृतधीरिति ( रता ) वा ॥ ४ ॥ १९ ॥



**तव मुनि०**—वनं-काननं । घनो-मेघः । रोहितं-पाटलम् । मानिनां तमसः-अज्ञानस्य पापस्य वा हरणम् । 'अनघ !' निष्पाप ! । इतौ-गतौ मोहरणौ-अज्ञानसङ्ग्रामौ यस्मात् ॥ १ ॥

**अवति जगन्ति०**—आवलिः-श्रेणिः । 'तरसा' वेगेन । 'ईहितानि' वाञ्छितानि । सु-शोभनो रवो यस्याः सा । मयि किं० ? रसं भजतीति रसभाक् तस्मिन् । अवलितः-अनपगतः रसः-शान्ताख्यो यस्य तस्मिन् । सुरवारेण-देवगणेन सभाजितया-सेवितया ॥ २ ॥

**यतिभिरधीत०**—अघं-पापं तदेव नगः-शैलः । यतिभिः किं० ? न सन्ति भङ्गो मानो मरणं च येषां तैः । योगं बिभर्तीति योगभृत् तम् । 'अनु' लक्ष्यीकृत्य । घनाः-निविडा गमाः-भङ्गाश्च यत्र । रणैः-सङ्ग्रामैः रहितम् । अनुयोगैः भृतं-पूर्णम् ॥ ३ ॥

**वितरतु वाञ्छितं०**—अयशो हरतीति अयशोहृत् । इतं-गतं तमः-पापं यस्याः । महान्तः शुभविनोदाः-कल्याणविलासा यत्र तादृशानि विमानानि विद्यन्ते येषां तेषाम् । 'हृदि' हृदये । वाञ्छितं किं०? 'ततं' विस्तीर्णम् । आमं-रोगं जहातीत्यामहा, ततौ विस्तीर्णौ मामहौ-लक्ष्म्युत्सवौ यस्याः सा इत्येकमेव वा पदम् । भविनो-भव्यस्य । दिवि-स्वर्गे । मानवताम्-अहङ्कारिणाम् ॥४॥ ॥२०॥



यतो यान्ति क्षिप्रं०—'महाविभावर्यो' महारजन्यः, 'नाशं' ध्वंसं, 'अनलसं' आलस्य-रहितम्, 'आनन्दितं' हृष्टं, 'अदः' एतत्, विभया-कान्त्या वर्यो-मुख्यः,'अनाशङ्कं' आशङ्कारहितम् । 'अनलसमानम्' अग्नितुल्यम्, दितः-खण्डितो मदः-अहङ्कारो येन ॥ १ ॥

भवोद्भूतं भिन्द्याद्०—'जिनानां' तीर्थकृतां,'आयासं' प्रयासं, चरणेन-चारित्रेण मुदिता-हृष्टा, आली-श्रेणिः* + + + + + +

तीर्थे०—भवतु-अस्तु । अस्तानि-निरस्तानि अरिभीश्च-शत्रुभीतिश्च मारिश्च । भीमा-भीषणा अलीकाली-अनृतश्रेणिरेव कालकूटं यया सा । या 'भवविभवविदां' संसारविभवप्राप्तानां 'समूहे' चक्रे 'अकलितकलितया' अधृतरणतया 'उल्लासं' विलासं 'ऊहे' वहति स्म । मायामानौ-दम्भस्मयौ हरतीति मायामानहर्त्री । किं०? दत्तो विश्वासो यत्र एतादृशं यद् विश्वं-जगत् तेन अनाप्ता-अप्राप्ता अनाप्ताभिशङ्का-अशिष्टशङ्का यस्यां सा । विमदा-मदरहिता चासौ 'विमदनत्रासमोहा' गतकामभयाज्ञाना च । असमो-निरुपम ऊहो यस्याः ॥ २ ॥

गौरागौरातिकी०—'लोकालोकार्थवेत्तुः' सर्वज्ञस्य 'गौः' वाणी 'मे' मम 'अलम्' अत्यर्थं मुदं-हर्षं देयात् । लोका० किं०? आ गौरा-पाण्डुरा अतिशयिता कीर्तिर्यस्य । गौः किं०? परमः-अतिशयितो यः परेषां मतस्य ह्रासः ततो यो विश्वासः-विश्रम्भस्तेन विश्वादेया-जगदुपादेया । पुनः किं०? जनितो-विहितो जनितनूभावो-जन्मकृशभावो येषां तेभ्यः तारः अवतारो यस्याः । पुनः किं०? नयविनययोर्या विधिस्तस्य यो व्यासो-विस्तरः स च मानं-प्रमाणं च ताभ्यां असमाना-निरुपमा । नास्ति भङ्गो यस्याः सा अभङ्गा भङ्गानुयोगैः । असुगमाः-दुर्गमा ये सुष्ठु-शोभना गमास्तान् युनक्तीति तद्युक् । प्राकृतेनाऽलङ्कृता ॥ ३ ॥

लोके लोकेशनुत्या०—'लोके' जगति । लोकेशैः-लोकपालैः नुत्या-स्तुत्या । सुरसा ये सुरास्तेषां सभां रञ्जयन्ती-रागवतीं कुर्वती । 'व्यूहं' विशिष्टोहं 'रिपूणां' वैरिणां 'व्यूहं' चक्रं 'जयन्ती' पराभवन्ती । जनानां भजनेन भवद् गौरवं यस्याः सा । मारेण-कामेन वामा-मनोज्ञा या सा । अकस्य-दुःखस्य अन्तो यस्याः सा । 'संस्तवे च' परिचये च । 'स्तवे च' स्तुतौ च । उचिता रुचिर्यस्याः सा उचितरुचिः, उचितरुचिं अतिशयिता सा उचितरुचितमा । 'अहिपस्य' धरणेन्द्रस्य 'कान्ता' स्त्री पद्मावती । ईरितानि-क्षिप्तानि दुरितानि च दुरन्ताहितानि यैस्तेषाम् । हितानां 'आलिं' श्रेणिं अद्य दद्याद् ॥ ४ ॥ २३ ॥

---

तव जिनवर! तस्य०—हे 'मुदित!' हृष्ट! । हे 'विभव!' भवरहित! । 'सन्निधाने' समीपे । सह मोहेन वर्तत इति समोहः, न तादृग् इति असमोहस्तस्य । हे सिद्धाः अर्थाः यस्य । नाम इत्यामन्त्रणे ।

---

* अतः परं विशीर्णः पाठः ।

क्षमां बिभर्तीति क्षमाभृत् । सन्निधाने किं० ? कुत्सितं मारं–कामं, कौ–पृथिव्यां मारं–मरणं वा अपहन्तीति तस्मिन् । यस्य वाचा–वाण्या रतः–रागवान् अरतः–अनिधुवन इति वा, हसान्ता-नामाबन्तत्वेन वाचायां–वाचि रत इति वा । 'उदितविभवसन्निधाने' उदितो विभवः–सत् शोभनं निधानं च यत्र । असमा ऊहा यस्य । सिद्धार्थनामा यः क्षमाभृत्–पार्थिवस्तस्य कुमारस्य । किंविशिष्टस्य तव ? अपगतं हेयं यस्य तस्य, वा इत्यव्ययं पूरणे । 'आचारतः' आचारात् ॥ १ ॥

**नयकमलविकासने०**—तव किं० ? 'रुच्या' कान्त्या 'रविभया' सूर्यरुचा 'समानस्य' तुल्यस्य । महे किं० ? अङ्गहारेण–अङ्गविक्षेपेण आहिते–स्थापिते । तव किं० ? अपगतम् अरिजातं–वैरिवृन्दं यतस्तस्य । लास्यस्य–नाट्यस्य भारेण उचिते–अनुरूपे । 'वर !' प्रधान ! । 'विभय !' भयरहित ! । 'असमानस्य' मानरहितस्य । सुरी किं० ? रुच्योऽङ्के हारो यस्याः सा । महे किं० ? 'हिते' पथ्ये । तत्र किं० ? पारिजात इव परिजातस्तस्य । भास्वन्ति यानि महेलानां–स्त्रीणां आस्यानि–वदनानि तेषां भया–कान्त्या रोचिते ॥ २ ॥

**वचनमुचितमर्हतः०**—परमम्–उत्कृष्टं यत् तरणं तस्य यो हेतुस्तस्य लाभम् । 'गुरौ' महति । 'आर्यं' शिष्टम् । हे 'आनन्दित !' मुदित ! । वचनं किं० ? अपगतम् अयशो यस्मात् । 'भावतो' भावेन । 'भासमानस्य' दीप्यमानस्य । मारेण–कामेन अजितम् । निःशेपितं–समापितं अपरमतमेव रणं येन । 'हे' इत्यामन्त्रणम् । अतुलानि–असमानानि अभङ्गुराणि–अभङ्गशीलानि अवार्याणि–निषेद्धुं अशक्यानि मानानि–प्रमाणानि यत्र । हे दितः–खण्डितः अपायो–विघ्नो येन । अर्हतः किं० ? शोभा विद्यते यस्यासौ शोभावान् तस्य । भया–कान्त्या असमानस्य । मया–ज्ञानेन राजितं–शोभितम् ॥ ३ ॥

**अहमहमिकया०**—सह कलकलशतेन–कोलाहलशतेन वर्तते या । रमया–लक्ष्म्या राजिता । पापस्य हाने–त्यागे । कला–मनोहरा आभा–शोभा यस्याः । मराले किं० ? असन्तो विपक्षा यस्य तस्मिन । अमरालेः–देवश्रेणेः । न हस्या अहस्या । 'गमं' सदृशपाठम् । मङ्गलं किं० ? सकलकलश-वत्–सम्पूर्णकुम्भवत् तारम्–उज्ज्वलम् । आरस्य–अरिसमूहस्य आजिः–सङ्ग्रामस्तस्यास्तापम् अपह-न्तीति सा । अनेके लाभा येषां तैः आस्थिता–अङ्गीकृता । सन्तो । विशिष्टाश्च पक्षा यस्य तस्मिन 'मराले' राजहंसे स्थिता । रहस्यभूत आगमो रहस्यागमस्तम् ॥ ४ ॥ २४ ॥



---

१–२ 'मरालेरवार्यागमम्' स्थाने 'मराले रहस्यागमम्' इति पाठः ।

ख-परिशिष्टम् ।

# श्रीरविसागरविरचिता

## ॥ श्रीवीरस्तुतिः ॥

( मुनिराजश्रीचतुरविजयकृतावचूरिसमेता )

---

श्रीवर्द्धमानजिननुतिः—

रुचिराजी रुचिराऽजीहित नोऽहितनोदकोदकोपमित ! ।
पङ्के पङ्केऽपङ्केहित ! हि तवावीरवाऽ ! वीर ! ॥ १ ॥

अपङ्काः—निष्पापा ये मुनयो निखिलसावद्यव्यापारवर्जनात् तेषामीहित !—वाञ्छित !, सततं भगवद्ध्यानलीनमानसत्वात् तेषाम् । हे ' अहितनोदक ! ' अहिताः—अन्तरङ्गारयः कामक्रोधादयस्तेषां नोदक !—क्षेपक ! । केषाम् ? ' नः ' अस्माकम् । हे उदकोपमित !—जलतुल्य ! क्व ? पङ्के—कर्दमे । किंविशिष्टे पङ्के ? पङ्के—पापात्मके, " पङ्कोऽस्त्री कर्दमे पापे " ( विश्वलोचने कद्वये श्लो० १७ ) । हे 'आवीरव !' आविः—प्रकटः योजनगामित्वात् सकलसंशयच्छेदित्वाच्च रवः—शब्दः देशनाध्वनिर्यस्य स तत्सम्बोधनम् । " अः स्यादर्हति " इत्यमरवचनप्रामाण्यात् हे अ !—अर्हन् ! । हे वीर !—चरमजिनपते ! । विशेषेण ईरयति—कम्पयति रागादिशत्रूनिति वीरः, यद्वा—

" विदारयति यत् कर्म, तपसा च विराजते ।
तपोवीर्येण युक्तश्च, तस्मात् 'वीर' इति स्मृतः ॥ १ ॥ "

इत्यादिवीरशब्दार्थविस्तरस्तु ग्रन्थान्तरादवसेयः । तव—भवतः । रुचिराजी—कान्तिकदम्बकः । किंविशिष्टा रुचिराजी ? रुचिरा—मनोज्ञा, त्रिभुवनजनमनःप्रमोदकारित्वात् । हि—निश्चयेन । अजीहित—अवर्द्धताम् । ' हि गतौ वृद्धौ च ' धातोर्ण्यन्ते रूपसिद्धिः । ॥ १ ॥

सर्वजिनविज्ञप्तिः—

विश्वं विश्वं विश्वम्भर ! भर ताऽनत ! न तामसाऽराम !
महसा महसाऽऽमहसाचित ! चितमर्हत्कलाप ! तव ताप(पात्?) ॥ २ ॥

विश्वं—जगत् बिभर्तीति विश्वम्भरः हरिरिव हरिः । विष्णूदरे हि सर्वं चराचरं विश्वं तिष्ठति तथा भगवतो निरुपमे निरावरणे कृत्स्ने सकलवस्तुविषयिणि केवलवरज्ञानदर्शनेऽखिलं

विश्वं प्रतिफलतीति हार्दम् । " लक्ष्मीः पद्मा रमा या मा, ता सा श्रीः कमलेन्दिरा " इत्यभिधानचिन्तामणि( का० २, श्लो० १४० )वचनात् ता–लक्ष्मीः सुरनिर्मितस्वर्णरूप्यरत्नमण्डितप्राकारत्रयविभूपितसमवसरणरूपा बाह्या, रत्नत्रयीमयाऽभ्यन्तरा च तया अनत–! अवक्र ! । लक्ष्मीभाजो हि प्रायोऽहङ्कारित्वात् कुटिला भवन्ति, अर्हन्तस्तु नैवमिति भावः । हे ' न तामस ! ' हे अविद्यागुणरहित ! । न विद्यन्ते रामाः–स्त्रियो यस्य सः अरामः, तत्सम्बोधनं हे अराम !, स्त्रीसङ्गरहित ! इत्यर्थः । नारीसङ्गतिर्हि पुंसां रागनिबन्धनमेव उक्तं, च—

" रागोऽङ्गनासङ्गमतोऽनुमेयो, द्वेषो द्विपद्दारणहेतिगम्यः ।
मोहः कुवृत्तागमदोपसाध्यो नो यस्य देवः स स चैवमर्हन् ॥ "

" स्त्रीसङ्गः काममाचष्टे, द्वेषं चायुधसङ्ग्रहः ।
व्यामोहं चाक्षसूत्रादि–रशौचं च कमण्डलुः ॥ "

पुनः आमः -रोगः हसः–हसनं ताभ्यां अचित !--अव्याप्त ! । हे अर्हतां–तीर्थकृतां कलाप !–समूह ! ! त्वं तव–भवतः महसा–तेजसा, महसा–उत्सवेन च, तापात्–सन्तापात् चितं-व्याप्तं "सन्तापे दवथौ तापः " ( पद्वये श्लो० ५ ) इति विश्वलोचनकोषः, विश्वं-समग्रं विश्वं–भुवनं भर–पोषय, पुष्टिमापादय इत्यर्थः ॥ २ ॥

जिनवाणीवर्णनम्—

भारत्याभा रत्यापादित–दितपातकाऽऽतपायकृतः ।
जिनभर्त्तुर्जिनभर्त्तुर्मानोमाऽनोकसोऽसोनत्वः ( वशाऽऽनद् वः ? ) ॥३॥

रतिः—रागः आपादिता–प्राप्ता येन सः, दितं–खण्डितं पातकं--पापं येन सः, आतपस्य–ज्ञानोद्योतस्य आयं–लाभं करोतीति आतपायकृत्, एतेषां द्वन्द्वे ' रत्यापादितदितपातकाऽऽतपायकृत् ' तस्य । जिनाः–सामान्यकेवलिनः तेषां भर्त्ता--स्वामी तस्य, जिनभर्त्तुः--तीर्थकृतः । किंविशिष्टस्य जिनभर्त्तुः ? न विद्यते ओकः- गृहं यस्य सः अनोकाः तस्य ' अनोकसः ' । ' भारती ' वाणी, वः--युष्मान् आनत्–अजीवयत् इति सम्बन्धः । किंविशिष्टा भारती ? मानानि--प्रत्यक्षादिप्रमाणानि तेषां " उमातसीहैमवतीहरिद्राकीर्तिकान्तिषु " इति मेदिनीवचनात् उमा--कान्तिर्यस्याम्, तैः उमा--कीर्त्तिर्यस्या वा सा ' मानोमा ' । पुनः किं० ? आ–समन्तात् भा--दीप्तिर्यस्याः सा ' आभा ' । पुनः किंवि० ? ' अवशा ' अवन्ध्या, सकलजनमनोऽभीष्टार्थसार्थदायकत्वात् । " वशा योषा सुता वन्ध्या, स्त्रीगवीकरिणीष्वपि " (शद्वये श्लो० १५) इति विश्वलोचनकोषः ॥

सिद्धायिकादेव्यै प्रार्थना—

भविकं भवि कं भविकं नय नय नयनोरुरश्मिराजिष्णुः ।
रामा रामाराऽऽमा सिद्धा सिद्धायिके ! सके ! ऽशङ्के ! ॥ ४ ॥

" कः सूर्यमित्रवाय्वग्नि--ब्रह्मात्मयमकेकिषु ।
प्रकाशवक्त्रयोश्चापि, कं नीरसुखमूर्द्धसु ॥ "

इति सुधाकलशैकाक्षरी( श्लो० ९ )वचनात् कं—सुखं तेन सह वर्तमाना सका तत्सम्ब धनं हे ' सके ! ' । " शङ्का त्रासे वितर्के वा " ( कद्वये श्लो० २५ ) इति विश्वलोचनवचन त्रासः वितर्को वा नास्ति यस्याः सा अशङ्का तत्सबोधनं हे ' अशङ्के ! '। हे ' सिद्धायिके ! ' सिद्ध यिकानाम्नि ! देवि ! । त्वं भविकं—भव्यप्राणिनं कं—सुखं नय प्रापय—इति सम्बन्धः । नीधात द्विकर्मकत्वं प्रसिद्धं ' वाच्ये ' वीप्सायां ' ( सिद्ध० ७–४–८० ) इति द्विरुच्चारः । अथवा स्तु पुनरुक्तिर्न दोषभाक् । उक्तं च—

" वक्ता हर्षभरादिभिराक्षिप्तमनास्तथा स्तुवन् निन्दन् ।
यत् पदमसकृद् ब्रूयात् तत् पुनरुक्तं न दोषाय ॥ "

किंविशिष्टा त्वम् ? "सिद्धो व्यासा(ड्या)दिके देव--योनौ निष्पन्नमुक्तयोः । नित्ये प्रसिद्धे इति हैम्यनेकार्थ( का० २, श्लो० २६७ )वचनात् 'सिद्धा' प्रसिद्धा । पुनः किं० ? रामा—श्याम "स्याद् रामः श्यामलः श्यामः" इत्यभिधानचिन्तामणिः (का० ६, श्लो० ३३)। पुनः किंविशिष्टा रामाः—स्त्रियः ताभिः राजते इति ' क्वचित् ' ( सिद्ध० ५–१–१७१ ) इति डप्रत्यये ' रामारा ' आ—समन्तात् मा--लक्ष्मीर्यस्याः सा 'आमा' । यद्वा रामा—चारुः रामा--स्त्री देवाङ्गनात्वेन । पुनः किं० नयनयोः--नेत्रयोरुरवो--विशालाः रश्मयः—किरणास्तैः राजिष्णुः--राजनशीला । किंविशि भविकम् ? भवः—श्रेयः यस्यास्तीति भवी, स्वार्थे कप्रत्ययः तं 'भविकम्' । किंविशिष्टं कम् ? " भ श्रीकण्ठसंसार–श्रेयः सत्ताप्तिजन्मसु ' इति विश्वलोचन( वद्वये श्लो० १७ )वचनात् ' भवि श्रेयःसम्बन्धि सांसारिकं वा इत्यर्थः ।

अभिप्रायानभिज्ञत्वात्, कर्त्तुष्टीकामृते मया ।
किञ्चिद् यत्रोक्तमुत्सूत्रं, तन्मे मिथ्याऽस्तु दुष्कृतम् ॥

॥ इति श्रीवीरस्तुत्यवचूरिः समाप्ता ॥

---

मुनिराजश्रीकल्याणविजयविरचितया 'पदभञ्जनाख्यविवृत्या सहिताः

# ॥ पूर्वाचार्यप्रणीताः पञ्चजिनस्तुतयः ॥

( स्रग्धराच्छन्दसि निबद्धाः )



ख्याताख्याऽतामस ! त्वामहतमहततिं सन्नुवामो नु वामो-
पायाऽपायापहारे वृषभ ! वृषभराड्लाञ्छिताऽरं छितारम् ।
सारं सारङ्गदृष्टे ! ऽपदरपदरतं कम्प्रकामं प्रकामं
हेतुं हेतुप्रदानेऽसुरतसुरतरो ! भूतले भूतलेष(ख)म् ॥ १ ॥

पूर्वाचार्यप्रणीतानां स्तुतीनां सुगमार्थकम् ।
कल्याणविजयेनेदं क्रियते पदभञ्जनम् ॥ १ ॥

एता हि पञ्चजिनस्तुतयः केनापि यमकप्रियेण विदुषां वरेण पूर्वाचार्यप्रवरेण यमकप्रचुर दृब्धा इति न सामान्यबुद्धीनां तदर्थज्ञानम्, अर्थज्ञानमन्तरेण च न तत्पाठेऽपि भावोल्लास इति अबुधबोधनाय तासां पदभञ्जनमिदमारभ्यते—

ख्याताख्येति । ख्याता—प्रसिद्धा आख्या—अभिधानं यस्य सः तदामन्त्रणे । तम एव तामसं, न विद्यते तामसमर्थाद् अज्ञानं यस्य सः, निवृत्ताऽज्ञानरूपतमोभाव इत्यर्थः, तदामन्त्रणे । त्वां—भवन्तम् । अहता—अखण्डिता महानाम्—उत्सवानां ततिः—विस्तरो येन सः, अखण्डोत्सव-विस्तारक इत्यर्थः, तम् । सन्नुवामः—सम्यक् स्तुमः । नुः प्रश्नार्थको विकल्पार्थको वा निपातः । वामाः—प्रतीपाः उपायाः—प्रतीकाराः येषाम् एतादृशा ये अपायाः—विघ्नाः तेषाम् अपहारे—उद्धृत्य दूरीकरणे वृषभो धौरेयः, तदामन्त्रणे । वृषभाणां—बलीवर्दानां राट्—राजा तेन लाञ्छितः—चिह्नितः, श्रीआदिनाथ इत्यर्थः, तदामन्त्रणे । अरं—शीघ्रम् । छितं—छिन्नं नाशितमिति यावत् आरम्—अरीणां समूहो येन सः अर्थाद् नष्टभावशात्रवः, तम् । सारः—श्रेष्ठः, तम् । सारङ्गो—मृगः, तस्य दृष्टी इव दृष्टी—नेत्रे यस्य सः, तदामन्त्रणे । अपगतं दरं—भयं यस्माद् एतादृशं यत् पदं—स्थानं तत्र रतः, तम् । कम्प्रः—कम्पनशीलः कामो येन सः, तम् । प्रकामं—भृशम् । हेतुं—कारणम् ।

हेतोः-सर्वकारणभूतस्य ज्ञानस्य प्रदाने, यद्वा 'हि गतौ' इति गतिपदेनाऽत्र ज्ञानमुन्नेयम्। असुभिः-प्राणैः रताः असुरताः-प्राणिनः, तेषां कृते सुरतरुः-कल्पवृक्षः, तदामन्त्रणे। भूतले-जगतीमण्डले। भूतः-सञ्जातः लेखो-गणनं कीर्तनमिति यावत् यस्य सः, तम् ॥ १ ॥

'शान्ते !' शान्तेद्धनेत्रोभय ! सभयसखं देहतारं हतारं
नन्ताऽनन्ताऽत्र न त्वामरणमरण ! तं सत्कलौकः ! कलौ कः ? ।
लीलाऽऽलीलाः सुदारा विषयविषयमुद्धासदक्षाः सदक्षाः
येनाऽयेनाऽऽश्रितोच्चैरमलरमलभूदीप्रमुक्ताः प्रमुक्ताः ॥ २ ॥

शान्त इति। शान्तिः-षोडशस्तीर्थकरः, तदामन्त्रणे। शान्तं-प्रशमरसपूर्णम् इद्धं-दीप्तं च नेत्रोभयं-नयनद्वयं यस्य सः, तदामन्त्रणे। भयेन सह वर्तमानाः सभयाः, तेषां सखा-मित्रं, भीताऽभयप्रदायक इत्यर्थः, तम्। देहेन तारो-महान्, यद्वा देहान् लक्षणया देहिनः तारयति-निस्तारयति भवसमुद्राद् इति देहतारः, तम्। हतम् आरम्-अरीणां समूहो येन सः, तम्। नन्ता-नमस्कर्ता। न विद्यते अन्तो-विनाशो यस्य सः, तदामन्त्रणे। अत्र-इह जगति। न-नहि। त्वां-भवन्तम्। न रणे-युद्धे मरणं यस्य सः, तदामन्त्रणे। तमिति तच्छब्दस्य द्वितीयान्तं रूपं त्वामित्यस्य विशेषणम्। शान्तिनाथो हि चक्रवर्त्यवस्थायामनेकानि युद्धानि कृतवान् तथाऽपि दूरे मरणवार्ता, पुण्यप्राग्भारप्रभावेण न क्वापि भङ्गमात्रमप्यनुभूतवान्। सतीनां-समीचीनानां कलानाम् ओको-गृहं, तदामन्त्रणे। कलौ-कलियुगे। कः-को नाम सचेताः। लीलानां-क्रीडानाम् आल्यः-पङ्क्तयः ताः लान्ति-ददतीति लीलालीलाः। सुष्ठु दाराः सुदाराः-शोभनस्त्रियः। विषयाः-शब्दादय इन्द्रियार्थाः, तद्विषयौ यौ मुद्धासौ-प्रमोदहास्ये तत्र दक्षाः-चतुराः। सन्ति-शोभनानि अक्षाणि-इन्द्रियाणि येषां ते सदक्षाः। येन-उपरिवर्णितेन शान्तिनाथेन। अयेन-शुभावहविधिना। आश्रिताः-धृता उच्चैः-उत्तमानां तथा अमलानां-निर्मलानां रमलानां-लक्षणानां भुवः-उत्पत्तिस्थानरूपाः तथा दीप्राः-दीप्तिमत्यः मुक्ताः-मौक्तिकाभरणानीत्यर्थः यैस्तथोक्ताः। प्रमुक्ताः-त्यक्ताः ॥ २ ॥

शस्तेशस्तेजइद्धाहरितहारिततः(नुः) शङ्खलक्ष्मा खलक्ष्मा-
दाता दाताघ ! लोकोत्तर ! वितर विभो ! ज्ञानबन्धोनबन्धो ! ।
सातं सातङ्कपुंसामनुपम ! नु पदं चारुधामोरुधामोऽ-
मा-रामा-राग ! 'नेमे !' समरसमरजःपानवायुर्नवायुः ॥ ३ ॥

शस्तेश इति । शस्तानाम्–उत्तमानां सज्जनानामिति यावत्, ईशः–स्वामी । तेजसा इद्धा–दीप्ता आहरिता–नील-श्याम-कृष्णानामेकत्वेन कृष्णा हरेः–कृष्णस्य तनुरिव तनुर्यस्य सः । यद्वा आहरिता–आकृष्णा तथा हरिः–पिङ्गा तेजःप्रसरस्य विचित्रतया तनुर्यस्य सः । शङ्खः–प्रसिद्धः, स एव लक्ष्म–चिह्नं यस्य सः । खलेभ्यः–दुर्जनेभ्यः क्ष्मायाः–क्षान्तेर्दाता । दातानि–लूनानि अघानि-पापानि येन सः, तदामन्त्रणे । लोकेषु उत्तरः–श्रेष्ठः, जनश्रेष्ठ इत्यर्थः, तदामन्त्रणे । वितर-देहि । विभुः–स्वामी, तदामन्त्रणे । ज्ञानस्य बन्धेन–सम्बन्धेन ऊनानां–हीनानां बन्धुः–ज्ञानप्रदायकत्वेन भ्राता, तदामन्त्रणे । सातं-सौख्ययुक्तम् । सुखवाचित्वेनाऽन्यत्र प्रसिद्धस्यापि सातशब्दस्यात्र मत्वर्थीयाऽणुविधानेन तद्वत्वे वृत्तिः । सह आतङ्केन–आकस्मिकरोगादिभयेन वर्तमानानां पुंसां–मनुष्याणाम् । न विद्यते उपमा यस्य सः, तदामन्त्रणे । नुः विकल्पार्थोऽव्ययः । पदं–स्थानम् । चारु–सुन्दरं धाम–तेजो यस्य तत्, पदस्य विशेषणमेतत्, मनोहरतेजोमयं स्थानमित्यर्थः यद्वा चारुः–बृहस्पतिः तस्य धाम–प्रभावः तद्वत् उरु–महत् धामं–प्रभावो यस्य सः । अकारान्तोऽपि दृश्यते धामशब्दः । न विद्यते मायाः–लक्ष्म्याः रामायाः–स्त्रियाश्च रागः–अभिष्वङ्गो यस्य सः, तदामन्त्रणे । नेमिः–द्वाविंशस्तीर्थंकरः, तदामन्त्रणे । समरस्य–युद्धस्य समं–सर्वं यद् रजो–धूलिः तस्य पाने अर्थात् प्रशमने वायुः–पवनः । तीर्थंकराः हि भगवन्तो यत्र विहरन्ति न तत्र स्वचक्रपर-चक्रादिभयं प्रवर्तते पूर्वप्रवृत्तमपि चोपशाम्यति इति युक्तमुक्तं समरसमरजःपानवायुः । नवम् आयुर्यस्य सः, दीर्घजीवी इत्यर्थः ॥ ३ ॥

'पार्श्वः' 'पार्श्व'श्रितो वो हितमहितमभाग् रातु पातात् तु पाताऽ-
वामो 'वामो'रुकुक्षौ सरसि स रसिको हंसकल्पः सकल्पः ।
लेखा लेखाधिपानामसितमसितताभं सदायं सदा यं
रन्तारं तारमुक्तावरतवरतनुं सन्नताऽऽसन्नतासम् ॥ ४ ॥

पार्श्व इति । पार्श्वः–पार्श्वनाथनामा त्रयोविंशतितमस्तीर्थंकरः । पार्श्वेन–एतदाख्ययक्षेण श्रितः–आश्रितः संनिहित इति यावत् । वः–युष्मभ्यम् । हितं–समीहितम् । अतिशयितम् अहिं–नागराजं सर्परूपिणं धरणेन्द्रमिति यावद् भजते इति तथोक्तः । साहचर्यमत्र भजेरर्थः । नागराजो हि धरणेन्द्रनामा मेघमालिदैत्यकृतोपसर्गावसरे भगवन्तं पार्श्वनाथं फणाटोपेन समाहृत्य संनिहितवानिति सुप्रसिद्धोऽयमर्थः । रातु–ददातु । पातात्–दुर्गतिविनिपातात् । तुः भेदे अवधारणे वा । पाता–रक्षिता । अवामः–अवक्रः, सरल इत्यर्थः । वामायाः उरुकुक्षौ सरसि–महति उदररूपे सरोवरे इत्यर्थः । वामा इति पार्श्वनाथमातुर्नाम । सः–जगतीप्रसिद्धः । रसिकः–रसचतुरः ।

हंसकल्पः–मरालबालः। यद्वा हंसकल्पो–हंससदृशः। ‘सकल्पः’ कल्पेन–आचारेण सह वर्तमानः। लेखा–पङ्क्तिः। लेखाधिपानां–देवेन्द्राणाम्। असिता–कृष्णा या मसिः–कज्जलं तद्वत् तता–विस्तृता आभा–कान्तिर्यस्य सः, तम्। सन्–समीचीनः आयो–लाभो यस्य सः, तम्। सदा–निरन्तरम्। यं–तच्छब्दोपक्षिप्तम्। रन्तारं–रमणशीलम्। तारमुक्तौ–स्फारे शुद्धे वा मोक्षपदे। अरतेन–मैथुनाभावेन ब्रह्मचर्येणेत्यर्थः, वरा–श्रेष्ठा तनुः–शरीरं यस्य सः, तम्। सन्नता–प्रणतवती। आसन्नतायां–सामीप्ये आस्ते तथोक्तः, तम्॥ ४॥

यामायामादरोद्यद्विभव! विभव! सच्छोभदन्तं भदन्तं
रोषारोषार्क! ‘वीरा’ऽऽनतजनत! जवात् त्वामहेयं महेयम्।
तं तातं तारमुक्ताऽद्भ! गदभगरजःस्फीतवायो तवायो–
दाराऽदाराऽस्ति यस्येह रणहरणगीरीतिवारातिवारा॥ ५॥

यामेति। यामानां–चतुर्णां महाव्रतानां सम्बन्धी यः आयामो–विस्तारः, अधिकीकरणमिति यावत्, तत्र यः आदरस्तेन उद्यन् विभवः–परमैश्वर्यं यस्य सः, तदामन्त्रणे। अजितादिद्वाविंशतिजिनशासनवारके हि चत्वार्येव महाव्रतान्यासन्, तानि च प्रायो यामशब्दप्रसिद्धानि अभवन्, ‘चाउज्जामो धम्मो’ इत्याद्यागमवचनात्, भगवता च महावीरेण चतुर्यामस्थाने पञ्चमहाव्रतानि प्रज्ञप्तानि इति युक्तमुक्तं यामेत्यादि। विगतो भवः–संसारपरिभ्रमणं यस्य सः, तदामन्त्रणे। सती शोभा येषामेतादृशाः दन्ताः–दशनाः यस्य सः, तम्। भदन्तं–कल्याणकारकम्। रोषस्य क्रोधस्य आरः–आगमनं स एव उषा–निशाऽन्तिमभागः तत्र अर्कः–सूर्यः, तदामन्त्रणे। वीरो–महावीरः, वर्धमानाभिधश्चतुर्विंशतितमः तीर्थकर इत्यर्थः, तदामन्त्रणे। आनता–समन्तात् प्रणता जनता–जनानां समूहो यं सः, तदामन्त्रणे। जवात्–वेगात्। त्वां–भवन्तम्। अहेयम्–अत्याज्यं, समादरणीयमित्यर्थः। महेयं–पूजयेयम्। तं–जगत्प्रसिद्धम्। तातं–पितरम्। तीर्थकरा हि भगवन्तः सर्वेषां हितकारकत्वेन पितृतुल्या एव भवन्ति। ताराः–पीवराः शुद्धा वा मुक्ताः–मौक्तिकानि अत्ति–भक्षयतीति तारमुक्तादः–हंसः, तद्वद् भाति–शोभते इति तथोक्तः, तदामन्त्रणे। निर्मलतासाधर्म्येण हंसतुल्यतोक्तिः। गदा–रोगाः, भगं–कामः, तान्येव रजांसि–धूलयः, तदपनयने स्फीतः–प्रवृद्धो वायुः, तदामन्त्रणे। तव–भवतः। अयेन–शुभावहेन विधिना उदारा–महती सरला वा। न दृणाति इति अदारा, अमर्मवेधिनीत्यर्थः। यस्य–वीरस्य। इह–अत्र जगति। रणो ह्रियते यया सा, एतादृशी गीः–वाणी। ईतयः–विप्लवाः अतिवृष्ट्यादयः, तासां वारं–समूहम् अतिवारयति–अतिशयेन दूरं करोति तथोक्ता, सर्वोपद्रवनिवारिणीत्यर्थः॥ ५॥

भोगाभोगासनाऽऽरादमलदमलया साधु नाना धुनानाऽ-
मानं मानं जिनालीह रतहरतरा मारमायारमायाः ।
दद्यादद्यानतानामदरमदरजाः साऽविनाऽशंविनाशं
याऽपायापासनं प्रातनुत तनुतमःसञ्जनानां जनानाम् ॥ ६ ॥

भोगेति। भोगस्य–सुखस्य यः आभोगः–परिपूर्णता तम् अस्यति–क्षिपतीति तथोक्ता। आरात्–दूरात्। अमलौ–निर्मलौ दमलयौ-इन्द्रियजयलीनते यस्याः सा, यद्वा अमले दमे लयः–एकतानता यस्याः सा। साधु–शोभनं तथा नाना–अनेकविधमिति क्रियाविशेषणद्वयम्। धुनाना–कम्पयन्ती। 'अमानं' न विद्यते मानं–प्रमाणं यस्य सः, तम्। मानम्–अहङ्कारम्। जिनानाम् आली–पङ्क्तिः। इह-प्रत्यक्षे जगति। रतं–रमणं क्रीडनमिति यावत् हरतीति रतहरा, अतिशयेन रतहरा इति रतहरतरा। मारमायारमायाः–काममपञ्चश्रियः। यद्वा मारमायाभ्यां–कामकपटाभ्यां सहिता अरमा–अलक्ष्मीः दारिद्र्यमिति यावत् मारमायाऽरमा, तस्याः। रतहरतरेत्यनेन सम्बन्धः। दद्यात्–कुर्यादित्यर्थः। अद्य–अत्र दिने। आनतानां–प्रणतानाम्। न विद्यते दरो–भयं मदः–अहङ्कारः रजः-रजोगुणो यस्याः सा, तथोक्ता। सा जिनाली। अविनाभावि अशम्–असुखं दुःखमित्यर्थः अविनाऽशम्, व्यापकदुःखमिति यावत्, तस्य विनाशो–निरन्वयो नाशः, तम्। यद्वा अविनाशम्–अपुनरुत्पत्तिं, विनाशस्य विनाशो हि पुनरुत्पत्तिः, एतादृशं मारमायारमायाः विनाशं दद्यादिति योजना। या जिनाली। अपायानां–विघ्नानाम् अपासनं–निरसनं प्रातनुत–अकरोत्। तनु–कृशं तमसः–अज्ञानस्य सञ्जनं–प्रसङ्गो येषां ते, तेषाम्। जनानां–जन्मभाजां, प्राणिनामित्यर्थः॥ ६ ॥

सज्जं सज्जन्तुरक्षे लयनिलयनिभं भूरिभङ्गारिभङ्गा-
च्चामत्रामर्त्यऋद्धेरसमरसमयं संवरार्थं वरार्थम्।
शंकोशं को रसित्वामरममरमहीराजपेयं जपेयं
मारामारामवह्ने! समय! समयातिध्यात! रोहत्तरोह! ॥ ७ ॥

सज्जमिति। सज्जं–तत्परम्। सतां–भव्यानां जन्तूनां-प्राणिनां रक्षे–रक्षायाम्। रक्षा हि द्विधा–प्राणरक्षणं दुर्गतिगर्तनिपातरक्षणं च, प्रथमपक्षे सदिति विशेषणमपार्थकं, प्राणरक्षणं हि जिनागमेन सतामसतां सर्वेषामेवोपदिश्यते, न तु सतामेव; द्वितीयपक्षे तु तत् सार्थकं, जिनागमेनाऽपि त एव दुर्गतिपातान्निवर्तन्ते मोक्षपथे उत्सहन्ते च ये भव्याः परीतसंसारिणश्च, नेतरे। लयो-लीनता ध्यानमिति यावत्, तस्य निलयो–निवासः, तेन निभः–सदृशः, तम्। भूरयः-बहवः

भङ्गाः-पदार्थनिरूपणविकल्पाः यस्मिन् सः, तथा अरिभ्यः-शत्रुभ्यो यो भङ्गः-पराजयः तस्मात् आ-समन्तात् त्रायते इति तथोक्तः, भूरिभङ्गश्चासौ अरिभङ्गात्रश्च, तम् । अत्र-इह । यद्वा भूरिभङ्ग इति आमन्त्रितपदम्, अरिभङ्गात् इति पञ्चम्यन्तं, त्रायते इति त्रः, तदामन्त्रणे । अमत्रं-भाजनं, तदामन्त्रणे । अमर्त्याः-देवाः तेषाम् ऋद्धिः-सम्पत्तिः तस्याः । असमरसमयं-निरुपम-रसप्रचुरम् । संवरः-आश्रवनिरोधः स एव अर्थः-प्रयोजनं यस्य सः, तम् । शम्-सुखं तस्य कोशो-निधानं, तम् । कः-को नाम । रसित्वे-रसिकतायाम् अमरं-सजीवम्, मूर्तिमद्रसवन्तामित्यर्थः । यद्वा रसित्वेन-रसवत्त्वेन अमरं-प्रसिद्धम् । अमराः-देवाः महीराजाः-भूपतयः तेषां पातुं योग्यः, यद्वा राजशब्दो देवानां मह्याश्च प्रत्येकं सम्बन्धनीयः, ततश्च देवेन्द्रनरेन्द्रैः पेयः-सादरं श्रवणार्हः इत्यर्थः, तम् । जपेयं-जपविषयीकुर्यामित्यर्थः । मारः-कामः, स एव आमः-अपक्वः नवपल्लव इति यावत् आरामः-उपवनं तत्र वह्निः-अग्निः, तदामन्त्रणे । समयः-सिद्धान्तः, तदामन्त्रणे । समैः-सर्वैः यतिभिः-मुनिभिर्ध्यातः-चिन्तितः, तदामन्त्रणे । अतिशयेन रोहन्तः रोहत्तराः, रोहत्तराः ऊहाः-तर्काः यस्मिन् सः, प्रोद्भवत्तर्कपरम्पर इत्यर्थः, तदामन्त्रणे ॥ ७ ॥

रक्षोरक्षोद्यता मेऽमलयमलयवत्सायतीनां यतीनां

कल्याऽकल्याणराशिं हरतु हरतुषारांशुभासा शुभा सा ॥

मह्या मह्या श्रुताङ्गीह सितहसितरुग्हारिहाराऽरिहारा

सोमा सोमाननाऽऽरादवमदवमहाम्भोधराभा धराभा ॥ ८ ॥

रक्ष इति । रक्षोभ्यः-राक्षसाख्यव्यन्तरविशेषेभ्यो या रक्षा-परित्राणं तत्र उद्यता-कृतोद्यमा, बद्धपरिकरेत्यर्थः । मे-मम । अमलयमलयवन्तो-निर्मलमहाव्रतध्यानवन्तश्च ते सायतयः-सशुभोदर्काश्च, तेषाम् । यतीनां-मुनीनाम् । कल्या-आरोग्यवती । यद्वा कलासु साध्वी कल्या । अकल्याणानाम्-अशुभानां राशिं-समूहम् । हरतु-अपनयतु । हरो-महादेवः, तुषारांशुः-चन्द्रः तयोर्भाः-कान्तिरिव उज्ज्वला या कान्तिः तया शुभा-प्रशस्ता । यद्वा निशादिशादिवत् आकारान्तो भासाशब्दः, ततश्च हरतुषारांशुभासा इव भासा यस्याः सा, तथोक्ता । शुभा-शोभावती । सा-वक्ष्यमाणा श्रुताङ्गी । मह्या-भूम्या लोकेनेत्यर्थः । मह्या-पूजनीया । यद्वा मह्यां भुवि, मह्या पूज्या । अनुस्वारेऽपि न यमकत्वहानिः सम्मता । श्रुतं-श्रुतज्ञानं तदेव अङ्गं-देहो यस्याः सा, श्रुताधिष्ठात्री देवी इत्यर्थः । इह-अत्र लोके । सितम्-उज्ज्वलं यद् हसितं-हास्यं तत्सदृशा रुचा-कान्त्या हारी-मनोहरो हारो-मुक्तावली यस्याः सा, तथोक्ता । यद्वा सितहसितस्य रुचं हरतीति सितहसितरुग्हारी, एतादृशो

हारो यस्याः सा । अरीन्–विघ्नरूपान् शत्रून् हरतीति तथोक्ता । सोमा–शान्ता । श्रुतदेवता हि नान्यदेवता इव रुद्रप्रकृतिः, अपि तु प्रशान्तरूपैव प्रसिद्धा । सोम इव–चन्द्र इव आननं–मुखं यस्याः सा, तथोक्ता, चन्द्रवदना इत्यर्थः । आराद्–दूरात् । हरतु इति क्रियापदेन सह योज्यमारात्-पदम् । अवमाः–अधमाः अर्थात् दुर्भिक्षादयो निकृष्टोपद्रवाः त एवः दवः–दावानलः, तत्र महाम्भोधराभा–महामेघसमाना । धराभा–पर्वततुल्या, धीरतायामित्यर्थः ॥ ८ ॥

देववन्दनादौ स्तुतिचतुष्कव्यवस्था चैत्यवन्दनभाष्यकारादिभिरेवं निरूपिता–प्रथमा स्तुतिः अधिकृतजिनस्य, द्वितीया सर्वजिनानां, तृतीया श्रुतज्ञानस्य, चतुर्थी च सम्यग्दृष्टिदेवतायाः । एवं च सति व्याख्याताभिरेताभिरष्टस्तुतिभिः पञ्च स्तुतिचतुष्काणि सम्पद्यन्ते, तथाहि–प्रथमया स्तुत्या अन्तिमस्तुतीनां त्रयेण प्रथमं स्तुतिचतुष्कमादिनाथस्य, द्वितीयया अन्तिमाभिस्तिसृभिर्द्वितीयं शान्तिनाथस्य, तृतीयया अन्तिमत्रिकेण तृतीयं नेमिनाथस्य, चतुर्थ्या अन्तिमत्रितयेन चतुर्थं पार्श्वनाथस्य, पञ्चम्या तेनैव अन्तिमस्तुतित्रयेण च पञ्चमं महावीरजिनस्य स्तुतिचतुष्टयम् ॥

वेदवसुग्रहभू([1]१९८४)मितवर्षे चैत्रस्य शुक्लसप्तम्याम् ।
पदभञ्जनं स्तुतीनां हरजिपुरे पूर्णतामगमत् ॥ १ ॥

इति मुनिराजश्रीकल्याणविजयविरचितं पञ्चजिनस्तुतिपदभञ्जनं पञ्जिकापरपर्यायं समाप्तम् ॥



१ गूर्जरदेशरीत्या १९८३ तमे हायने ।

# स्तुतिचतुर्विंशतिकायाः

## दक्षिणविहारिमुनिराजश्रीअमरविजयशिष्यरत्नमुनिश्रीचतुरविजयकृतं

# शुद्धिवृद्धिपत्रकम्

## ( EMENDATIONS AND ALTERATIONS )

| पृष्ठं | पङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ९ | २२ | करतलग | करतलग— |
| १० | १९ | पण्डितंमन्यान | पण्डितंमन्यानां |

### भूमिकायाः

| पृष्ठं | पङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| २ | ५ | पद्येषु तत्तद्देवता० | पद्येषु ७६तमं पद्यं विहाय तत्तद्देवता० |
| ४ | १६ | सप्तशतीमिताना | सप्तशतीमितानां |
| ७ | २० | तत्त्वानि | "तत्त्वानि |
| ७ | २३ | देवम् ॥ | देवम् ॥ १ ॥" |
| ७ | २५ | ॅया | ॅयां |
| ८ | ८ | ॥ १०८ ॥" | ॥ १०८ ॥ |
| ८ | १० | ॥ १ ॥ | ॥ १ ॥" |
| ९ | १७ | पूर्वाचार्यप्रणीता | श्रीअमरचन्द्रसूरिकृतपद्मानन्दमहाकाव्य(स.१४)गता |
| ११ | २४ | स्तवं सतां | *वतंसतां |
| १२ | ७ | तोषदानदान- | तोषदान–दान० |
| १२ | १३ | कलयाऽऽश्रु | कलयाऽऽशु |
| १३ | नोट | कमलबन्धबन्धुर | कमलबन्धबन्धुरः |
| १४ | नोट | पञ्चवर्गपरिहार पूर्वकंस्तोत्रं | पञ्चवर्गपरिहारपूर्वकं स्तोत्रं |
| १५ | ७ | शब्दालङ्कार कलितं | शब्दालङ्कारकलितं |
| १९ | १२ | कलाप० | कालापक० |
| २० | १४ | चाज्ञातकर्तृके० | च श्रीसोमतिलकसूरिप्रणीते० |
| २० | २३ | वधानि | वध्यानि |
| २१ | १ | सद्बला० | सद्बलां० |
| २१ | ३२ | पुष्णिकं | पुष्णिकए |
| २३ | ५ | मोहैंमतिगर्त्तौ | मोहैंमतिगर्तौ |
| २४ | १२ | त्रयात्मकं | त्रयसमं |
| २६ | १८ | भवाँन जिनैः | भैंवान जिनौः |

* एतच्चिह्नाङ्किताः पाठा अनुमानेन कल्पिता मया ( चतुर० )।

| पृष्ठं | पङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| २८ | २ | श्रीदेवविमलगणीना | श्रीदेवविमलगणीनां |
| २९ | ७ | सर्वसिद्धान्तवेप्रशः | सर्वसिद्धान्तप्रवेशः |
| २९ | १५ | पूर्विका | पूर्विकां |
| २९ | १७ | श्रीसिंहतिलकसूरिकृता | श्रीसिंहतिलकसूरिकृतां |
| २९ | १७ | विस्तुत | विस्तृत |
| २९ | नोट | ६ | १ |
| ३० | १३ | तर्करहस्य० | श्रीपतिगणितम्—श्रीसिंहतिलकसूरिभिः |
| ३१ | अन्तिमा | ० | ४८ श्रीसिद्धान्तचन्द्रिकाव्याकरणं श्रीसदानन्दयतिवरेण |
| ३७ | ४ | निमुनौ | निर्मुनौ |
| ३९ | १५ | लात्यसा | लात्यसौ |
| ४० | ४ | शिष्यादिविचार.— | शिष्यादिविचारः— |
| ५३ | १० | सूच्यां— | सूच्यां |
| ५३ | ३३ | देवविजयजी साध्वी | देवविजयजी साध्वी |
| ५६ | नोट | रामायाणंम् | रामायणम् |
| ५७ | १५ | रचेयुरिति | रचयेयुरिति |
| ५७ | १६ | ग्रन्थ | ग्रन्थ |
| ७५ | १७ | २। | ।३॥ |
| ५८ | १२ | सूरीश्री | सूरिश्री |
| ६० | २ | गृर्जरकृति | गुर्जरकृति |
| ६४ | नोट | ऽमदवादानगरे | अमदावादनगरे |
| ६९ | २२ | परिचरणचरणप्रवणा० | परिचरणप्रवणा० |
| ७० | नोट | सांकलचंदद्वार | सांकलचंदद्वारा |
| ७२ | १३ | रुद्गीता | रुद्गीतां |
| ७२ | २० | शोभता | शोभना |
| ७३ | ३ | भानुचन्द्रान्तेवासित्वं— | भानुचन्द्रान्तेवासित्वं |
| ७३ | ३ | श्रीसूरचन्द्र | श्रीसूरचन्द्र— |
| ७४ | १७ | प्रभूय | प्रसूयं |
| ७४ | १८ | लक्ष्मीस्त्वत्पति | लक्ष्मि ! त्वत्पति |
| ७५ | २८ | षटशास्त्रवेत्ता | षट्शास्त्रवेत्ता |
| ७६ | १५ | सूब न | सूब ज |
| ७६ | १५ | नाहजी | नाहनी |
| ७८ | नोट १३ | मिधान | भिधान |
| ८१ | २७ | श्रीभानुचन्द्रणां | श्रीभानुचन्द्राणां |
| ८१ | २७ | मवति | भवति |

| पृष्ठं | पङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ८२ | १६ | रूपचन्द्र | रूपंचन्द्र |
| ८७ | १६ | तद्रूपोऽस्ति | तद्रूपोऽस्ति |
| ८८ | ८ | श्रीसौभाग्यसागरसूरीणां | श्रीसौभाग्यसागरसूरीणां |
| ८९ नोट | ३ | घरे | घरे |
| ८९ नोट | ५ | जागो | गाजे |
| ९० | ३ | प्रस्तावनामनुसारि | प्रस्तावनानुसारि |
| ९० | ३ | सूरिवराणा | सूरिवराणां |
| ९१ | १६ | साहिना | साहिनः |
| ९१ | २६ | प्रसत्ति | प्रसत्ति |
| ९२ | १७ | सण्डरग्रामे | सण्डेरग्रामे |
| ९२ | २५ | गुम्फितृणा | गुम्फितृणां |
| ९३ | ९ | तत्पट्टभश्री | तत्पट्टे भ० श्री |
| ९६ | १९ | उपोद्घाते | उपोद्घाते |
| ९७ | ९ | जपता | जपतां |
| ९८ नोट | १५ | शान्तिचन्द्राश्च | शान्तिचन्द्राश्च । |
| १०२ नोट | २ | मत्कृतः | मत्कृत– |
| १०२ नोट | ८ | परिचिन्तामणि | परिचितचिन्तामणि |
| १०३ नोट | ३ | सुधियां | सुधियां |
| १०३ नोट | १० | स्वरूपेणैव | स्वरूपेणैव |
| १०४ नोट | १ | निधधो | निधयो |
| १०४ नोट | ११ | यास्तीति | यास्यतीति |
| १०५ | १७ | समेतायस्या | समेता यस्या |
| १०५ | २९ | संसाघने | संसाधने |
| १०५ | ३४ | श्री यशो– | श्रीयशो– |
| १०६ | १४ | प्राणिघाय | प्रणिधाय |
| १०६ | ३२ | शिष्यमुख | शिष्यमुख्य |
| १०७ | २ | विशेतषा | विशेषता |
| १०७ | १६ | अथ संक्षेपतः | अर्थः सङ्क्षेपतः |
| १०८ नोट | १० | कल्पला– | कल्पलता– |
| १०९ | १५ | मृर्धन्य– | मूर्धन्य– |
| ११० | १५ | किन्नरस्त्री ममारब्ध– | किन्नरस्त्रीसमारब्ध– |
| ११० | १९ | सुरङ्गाः | स्तुरङ्गाः |
| ११३ | ७ | झङ्कारारवै | झङ्काररवै |
| ११३ | १० | रत्नापहार | रत्नापहार– |
| ११६ | ३ | नन्तसद | नन्तसद् |

## मूलग्रन्थस्य

| पृष्ठं | पङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ३ | १९ | नयायतमानम् । | नयायतमानम् । |
| ३ | २१ | नयानया यतमानम् । | नयानयायतमानम् । |
| ३ | नोट | ० | *३ 'नयाऽऽयतमानम्' इत्यपि । |
| ३ | नोट | ० | *४ 'नयायतमानम्' इत्यपि । |
| ४ | नोट | १ ०'मावतम्' | १ ०'मायतम्' |
| ५ | १२ | समग्रजिर्नेश्व० | समग्रजिनेश्व० |
| ६ | १ | प्राथना | प्रार्थना |
| ७ | ३ | नीलभे ते । | नीलभे ! ते । |
| ८ | १४ | जीयादू | जीयाद् |
| १२ | १० | श्रीप्रमवभवभयाद् | श्रीप्रभव ! भवभयाद् |
| १२ | १४ | यत्पादपांशुः | यत्पादपांशुः |
| १२ | १५ | या तापत्राऽसमाना प्रति | या तापत्राऽसमाना प्रति |
| १२ | २२ | स्रग्र० | स्रग्० |
| १२ | नोट | ० | १ 'यत्पादपांसुः' इत्यपि पाठः । |
| १२ | नोट | ० | २ 'या तापत्राऽसमानाऽप्रति' इत्यपि पदच्छेदः। |
| १३ | २ | शमनी | शमनी |
| १३ | ९ | ऽऽमोदितम् | ऽऽमोदितम् |
| १३ | १३ | समग्रजिनेश्वराणा | समग्रजिनेश्वराणां |
| १३ | १५ | ते | ते |
| १३ | १७ | सकलभा | सकलभा |
| १३ | नोट | ० | *१ 'शमिनी' इत्यपि पाठः |
| १३ | नोट | ० | *२ '०या मोदितम्' इत्यपि पदच्छेदः । |
| १३ | नोट | ० | *३ 'तेऽसकलभा' इत्यपि पदच्छेदः सम्भवति । |
| १३ | नोट | ० | *४ 'भारतीरायताः' इत्यखण्डमपि पदम् । |
| १६ | १७ | शादूल० | शार्दूल० |
| १८ | ३ | व्यमुच० | व्यमुञ्च० |
| २० | १९ | कुड्मलराजि तामरस० | कुड्मलराजिँ तामरस० |
| २० | नोट | ० | *३ 'कुड्मलराजितामरस०' इत्यपि स्यात् । |
| २१ | २ | सङकीर्तनम्— | सङ्कीर्तनम्— |
| २२ | नोट | पाठाः | पाठः |
| २३ | ८ | जिनेश्वराणा | जिनेश्वराणां |
| २३ | १२ | माऽधिकामा | माऽधिकामा |

| पृष्ठं | पङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| २३ | १७ | शीस्त्री | शास्त्री |
| २३ | नोट | ० | १ 'माऽऽधिकामा' इत्यपि पदच्छेदः |
| २३ | नोट | १ 'शास्त्रीशा स्त्रीनराणां' इत्यपि पदच्छेदः । | २'शास्त्रीशास्त्रीनराणाम्' इत्यपि पदच्छेदः। |
| २४ | ५ | क्षमालङ्कृता | क्षमाऽलङ्कृता |
| २४ | २२ | वसुतराङ्गजा | वसुतराङ्गजा |
| २४ | नोट | त[illegible]मो | सङ्गमो |

## टीकाचतुष्टयस्य

| पृष्ठं | पङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| २ | १० | आपदो यस्मात् स तथा | आपदो यस्मात् यस्य वा स तथा |
| २ | २३ | महानष्टा | महत्यो नष्टा |
| ३ | १३ | भ्रातुः | धातुः |
| ३ | २६ | शतमा ( मवा ? ) लोक्य | शतकमालोक्य |
| ३ | २७ | श्रीमानकब्बरनृपो | श्रीमानकबरनृपो |
| ४ | ७ | 'पदाग्रे हि श्चुरादेर्त्रिः | पदाग्रे हिः, 'चुरादेः'(सा० सू०१०३१) त्रिः |
| ४ | १३ | विद्वश्शब्दस्य | 'विद्वच्छब्दस्य |
| ४ | १४ | तेषा | तेषां |
| ४ | २३ | स्त्रियां पुंवद्भावात् | स्त्रियां 'पुंवद्वा'( ५२२ ) इति पुंवद्भावात् |
| ४ | २५ | "श्रद्धावचनयोर्भक्तिः" इत्यमरः । | "श्रद्धाव(र)चनयोर्भक्तिः" इत्यमरः (?) |
| ५ | १५ | इन्द्रवंशा | इन्द्रवंशा ( ? ) |
| ५ | १९ | वन्धुर्द्वितीयो | बन्धुर्द्वितीयो |
| ५ | ३२ | यस्य तत्सम्बो० | यस्य स तत्सम्बो० |
| ६ | २९ | वचनेष्वपास्त | *वचनस्त्वपास्त |
| ७ | ३२ | किंविशिष्टैः ? | किंविशिष्टैः असुरैः ? |
| ९ | ६ | वः—युष्मभ्यम् | वः—युष्मान् |
| ९ | ८ | लुंकू | लुक् |
| ९ | ८ | दीर्घः [ सह ] | दीर्घः ( सह ) |
| ९ | ९ | इति कोशात् | *इति ( अनेकार्थ )कोशात् |
| ९ | १२ | बुधे चार्हति | बुद्धे चार्हति |
| ९ | १५ | विकारमार्ग | विकारमार्ग |
| ९ | १८ | 'णादि कित्' | 'णादिः कित्' |
| ९ | ३० | प्रसङ्गादेत दर्शितमिति | प्रसङ्गादेतद् दर्शितमिति |

| पृष्ठं | पङ्क्तिः | अशुद्धिः | शुद्धिः |
| --- | --- | --- | --- |
| १० | ८ | येषां ते तथोक्ताः | येषां ते तथा इति बहुव्रीहिः। पुनः कीदृशाः ? 'मन्दारवा राजिताः' मन्दो—मृदुः स्वल्पो वा आरवः—शब्दो येषां ते |
| १० | १४ | वैरे | वै( स्वै )रे |
| १० | १९ | उस् णिदन्तः। सुरभिर्नाम | उस्, णिदन्तः सुरभिर्नाम |
| १० | २० | कृञ कृञ उस | *कृ कृ उस |
| १० | २४ | इत्येनन | इत्यनेन |
| १० | २५ | 'स्वरहीनम्' | 'स्वरहीनं०' |
| १० | २५ | 'सुरभयाञ्चकुः' | अत्र 'सुरभयाञ्चक्रुः' |
| १० | ३० | इत्यमरः। | इत्यमरः (?) |
| १० | ३२ | शूद्रकः शूद्रकः | मृच्छकटिके (अं. ४, श्लो. १४ |
| ११ | ३ | पदङ्ग— | पदङ्— |
| ११ | ३२ | आराविभ्रमरैः | आराविभ्रमराणां |
| १२ | ६ | आध्यात्मिकाधिदवि- | आध्यात्मिकाधिदैवि- |
| १२ | १८ | तु पुनरर्थे | तुः पुनरर्थे |
| १३ | १२ | वचनात् | *( वाग्भट )वचनात् |
| १३ | १३ | अत एव पुनः कथं- | अत एव। पुनः कथं- |
| १३ | १४ | हे शब्दस्तु | हेशब्दस्तु |
| १३ | १६ | 'बहुव्रीहिः'। | 'बहुव्रीहिः'। तैर्नैगमाद्यैः। |
| १३ | २५ | शान्तिं | शान्तिं— |
| १३ | २६ | "शमः शान्तिः शमथोपशमावपि" | शमः शान्तिः, शमथोपशमावपि" |
| १३ | ३१ | 'षष्ठी चतुर्थी' | 'षष्ठी चतुर्थी०' |
| १४ | ६ | "मिथोऽन्योन्यं रहस्यं" | "मिथोऽन्योन्यं रहस्यपि" |
| १४ | १० | आनायो, गवाक्षक्षारकावपि" | आनायगवाक्षक्षारकेष्वपि" |
| १४ | २० | स्रोविसर्गे | स्रोर्विसर्गे |
| १४ | २५ | 'जगतां' | 'जगतां' अतिशयेन गच्छन्तीति जगन्ति तेषां जगताम्। |
| १४ | २५ | जगदन्तवर्त्ति | जगदन्तर्वर्त्ति |
| १५ | १३ | यैरते | यैस्ते |
| १५ | १८ | नैगमा आद्या येषां | नैगम आद्यो येषां |
| १५ | १९ | 'गुणादस्त्रियां नवे वा' | 'गुणादस्त्रियां न वा' |
| १५ | २१ | 'छिन्नं लूनं छितं दितं' इत्यमरः | 'छिन्ने लूनं छितं दितं' (का० ६, श्लो० २५) इति हैमः। |

| पृष्ठं | पङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| १५ | २६ | युक्तयः तैः । लाञ्छितं– | युक्तयः तैः लाञ्छितं– |
| १७ | १२ | तृतीयस्वरमध्यः, | लादिः तृतीयस्वरमध्यः |
| १७ | १४ | सेवकजनान् | सेवकजनान् कृपया |
| १७ | २३ | यस्मिन् | यत्र–यस्मिन् |
| १७ | २५ | धातोरनद्यतने | आली–श्रेणी । 'गन्धाढ्यधूलीकणान्' गन्धेन आढ्याः–सम्पन्ना ये धूलीकणाः—किञ्जल्क-लवाः तान् । नित्यं—सततम् । आशु–शीघ्रम् 'अदधत्' पीतवती इत्यर्थः । 'धेट् पाने' । धातोरनद्यतने |
| १७ | २५ | प्रथमपुरुषैकवचनं दिप | प्रथमपुरुषैकवचनं दिप् |
| १७ | २७ | किंसंम्बान्धिनी ? | किंसम्बन्धिनी ? |
| १८ | ५ | लोलयाश्वयोः ' | लोलयाच्छ्रयोः' |
| १८ | ६ | इति विश्वः | इति विश्वः |
| १८ | ७ | एकीभूतेत्यर्थः । | एकीभूतेत्यर्थः । पुनः कथम्भूता ? 'इभा-सिता' इभेषु–गजेषु आसिता–स्थिता मदलौल्यात् पूर्वमिति शेषः । यद्वा इभवद् असिता—श्यामा इत्यर्थः । |
| १८ | नोट | ० | *१ नायं पाठः विश्वमेदिन्योः किन्तु हैम्यने-कार्थे ( श्लो. १३५५ ) |
| १८ | ८ | इत्यमरः । | इत्यमरः (?) |
| १९ | २६ | शीता—शीतला | शीताः—शीतलाः |
| १९ | ७ | " अवदातगौरशुभ्र " | " अवदातगौरशुभ्र० " |
| १८ | १३ | 'धेट् पाने' | 'धेट् पाने' |
| १९ | १९ | " कृष्णः स्यादसितः सितेतरः" | "कृष्णः स्यादसितः शितिः" |
| १९ | २१ | ॥ ४ ॥ | ॥ ४ ॥ इति चतुर्थवृत्तार्थः । शार्दूलविक्रीडितं छन्दः । 'आदित्यैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्' इति च तल्लक्षणम् । |
| २० | ९ | कः कता ? | कः कर्ता ? |
| २० | २४ | वन येषु ते | वनं येषु ते |
| २१ | ७ | तं–आजितनाथं | तं अजितं–अजितनाथं |
| २१ | ८ | 'नु स्तुतौ' | 'णु स्तुतौ' |

